( पो )

पृष्ठा

पोतिका भक्षण निषेधः ... ३८९

( प्रा )

प्राङ्गत्त प्रमाणनिबद्धानुकूल व्यवस्था ६२०-२१
प्रायश्चित्तोपसंहारः ... ८०१
प्रायश्चित्तकरणम् ... ५४९ ५०
प्रायश्चित्त स्वरूप कथनं ... ५५४-५६
प्रायश्चित्त प्रकारः ... ५६२-६५
प्रायश्चित्त दानादिविधिः ... ५६५-७०
प्राजापत्यकृच्छ्रस्वरूपं ... ५७२
प्रायश्चित्तविचारः ... ५८७-८८

( प्रो )

प्रोक्षित मांसविधिनिषेधः ... ३९७

( व )

वरस्वरूपनिरूपणम् ... १६४-७७
वर्णशब्दार्थः ... १७७
वर्णविशेष कथनं ... १०९-२०१
वर्णभेदोत्पत्तिः ... २०१-१६
वरगुणविचारः ... २१६-२३
वरस्वकन्याग्रहणमनविधिः ... ३११-३१३
वधप्रयोजकपापभागित्वं ... ५८५
वधनिमित्तकर्तुर्वधभागित्वं ... ५८५-८६

( वा )

वाग्वाक्षरमाशौचनिर्णयः ... ५५१-५२
वाक्यविवाहनिरूपणं ... १४४-५७

( वि )

विद्याविचारः ... ८४-८६
विपणि विचारः ... १०२ ७
विवाहविचारः ... १२१
विवाहशब्दार्थः ... १२१-२४
विवाहविधिवादः ... १२४-४०
विजातीयसापिण्ड्यनिर्णयः ... २६१
विधवायाः पत्यन्तरसंग्रहनिषेधः ... ३२३-२४
विप्रमधिकारिस्वेच्छनिरूपणं ... ४४८
विभाग शब्दार्थः ... ४९९-५००

पृष्ठा

विशेषाभक्ष्यभक्षण प्रायश्चित्तं ... ७४१
विशिष्टपतिवध प्रायश्चित्तं ... ७३१
विनामैथुनप्रायश्चित्तं ... ७७१

( वे )

वेदविहितप्रति मार्गनिरूपणम् ... ४९६-९८

( वै )

वैदिकधर्मनिरूपणम् ... ४५
वैश्यस्मृत्यविचारः ... ४५६
वैज्ञानिकब्राह्मण सम्मान निरूपणं ५५६-५८
वैश्वदेवविधिः ... ४८० ८१
वैज्ञानिक भारतीय भक्ष्याभक्ष्य निरूपणं ४०६
वैश्यकृतगोवधप्रायश्चित्तं ... ७०५
वैश्यकर्तृक क्षत्रियस्वामिकगवावध प्रायश्चित्तं ७०६

( वृ )

वृषल निमन्त्रित ब्राह्मणान्न भक्षण निषेधः ४०८
वृक्षच्छेदन प्रायश्चित्तं ... ७३४

( व्य )

व्यवहार शब्द पारिभाषिकार्थः ... ४५९
व्यभिचरित स्त्रीवध प्रायश्चित्तं ... ७२३

( व्र )

ब्रह्मचारिभक्त भक्षण निषेधः ... ४२२
ब्रह्मवधानुग्राहकादीनां प्रायश्चित्तं ५८४-८५
ब्रह्मकृच्छ्रस्वरूपम् ... ५७०-७१
व्रताचरणविधिः ... ५७४-७५
ब्रह्मवधविचारः ... ५८८-८९
ब्रह्मकृमुत्पत्तिः प्रायश्चित्तं ... ७८४

( ब्रा )

ब्राह्मण सम्माननानिर्णयः ... ४५२-५४
ब्राह्मणस्य-गृहेऽन्न भक्षण निर्णयः ४२२
ब्राह्मविवाह लक्षणं ... १४२-४४
ब्राह्मणगृहे शूद्रान्नपाक भक्षण निषेधः ४१०
ब्राह्मणकर्तृकाकामब्राह्मणवध प्रायश्चित्तं ५८३-८४
ब्राह्मणकर्तृक भ्रातृसहोदरादिवध
प्रायश्चित्तविचारः ... ५८७-८८

| | पृष्ठा |
|---|---|
| ब्राह्मणकृत गोवध प्रायश्चित्त ... | ७०५ |
| ब्राह्मण क्षत्रिय वैश्य कर्त्तृक ब्राह्मण स्वामिकाज्ञानकृत गोवध प्रायश्चित्त ... ... | ७०५ |
| ब्राह्मणक्षत्रियवैश्य कर्त्तृक ज्ञानकृत वैश्य स्वामिक गवीवध प्रायश्चित्त | ७०६ |
| ब्राह्मण क्षत्रिय वैश्य कर्त्तृक ज्ञानकृत शूद्रस्वामिकगवीवध प्रायश्चित्त | ७०७ |
| व्रात्यप्रायश्चित्तविचार: ... | ७७८ |
| ब्राह्मणस्वगीतादिनाधमार्जने प्रायश्चित्त | ७८७ |

( भ )

| | |
|---|---|
| भक्ष्याभक्ष्य व्यवहार फलम् ... | ३७९-८० |
| भक्ष्याभक्ष्य शब्दार्थ विचार: ... | ३८० |
| भक्ष्याभक्ष्यवैज्ञानिक समालोचनं | ४२५-२६ |

( भा )

| | |
|---|---|
| भागयोग्यायोग्यनिरूपणं ... | ४४१-४४८ |
| भावदुष्टभक्ष्यविचार: ... | ४२७-२८ |
| भावदुष्टाभक्ष्यविचार: ... | ४२८-२९ |

( भू )

| | |
|---|---|
| भूमिपर्भक्ति निरूपणं ... | ४५५ |
| भूतृणादिभक्षण निषेध: ... | ३८९ |
| भूमीतपनसादिभक्षण निषेध: ... | ३९० |

( भो )

| | |
|---|---|
| भोजननिषिद्धासन विचार: ... | ४३९-४० |
| भोज्यद्रव्यभेद: ... ... | ४३२ |
| भोजन निषिद्ध देश विचार: ... | ४३७-३९ |
| भोजनकाले शूद्रस्पर्श प्रायश्चित्त ... | ७५७ |

( भै )

| | |
|---|---|
| भैक्ष्यविचार: ... | १११ |

( भ्र )

| | |
|---|---|
| भ्रतिविचार: ... | १०१ |

( म )

| | |
|---|---|
| मत्तक्रुधाद्यन्न भक्षण ... | ४०७ |
| महापातक बालदुर्व्वलादिषु ... प्रायश्चित्त प्रकार: ... | ५६२-६५ |
| महापातक साधारण प्रायश्चित्त ... | ५८०-८८ |
| मत्स्यादि जलचर वध प्रायश्चित्त | ७११ |
| महापातकी गमन प्रायश्चित्त ... | ७७४ |

( मा )

| | |
|---|---|
| मातापितृधनविभाग काल निरूपण | ५१०-१८ |
| मार्ज्जारादिवध प्रायश्चित्त ... | ७१८ |

( यु )

| | |
|---|---|
| युगभेदेनधर्म्मभेद: ... | ५७-७० |
| युवती विवाह विचार: ... | १५७-६१ |

( र )

| | |
|---|---|
| रसदुष्ट भक्ष्य निर्णय: ... | ४२६ |
| रसदुष्ट भक्ष्य निर्णय: ... | ४२६-४२७ |
| रजकाद्यन्त्यान्न भक्षण प्रायश्चित्त | ७४२ |
| रहस्य प्रायश्चित्त विचार: ... | ७९४ |

( रे )

| | |
|---|---|
| रेतोमूत्रपुरीष भक्षण प्रायश्चित्त ... | ७५१ |

( ल )

| | |
|---|---|
| लशुनादि भक्षण प्रायश्चित्त ... | ७५० |

( श )

| | |
|---|---|
| शकटविचार: ... ... | ११५ |
| शङ्करीकरणापात्रीकरणमलावह प्रायश्चित्त ... | ७८७ |

( शि )

| | |
|---|---|
| शिल्पविवेक: ... ... | १००-१०१ |
| शिष्टाचार विवेक: ... ... | ४५९-४६६ |

( शू )

| | |
|---|---|
| शूद्रभुक्तभाण्डावशिष्टान्न भक्षण निर्णय: | ४०९ |
| शूद्राशितान्न भक्षण निषेध: ... | ४१८ |
| शूद्रगोरसादि भक्षण निषेध: ... | ४१९-२० |
| शूद्रप्रतिग्रहविधि: ... | ४२० |
| शूद्रपात्रादि भोजन प्रायश्चित्त ... | ४२५ |
| शूद्रकृत गोवध प्रायश्चित्त ... | ७०५ |
| शूद्रकर्त्तृकाज्ञानकृत क्षत्रिय स्वामिक गवीवध प्रायश्चित्त ... | ७०६ |

पृष्ठा

शूद्रहस्तदत्तभोजन प्रायश्चित्तं ... ७५२

( ष )

षड्वार्षिकव्रतविधिः ... ५७७

( स )

समुद्रयात्रा ... ८६-९१
समुद्रयात्रा प्रायश्चित्त विचारः ... ९१-१००
सद्गुण निर्गुण ब्राह्मणवध प्रायश्चित्तं ५८१-५८२
सवनस्थवध प्रायश्चित्त विचारः ५८६-८७
सवर्णासवर्णा स्त्री गमन प्रायश्चित्तं ७६४
सद्यः प्रसविद गोवधं मासाश्नं यावद्भक्ष्यं ६८८
सदाचारशब्दार्थः ... ४५८-५९
सन्ध्याविधिः ... ४७०-७४
सप्रतिबन्धा प्रतिबन्धदायविचारः ... ५००-१
समकृच्छ्रस्वरूपम् ... ५७०

( सा )

सापिण्डोपयोगित्व विचारः ... २९१-९७
सात्विकराजसतामसाहारनिर्णयः... ४००-४
सात्विकादिभक्ष्यद्रव्य विचारः ... ४११
सामान्य विभाग विचारः ... ५२४-२६
सान्तपनकृच्छ्रस्वरूपम् ... ५०७
साध्यगर्भिणीवध प्रायश्चित्तं ... ७१२
सामान्याभक्ष्यभक्षण प्रायश्चित्तं ... ७४०

( सु )

सुरापाननिषेधः ... १९८-९९
सुरादिस्पृष्ट शूद्रोच्छिष्टवत् ... ४२४
सुराशब्दार्थः ... ६०४
सुरापानेचतुर्विध प्रायश्चित्तं ... ६०६
सुरापानेवयोरूप प्रायश्चित्तं ... ६०७
सुरापाने गुरुलघु प्रतिपादक वाक्यानि ६०८९
सुरापान विषयकनिरुक्तविचारः ... ६१०
सुवर्णं हरणस्य महापातकत्वं ... ६१०-११
सुवर्णवज्राचलवस्त्राद्यपहारेन सुवर्णस्तेयदोषः ६११-१२
सुवर्णस्तेयेराजदण्डपापनाशकत्वं ६१३
सुवर्णस्तेये द्वादशवार्षिकव्रतं ... ६१४-१५
सुवर्णस्तेयेपच्छित सर्व्वस्वमरणयवस्था
विचारः ... ... ६१६

( स्त्र

पृष्ठा

स्त्रकीयोच्छिष्ट भक्षण प्रायश्चित्तं ७५९
स्वभावदुष्ट विचारः ... ४२९
स्वभावदुष्टान्य विचारः ... ४२९
स्वल्पस्यलौकिकालौकिक विचारः ५०३-१०

( से )

सेवाविचारः ... १०१-३

( स्त्री )

स्त्रीशिक्षाविचारः ... २९७-३०७
स्त्रीकृतगोवध प्रायश्चित्तं ... ७०५
स्त्रीवध प्रायश्चित्तं ... ७२१
स्त्रीव्यभिचार प्रायश्चित्तं ... ७७२

( सौ )

सौम्यकृच्छ्रस्वरूपम ... ५७३

( स्ते )

स्तेयसुवर्णं दाने दोषाभावः ... ६१६

( स्था )

स्थानकालादि विशेषे स्पृष्टास्पृष्ट विचारः ४४९

( स्ना )

स्नानविधिः ... ४६८-६७०

( सं )

संचिमपूजाविधिः ... ४८१-८३

( ह )

हविष्यद्रव्य विचारः ... ४४५-४६

( क्ष )

क्षत्रियादि कर्तृक ब्राह्मणवध प्रायश्चित्तं ५९५-९६
क्षत्रियकर्तृक गोवध प्रायश्चित्तं ७०५
क्षत्रिय वध प्रायश्चित्तं ... ७१७
क्षत्रियादिस्त्रीणामनुलोमगमने प्रायश्चित्तं ७६६

## मङ्गलाचरणं

सर्वं ब्रह्म जगच्छ्रुताविति महावाक्यस्य प्रत्यक्षता-
माविर्भावमितः प्रकाशयति यो दार्व्याकृतौ भूतले ।
विघ्नव्यूहगजान् विनाश्य सततं नीलाद्रिसिंहः स मे,
दत्तादीप्सितमौक्तिकानि विगतौपम्योऽद्वितीयः प्रभुः ॥ १

सर्वं चैतन्यरूपं तं परमात्मानमाश्रये ।
यरीकर्त्ति वरीभर्त्ति संजरीहर्त्ति यो जगत् ॥ २

यज्ञादौ यदपूजनाद्विनिहतो विघ्नैः क्रतुः श्रीविधे,-
रिन्द्राद्याः परिपूजयन्ति सततं देवाश्च यं भक्तितः ।
वन्देऽहं मदघूर्णिताक्षमनिशं खर्वं द्युतिं श्रीयुतं,
पाशाभीतिवराङ्कुशाङ्कितकरं वन्द्यं गजेन्द्राननं ॥ ३

मुक्तादामलसत्कण्ठा कज्जलाङ्कितलोचना ।
सदा तिष्ठतु मे कण्ठे वाग्देवी सुरवन्दिता ॥ ४

प्रवालमण्डितकरा शारदेन्दुसमानना ।
शारदाम्बुरुहाक्षी सा सदा सन्निहितास्तु मे ॥ ५

---

## ग्रन्थकर्तुर्वंशपरिचयः ।

यत्र स्थिता द्विजवराः परिशुद्धगात्रा,
वेदादिशास्त्रपरिशीलनपूतचित्ताः ।
श्रीनारिकेलतरुराजिविशुद्धशोभो,
विप्राश्रमो हृतमनाश्च विलोकनेन ॥

पुर्य्याः प्रसिद्धतमशासनवृन्दमध्ये,
ख्यातिं गतं सकलदिक्षु सुधीरवासैः ।
दामोदराभिधपुरं भुवि राजते तत्,
कोणे स्थितं हि महतः पुरुषोत्तमस्य ॥

तद्ग्रामोऽमरसिंह येनाखिलगुणनिकराधारभूतेन कीर्त्या,
याथार्थ्यं स्थापितं वै बहुसवनविधानेन येनापि नाम्नः ।
मिश्रो ग्रन्थेश्वरान्वयः सुरगुरुरिव यः सर्वशास्त्रेषु दक्षो,-
नीतौ काव्योपमेयो विजितवरपरोऽभूत् स हारीतवंशी ॥

हारीतगोत्राम्बुधिपूर्णचन्द्रो,-
विप्रावलीमध्यविदां वरिष्ठः ।

यासीज्जगन्नाथसमाह्वयोऽस्मिन्,
पुत्रोऽस्य विघ्नेश्वरदत्तचित्तः ॥
श्रीरामचन्द्रस्तनयोऽस्य चाभू,—
न्न्यायादिशास्त्रे परिलब्धकीर्त्तिः ।
विद्वत्तया ख्यातयशा गुणाढ्यो,-
गणेशसंपूजनसक्तचेताः ॥

तस्य पुत्राश्च चत्वारोऽभवन् विगतकिल्बिषाः ।
तेषु विद्वत्तया ख्यातो रघुनाथविनायकौ ॥
रघुनाथस्य पुत्रोऽभूच्छ्रीधराख्यो महासुधीः ।
विद्वान् शास्त्रविभागेषु स्वजात्युन्नतिकारकः ॥
सदाशिवाख्यस्तत्पुत्रः स्वल्पधीरतिदुर्भगः ।
गुरुदेवस्य कृपया प्राप्तवान् ज्ञानमल्पकं ॥

मन्वादिशास्त्रनिचयं स्वगुरोरधीत्य-
हेमाद्रिमाधवमतानि विविच्य यत्नात् ।
श्रीवाजपेयिकमलाकरदिव्यसिंह—
स्मार्त्तादितत्त्वमनुसृत्य विशेषतश्च ॥
मयाल्पबुद्धिना तेन नत्वा गुरुपदाम्बुजं,
आर्य्याणामुपकाराय धर्मसंग्रहणाय च ॥

आपत्कालप्रयोज्यानि चार्षवाक्यानि यत्नतः ।
संगृह्य क्रियते नूनो निबन्धोऽयं हि भारते ॥
सन्ति यद्यपि धीराणां स्मृतिग्रन्थाश्च कोटिशः
तथापि सारमाकृष्य क्रियते नूतनोद्यमः ॥
एष प्रेक्षावतां प्रीतिप्रदोऽस्तो गुणशालिनां ।
मात्सर्य्यदोषशून्यानां भवेदिति च प्रत्ययः ॥

# अथ ग्रन्थीयमुखबन्धः।

———:o:———

भारतीयानामार्य्याणां समयोपयोगिनि समुन्नतिकल्पे "केवलं शास्त्रमाश्रित्य न कर्त्तव्योऽर्थ-निश्चयः। युक्तिहीनविचारेण धर्महानिः प्रजायते"॥ इत्येतद्बृहस्पत्युक्त-वचनमवलम्ब्य प्रायशो धर्मशास्त्रीयप्रमाणमाहात्म्येन क्वचित् क्वचित्तदनुगतयुक्तिविसराश्रयेण च लिखितोऽयं कल्पापद्धर्मसर्वस्वाभिधो निबन्धग्रन्थः। समर्पितोऽयं निबन्धः समाज-संस्कारार्थं करकमले भरतखण्डमण्डनायमानकोविदमण्डलीनां सारासारविचारकुशलानाम्॥

'ज्ञाते वाचनं नह्यविद्वान्विहितोऽस्ती'ति जैमिनीयतृतीयाध्यायाष्टमपादनवमाधिकरणोक्तसूत्रीयन्यायेनाप्येतदनुष्ठानं सङ्गतमेव।

तथाहि, तत्र संशयपूर्वपक्षसिद्धान्ताभिधायिनीयं माधवीयकारिका,—

"वाचयेत् स्वामिनं ज्ञाज्ञौ वाचनीयौ ज्ञ-एव वा।
अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुमिति॥"

"अस्यार्थः,—वाजपेये श्रूयते, क्लृप्तीर्य्यजमानं वाचयति "आयुर्य्यज्ञेन कल्पतां"—इत्यादयो मन्त्राः क्लृप्तयः। तत्र मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत्। विद्वांसं वाचयेत् इत्येवं विशेषस्याश्रवणात्। अनभिज्ञं तदैव शिक्षयित्वापि वाचयितुं शक्यत्वादिति चेन्मैवं। अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात्। तस्मादभिज्ञमेव वाचयेत्"। प्रकृते तु विद्वन्मण्डलीहस्तसमर्पणं समुपपन्नमिति बोध्यं। अतो विश्वजनीनहितमभिलक्ष्य विचारयन्तु भवन्त इत्यनुरोधोऽस्माकं।

पृथिव्यामस्यामलभन्ताविर्भावं तिरोभावं च बहुविधा धर्म्माः। अपिच स्वल्पसमयतः प्राक् कतिपये धर्मा—उपलभ्याविर्भावमपि विलयमभजन्त सत्वरं। किम्वा वक्तव्यमेवात्र। नाममात्रमप्यधुना नाकर्ण्यते तेषां। केवलमेतस्मिन्नपि विशाले जगति श्रौतधर्म्मोऽयमाविर्भूयातिप्राचीनकालतो बहुविधप्रत्यूहं तद्विघातकविजातीयसम्प्रदायात्याचारं चातिक्रम्य वरीवर्त्तीदानीमपि सर्वसमक्षतः।

धर्म्मोऽयं सकलधर्मापेक्षया वयसा ज्येष्ठ इत्यनुमीयते सर्वैः। एतदादर्शेनैव नानाविधधर्म्मसृष्टिः परिदृश्यते जगति। हिमालयकुमारिकान्तरीपयोरन्तरालावस्थित-भूम्यंशे धर्मोऽयं सुमनीषिभिः कालावस्थादिकमभिलक्ष्यीकृत्य सुसंस्कृततया विराजतेऽनवच्छिन्नभावेन बहुकालावधि। धर्ममेनं समयपरम्परया विलोपयितुमाविर्भूते सत्यपि बौद्धाद्यनेकविधसम्प्रदाये तत्संरक्षणार्थं देशकालपात्रनिहिततद्दृष्टितया यथैव लब्धसंशो न-

भवेद्धर्मभित्तेरिति विभाव्य धर्मस्यास्य "कूर्माङ्गन्यायेन" संकोचनप्रसारणविधानमनुष्ठितवन्त-स्त्रिकालविद: पूज्यपादा-महर्षय:। त्वेताद्दक् निविडभित्तावस्थापिततया साम्प्रदायिकप्रभञ्ज-नातिप्राबल्येनापि नोत्पाटितोऽयं धर्मस्तम्भ:। नापि विदेशीयचक्रवर्त्तिनां भिन्नधर्माव-लम्बितया तदीयशासनावसरे तद्धर्मप्रचारककशाघातेन प्रभावविद्वेषानलयोरपि प्राबल्येन च विनाशमलभताद्यावधि स:। नैतत् सर्वं स्वकपोलकल्पितं अपितु युक्तिनिहितमेव। प्रमाणितं— "कतकरजोन्यायेन" निर्मलीकृतं चैतन्निम्नोद्धृतप्रमाणजालेनैव।

तथाच, वैदिकधर्मविरोधिनैरकसांप्रदायिकानामन्यतमप्रमाणग्रन्थे चार्वाकदर्शने-ऽभाणक:,—

"अग्निहोत्रं त्रयो-वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पति:" ॥ इति।

तथा बृहस्पतिराह,—

"न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिक:।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिका: ॥
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥
पशुश्चेन्निहत: स्वर्गं ज्योतिष्टोमे गमिष्यति।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते ॥
मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम्।
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम् ॥
स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानत:।
प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते ॥
यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिवेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुत: ॥
यदि गच्छेत्-परं लोकं देहादेष विनिर्गत:।
कस्मात्-भूयो न चायाति बन्धुस्नेहसमाकुल: ॥
ततश्च जीवनोपायो-ब्राह्मणैर्विहितस्त्विह।
मृतानां प्रेतकार्याणि न त्वन्यद्विद्यते क्वचित् ॥

त्रयो-वेदस्य कर्त्तारो-भण्डधूर्त्तनिशाचराः।
जर्फरी तर्फरीत्यादि पण्डितानां वचः स्मृतम्॥
अश्वस्यात्र हि शिश्नन्तु पत्नीग्राह्यं प्रकीर्त्तितम्।
भंण्डैस्तद्वत्परं चैव ग्राह्यजातं प्रकीर्त्तितम्।
मांसानां खादनं तद्वन्निशाचरसमीरितम्" ॥ इति

तथा भागवते,—

"ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम्।
बुद्धो नामाजिनसुतः कीकटेषु भविष्यति" ॥ इति।

सुरद्विषां वैदिकानामित्यर्थः; बृहस्पत्युक्तप्रमाणजालेनैव वैदिकानां निशाचरात्मकत्वेन-परिगणितत्वात्।

तथा गीतगोविन्देऽपि,—

"निन्दसि यज्ञविधेरहह श्रुतिजातं। सदयहृदय! दर्शितपशुघातं।
केशव! धृतबुद्धशरीर! जय जय देव हरे"!।

एवं बहूनि वेदविरुद्धानि प्रमाणान्यन्येषु सांप्रदायिकग्रन्थेषु विद्यमानान्यपि ग्रन्थ-बाहुल्यभिया नोद्धृतान्यत्र।

यथा, देशकालपात्रादिकमावेदयति नियमाचरणमत्रिनिम्नस्थप्रमाणेन,—

"देशकालं वयःशक्तिं पापं चावचर्यैत्नतः।
प्रायश्चित्तं प्रकल्प्यं स्यात् यस्य चोक्ता न निःष्कृतिः" ॥ इति।

तथा याज्ञवल्क्योऽपि,—

"देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः।
प्रायश्चित्तं प्रकल्प्यं स्याद् यत्र चोक्ता न निष्कृतिः ॥ इति।

तथा तद्व्याख्यायां विज्ञानेश्वरः, "यदुक्तं प्रायश्चित्तजातं तच्चरमाणं वा तद्देशादिकमवेक्ष्य-यथा कर्त्तुः प्राणविपत्ति-र्न भवति तथा विषयविशेषे कल्पनीयं। इतरथा प्रधाननिवृत्तिप्रसङ्गात्। तथा वक्ष्यति,—"वायुभक्षो दिवा तिष्ठन्रात्रिं नीत्वाप्सु सूर्य्यदृगिति" तत्र यदि हिमवद्गिरि-निकटवासिनासुदकवास उपदिश्यते। अतिशीताकुलिते वा शिशिरादिकाले तदा प्राणवियोगो-भवेदिति तद्देशकालपरिहारेणोदकवासः कल्पनीयः।

तथा, वयोविशेषादपि यदि नवतिवार्धिकादरपूर्वद्वादशवार्षिकस्य वा द्वादशाब्दिकं प्रायश्चित्तमुपदिश्यते, तदा प्राणा विपद्येरन्निति। ततोऽन्यवयस्के तत् प्रायश्चित्तं कल्प्यम्।

अतएव स्मृत्यन्तरे,—

"क्वचिदर्द्धं क्वचित्पाद" इति वृद्धादिषु प्रायश्चित्तस्य ह्रासोऽभिहितः तत्त प्राक् प्रपञ्चितं। तथा धनदानतपश्चरणादिशक्त्यपेक्षया च न हि निर्द्धनस्य पात्रे धनं वा पर्य्याप्तमित्याद्युपपद्यते। तथोद्रिक्तपित्तादेर्वा पराकादिकं नापि स्त्रीशूद्रादेर्जपादिकम्। अतएव गजादीनामशक्तवत् "दानं दातुं चरेत् कृच्छ्रमेकैकस्य विशुद्धये" इत्युक्तम्।

तथा,—"प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव-चेति"—

तपस्यशक्तस्य स्मृत्यन्तरे प्राक् प्रायश्चित्तस्य ह्रासोऽभिहितः। पापं च महापातकरूपेण प्रत्ययाप्रत्ययसकृदभ्यासादिरूपेण वाबेक्ष्य यत्नतः सकलधर्म्मशास्त्रपर्य्यालोचनया प्रायश्चित्तं कल्पनीयम्।

गौतमेनाप्येतान्येवानादेशे विकल्पेन क्रियेरन्नित्येकाहादयः प्रतिपादिताः।

उच्यते सत्यमस्त्येव सामान्यतः प्रायश्चित्तोपदेशस्तथापि सर्वत्र देशकालादीनामपेक्षितत्वादस्त्येव कल्पनावसरः। विवरणमिदमन्येषामुपलक्षकम्।

देशकालपात्रानुरोधेन विज्ञापयति प्रमाणं भागवतीयम्;

यथा,—

"त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि।
यथाकालं यथादेशं यथा दैवोपपादितम्" ॥ इति।

तथा धर्मराजीयप्रमाणमपि,—

"देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थां च ज्ञात्वा धर्मं समाचरेत्" ॥ इति।

यथा देशकालपात्रं च धर्मप्रवृत्तेः प्रमाणमालोचनादनुष्ठानविषये विद्यमानानि मन्वादिधर्मशास्त्रेषु समवलोक्यन्ते प्रमाणानि।

यथाह मनुः,—

"चतुष्पात्-सकलो धर्मः सत्यं चैव कृते युगे।
नाधर्मेणागमः कश्चिन्मनुष्यान् प्रतिवर्त्तते ॥
इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः।
चौरिकानृतमायाभिर्धर्मश्चापैति पादशः ॥
अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः।
कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः ॥

वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम् ।
फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम् ॥
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगह्रासानुसारत: ॥" इति ।

यथा, भागवते,—

"आयुर्वीर्य्यमथो बुद्धिर्बलं तेजश्च पाण्डव ! ।
मनुष्याणामनुयुगं ह्रसतीति निबोध मे" ॥ इति

"यथा मनु पराशरौ,—

"कृते तप: प्रशंसन्ति त्रेतायां ज्ञानमुत्तमम् ।
द्वापरे यज्ञमित्याहु: कलौ दानं प्रशस्यते" ॥ इति ।

तथा भागवते,—

"ध्यायन् कृते यजन् यज्ञे त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्" ॥ इति ।

तथा, पाराशरीये,—

"त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु कर्त्तारं च कलौ युगे ॥
कृते सम्भाषणात्-पापं त्रेतायां चैव दर्शनात् ।
द्वापरे चान्नमादाय कलौ पतति कर्मणा ॥
कृते तु तत्क्षणाच्छापस्त्रेतायां दशभिर्दिनै: ।
द्वापरे याचमानाय सेवया दीयते कलौ" ॥ इति ।

पात्रमतुल्य प्रमाणानि यथा स्कान्दे,—

"राजकार्य्ये नियुक्तस्य बन्धनिग्रहवर्त्तिन: ।
व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत् ॥"

तथा, गादाधरीये कालसारे,—

"एकाहं स्यात्-प्रयाते मरणमनुपनीतास्तपिण्डेऽथ सद्य:,
शौचास्तत्त्वादिशिल्पिद्विजनिचयमतौ सूपकारादिकाश्च: ।
अन्यानिर्वाह्यकार्य्येष्वपतिषु च निजेष्वेकभूमीपतीष्टे,
वैद्य: सत्री च भूपानुचरनृपतयो दासदास्यावमात्या: ॥" इति ।

हारीत:,—

"एकाहमसपिण्डत:"। इदमनुपनीतासपिण्डपरम्।

सद्य:शौचे विष्णु:,—

"नाशौचं राज्ञां राजकर्मणि, न व्रतिनां व्रते, न सत्रिणां सत्रे।
स्वकर्मणि च राजाज्ञाकारिणां, न कारूणां कारुकर्मणि॥"

प्रचेता:,—

"कारव: शिल्पिनो वैद्या दासदासस्तथैव च।
राजानो राजभृत्याश्च सद्य:शौचा: प्रकीर्त्तिता:"॥ इति।

कारव: सूपकारादय:॥
शिल्पिनो-वर्हकिचित्रकारशौचिकचेलनिर्णेजकतन्तुवायादय:।

दासस्तु,—

"अधिकारी तु यो यस्य स दासस्तस्य कीर्त्तित:"।

इति लघुहारीतोक्तलक्षणम्।

व्यास:,—

"चिकित्सको य: कुरुते तदन्येन न शक्यते।
तस्माच्चिकित्सक: स्पर्शे शुद्धो भवति नित्यश:"॥ इत्यादि।

ननु प्रमाणानामेतेषामभ्यन्तरे केषांचिदपि विषयान्तरबोधकतया न प्रकृतोपयोगित्वमिति-चेन्न। उपलक्षणविधया—यथायुगं देशकालपात्राण्यभिलक्ष्य संकोचनप्रसारणावेदकतया प्रकृतोपयोगित्वादिति बोध्यम्।

"तथा कात्यायन:,—

"ब्राह्मणान्-भोजयेत्-पश्चादभिरूपान् स्वशक्तित:।
यजमानस्ततोऽश्नीयादिति कात्यायनोऽब्रवीत्"॥ इति।

स्वशक्तित: स्वसामर्थ्यानुसारेण द्वौ त्रीनित्यादि ब्राह्मणान् भोजयेदित्यनेन प्रस्तावितोपयोगिसंकोचप्रसारणविधानं प्रतीयते स्फुटत:।

तथा भिन्नधर्मावलम्बिनां नृपतीनां भरतखण्डाधिपत्यं हिन्दुधर्मविलोपनशालित्वं चावगमयन्ति निम्नलिखितधर्मशास्त्रीयप्रमाणानि,- यथा पराशरसंहितायां परिशिष्टस्कन्दे,—

"ततोऽष्टौ-यवना भाव्याश्चतुर्दशतुरुष्कका:।
भूयो दश गुरुण्डाश्च मौला-एकादशैव तु॥

एते भोक्ष्यन्ति पृथिवीं दशवर्षशतानि च ।
सिन्धोस्तटं चन्द्रभागां कान्तीं काश्मीरमण्डलम् ॥
भोक्ष्यन्ति शूद्रा-व्रात्याद्या म्लेच्छा-अब्रह्मवर्चसः ।
तुल्यकाला-इमे राजन् म्लेच्छप्रायास्तु भूभृतः ॥
एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥" इति ।

अब्रह्मवर्चसः ब्रह्मतेजोविहीनाः । अधर्मानृतपरा अधर्मपरा धर्मविरुद्धधर्मासक्ता अनृतपराः कपटचारिणश्चेत्यादिविशेषणादानेन हिन्दुधर्मध्वंसाभिलाषित्वं स्पष्टतः सचित मेतेषां विदेशीयचक्रवर्त्तिनामित्यवधेयम् ।

तथा मेरुतन्त्रीये, —

"अधिपा मण्डलानां च संग्रामेष्वपराजिताः ।
इंरेजा नवषट्पञ्च लण्ड्रजाश्चापि भाविनः" ॥ इति ।

इंरेजभिन्नानां चक्रवर्त्तिनामेतेषां स्वधर्मप्रसारणे स्वशक्तिपरिचालनं विद्वेषानलप्रकटनं चावलोकनीयं भारतेतिवृत्ततः ।

निरुक्तशास्त्रीयप्रमाणसन्दोहैरवगम्यते स्फुटतो यत्, विभिन्नसमयमभिलक्ष्य नानाविधाकारसंकोचनप्रसारणानुष्ठानेनैव संरक्षितोऽयं धर्मः पूज्यपादैर्महर्षिभिः ।

तथाहि—प्राक्तनधर्मशास्त्रीयग्रन्थेष्वनुल्लेखितानां स्वस्वसमयानुष्ठितानां नवनवाचारव्यवहाराणामपि तत्तत् कालीनधर्मशास्त्रीयग्रन्थेषु स्पष्टतः परिदृश्यन्ते लेखः । यथा—विक्रयार्थमापदि पृथिव्यादिकतिपयद्रव्याणां सति मनुनिषेधाविषयत्वेऽपि गौतमयाज्ञवल्क्यनिषेधविषयकत्वस्य परिदर्शनात् । वक्ष्यन्तेऽग्रे प्रमाणानि ।

तथा, पुरातनधर्मशास्त्रीयादरविषयीभूतनियमानामप्यनावश्यकत्वदृष्ट्या परिवर्त्तित्वमुपलक्ष्यते तत् परभाविधर्मशास्त्रनिवहेषु, यथा—पूज्यपादमनुयाज्ञवल्क्यादिर्मर्हितानि-मति भिरुद्राविनानामपि द्वादशपुत्राणां तदनन्तरकालीनादित्यपुराणादिधर्मशास्त्रकर्त्तभिः कल्यवच्छिन्नकाले पुत्रद्वयादानस्यैवाङ्गतनया विपरिवर्त्तितत्वस्य परिदर्शनादित्यादिक् ।

प्रदर्श्यन्तेऽनुपदमेव प्रमाणानि यथाक्रमं ।

द्वादशविधतनयादरणे मानवीयप्रमाणानि—यथा,—

"स्वे क्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धिजम् ।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ॥
यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा ।
स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥
सदृशं तु प्रकुर्य्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥
उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥
या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥
क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥
या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया ।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥
सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा ।
पौनर्भवेण भर्त्रा सा पुनः संस्कारमर्हति ॥
मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयं दत्तस्तु स स्मृतः" ॥ इति ।

याज्ञवल्क्यीयप्रमाणानां मानवीयप्रमाणतुल्यतया बाहुल्यशङ्कया चानुद्धृतत्वादत्र ।
याज्ञवल्क्यटीकायां कलावधिकृत्याह बृहस्पतिः,—

"अनेकधाः कृताः पुत्रा-ऋषिभिर्यैः पुरातनैः ।
न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदंतनैः" ॥ इति ।

कलिवर्ज्यप्रकरणे कल्यवच्छिन्नकालाधिकरणकसन्तानदयादाने सन्ति प्रमाणान्यादित्यपुराणे यथा,—

"वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ।
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः" ॥ इत्यादि ।

अपिच—विभिन्नधर्म्मावलम्बिनां विदेशीयनरनाथनिकराणां शासनाधीनतामनधिगतेऽप्यत्रापि भरतखण्डे भविष्यद्-ज्ञानदृष्ट्या पुराणाचार्य्याणां स्वीयस्वीयधर्मशास्त्रीयग्रन्थाभ्यन्तरे कुत्र कुत्र संक्षेपतः सन्निवेशितानां भाव्याचारव्यवहारप्रकाशकप्रमाणानां क्वचित्क्वचित्साध्यासम्बन्धेन कुत्र कुत्रोपलक्षणविधया चावलोक्यते लेखः।

एतदनुमोदते भागवतीयप्रमाणं यथा,—

"राजानो ब्राह्मणा वैश्याः शूद्राश्चैव युधिष्ठिर ! ।
व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका नराः" ॥ इति ।

तथा पुरश्चरणरसोल्लासतन्त्रे,—

"स्त्रीबालगोद्विजघ्नाश्च परदारधनाहृताः ।
उदितास्तमयप्राया अल्पसत्वाल्पकायुषः ॥
असंस्कृताः क्रियाहीना रजसा तमसा वृताः ।
प्रजास्ते भक्षयिष्यन्ति म्लेच्छराजन्यरूपिणः' '॥ इत्यादि ।

एवं विद्यमानान्यपि भविष्याध्यात्मपुराणादिषु प्रमाणानि ग्रन्थाधिक्यभयान्नोत्तोलितान्यत्र।

अपरं च, विदेशीयचक्रवर्त्तिशासनं तदुपयोगितदीयभाषाशिक्षणादिनवनवाचारव्यवहारजालं च यद्यपि समन्ततस्तत्कालीनाचार्याणामभविष्यदुपस्थितम्, तदा ते विषयेऽस्मिन् समुचितव्यवस्थामविधाय नीरवा अभविष्यन्नित्यसम्भवम् ।

नच केवलं वैदिकाचारमूलकतयैव धर्मोऽयं परिचालितस्तैरिति वाच्यम्। अद्यावधिधर्मस्यास्याविद्यमानत्वात्,—स्मृत्यादिपुराणान्तधर्मशास्त्रजालस्य प्रयोजनशून्यतयानुद्भूतत्वाच ।

अन्यच्च—यद्यपि वैदिकाचारोपर्य्यैव भारमुपन्यस्य धर्ममेतं परिचालयितुं तेषामभविष्यदभिप्रायस्तदा धर्मस्यास्याविद्यमानत्वमभविष्यदेव ।

अपिच—स्मृत्युपस्मृत्यागमपुराणानामुद्भवो नाभविष्यदादावेव ।

अथ च स्वीयस्वीयसमयान्तःप्रचलितव्यवहारनिवहानां स्वस्वरचितस्मृतिग्रन्थनियमनानुष्ठितत्वमपि न विस्मृतं पूर्वाचार्य्यैः।

एवमपि प्राचीनधर्मशास्त्रीयनियमनिकराणामन्तराले स्वीयस्वीयसमयानादृततयाऽव्यवहार्य्यनियमविसर्जनपूर्वकं तदीयनियमानां कतिपयानामपि परिवर्त्तनं स्वस्वसमयोपकारावेदकनवीननियमजातं च सन्निवेश्य निजनिजग्रन्थान्निर्मितवन्तः प्राचीनाचार्य्या महर्षयः। समयस्यावश्यकतया समाजस्याप्रयोगित्वेन च रीतिं नीतिं चानुसृत्य यथेदानीमधुनातनराजकीयनियमानां भवन्ति संकलनपरिवर्त्तनप्रचारणानि तथा स्मृतीनामप्यासन् तान्येव पूर्वतः। तथा करणमनीवावश्यकमिति प्रतिभाति। विशेषोपयोगितया मद्यपानादिविचारावसरे लिखितव्यान्येतदानुकूल्यप्रमापकानि प्रमाणानि तत्र तत्र द्रष्टव्यानि।

अपरं च—भारतेऽस्मिन् वैदेशिकचक्रवर्त्तिनां शासनानेहसि मुनिकल्पानां महाशयानामभावेऽसत्यपि यावनिकसार्वभौमनृपतेर्भिन्नधर्म्मावलम्बितया राजशक्तिपरिचालितमहम्मदीयधर्मस्य च विद्वेषप्रलोभनाभ्यामार्य्यधर्मस्यास्य चोणतामवलोक्य तत्तत्कालीनधर्मशास्त्रप्रणेतारः प्रादेशिकभूमिपतीनां स्वस्वराज्याभ्यन्तरे तत्तद्राज्यवासिनो हिन्दुधर्मावलम्बिनः सकलान् स्वेच्छाकृत नियन्तुं सर्वांशेन हिन्दुसमाजाद्धर्तेभ्यो वेदादिपुराणान्तधर्मशास्त्रीयग्रन्थेभ्यः संकलय्य स्वस्वप्रदेशीयव्यवहारानुकूलानि प्रमाणानि तथा मौलिकस्य वैदिकधर्मस्य अर्थात्ऋषीणामुपदिष्टस्यैव साधनात्मकधर्मस्य संरक्षणाय सामाजिकदृष्ट्यनुगतानि शास्त्रानुमोदितानि नूतनानुशासनानि च सन्निवेश्य निबन्धग्रन्थान् संकलयांचक्रुः। तद्दिनादारभ्य सन्तस्तदनुगामिनो न चेलुर्भारतवासिनो निजधर्मतः। प्रददत्यत्र साक्ष्यं तत्तत्प्रदेशीया गादाधरिकमलाकरभट्टीयादिनिबन्धग्रन्थाः।

प्रमाणानि यथा गादाधरीये कालसारे,—

ननु,—

"तिथ्यादौ तु भवेद्यावान्-ह्रासो-वृद्धिः परेऽहनि।
तावान्-ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि॥"

इति स्मृतिमुपजीव्योत्तरतिथिगतवृद्धिक्षयप्रक्षेपेण कृतस्य प्रेक्षावत्शिखामणिमाधवाचार्य्यनिर्णयस्य किमित्यनादरः कृत इति चेदुच्यते,—अस्याः स्मृतेर्मूलाभावेऽपि स्वदेशाचारोपष्टम्भेनैव माधवाचार्य्यैस्तादृशो निर्णयः कृतः। कल्पतरुकृत्प्रभृतिभिस्तथास्मद्देशीयैः प्राचीनैरन्यैश्शिष्टैरपि स्वदेशाचारविरुद्धः स निर्णयो न कृत इत्यस्माभिरपि नादृतः। नन्वस्मद्देशेऽपि कैश्चिन्नवीनैर्महतां माधवाचार्य्याणां निर्णयः कथं न स्वीकार्य्य इत्याग्रहः क्रियते इति चेत्, न किंचिदेतत्। यदि माधवाचार्य्यव्यवस्था सर्वैरेवादरणीया,—तर्हि वक्ष्यमाणामावास्याश्राद्धेऽपराह्णकालीनो "दर्शं आह्निकवन्मत" इति पञ्चधाविभागपक्षमादृत्य तत्कृतां व्यवस्थामनादृत्य त्रिधाविभागपक्षः किमिति तैरप्यादियेत।

अथ तैर्वक्तव्यम्,—

"येनास्य पितरो याता येन याताः पितामहाः।
तेन गच्छेत्-सतां मार्गं तेन गच्छंस्तरीष्यति"॥

इति मनूक्तेरमावास्यायां स्वदेशाचार एव गृहीत इति। स्वदेशाचारोपष्टम्भेनैव तद्व्यवस्था नादरणीयैव। तस्मादस्मद्देशसमाचारविरुद्धा माधवाचार्य्यव्यवस्थास्मद्देशीयैः श्राद्धविषये नाद्रियत एव। इत्यमावस्येतरपार्वणश्राद्धकालनिर्णयः पार्वणिभिः साम्वत्सरिकेऽप्योः। विघ्नवशादपराह्णासम्भवे सायाह्नेऽपि सर्वपार्वणश्राद्धकरणेऽप्यदोषः"।

अनेन स्वदेशीयशिष्टाचारस्य प्राधान्यं प्रदर्शितम्।

तथा विवाहप्रकरणे शतानन्दः,—

"गर्भादष्टमवर्षे तु दशमे द्वादशेऽपि वा ।

कन्यापरिणयः शस्त इति वात्स्यादिसम्मतः" ॥

तथा, सम्वर्त्तः,—

"विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ।" गर्भादिति सर्वत्रान्वयः ।

अन्यथा,—

"कन्या द्वादशवर्षाणि या प्रदत्ता गृहे वसेत् ।

भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्-स्वयम्" ॥ इत्यादि ।

यमादीनां तु द्वादशवर्षे विवाहे निन्दावचनमनर्थकं स्यात् ।

अतएव जन्मावधिसप्तमवर्षे गौरीत्वमाह कश्यपः,—

"सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।

प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते" ॥ इति ।

भविष्येऽपि,—"

"सप्तवर्षा भवेद्गौरी दशवर्षा तु नग्निका ।

द्वादशे तु भवेत् कन्या अत ऊर्द्ध्वं रजस्वला" ॥ इति ।

सप्तमवर्षस्य गर्भाष्टमत्वादिति कल्पतरुकाराः ।

तथाच—मासद्वयाधिकषड्वर्षानन्तरं स्त्रीणां विवाहकाल इत्यर्थः, तस्मिन्नेव वर्षे कन्यायाः— गौरीत्वमिति च सिद्धं एवं च स्त्रीणां जन्मावध्येकादशवर्षमभिव्याप्य विवाहकालस्य परमावधिरित्युक्तम्" ।

ब्राह्मणकन्याया-वाल्यविवाहकालस्य जन्मावध्येकादशवर्षपरमावधित्वमध्यवसितं युवतीविवाहादिकं नाङ्गीकृतं चैतन्निबन्धकारैरिति प्रतिभाति ।

तथाच, प्रमाणानि यथा कमलाकरभट्टीये,—

यमः,—

"कन्या द्वादशवर्षाणि या प्रदत्ता गृहे वसेत् ।

ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत्-स्वयम्" ॥ इति ।

भारते—

"त्रिंशद्वर्षः षोड़शाब्दां भार्य्यां विन्देत नग्निकाम् ।

अष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

यतोऽप्रवृत्ते रजसि कन्यां दद्यात्-पिता सकृत्" ।

तत्रैव,—

सप्तसम्वत्सरादूर्द्धं विवाहः सार्ववर्णिकः ।

कन्यायाः शस्यते राजन्नान्यथा धर्मगर्हितः" ॥ इति ।

राजमार्त्तण्डः,—

"राहुग्रस्ते तथा युद्धे पितॄणां प्राणसंशये ।

अतिप्रौढ़ा च या कन्या चन्द्रलग्नबलेन तु" ॥ इति ।

मनुः,—

"त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।

त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः" ॥ इति ।

यद्यपि,—

"विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ।

इति सम्वर्त्तोक्तेः, "अत ऊर्द्धं रजस्वला" इत्यादेश्च, दशवर्षादूर्द्धं विवाहो निषिद्धः। तथापि दातुरभावे द्वादशषोडशाब्दे ज्ञेये ।

"त्रीणि वर्षाण्यृतुमती कांक्षेत पितृशासनम्" ॥ इति—

पराशरमाधवीये बौधायनोक्तेश्च ।

"तथा—कन्याया रजोदर्शने तु अपरार्के सम्वर्त्तः,—

"माता चैव पिता चैव ज्येष्ठभ्राता तथैव च ।

त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्" ॥ इति ।

हारीतः,—

"पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।

सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः" ॥ इत्यादि ।

वरं प्रत्याह,—

पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।

स हि स्वाम्यादतिक्रामेद्दतूनां प्रतिबोधनात्" ॥ इति ।

त वि ये अत्र प्रायश्चित्तमुक्तमाश्वलायनेन,

"कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।

शुचिं च कारयित्वा तामुद्वहेदात्मवंशधीः ॥

पिता ऋतून् स्वपुत्र्यास्तु गणयेदादितः सुधीः ।

दानावधि गृहे यत्नात्-पालयेच्च रजोवतीम् ॥

दद्यात्सद्दतुसंख्या गाः शक्तः कन्यापिता यदि ।
दातव्यैकापि निःस्वेन दाने तस्या-यथाविधि ॥
दद्याद्वा ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् ।
तस्यातीतर्त्तुसंख्येषु वराय प्रतिपादयेत्" ॥ इत्यादि ।

विप्रजातीयकन्याया असत्यपि रजोवत्त्वे बाल्योपयममयस्याषोडशाब्दपरमावधिकत्वं-युवत्युपयमनं च यत्स्थापितं तद्देशीयशिष्टाचारानुगततयैतन्निवन्धग्रन्थसंकलनकर्त्रेति सुस्थितम् ।

तथा रघुनन्दनीये उद्वाहतत्त्वे अङ्गिराः,—

"आवृत्ते तीर्थगमने प्रतिज्ञाते च कर्मणि ।
कालात्यये च कन्यायाः कालदोषो न विद्यते ॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशमे कन्यका प्रोक्ता अत-ऊर्द्ध्वं रजस्वला ॥
तस्मात्सम्वत्सरे प्राप्ते दशमे कन्याका बुधैः ।
प्रदातव्या प्रयत्नेन न दोषः कालदोषतः ॥
कालदोषस्य विषयो राजमार्त्तण्डीये तु व्यक्तीभविष्यति" । इति।

यमः,—

"कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत् ।
ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम्" ॥ इति ।

महाभारते,—

"त्रिंशद्दर्षः षोडशाब्दां भार्य्यां विन्देत नग्निकाम् ।
अतोऽप्रवृत्ते रजसि कन्यां दद्यात्-पिता सकृत् ॥
महादोषः स्पृशेदेनमन्यथैष विधिः स्मृतः । इति ।
नग्निका अनागतार्त्तवा अन्यथा प्रवृत्ते रजसि" ॥

अत्रिकश्यपौ,—

"पितुर्गेहे च या कन्या रजः पश्यत्यसंस्कृता ।
भ्रुणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्वलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम्" ॥ इति ।

यत्तु मनुवचनम्,—

"काममामरणं तिष्ठेद्गृहे कन्यर्त्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्" । इति ।

इति गुणहीनमङ्गावमात्रविषयम् ।

अतो गुणवते अष्टवर्षन्यूनापि देयेत्याह मनुः,—

"उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां कन्यां तस्मै दद्याद्यथाविधि" ॥ इति ।

अप्राप्तां अप्राप्तविवाहप्रशस्तकालाम् ।

स्मृतिः,—

"सप्तसम्वत्सरादूर्द्धं विवाहः सार्ववर्णिकः ।
कन्यायाः शस्यते राजन्नान्यथा धर्मगर्हितः" ॥

राजमार्त्तण्डीये,—

"राजग्रस्ते तथा युद्धे पितॄणां प्राणसंशये ।
अतिप्रौढ़ा च या कन्या कुलधर्मविरोधिनी ।
अविशुद्धापि सा देया चन्द्रलग्नबलेन तु" ॥ इति ।

भुजबलभीमे,—

"ग्रहशुद्धिमब्दशुद्धिं शुद्धिं मासायनर्त्तुदिवसानाम् ।
अर्वाक्-दशवर्षेभ्यो मुनयः कथयन्ति कन्यकानाम् ॥ इति ।

दशवर्षाभ्यन्तरे शुद्धौ ग्रहाब्दादीनां विशेषोपादानात् तदूर्द्धं तावन्मात्रानियमः ।

अत्रैव विषये,—

"माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च ।
दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः" ॥

ब्राह्मणकन्याया बाल्यविवाहकालस्याषोडशाब्दपरमावधिकत्वं पूर्ववद्विचारितमनेन, किन्तु युवत्युपयमस्योद्घाटनं न कृताप्याचरितं स्वदेशीयशिष्टानादृतत्वादिति सम्भाव्यते।

तथा कमलाकरभट्टीयनिर्णयसिन्धौ सपिण्डविचारप्रकरणे,—

यत्तु स्मृतिचन्द्रिकामाधवादय आहुः—

"तृतीये सङ्गच्छावहै, चतुर्थे सङ्गच्छावहै, गर्भं नु नौ जनिता दम्पतीकः" ।—

इति च मन्त्रवर्णात् ।

"मातृष्वसृसुतां केचित्-पितृष्वसृसुतां तथा ।
विवहन्ति क्वचिद्देशे सङ्कोच्यापि सपिण्डताम्" ॥

इति शातातपोक्तेश्च मातुलकन्योद्वाहः कार्य्यः ।

यद्यपि पितृष्वसृकन्योद्वाहोऽपि प्राप्तस्तथापि,—

"अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु" ।

इति निषेधाद्वचनान्तरेण—तदुद्वाहस्याविधानाच्च न कार्य्यः, अयं तु दाक्षिणात्य-शिष्टाचारात्कार्य्य इति ।

न च पूर्वोक्तश्रुतीनामर्थवादमात्रता। मानान्तरेणासिद्धौ "उपरि हि देवेभ्यो धारयति।" इतिवदानुवादानुपपत्त्या विधिकल्पनात् ।

बृहस्पतिरपि,—

"उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मत्स्यादाश्च नराः पूर्वं व्यभिचाररताः स्त्रियः ॥
उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः" ।

इत्यनाचारत्वमाह ।

एतदनुमोदते संस्कारकौस्तुभकारोऽपि, —

यथा—

"कलावपि येषां कुले देशे अनुकल्पत्वेन
सापिण्ड्यसङ्कोचः परम्परया समागतः",—

तेषां तादृशसङ्कोचेन विवाहो न दोषः । अस्ति च भार्य्यात्वोपपत्तिः ।

अन्येषां तैः सह विवाहे न दोषः । हेमाद्र्यादौ श्राद्धनिषेधोऽपि स्वकुलदेशे परम्परयाऽनागतसापिण्ड्यसङ्कोचेन कृतविवाहविषय इति बोध्यम्" । इत्यनेन ।

तथा विद्याकरोयनित्याचारपद्धतौ—

"क्षुते श्लेष्मपरित्यागे पीते वा भक्षिते सति ।
चाण्डालस्य च सम्भाषे स्वप्ने वाचम्य शुद्ध्यति" ॥

इत्यादि वाक्येषु यत्राशुद्धिरुक्ता तत्र तन्निरासाचमनमशुद्धिनिवृत्त्यर्थं प्रत्यवायानुत्पादनार्थं च । यत्राशुद्धिर्नास्ति तत्र प्रत्यवायानुत्पादनार्थम् । एवं ताम्बूलभक्षणादावप्यशुद्ध्यभावेऽप्याचमनं प्राप्नोति । अत एव भट्टपादैः परम्परस्पृष्टताम्बूलभक्षणं तद्वमासानाचमनञ्च दाक्षिणात्यानां दुराचारा उक्ताः" । देशविशेषेषु दुराचारस्यापि तत्तद्देशीयशिष्टाङ्गत्वेन-

प्रमाणात्मकतयाङ्गीकृतं ततत्तद्देशीयनिवासिभिरिति, सूचितमेतैर्निबन्धकारैः। एवं-प्रमाणान्यन्यानि भारतीयान्यान्यनिबन्धग्रन्थेषु द्रष्टव्यानि।

तथाच—शिष्टाचारस्य प्रामाण्यम्।

"शिष्टाकोपे विरुद्धमितिचेत्, न, शास्त्रपरिमाणत्वात्। अपि वा कारणग्रहणे प्रयुक्तानि प्रतीयेरन्"। इति जैमिनीयप्रथमाध्यायतृतीयपादचतुर्थाधिकरणन्यायेन समर्थितम्।

तथाहि -तत्र संशयपूर्वपक्षसिद्धान्ताभिधायिनीयं माधवीयकारिका।

"सदाचारोऽप्रमा मा वा निर्मूलत्वादमानता।
अष्टकादेरिवैतस्य समूलत्वात्प्रमाणता"॥

होलाकोत्सवादिसदाचारस्य मूलभूतवेदाभावादप्रामाण्यमिति चेन्न। वैदिकैः शिष्टैः—परिगृहीतत्वेनाष्टकादिवद्वेदमूलत्वात्।

अतो मन्वादिभिर्ग्रन्थगौरवभयाद्विशेषाकारेणानुपदिष्टोऽपि सदाचारः सामान्याकारेणोपदिष्टः। "श्रुतिः स्मृतिः सदाचारः" इत्येवं धर्मे प्रमाणोपन्यासात्।

तस्माच्छिष्टाचारः प्रमाणं। परन्तु, यथा—देशकालपात्रं सामाजिकधर्माणां सङ्कोच-प्रसारणजातं निरुक्तप्रमाणविसरेभ्यो न वा प्रतीयेत इति विभावनीयं सानुग्रहं प्रेक्षावद्भिरित्यनुयाचनम्।

अन्यच्च—साधारणतोऽयथामार्गमनुसर्तुं न भवन्ति कुण्ठिता वालिशाः। तथाप्यार्याणामन्तः केचन राजानुग्रहाभिलाषितया कोऽपि तच्छक्तिपराभूतत्वेन कतिपये वित्तलोलुपतया चानुलम्बितवन्तो यवनीयधर्मम्। एवं क्रमशो हिन्दुसम्प्रदायस्यानिकाश्यमभिवीक्ष्योदारचरिताः पूजनीया महात्मानो नानकचैतन्यप्रभृत्याचार्यवर्याः। हिन्दुसमाजपरिचालन-कठोरनियमावलिं प्रति दृष्टिपातमविधायापत्कालधिया तन्नियमविपर्ययेणार्यधर्मं रक्षितवन्तोऽतिप्रयत्नेन।

ते त्वार्यसम्प्रदायचूडामणीनपि स्वस्वसम्प्रदायान्तर्भूतानकार्षुः। अतो बाधो न कश्चित् सङ्घटितो मौलिकधर्मस्योपरि। विपरिवर्त्तितनियमराजीनां मौलिकधर्मबाधनाजनकत्वात्रोपस्थितं किमप्यसुविधाजालम्।

धर्मद्वयस्यास्य प्रतिपादयितुं साम्यं तात्कालिकचक्रवर्त्तिनियमाभ्यन्तरतः स्वधर्मान्तरायभूतान् कांश्चिन्नियमानानीय चक्रुः स्वधर्मान्तर्गतान्। आचर्यतेऽधुनापि सत्यपीरपूजादिकम्। अर्थात् सत्यनारायणपूजादिकं हिन्दुसम्प्रदायाभ्यन्तरे।

ततो मौलिकोऽयं धर्मोऽतिक्रम्य विघ्ननिवहमतिवाहयामास यवनीयराष्ट्रविप्लवबाधारकमतिभयावहकालम्। इतः पूर्वत एव धर्मविप्लवसङ्घटनावसरे पूज्यपादशङ्कररामानुजाचार्यादय उदारहृदया महात्मानस्तद्धर्ममतिरक्षभारतखण्डे निर्वाधं संप्रत्येकस्मिन्-

भीत्याधायके समयस्रोतसि निपतितोऽयं हिन्दुसम्प्रदायः। एतत्पूर्ववर्त्तिनि स्तरे न सङ्घटिता-सोदृताङ्गी कष्टदायिकावस्था। यतस्तत्कालीनविदेशीयसम्राट्शासनं न तादृक्-सुशिक्षाधिष्ठितम्। अतः सुशिक्षिता हिन्दवः समुन्नत्यभिकाङ्क्षया तत्-विद्याशिक्षादि-व्यापारे स्वतः प्रवृत्तिमाश्रित्य तैः साकं कार्य्यमनुष्ठातुं नाग्रसरा बभूवुः। तात्कालिकनृपशक्तेः-शिक्षाप्रसरणपरिपन्थितया शिल्पविज्ञानाद्यावेदकशास्त्रजातमलभत मलिनत्वम्। प्रत्युतोऽन्य-मस्थापरतन्त्रतया समयक्रमात् विच्छिन्ने भारतीयनृपवृन्दे प्रादेशिकभूपतयो निजनिजराष्ट्रान्त-राले संरक्षितुं स्वधर्मं बभूवुर्बद्धपरिकराः।

विषयान्तरसन्दोहे सन्तोऽप्येकताशून्या भारतीयार्य्यसन्ततयः प्राणपणं बभूवुः सम्मि-लितास्त्रातुं धर्ममिमम्। निरुक्तेऽस्मिन् सकलविषये प्रमाणं भारतीयेतिवृत्तम्। यवनीय-जातिस्पर्शेन तदीयभाषाशिक्षाकरणेन च सत्यपि प्रचारिते दोषावेदके कर्कशधर्मशास्त्रीय-नियमनिवहे नापितगोपालादिजातिनिकरा विदेशीयनृपतयश्चक्रवर्त्तिजातीया इति विनाश्यानुष्ठितवन्तस्तेषां चौरवाहनादिकार्य्यम्। तथापि स्वसम्प्रदायदौर्बल्यसम्भावनया-कठोरवह्निजालं प्रति सम्प्रदायिनाम्यां सामाजिकैर्न निष्काशितास्ते समसामयतः। प्रमाणमत्रमनुमानम्।

अन्यच्च—चक्रवर्त्तिभिरिदानीन्तनैर्विभिन्नधर्मावलम्बितया वैदेशिकत्वेनापि सुशिक्षा-सभ्यतादिगुणादियोगतो महतीमनुसृत्योदारनीतिं विहितधर्मनीतिपार्थक्याद्राजानीतेर्विदे-शीया वा स्वदेशीया हिन्दवोऽहिन्दवो वा सर्वे स्वस्वसम्प्रदायसंरक्षणे स्वाच्छन्द्यमनुभवन्ति-साकल्यतः। प्रजावर्गस्य नानाविधसाम्प्रदायिकत्वेन "राजानुगतो धर्मः" अर्थात् धर्म-पुष्टिसाधनस्य सर्वांशतो नृपहस्तायत्ततया च संपूर्णा-राजशक्तिसाहाय्येन परिचालित-श्चासीत्—सदैवायं हिन्दुधर्मः। मन्वादिभिरपि समर्थितोऽयं परिच्छेदः।

राजधर्मविचारप्रकरणे यथा जगाद मनुः,—

"ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि।
सर्वस्यास्य यथान्यायं कर्त्तव्यं परिरक्षणम्॥
कार्य्यं सोऽवेक्ष्य शक्तिञ्च देशकालौ च तत्त्वतः।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः॥
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः॥
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।
तस्माद्धर्मो न हन्तव्यो मानो धर्मो हतोऽवधीत्॥

वृषो-हि भगवान्-धर्मस्तस्य यः कुरुते ह्यलम् ।
वृषलन्तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥"

तट्टीकायां नारदोऽप्याह—

"रक्षणं वेदधर्मार्थं तपः क्षत्रस्य रक्षणम् ।
सर्वतो-धर्मषड्भागो-राज्ञो-भवति रक्षितः ॥"

तथोवाच याज्ञवल्क्यस्तत्र—

"इति सञ्चिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ।
व्यवहारान् स्वयं पश्येत् सभ्यैः परिवृतोऽन्वहम् ॥
कुलानि जातीः श्रेणीश्च गणान् जानपदानपि ।
स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि ॥"

अपरञ्च—

प्रायशः पृथिव्याः सकलप्रदेशेषु राजशक्तिप्रतिपालितोऽयं धर्मोऽवलोकित आसीत् ।

केवलं भारतीयार्य्याणां दुर्भाग्यवशतो न सङ्कुटितमेतदिदानीम् । बहुदिवसादारभ्य-वर्द्धितोऽपि राजाश्रिततया संप्रति निरवलम्बनोऽयं वैदिकधर्मः । कारणमत्र पराधीनमेतद्भारतं-बहुवासरतः ।

अपिच,—यत्र निपातयेद्दृष्टिं तद्दिशि भारतं सकलविषयेऽभिवोच्यते पश्चात्पदम् ।

भरतखण्डस्यास्येदानीन्तनी रीतिरवस्था च परिवर्त्तितासीत्सर्वतोभावेन ॥

प्रत्येकजातिरपि स्वस्वजातीयवृत्तिमवलम्ब्य निर्वाहयितुं जीविकामनुभवति-

क्लेशमधुना । स्थानविशेषेषु भवत्यसम्भवो जीविकानिर्वाहस्य । तथा सति स्मार्त्तीय-नियमाः किं निर्मिताः समाजाहितसम्पादनाय । तत् कदापि न सम्भवेज्जगति । नियमाना-मेषां समयोपयोगिपरिवर्त्तनकरणशक्तानां धर्माध्यक्षाणां महर्षीणां तथा नियमपरिचाल-कानां नरपतीनां चाभाव एव निदानमेवानुमीयते सर्वैः ।

संप्रति समाजस्यास्याधुनातनावस्थायाः शोचनीयत्वपरिदर्शनाद्भारतीयलोकनिवहानां-स्वस्वजीविकाप्रतिबन्धकहेतुदर्शनाद्धर्मशास्त्राणामङ्गादरत्वाच्च निश्चेष्टत्वेनावस्थानं सदस-द्विचारधुरन्धराणां विद्वन्मुकुटमणीनां नोचितमिति प्रतिभाति ।

ब्राह्मणानां त्वनादि यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहात्मिका वृत्तिर्व्यवस्था-पिता धर्मशास्त्रकारैरर्चनीयचरणैर्मुनिभिः ।

यथा, प्रमाणमाह मनुः,—

"अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत् ॥

तथाचाह याज्ञवल्क्योऽपि,—

"इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहोऽधिको-विप्रे याजनाध्यापने तथा" ॥

तट्टीकायां विज्ञानेश्वरः,—

"एतान्यनापदि ब्राह्मणस्य षट्कर्माणि। तत्र त्रीणीज्यादीनि धर्मार्थानि, प्रतिग्रहादीनि वृत्त्यर्थानि।

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।

"याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" ॥ इति मनुस्मरणात् ।

एवमपि,—शूद्रशिष्यादिकरणं राजादितः प्रतिग्रहानुष्ठानञ्च—मन्वादिधर्मशास्त्रविरुद्धमेव"। प्रदर्श्यन्तेऽत्र प्रमाणानि।

यथा, मनुराह,—श्राद्धीयप्रकरणान्तर्गतापाङ्क्तेयब्राह्मणवर्जनकथनावसरे,—

"चिकित्सकान्-देवलकान्-मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥
भृतकाध्यापको-यश्च भृतकाध्यापितस्तथा ।
शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ।
हस्तिगोऽश्वोष्ट्रदमको-नक्षत्रैर्यश्च जीवति ॥" इत्यादि ।

तथा, गार्हस्थ्यनियमकथनप्रकरणे,—

"न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ।
सूनाचक्रध्वजवतां वेशेनैव च जीवताम् ॥
दशसूनासमं चक्रं दशचक्रसमो-ध्वजः ॥
दशध्वजसमो-वेशो-दशवेशसमो-नृपः ।
दशसूनासहस्राणि यो-वाहयति सौनिकः ॥
तेन तुल्यः स्मृतो-राजा घोरस्तस्य प्रतिग्रहः ।
यो-राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः ।
स पर्य्यायेण यातीमान्-नरकानेकविंशतिम् ॥"

तथा, याज्ञवल्क्यः,—

"प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।
दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमम् ॥

प्रायश्चित्तप्रकरणे तथा वृद्धहारीतः,—

"राज्ञः प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत्।
षष्ठे काले पयोभक्षः पूर्णे मासे विशुध्यति॥"

तथा मनुः,—

"निन्दितेभ्यो-धनादानं वाणिज्यं शूद्रसेवनम्।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्॥"

धर्मशास्त्रेष्वन्येषु सन्त्यप्येतादृशानि प्रमाणान्यत्र नोद्धृतानि ग्रन्थाधिक्यत्रासात्। तथा—सति कार्य्यतः प्रतिपाल्यते किमधुना? अथेदानीं परिचलनं शास्त्रतः किं सम्भावनीयम्? न तावदेतत्।

अपरं च—

क्षत्रियादिसमस्तजातीनामपि स्वस्वजातीयव्यक्तिनिवहपरिचालनार्थं तत्तज्जातीयवृत्तिम्—निर्द्धारयामासुर्धर्मशास्त्रनिर्मातारः। जागरूकाणि प्रमाणान्येतद्विषये मन्वादिधर्मशास्त्रेषु।

यथा मनुः,—

'प्रजानां रक्षणं दानमिज्याध्ययनमेव च।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥
पशूनां रक्षणं दानमिज्याध्ययनमेव च।
वणिक् पथं कुसीदं च वैश्यस्य कृषिमेव च॥
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्।
एतेषामेव वर्णानां शुश्रूषामनसूयया"॥

यथा याज्ञवल्क्यः,—

"इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।
प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्॥
कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम्।
शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग्भवेत्॥
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्"।

एवमन्यानि प्रमाणान्यपि द्रष्टव्यानि धर्मशास्त्रान्तरेषु। बाहुल्यशङ्कयात्र देयानि तानि। स्वनापदि परकीयसेवाऽतिगर्हिता शूद्रातिरिक्तजातेः। नात्रावलोक्यतेऽभावो धर्मशास्त्रीय प्रमाणजालस्य।

यथाह मनुः,—

"अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिस्तामवस्थाय विप्रो जीवेदनापदि ॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसंचयम् ॥
ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्" ।

तथा कुल्लूकभट्टोऽपि—

"स्वैः कर्मभिरित्यनेनाह—ऋतामृताभ्यामित्यनापदीत्यनुवर्त्तते। ऋतादिभिरनापदि जीवेत् सेवया त्वनापदि कदाचिन्न वर्त्तेत" ।

अन्यच्च—संप्रत्यनिच्छायां सत्यामपि विद्यमानायामतीववित्ताभावशालिनोऽनाहूतापि भूसुरवर्य्याः कर्त्तुं प्रतिग्रहं राजादितः सन्तोऽपि दारभ्या भवन्ति पराङ्मुखाः। तथा, शिक्षितादारभ्य मूर्खावधिऽविप्रादयो वर्णाः सर्वं सदा विधातुं परसेवां लोलुपा अपि भवन्ति लाञ्छिताश्च पराभूताः, तथा भारतमन्तरा स्थानान्तरगमनमास्तां दूरतः। विनापि तीर्थाभिगमनं सत्यपि भारतभिन्नत्वे कतिपयप्रदेशानां गमनानुष्ठानमपि धर्मशास्त्रनिषिद्धमेव। विषयेऽस्मिन् याज्ञवल्क्यटीकायां विज्ञानेश्वरः—यथा,

क्वचिद्देशविशेषगमनेऽपि देवल आह—

"सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गान्ध्रान् गत्वा संस्कारमर्हति ॥"

एतच्च—तीर्थयात्राव्यतिरेकेण द्रष्टव्यम्। किं त्विदानीं समस्तदेशमभिलक्ष्य यातायातीय पद्धतेर्यानस्य च सुलभतयैतत्कठोरनियमावलीं प्रति विश्वायाम्यां गमनागमनमनुतिष्ठन्ति— विप्रादयो वर्णाः सर्वं निर्विवादम् ।

एवमपि—विप्रजातीयाः शूद्रादिनानानीचजातीयानपि जनानन्त्यवासिनोऽस्पृश्यान्निःशङ्कम्। स्पर्शेऽपि यद्यन्त्यजातीयजनानां प्रायश्चित्ताचरणं निम्नस्थप्रमाणपीयवाचनिकप्रामाण्य बलाद्भवति स्म शास्त्रप्रसिद्धम् ।

यथा,—

गाहाधरीयाचारसारे शातातपः,—

"रजकश्चर्मकारश्च व्याधजालोपजीवकौ ।
चर्मनिर्णेजकश्चैव नटः शैलूषकस्तथा ॥

मुखे भगस्तथा वेश्या वनिता सर्ववर्णगा।
चक्री ध्वजी वध्यगात्री ग्राम्यकुक्कुटशूकरौ।
एभिर्यदङ्गं संस्पृष्टं शिरोवर्जं द्विजातिषु।
तोयेन क्षालनं कृत्वा आचान्तः शुचितामियात्"।

अद्यैव तत्तज्जातीयमानवानामन्तराले कतिपये गृहीतसम्प्रदायान्तरतया केचिच्छिक्षाबलेन लब्धनरेशशक्तिमत्वेन चोपविशन्ति साकमेकासने ब्राह्मणादिप्रकृष्टजातीयपुरुषैः। के केऽप्यधमजातीयमनुजाः स्वस्वजातीयव्यक्तिं प्रत्यवलोक्य विप्रादिप्रधानजातीयमानवाचरितजुगुप्सां परित्यज्य हिन्दुसंप्रदायं गृहीतुम् स ।दायान्तरं भवन्त्यभीप्सवः। भवतु-दूरतो वक्ष्यमाणप्रमाणवशतो धर्मशास्त्रीयगौणकल्पोऽक्षतयोनिकाविवाहः। किन्त्विदानीं-प्रतिस्थानं वयस्कविधवापरिणयनं विप्रादिजातिवये भवति चलितुमारब्धम्।

कन्याशुल्कस्य वृजिनाधायकत्वप्रतिपादने—

"न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि।
गृह्णन्-शुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी॥" इति—

मनुवचनादिधर्मशास्त्रीयप्रमाणनिकरस्य स्वरेणैकेन सत्यपि गदितुं जागरूकत्वे तं-प्रति केऽपि प्रतिघातमविधाय निरुक्तशुल्कमादातुमग्रसरा भवन्त्यम्लानवदनाश्च।

अपिच—

अश्रुतचरोऽपि वरशुल्कोऽनुसरति कां कामपि जातिमधुना।

तथा—

"अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्"।

इति मनुः।

"एकशय्यासनं पंक्तिर्भाण्डपक्वान्नमिश्रणम्।
याजनाध्यापने योनिस्तथाच सहभोजनम्॥
नवधासङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह।" इति बृहद्बृहस्पतिः।

इत्येतद्धर्मशास्त्रीयवचनद्वितयेनानृतभाषणस्य स्वेतरजातिभिः सार्द्धमेकपंक्तिभोजनादि-निन्दितव्यवहारजातस्य च मत्यवगतधर्मशास्त्रीयविप्रतिपत्तिविषयकत्वेऽपि तत्सर्वमनु-तिष्ठन्तोऽपि ब्राह्मणा न निपतन्त्यधुना स्वसमाजतः। एवमपि विदेशप्रत्यागतानामेतत्सांप्रदायिकसुयोग्यव्यक्तीनां तथा तदितरमानवानां शास्त्रनिषिद्धाचारवतां च हिन्दु-सम्प्रदायादन्तरिततया सम्प्रदायोऽयं क्षीणाद्भवति क्षीणतरः।
तथा समाजादस्मान्निष्कासितव्यक्तिजातमपि सम्प्रदायस्यास्य विलोपयितुमस्तित्वं सततं-यतते प्राणपणम्। समयेऽस्मिन्नेवंविधे विनापि समाजसंस्कारं वैदिकोऽयं धर्मोऽवतिष्ठेत-

सततमिति न कदापि सम्भाव्यम्। एतदपेक्षया बलीयांसं धर्मविप्लवरूपमापत्समयं प्राक्-यात्को वक्तुम्। नाद्यैव विप्रक्तेऽस्मिन् भरतखण्डे महर्षयः पूज्यपादा-आर्य्यनरनाथाश्च। स प्रति-चक्रवर्त्तिनो विदेशीयाः। युगोऽयं कलिः। विचारसाहसनिपुणानां माननीयानां धर्मपरि-चालकभारतीयविद्वन्मण्डलीनामुपरि विन्यस्तमेतत् संरक्षणं साकल्येन। विरतमिदानीम्। चानुमोदितं वा नियमितमिदं मन्वादिभिः पूर्वाचार्य्यैः।

तेषु यथा मनुः—

"भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः॥
ब्राह्मणेषु तु विद्वांसो विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्त्तारः कर्तृषु ब्रह्मवेदिनः॥
उत्पत्तिरेव विप्रस्य मूर्त्तिर्धर्मस्य शाश्वती।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥
ब्राह्मणो-जायमानो-हि पृथिव्यामपि जायते।
ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये।"

तथा—व्यवहारमत्र नोकथयितुमशक्नुवता राज्ञापि तद्दर्शने प्रेषणीयतो ब्राह्मणस्य कृतत्वं प्रतिनिधित्वेन प्रतिपादितं मनुना। यथा,—

"यदा स्वयं न कुर्य्यात्तु नृपतिः कार्य्यदर्शनम्।
तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्य्यदर्शने॥
सोऽस्य कार्य्याणि संपश्येत्-सभ्यैरेव त्रिभिर्वृतः।
सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा॥
यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः।
राज्ञश्चाधिकृतो विद्वान् ब्राह्मणस्तां सभां विदुः॥"

अतएवेदानीमपि विद्वन्मण्डलीकर्त्तृकधर्मप्रतिपालनं पिञ्जरचालनन्यायेन भविष्यति-सुसङ्गतमिति सम्भाव्यतेऽस्माभिः। यद्यप्यत्र धर्मशास्त्रानुमोदितं विधातुं संस्कारं न ते भवन्ति-बद्धपरिकराः, तदा कालवशेन सनातनधर्मोऽयं भविष्यत्यप्रायः क्रमशः। वैदिकयुगमभि व्याप्यैतद्युगपर्य्यन्तं रक्षितुमिमं धर्मं नियमद्वयेनापि चालितोऽयं मन्यमानाः। मध्येतन्नियम यं जगदीश्वरविहितो-नियमः प्रथमः। देशकालपात्रानुसारतोऽपकारोपकार-दृष्ट्या च स्थापयितुं लोकान् सन्मार्गे विद्वत्समाजानुष्ठितो नियमो द्वितीयः। तत्र प्राथमिक-नियमस्य जगदीश्वरकृतत्वं अर्थात् स्वाभाविकत्वमन यम्।

के तावदैश्वरिकनियमाः कया रीत्या वा तदनुमानमित्याशङ्कायां विवृत्यतेऽधः कतिचित्-पंक्तिभिस्तत्सर्वम्।

यथा—सत्यकथनं, मिथ्यावादापवादः, जगन्मातृरूपासनं परपीडावर्जनमित्यादयो नियमाः। त्वेतन्नियमजातस्याद्यावधि सार्वजनीयत्वोपलब्धेष्वपि समस्तसम्प्रदायेष्वा-वर्त्तमानकालतः साम्येन विद्यमानत्वेन तदनुमानं वक्ष्यमाणविधया विधेयमेव।

यथा—प्राथमिको-नियमो जगदीशस्तुतिविषयकः जगत्कर्त्तृसृष्टप्राणिमात्रेषु अदैषम्येण साधारणतोऽवलोकनीयत्वात् जगत्कर्त्तृकर्त्तृकसृष्टमनुजेषु सर्वेषु स्ववैषम्याभाववत्त्वे सति सकलसम्प्रदायेष्वद्वितीयत्वेनाभासमानत्वाद्वा।

"सत्येनार्कः प्रतपति सत्येनाप्यायते शशी" इत्यादिरामायणीयप्रमाणसामर्थ्येनेदं-दृढीभूतमनुमानम्। अन्यथा सत्यादिनियमानामीश्वरकर्त्तृकत्वाभावे सत्याद्यधीनत्वमवलम्ब्य सूर्यादिदेवकर्त्तृकस्वस्वकार्य्यानुष्ठानस्यासम्भवविषयत्वात्। निरुक्तनियमानां साधारण-नियमत्वं नियमस्यापि धर्म इति नामान्तरत्वं च प्रतिपादितं धर्मशास्त्रकारैः।

यथा, याज्ञवल्क्यसंहितायामादितो-मुनयः—

"योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन्।
वर्णाश्रमेतराणां मे ब्रूहि धर्मानशेषतः॥"

तथा, तट्टीकाकारो-विज्ञानेश्वरः,—

साधारणो-धर्मः अहिंसादिः। न हिंस्यात् सर्वभूतानीत्याचण्डालं साधारणो धर्मः। मन्वादिभिरपि तथोक्तानि वचनानि नोत्तोलितान्यत्र बाहुल्यभयात्। शेषोक्तनियमस्य देश-कालावश्यकतायामधुनाऽवश्याप्यन्ते युक्तयोऽनुकूलाः। यथा भरतखण्डस्य ग्रीष्मप्रधान-देशात्मकतया पलाण्ड्वादिस्पर्शनस्य मद्यादिपानस्य च धर्मशास्त्रीयनिषेधविषयकत्वमित्यनु-मीयते तर्ककुशलैः। देयान्यनुपदमेव प्रमाणान्यत्र,—
शाङ्खे,—

"पलाण्डुलशुनस्पर्शे स्नात्वा नक्तं समाचरेत्॥"

मनुश्चातीतयमाः,—

"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद्-ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥

पलाण्डुलशुनस्पर्शस्यापि सति दोषाधायकत्वे सुतरां तद्भक्षणस्यातीवदोषजनकत्व-मित्यर्थेन आयातम्।

तथाच पलाण्ड्वादीनामप्यभक्षितत्वमुपपादितं मनुना यथा,—

"लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च"॥

सम्प्रदवसरे राजप्रतिग्रहादिषु सत्स्वपि धर्मनिषिद्धेषु दुर्भिक्षाद्यापत्समये तत्प्रतिग्रहणं शास्त्रानुकूलमेव। एतत्सु पूर्वतो राजप्रतिग्रहादिजन्यपापावेदकप्रमाणेष्विदानीं तत्प्रतिप्रसवप्रमाणान्युल्लिखितव्यान्यत्र।

यथाह मनुः,—

"सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः।
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते"॥ इत्यादि।

युगे तु वैदिके अतिविहितयज्ञादि काम्यविशेषे मद्यसेवनस्य गोमांसभक्षणस्य च मत्यपि-शवहार्यत्वेऽपकारदर्शने नावलोक्यतेऽधुना तन्निषेधः।

दृढीकुर्वन्त्येतद्विचारं वैदिकादिप्रमाणानि।

यथा, तृतीयाधिकरणीयसंशयपूर्वपक्षसिद्धान्तविषयिणी माधवीयकारिका,—

"सौत्रामण्यां ग्रहे स्विष्टकृदाद्यस्ति नवास्ति तत्।
शेषणात् सुराक्षीरयोरन्यत्रोपयोगतः॥"

अस्या अर्थः —"सौत्रामणीनामके यागे श्रूयते,—

"पयोग्रहाः सुराग्रहाश्च गृह्यन्ते"। इति।

तत्र-प्रकृतिगत सोमग्रहेष्विव शेषकार्यं स्विष्टकृदादिकमस्ति। न चात्र पूर्ववच्छेषाभावः,— "उच्छिनष्टि, न सर्वं जुहोति" इत्यत्र शेषयितव्यत्वश्रवणादिति चेन्नैवम्। अवशिष्टस्यान्यत्रोपयोगश्रवणात्।

"ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम्"। इति श्रूयते।
"यदि ब्राह्मणं न विन्देत, वल्मीकवपायामवनयेत्"। इति च।
शतातृणायामवनयेत् इति च। शतच्छिद्रा कुम्भी शतातृणा।

तस्मान्नास्ति स्विष्टकृदादिकम्"।

वैदिकमन्त्रो-यथा,—

"सिञ्चन्ति परिषिञ्चन्त्युत्सिञ्चन्ति पुनन्ति च।
सुरायैव बभ्र्वै मदे किं त्वो वदति किं त्वः"॥

अनुष्टुप्छन्दः। सुरा देवता। सुरादाने विनियोगः।

"अंशुः शुनाति अंशुः पृच्यतां परुषा परुः।
गन्धस्ते सोममवतु मदाय रसोऽच्युतः" ॥

मन्त्रोऽयं सुरासंसर्जने विनियुज्यते"।

तथा—महाकविना भवभूतिनापि वेदमनुसृत्य गोमांसाशनसद्भावितं स्वरचितदृश्यकाव्ये-भाण्डायनमुखेन।

यथा,—"भाण्डायनः, समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियायाभ्यागताय-वत्सतरीं महोक्षं वा महाजं वा निर्वपन्ति हि गृहमेधिन इति हि धर्मसूत्रकाराः-समामनन्ति"।

तथाच—गोमेधयज्ञेऽपि गोमांसव्यवहारो वेदे परिदृश्यते।

त्वपकारदृष्टितो-निषेधवचनमादित्यपुराणीयं कलिवर्ज्यप्रकरणे,—यथा,

"महाप्रस्थानगमनं गोमेधमपि गोसवे।
सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः" ॥

एतानि कलियुगे-वर्ज्यानीत्यर्थः।

तथाच, निगमः,—

"अग्निहोत्रं गवालम्भं सन्न्यासं पलपैतृकम्।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्" ॥

उभयविधोऽयं नियमः परस्परापेक्षित्वमाकाङ्क्षते सततम्।

यथा मनुः,—

"यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम्।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत्" ॥ इति।

सत्यावलम्बनपूर्वकराष्ट्रीयलोकपरिपालनस्य शुभजनकत्वेन तदन्यथाकरणे राजकर्तृक-राज्यनिर्वासनात्मकस्यामङ्गलस्य सम्भवादिदृत्समाजानुष्ठितलोकप्रतिपालनरूपनियमो जग-दीशकर्तृकसत्यात्मकनियममपेक्षत—इति मानवीयैतद्वचनाकूतम्। यच्छरीराहितापादकं तदैश्वरिकोपात्तिविप्रतिपत्त्युत्पादकं, सन्त्येतदावेदकानि धर्मशास्त्रीयवचनानि।

यथा मनुः,—

"एवं यथोक्तं विप्राणां स्वधर्ममनुतिष्ठताम्।
कथं मृत्युः प्रभवति वेदशास्त्रविदां प्रभो ! ॥
स तानुवाच धर्मात्मा महर्षीन् मानवो भृगुः।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" ॥ इत्यादि।

शरीरस्य दूषितान्नादिसेवनेनैवापादितानिश्चतया धार्मिकार्या सञ्जातव्हतुत्वात्-सुतरा-मीश्वरोपास्तिविरोधाधायकत्वं स्फुटतः सूचितमाभ्यां वचनाभ्यामेव।

तथाच चरकोऽपि,—

"धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्।

रोगास्तस्यापहर्त्तारः श्रेयसो-जीवितस्य च" ॥

तथैव समर्थितमेतत्प्रमाणेनैव। प्रेक्षावत्समाजाचरित-शरीररक्षणनियमानुलङ्घनस्य जगदीशोपासनविध्वंसित्वादनयोः परस्परापेक्षित्वमाभातं स्फुटतः। एतदतिरिक्तानामुभयविधनियमानामन्योन्यापेक्षित्वमूहनीयं स्थालीपुलाकन्यायेन।

"शरीरमाद्यं खलु धर्मसाधन"मित्येतत्पद्यार्द्धोक्तिनैतन्मतमनुमोदितं महाकविना-कालिदासेनापि, समासमितोऽयं सकलसम्प्रदायानुगतः साधारणनियमविचारः संक्षेपतः। संप्रत्यार्य्यपूर्वाचार्य्यवर्य्याः सर्वतो रक्षितुं धर्मं नियमत्रयस्यैतस्य निम्नलिखितविधित्रितयान्त-र्भूतत्वानुष्ठानकौशले परां काष्ठां प्रदर्शयामासुः।

विधित्रय-निदानभूतस्य विधिसामान्यस्य प्रकृतोपयोगितयादितस्तद्विधिसुव्याख्यानस्तरं-करणीयोऽत्र विधित्रितयपरामर्शः।

कस्तावद्विधिरित्याकाङ्क्षायामुच्यतेऽत्र सः।

यथा, विधिर्नामाज्ञातार्थबोधकं वाक्यं, सतु त्रिविधः।

यथा, अपूर्वविधिः, नियमविधिः, परिसङ्ख्याविधिश्चेति ॥

यथाहुर्मीमांसकास्तत्र,—

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।

तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" ॥ इति।

अस्यायमर्थः "यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः,— अर्थात् प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिः सोऽपूर्वविधिः।

यथा "यजेत स्वर्गकाम" इत्यादिः"। यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण ज्ञायते,— किन्त्वनेनैव विधिनेति—भवत्ययमपूर्वविधिः, अपूर्वस्य प्राक् तदर्थत्वेनाननुभूतस्य विधि-रित्यर्थः। पक्षे रागाभावपक्षे प्राप्तस्य तु यो विधिः, अर्थात् पक्षप्राप्तानुवादको-विधिः,— स नियमविधिः।

यथा "व्रीहीनवहन्यादित्यादिः"। अवपूर्वको-हन्ति वैतुष्यानुकूलाघातविशेषार्थः। अनेन-हि विधिना अवघातस्य न वैतुष्यार्थत्वं बोध्यते, अन्वयव्यतिरेकसिद्धत्वात्। किन्तु-नियमोऽवघातावश्यकत्वम्। स चाप्राप्तपूरणं वैतुष्यस्य हि नानोपायसाध्यत्वात्। यस्यां दशायामवघातं परित्यज्य उपायान्तरं ग्रहीतुमारभते तस्यां दशायामवघातस्या-प्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते। अतश्च नियमविधाव-

प्राप्त्यपूरणात्मको नियम एव वाक्यार्थः। पक्षे अप्राप्तनादण्यायामवघातविधानमिति-यावत्। नत्वपूर्वविधाविवात्यन्ताप्राप्तयागविधानमिति।

एतद्विवृत्तिर्यथा—

अप्राप्तेरत्यन्तसत्ता तद्विधिमन्तरेण रागादिनः कादाचित्कप्राप्तेरप्यसत्ता। नियमस्थले तु-रागाभावात्तदानीमप्राप्तत्वेऽपि कालान्तरे विधिं विनापि रागवशादप्राप्तिर्निवर्तिष्यत इति—नात्यन्तिकी अप्राप्तिरस्तीति वैलक्षण्यम्। पाक्षिके अप्राप्ते इति शेषः। तत्र तद्विधि-प्रतिपाद्ये।

अन्यत्र तद्विधिप्रतिपाद्येतरत्र। चकारोऽयं समुच्चयावश्यम्भावार्थम्। उभयस्य युगपत्-प्राप्तावितरव्यावृत्तिपरः, इतरव्यावृत्तिफलको-विधिः परिसंख्याविधिः।

तथा चैतत् व्याख्याकारः,—

तत्र चान्यत्रेति व्याचष्टे उभयस्येति। तद्वाक्यप्रतिपन्नस्य तदितरस्य चेत्यर्थः। युगपत्-प्राप्तौ युगपदुपस्थितियोग्यत्वे। योग्यत्वं च अन्यतरोपस्थितावन्यतरस्याबाधितत्वम्। नियमस्थले तु एकस्याश्रयणे अन्यस्य प्रयोजनाभावेन बाधितत्वान्न युगपत्प्राप्तिः। परिसंख्यायां-पञ्चपञ्चनखभक्षणप्राप्तावपि तदितरपञ्चनखभक्षणस्य विजातीयतृप्त्यन्तरजनकतया तत्कामस्य-तद्रूपप्रयोजनसम्भवादबाधितत्वमिति द्वयोरपि युगपत्प्राप्तिसम्भवः। इतरव्यावृत्तिपरः उपदिष्ट-सजातीयस्य उपदिष्टेतरस्य सम्बन्धव्यवच्छेदायोच्चरितः। एतेन पञ्चपञ्चनखेतरस्याप्रादेर्भक्ष-णेऽपि न प्रत्यवाय इति सिध्यति।

अतएव—

"भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः"।

इति मनुना पञ्चनखेष्विति निर्द्धारणं कृतम्।

एवं चाप्राप्तायास्तदितरनिवृत्तेः प्रापकतया अस्या अप्याप्राप्तप्रापकत्वरूपसामान्य-धर्मवत्त्वात् विधित्वमक्षुण्णम्। तदेव दर्शयति परिसंख्याविधिरिति। मूलं, यथा—

"पञ्च पञ्चनखा भक्ष्या" इति। इदं हि वाक्यं न भक्षणविधिपरं तस्य रागतः प्राप्तत्वात्। नापि नियमपरम्, पञ्चपञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षे प्राप्त्यभावात् अत-इदमपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः। सा च परिसंख्या द्विविधा-श्रौती लाक्षणिकी चेति। तत्र अत्र ह्येवावपन्तीत्यत्र श्रौती परिसंख्या।

एवकारेण वपमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्।

पञ्च पञ्चनखा भक्ष्याः,—

इत्यत्र तु लाक्षणिकी। इतरनिवृत्तिवाचकस्य पदस्याभावात्।

तथा चैतद्व्याख्याकारः,—

उदाहरति, यथेति—पञ्च पञ्चसंख्यकाः।

यद्यपि—

"श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदत:" ॥

इति पञ्चां पञ्चनखानां भक्ष्यत्वमुक्तं, तथापि श्वाविच्छल्यकपदयोर्द्वयोरपि शल्लकीवाचकत्वाद्दोषद्वेदमङ्गीकृत्य मनुना षट्संख्यकत्वमभिहितम्, तद्भेदानादरे तु पञ्चत्वमेव घटते ।

अतएव स्मृत्यन्तरे,—

"शशक: शल्लकी गोधा खड्गी कूर्मस्तु पञ्चम:" ।

भक्ष्यान् पञ्चनखेष्वाहुरित्यादिना पञ्चानामेव भक्ष्यत्वमुक्तम् । भक्षणविधिपरं-शशकादिपञ्चनखपञ्चकभक्षणविधायकम् ।

रागत इति । रागप्राप्तस्याप्राप्तत्वाभावेन विधानासम्भवत्वादिति भाव: । अपूर्वविधित्वं निराकृत्य नियमविधित्वमपि निराकरोति नापीति । नियमपरं पञ्चनखपञ्चक-भक्षणावश्यम्भावविधायकम् । तथात्वे बाधकमाह । पञ्चनखापञ्चनखेति । पञ्चविध पञ्चनखतदितरपञ्चनखेत्यर्थ: ।

युगपत्प्राप्तियोग्यत्वात् । पक्षे प्राप्त्यभावात् पाक्षिकप्राप्त्यभावात् । शशकादिपञ्चनखे-तरपञ्चनखभक्षणप्राप्तौ शशकादिपञ्चनखपञ्चकभक्षणस्यावाधितत्वेनाप्राप्त्यभावादिति-यावत् । अत इति ।

यतोऽस्य नापूर्वविधित्वं नापि नियमविधित्वं सम्भवति अत इत्यर्थ:,

प्रकारान्तराभावादिति भाव: ।

इदं पञ्च पञ्चनखा इति वाक्यम् । अपञ्चनखेति । शशकादिपञ्चविधपञ्चनखेतरपञ्च-नखेत्यर्थ: ।

परिसंख्याविधिरिति परिसंख्याया निर्दिष्टेतरनिवृत्तेर्विधिरिति यावत् । परिसंख्यां-विभजति सा चेति । द्वैविध्यं दर्शयति श्रौतीति । शब्दाभिधेयेत्यर्थ: । लाक्षणिकी लक्षणया-बोध्या । किन्त्वत्रान्ते विधित्रयेऽस्मिन् निम्नस्था: कतिपये संशया:, यथा,—

किमर्थमेतद्विधित्रयस्योद्भावनम् ? जगदीश्वरीद्भावितमेतत्त्रितयं वा महर्ष्युद्भावि-तम् । कया रीत्या वा निरुक्तनियमद्वयस्य तदन्तर्भूतत्वम् ? तत्त्रयस्य सति वेदोपयोगित्वे-कथं लौकिकव्यवहारोपकारकत्वमित्यात्मकसन्देहनिवहानां निरसनमध: प्रकाश्यते यथाक्रमं-कतिचित्पङ्क्तिभि: स्फुटत: । यथा—

धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयसम्पत्तिर्हि वेदार्थज्ञानाधीना, इत्यत्र न केषामप्या-स्तिकानां भवति विप्रतिपत्ति: । वेदश्च—"मन्त्र ब्राह्मणयोर्वेदनामधेयम्, इत्यापस्तम्बाद्युक्तेर्मन्त्र-ब्राह्मणोभयात्मक: कर्मोपासनाज्ञानप्रतिपादक: । तत्र देवद्रव्योभयसाध्यो यागादि: कर्म । ब्रह्मजीवयोरुपास्योपासकत्वदृष्टिरुपासना । जीवब्रह्मणोरभेद एवात्र ज्ञानम् ।

तत्र च वेदे पूर्वापरविरोधादिना वास्तवार्थविचिकित्सायां प्रसक्तायां तद्वारणाय रचितं मीमांसाशास्त्रम् ।

तत्र कर्मसाधिकानां श्रुतीनां विचाररूपो भागः पूर्वकाण्डः,—

प्रथमतन्त्रशब्दव्यवहृतो-मीमांसात्वेन प्रसिद्धः ख्यातिं गतो जैमिनीयत्वेन। श्रुतीनामुपासनाज्ञानसाधिकानां विचारात्मको वेदान्तत्वेन प्रसिद्धो भागः शारीरिकशब्दवाच्यो वैयासिकत्वेन ख्यातिं गतः। तत्र च विधिप्रतिपादकवाक्यानां निर्णेतुं परस्परप्रभेदं मीमांसादर्शने विधित्रयमुद्भावितं महर्षिणा जैमिनिना। अतो-मीमांसादर्शनस्य जैमिनिनिर्मिततया तद्गर्भितविधित्रयनिर्मातृत्वं जैमिनेर्नश्वरस्येति राद्धान्तः। विधित्रयाभ्यन्तरेऽपूर्वविधिनैव सम्पाद्यते वेदमूलकनिःश्रेयसस्वर्गादिसाधको धर्मो यागादिः। तदुपयोगिजगदीशकृतमत्स्यपालनादि, तथा महर्षिसमाजानुष्ठितोदूखलनिर्माणधान्यावहननादिव्यापारा फलजनकत्वासम्भवात्तस्य समुद्भूतोऽयं नियमविधिस्तदुपकारकत्वेन। क्वचित् कुत्रैतन्नियमद्वयप्रसारणस्याहितजनकत्वेन मौलिकधर्मांशे आघातसम्भवाद्विघातुं तत्सङ्कोचं प्रादुरासीत्परिसंख्याविधिः। मानवीयव्यवहारादिषूपलक्षणविधया परिचालितं विधित्रयं त्रिकालविद्भिर्महर्षिभिरिति सिद्धम्।

नैषा विकृतिः स्वकपोलकल्पिता सत्यनिष्ठेनागृहीतशूद्रादिद्रव्येण द्विजेनानुष्ठितयागाद्यात्मकधर्मस्यावश्यम्भाविफलाधायकत्वे मन्वादिधर्मशास्त्रीयप्रमाणवृन्दस्य जागरूकत्वात्। प्रमाणान्यत्र तत्तत्संहितासु द्रष्टव्यानि।

न च "यजेत स्वर्गकाम" इति वेदवाक्यप्रतिपादितयागस्यादृष्टद्वारा स्वर्गफलजनकतया निःश्रेयसस्वरूपफलोत्पादकत्वमस्यानुपपन्नमिति वाच्यम्। श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्य यागस्य तद्धेतुत्वाद्धर्मस्यास्य सति यदुद्देशकविधिप्रतिपादितत्वे तदुद्देशेन क्रियमाणस्य तद्धेतुत्वात्। प्रयोजनमुद्दिश्य रागादिधर्मस्य वेदे विहितत्वाच्च। न च तदर्पणबुद्ध्याप्रमाणाभाव इति वाच्यम्।

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम्" ॥

इति स्मृति प्रमाणस्य विद्यमानत्वात्। ननु व्रीहीनवहन्यादिति, तथात्र ह्येवावपन्तीति-वैदिकवाक्यद्वयेन यथाक्रमं नियमविधेः परिसंख्याविधेश्च प्रकटितत्वाद्वेदस्यापौरुषेयत्वाच्च कथमुभयविधेरङ्गीकृतं महर्षिसंसदनुष्ठितत्वमिति चेन्न। निरुक्तवाक्यद्वयस्य सत्यपि वेदबोधितत्वे नियमविधिरयमेवायं-परिसंख्याविधिरिति वैदिकविभागस्य मीमांसीयदार्शनिकविभागमन्तराऽचाक्षुर्विषयत्वात्, तथा कया रीत्योदूखलनिर्माणपूर्वकावहननादिकरणस्यानोल्लेखाभावात् तयोदूखलनिर्माणपूर्वकावहननानुष्ठानस्य रागतः प्राप्तेतरव्यावृत्तिविषयकज्ञानस्य च महर्षिसमाजाधीनत्वाच्च। अतो-नियमविधेः परिसंख्याविधेश्च कर्त्तव्यत्वांशे बहुपरिमाणतो-मुनिसमाजकर्त्तृकविधानस्य स्फुटतः प्रकाशमानतया तयोर्मुनिसमाजनिर्मितत्वमप्य-

वश्यमङ्गीकरणीयम्। अवहननावघातोदूखलपदार्थानां शब्दतो-वेदबोधितत्वेऽपि तदनुष्ठानादे-र्मुनिसमाजपरवशत्वादिति दिक्। वेदस्य, पौरुषेयत्वे हिन्दुसाम्प्रदायिकदार्शनिकमतान्तरस्य-सत्यपि विद्यमानत्वे तत्साम्प्रदायिकबहुजनसमादृतस्य वेदस्यापौरुषेयत्ववादिमतस्यानुगतो-ऽयं विचारो विधित्रयस्य।

अन्यच्च —मद्यविधित्रयं परिसंख्याविधेः रागतः प्राप्तेतरव्यावृत्तिपरत्वे स्फुटतः प्रतीयते-तस्यैच्छिकत्वम्। प्रमाणाभावोऽपि नात्र परिदृश्यते।

यथाह मनुः,—

"न मांसभक्षणे दोषो न मद्ये न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला" ॥

मेधातिथिः,—

"यस्तु तेन विनापि शक्नोति जीवितं तस्य निवृत्तिर्महाफला"।

तथा च सर्वज्ञनारायणः,—

"पर्ववर्जं व्रजेच्चैनामित्यवृतुमैथुने विहितेऽपि न दोषः"।

प्रवृत्तिरेषा भूतानां—यतः रागवशात् सर्वसाधारणा प्रवृत्तिर्न वेधो"।

तथा, बृहस्पतिनापि, "मांसमद्यावृतुर्ल्लेषा परिसंख्येत्युक्ता"।

"रोगार्त्तोऽभ्यर्थितो-वापि यो-मांसं नात्त्यलोलुपः।
फलं प्राप्नोत्ययत्नेन सोऽश्वमेधशतस्य चेत्युक्तम्" ॥

अतो-विहितादपि भक्षणान्निवृत्तिर्महाफलेति गम्यते।

कुल्लूकः,—

"भक्षणपानमैथुनादौ प्रवृत्तिः स्वाभाविकोऽयं धर्मः वर्जनं पुनर्महाफलम्"।

तथा भागवतैकादशस्कन्धे, चमसः ;

"लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना।
व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा" ॥

श्रीधरः,—

"ननु व्यवायादीनामपि ऋतौ भार्यामुपेयात् हुतशेषं भक्षयेत् इत्यादिना विहितत्वात्-किमेवं निन्द्यते, अत आह लोक इति,—

व्यवायः स्त्रीसंसर्गः। नित्या रागत एव नित्यप्राप्ताः, जन्तोः प्राणिमात्रस्य, अतस्तासु चोदनाविधिर्नास्ति।

ननु ऋतावुपेयादित्यादिना विधिर्दर्शितः, सत्यं, नत्वयमपूर्वविधिः। किन्तु नियमविधि-रूपेण रागिणामभ्यनुज्ञामात्रं क्रियते। तदाह व्यवस्थितिरिति, तेषु व्यवायादिषु।

केविंवाह्यग्रसुराग्रहैः विवाहविषय एव व्यवायः कार्य्यः, यज्ञ एव आमिषसेवा,—सौत्रामण्यां सुराग्रहान् गृह्णातीति श्रुतेस्तत्रैव मद्यसेवेति नियमः क्रियते।

ननु च नियमपक्षेऽप्यावश्यकत्वान्न निन्दा युक्ता। अत आह आसु निवृत्तीति। अयं भावः, नायं नियमविधिरपि नित्यप्राप्तत्वात् अतो निवृत्तिः परिसंख्यैव। आसु व्यवायामिषमद्यसेवासु निवृत्तिरिष्टा। कथं तर्हि व्यवस्थितिरित्युक्तम्, उच्यते, न तावत् परिसंख्याविधिना श्रुत्या निवृत्तिरुच्यते। तथा सति स्वार्थत्यागः, परार्थकल्पना प्राप्तबाधश्चेति दोषत्रयं स्यात्। अतः क्वचित् प्राप्त्यतोऽप्यर्थस्य प्रापणमनर्थकमित्यपूर्वविधिद्वारा अन्यनिवृत्तिः फलतो भवति। तद्यथा—इमामगृह्णन् रशनामृतस्येत्यश्वाभिधानमादत्त इत्यत्र रशनालिङ्गतो गर्दभाश्वाभिधानीरशनाद्वये प्राप्यतो मन्त्रस्यापूर्वविधिद्वारा परिसंख्योच्यते।

यथोक्तं तन्त्रवार्त्तिके,—

"अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः।

परिसंख्या फलेनोक्ता न विशेषः पुनः श्रुतेः" ॥ इति।

क्वचित्तु रागतो नित्यप्राप्तस्याऽप्राप्तांशपूरणलक्षणस्य नियमफलस्याप्यभावान्नियमविधिद्वारा फलतः परिसंख्या भवति। यथा पञ्च पञ्चनखा भक्ष्या इति। तथा रागतो नित्यवत् प्राप्तस्य व्यवायादेः विवाहादिनियमेनाभ्यनुज्ञाद्वारा परिसंख्यैवेति।

ननु यद्यभ्यनुज्ञामात्रमेतद्भवेत् तर्हि,

"ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति।

घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः" ॥

इत्यादि दोषश्रवणं न स्यात्। नैष दोषः मनसि कामे सत्यपि तस्यामरुच्या द्वेषादिना वा तामनुपगच्छतो दोषश्रवणोपपत्तेरिति सर्वमनवद्यम्"।

तथा भागवतीयैकादशस्कन्धे,—

"स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः।

कर्मणां जात्यशुद्धानामनेन नियमः कृतः"।

श्रीधरः,—

"पुरुषस्याशुद्धिर्नाम न प्रवृत्तेरन्यास्ति स्वाभाविकप्रवृत्तेरेव तस्य मलिनत्वात् न च सहसा सर्वतो निवृत्तिः कर्त्तुं शक्यते। अत इदं न कर्त्तव्यम्। इदमेव कर्त्तव्यं इत्येवं स्वाभाविकप्रवृत्तिसङ्कोचद्वारेण निवृत्तिरेव क्रियते। यथाच न प्रवृत्तिपरो वेदः"।

तथाच भागवते एकादशस्कन्धे,—

"यतो यतो निवर्त्तेत विमुच्येत ततस्ततः।

एष धर्मो नृणां क्षेमः शोकमोहभयापहः" ॥

श्रीधरः,—

"अतो-गुणदोषनियमविधीनां प्रवृत्तिसङ्कोचद्वारा निवृत्तावेव तात्पर्य्यमित्यभिप्रेत्याह-यतो-यत इति"।

"विषयाभिनिवेशेन नात्मानं वेदनापरम्।
फलश्रुतिरियं नृणां न श्रेयो-रोचनं परम्।
श्रेयो-विवक्षया प्रोक्तं यथा भैषज्यरोचनम्"॥

तथा श्रीधरः,—

'ननु प्रवृत्तस्य स्वर्गादिफलश्रवणात्कृतः स्वार्थविभ्रमः, तत्राह इयं फलश्रुतिर्न श्रेयसः परमपुरुषार्थपरा न भवतीत्यर्थः। किन्तु वहिर्मुखानां नृणां मोक्षविवक्षया अवान्तरफलैः कर्मणु रुच्युत्पादनमात्रम्। वेदनात्पर्य्यज्ञानाच्चान्यान् यजन्तीत्याह। स्वमतमेवाह-हिंसायां मांसभक्षणार्थं तत्फलार्थं च यदि रागः स्यात्तर्हि यज्ञ एवति अभ्यनुज्ञाद्वारा वा परिसंख्येयं नत्वावश्यकत्वेन चोदनेत्येवं रूपम्"।

आपस्तम्बधर्मसूत्रीयभाष्ये,—

हरदत्तः "पौरुषेयी व्यवस्थासमयः। स च त्रिविधः विधिर्नियमः प्रतिषेधश्च। सन्ध्ययोश्च-वहिर्ग्रामादासनं वाग्यतश्चेत्यादिः। निवृत्तिप्रयोजनाविनरो, प्राङ्मुखोऽश्नानि भुञ्जीतेति—नियमः, क्षुदुपघातार्था भोजने प्रवृत्तिः प्राप्ता च यत्किञ्चिद्दिङ्मुखेनापि भुञ्जानेन क्षुदुपहन्तुम्।" तत्र नियमः क्रियते,

"प्राङ्मुख एव भुञ्जीत न दक्षिणामुख इति"।

परिसंख्या-नियमस्य क्रियायामपि भेदः।

विज्ञानेश्वरः,—तस्मिन् युग्मासु संविशेदिति, किमयं विधिर्नियमः परिसंख्या वोच्यते। न तावद्विधिः प्राप्तार्थत्वात्।

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्या निगद्यते"॥

तस्माद्युग्मास्वेव गच्छेन्नान्यत्रेति परिसंख्येति युक्ता।

कैयटः,—

"नत्वयं विधिरप्राप्तेरभावात्। विवरणं,—विधिरिति अपूर्वविधिरित्यर्थः, अन्यनिवृत्ति—फला परिसंख्या"। अतः परिसंख्याया ऐच्छिकत्वे न कापि विप्रतिपत्तिरिति सिद्धम्।

अपरञ्च—एतादृग्विधित्रय-प्रकटनेन यद्बुद्धंदयं संरक्षितं मीमांसकैस्तत् दार्शनिकैः का-रीतिमवलम्ब्य प्रतिपालितं तदधो-विविच्यते।

यथा वैशेषिकदर्शनमतं, "द्विविधोऽयं धर्म्मः दार्शनिकसम्मतः" "अभ्युदयनिःश्रेयससिद्धि-

धर्म" इति। अभ्युदयसिद्धिः अर्थात् प्रवृत्तिलक्षणो-मङ्गलात्मकः स्वर्गादिफलसाधकः, तथा निःश्रेयससिद्धिः अर्थात् निवृत्तिलक्षणोऽपवर्गसाधकश्च धर्म इत्यर्थः।

प्रथमोक्तधर्मपुष्टिकारकत्वमदृष्टविधेः कियदंशेन नियमविधेः परिसंख्याविधेश्च। तथा-शेषोक्तधर्मपुष्टिवर्द्धकत्वं कियत्परिमाणेन नियमविधेः साकल्येन परिसंख्याविधेश्च। परिसंख्या-विधेरैच्छिकतया विद्वत्समाजेच्छानुसारेण शेषोक्तधर्मपरिवर्त्तनस्य सत्यपि सम्प्रत्युपयोगित्वे-निःश्रेयससाधकस्य वेदमूलकधर्मस्य न भवति यथा विपरीतगामित्वं तस्य, तथानुष्ठेय-मेतत्परिवर्त्तनम्।

एतद्विधिवशवर्त्तितयेदानीं नियमान् निर्माय प्रचारयितुं हिन्दुसमाजाभ्यन्तरे न भवेयुः केऽपि शक्ताः। न विद्यते साम्प्रतं भारते महर्षिसंसत् क्षत्रियपरिषच्चेदानीम्। शिक्षा तु-समाजादस्मादन्तर्हितेत्युच्यते नैव भवेदत्युक्तिः।

तर्हि विदेशीययवनराजत्वावसरे प्रादेशिकनिबन्धग्रन्थसङ्कलनमिव सम्प्रति कर्त्तव्यं निबन्ध-ग्रन्थनिर्माणम्, न तावत्तत् किन्त्वावश्यकम्। तदननुष्ठाने च सन्ति कारणानि बहूनि। यथा,—

तस्मिन्नवसरे प्रत्येकभारतीयप्रदेश आसीत्सीमानियमितः। गमनागमने चान्यस्या-अपि कस्याः सुव्यवस्थाया अविद्यमानतया साहं स्वस्वप्रदेशैः प्रदेशान्तराणां सम्पर्का-भावात्स्वैव धरा स्वस्वप्रदेश-इति मन्यते तत्रत्यैः।

अतएव स्वस्वप्रादेशिकाचारव्यवहाराणां तत्तद्देशीयविप्रादिजातिनिवहस्य च तत्त-प्रादेशिकनिबन्धग्रन्थेषु प्राधान्यमापादितं तत्तत्कालीननिबन्धनिर्मातृभिः। भरतखण्डस्येदानीं-प्रत्येकप्रदेशीया मानवाः स्वप्रादेशिकभाषाज्ञानमन्तरा प्रदेशान्तरभाषानभिज्ञा अपि-राजकीयभाषाशिक्षायाः सर्वत्र प्रचारिततया स्वान्तरीयभावं व्यक्तीकर्त्तुं समर्थाः-प्रदेशान्तरीयव्यक्तीभवन्ति सक्षमाः।

त्वेकस्थानतः समुद्भूता स्वीयजातिरिति बुध्यते सर्वैः। सर्वेषामुत्पद्यते मनसि विश्व-जनीनो-भावः। जलस्थलयोर्वाष्पीययानस्य सुलभतया सुदूरदेशगमनं भवति सुगम्यम्। अतोऽन्यान्यप्रदेशवासि-मनुजानामभ्यन्तरे भवति बन्धुता सुदृढा। सहृदयतया स्वस्व-जातीयपरिचयस्य परस्परयौनसम्बन्धं खाद्यपेयादिकं चानुष्ठातुमुत्कण्ठन्ते सर्वे। सम्राट्-पञ्चतो न भवति किमेकविधमिदं धर्मसंरक्षणम्।

नेदानीं भवन्त्युपकाराधायकाः पूर्वं पूर्व-सङ्कलितनिबन्धग्रन्था इति सम्भाव्यते साकल्यतः। ततोऽधुनातनहिन्दुसम्प्रदायस्योन्नतिविधाने निगमागमस्मृत्युपस्मृतिपुराणोपपुराणसदाचारादि-मूलकतया देशकालोपयोगित्वेन च विश्वजनीननिबन्धग्रन्थोऽवश्यं सङ्कलनीय-इत्युदेति-सर्वमानवानां मनसि।

अत-एतादृशो-ग्रन्थः कर्त्तव्यो-देशकालानुरूपः। एतदुपयोगीनि वर्त्तमानकालीन-कलेरुपकारककार्य्यकलापोद्बोधकानि प्रमाणजातानि स्वस्वरचितसंहिताग्रन्थेषु समुल्लिखि-

तानि सर्वैरेव महर्षिभिः-सर्वैः। न च सति विद्यमाने संहिताग्रन्थसन्दोहे नावश्यकं निबन्धग्रन्थान्तरनिर्माणमिति वाच्यम्। प्रतियुगं तद्युगीयधर्माणां प्राचीनाचार्य्योद्भावितत्वेऽपि तत्र्यैकस्थानतस्तत्प्रमाणानामचक्षुर्विषयत्वात्। प्रतियुगमपि विद्यते ह्यापत्कालः। प्रतिस्थानं तत्कालीनधर्मानुष्ठानमपि पृथक्तया निर्दिदिक्षुर्महर्षयः। किन्तु कल्यवच्छेदेऽनुष्ठेयाः के के धर्माः? तदभ्यन्तरे को वापत्कालः? तत्र वा करणीयानि कानि-कानि कार्य्याणि? एतत् समस्तविवरणोल्लेखनं स्फुटतः कुत्रापि स्थले न भवति दृष्टिगोचरम्। अतएवैतत्सकलविषयस्य स्पष्टतो विधातुं विवृतिं निबन्धग्रन्थनिर्माणमवश्यं प्रयोजनीयम्। तर्हि कलियुगधर्मविवरणमित्यपर्यवस्थापितश्चोऽयं निबन्धो वा-तदीयापत्कालविधेयधर्ममूलकतयानुष्ठातव्य इत्येवंविधे सति सञ्जायमाने सन्दोहे कलिधर्मभित्तिमवलम्ब्य संग्रहग्रन्थकरणे तन्निवारणमसम्भावनीयमिति निर्णीयतेऽस्माभिः।

यन्निरुक्तप्रमाणोद्भाषितकलीयधर्माणां विपर्ययः परिदृश्यते व्यतिक्रमोऽत्र। अतः प्रोक्तभित्त्यवस्थापितनिबन्धग्रन्थेनैव धर्मसंरक्षणमाशावेत् न सम्भवपरम्। सुविचारेणाप्यस्माकमेतदनुष्ठानमुचितमित्यवबुध्यतेऽस्माभिः। तथोऽक्षुण्णतयास्य धर्मस्य संरक्ष्य मौलिकतां निर्मेयं देशकालोपयोगि धर्मशास्त्रम्। तथा सति रक्षितोऽयं हिन्दुधर्मः कियत्समत्सरावधीति सम्भावना। कुत इति चेदुच्यते,—

यथा—समयेऽस्मिन्नविधिविधिरूपेण, मुख्यो गौणत्वेन, गौणो मुख्यरूपतयावगम्यते धर्मशास्त्रीयप्रमाणेभ्यः।

यथा त्वनापदि,—

"वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः।
परधर्मेण जीवन् हि सद्यः पतति जातितः॥"

इत्युक्तमानवीयप्रमाणेन द्विजाति-कर्त्तृकानन्तरवृत्तिग्रहणस्याविधित्वेऽप्यापदि विधित्वमापादितं मन्वादिभिर्धर्मशास्त्रकारैः।

यथाह मनुः,—

"अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
जीवेत्-क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः॥
उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्॥"

इत्येवंविधान्यन्यासु संहितासु दृष्टव्यानि प्रमाणवचनान्यतः परित्यज्यन्ते।

तथा मुख्यत्वं, मुखे आदौ भवः मुख्यः तस्य भावः मुख्यत्वं, अर्थात् प्रथमकल्पत्वम्। अमरोक्तेर्वा श्रेष्ठत्वम्। तस्य कदा कदा वा लभते गौणत्वम्

यथा—"अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वा"दितिजैमिनीयषष्ठाध्यायत्नीयपादीयविंशाधिकरणन्यायेनैतत्समर्थितम्। तथाहि तत्र संशयपूर्वपक्षसिद्धान्ताभिधायिनीयं माधवीयकारिका,—

"नियोजनेऽप्ययोग्यश्चेत्-खदिरः किं तदा भवेत्।

मुख्यत्वेन सदैव स्यात्तदर्थत्वं न चेतरः॥"

तद्विवृत्तिस्तु यथा—"यदात्यन्तकठिनत्वात्स्तम्भादिरिच्छितोऽपि खदिरो नियोजनेऽप्ययोग्यः। तदापि मुख्यत्वात् खदिर एवोपादेयः। इतिचेत् नैवम्। उपात्तस्य प्रयोजनाभावान्नियोजनयोग्यः प्रतिनिधिरेवोपादेयः"। अत्रैव मुख्यत्वेनाभिमतखदिरात्मकयूपस्य निष्प्रयोजनीयतया गौणत्वमापन्नं निर्विवादमेव।

तथाच—"सोमाभावे पूतिकतृणान्यभिषुणुया"दित्यादौ मुख्याभावे गौणस्य ग्रहणत्वात्-गौणत्वंच मुख्यार्थतावच्छेदकप्रकारकारोपविशेष्यत्वम्।

स चारोपो-धर्माधर्मस्थले शास्त्रजन्यो ग्राह्यः।

अन्यथा—सर्वेष्वपि तृणेषु सोमत्वारोपापत्तेः। तथा—प्रतिनिधिश्च तद्वत्, तद्वत्प्रयोजनैकत्वात्।

अशास्त्रलक्षणत्वा"दिति जैमिनीयतृतीयाध्यायषष्ठपादीयचतुर्दशाधिकरणन्यायेनाप्येतदनुमोदितम्। तथाहि - तत्र संशयपूर्वपक्षसिद्धान्ताभिधायिनीयं कारिका।

"नीवारादि प्रतिनिधेरतुल्यो वा विधिः स्मृतः।

पुरेवा तुल्यतासाम्यमाकाराद्व्रीहिता यतः॥"

"व्रीहिभिर्यजेत,—इति विहितानां व्रीहीणामसम्भवे नीवाराः प्रतिनिधित्वेन स्वीकार्या इति वक्ष्यते। तत्र पूर्वन्यायेनावघातादिविधयो व्रीहिषु कृतार्थाः पश्चात्-भाविनि नीवारादौ न प्रवर्तन्ते इति चेन्नैवम्। व्रीहिशब्दो हि जातिविशेषेणाकारविशेषेण वोपेतं द्रव्यमाचष्टे नीवारेषु जातितो-व्रीहिशब्दार्थत्वाभावेऽप्याकारतो व्रीहिशब्दार्थत्वेन "व्रीहीनवहन्ति' इति विधिः प्रवर्त्तते। यथा व्रीहिजातावेव समीचीनानां व्रीहीणामभावे जलवह्न्याद्युपघातेन सारविकलेष्वपि विधिः। तथा जातिविकलेष्वपि व्रीहीषु मुख्यैकदेशरूपत्वादिधिरस्तु"।

उपलक्षकजैमिनीयप्रमाणजातमेतदाश्रित्य समयविपर्य्ययपरम्परया स्वानुष्ठितधर्माणामपि प्रधानगौणत्वव्यवस्थापादिता प्रेक्षावद्भिरिति सिद्धान्तः।

न च विद्वत्-समाजानुष्ठितत्वे प्रमाणाभाव इतिवाच्यम्।

"यतः सायंगृहत्वं च सूरिभिस्तत्वदर्शिभिः।

एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः"।

निर्मितानीत्यध्याहार्यम्। इत्यादित्यपुराणीयवचनेन लोकरक्षार्थं विद्वत्समाजानुष्ठि-

धर्मस्य प्रमाणितत्वात्, "प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनात् रात्रौ चेदादित्यस्य", प्रेतस्पर्शानुवृत्तौ हारीतः, –"ब्राह्मणानामनुमत्या वा"।

तथाच यदा ग्रामप्रवेशं विना आत्यन्तिकः कार्य्यनाश आपद्यते, स्पर्शिनोऽशक्तिर्वा तदा ब्राह्मणाज्ञां गृहीत्वा पूर्वोक्तविधिमुल्लङ्घ्य ग्रामप्रवेशोऽप्यदोषः"। इति गादाधरीयकालसारोद्भावितमीमांसया यथादेशकालपात्रं प्रकटीकृतविद्वत्समाजाचरितधर्मत्वाच्च। इत्यलं पल्लवितेन।

अन्यच्च दानोक्तसमयं सत्यापत्कालात्मकत्वेन निर्णीतं रोगदुर्भिक्षादिप्रपीड़ितावस्थाया आपद्रूपत्वेन परिसंख्यातत्वात्तदीयकाल एवापत्समय इत्यापत्तिमुत्थापयन्ति केचन तर्ककुशला निम्नस्थयुक्तिप्रदर्शनेनैव।

यथा निरुक्तकालस्य बहुवर्षानवस्थायितया समयस्याधुनातनस्य बहुसंवत्सरव्यापित्वेन च कथमापत्समयात्मकत्वेन सर्वपरिगणितत्वमस्य।

अपि च वित्ताद्यभाववशतः कतिपयानां मानवानां सत्यां विपत्तौ संघटितायामपि स्वस्वनियमाधीनतया क्रोड़ीकर्त्तुं मानवान् सर्वान् विपदियं न संघटेतेति पूर्वपक्षः। सिद्धान्तस्तु वक्ष्यमाणविधया सत्याचरिते समधाने न सम्भवेत् काप्यापत्तिः। कुत इति चेदिहत्यतेऽत्र संक्षेपतः। यथा, –

धर्मशास्त्रसमतानुगताऽऽपत्त्रिविधा। रोगाद्यभिभूतावस्था। सम्यग्वर्त्तनोपायानुपलम्भो धर्मविप्लवश्च। अर्थात् रोगशोकादिभिः प्रपीड़ितप्राणिनां यावस्था, सम्यग्रूपेण स्वस्वजीविकानिर्वाहकोपायस्य योऽभावः, क्रमशो धर्मलोपोपक्रमश्च। सर्वमेतदापदात्मकत्वेनाभिहितमेव। तदात्मकानामापदां सर्वासां स्याद्दीर्घाल्पकालस्थायित्वं तथा बहुवर्षव्यापित्वञ्च।

ज्वरादिषु कतिपयेषु गदेषु कियत्समयमुपगतेषु सत्स्वप्युपशमं, कुष्ठादयो रोगा भवन्त्यामरणं क्लेशदायकाः।

तथा सति स एव समयः किमापत्काल इति न परिगण्यते सर्वैः। यदा कस्मादभाववशतोऽप्याजीवनावधि स्वाच्छन्द्येन परिचालयितुं स्वजीविकां न कमप्युपायमुपलभेरन् लोकाः, तदा स एव समयो विपत्समयात्कोऽन्य इति कथ्यते लोकैः। भवति चैतच्छास्त्रदृष्टम्। अतः स एवापत्कालातिरिक्तः क इति नोच्यते सर्वैः। नच सांसारिकनियमानुसारेणैकदा सर्वे लोका नाभावग्रस्ता इत्यापत्तिः सुसङ्गतेति वाच्यम्। सति पारावारनिमग्नपोते तदारोहिणां प्राणिनां सर्वेषामेकदा इष्टप्राणविसर्जनत्वात्, ग्रामदाहाद्यवसरे तद्ग्रामावस्थितानां प्राणिनां युगपदीप्सितभस्मीभूतत्वाच्च।

अशौचादिप्रकरणेऽवलोकितान्येवं तद्विषयकाणि सान्त्ववचनानि सकलेषु धर्मशास्त्रेषु। तावदवलोक्यते प्रायशो यथैव महाप्राविसरेऽन्नाद्यभावप्रपीड़ितानां प्राणिनां व्याकुलतासहतो, तथैव परिदृश्यन्तेऽभावशून्या धनिका विलासैः संरक्षणावेक्षया, तथा रात्रागो-

ऽपि प्रजादिपरिपालने तदपेक्षया विशेषाकुलाः। सकलानामेतेषां व्याकुलतैका वा विभिन्ना। न तावद्विभिन्ना। व्याकुलतात्वावच्छिन्नव्याकुलताया ऐक्यात्। अतः सर्वैरेवावश्यमङ्गीक्रियते सैकेति।

ततो व्याकुलतोपलक्षितः काल एवापत्समयो नान्य इत्यवश्यमेव स्वीकरणीयं सर्वैर्निर्विवादम्। परामर्शमिदानीं भवेयुश्चेदग्रसरास्तदा ज्ञास्यन्ति यदेकांशोऽवस्थापन्नः, पञ्चदशांशा अभावाक्रान्ता इति। अत एतत्समयो न सार्वजनीनापत्समय इति न कथयिष्यते कैरपि हृदयवद्भिर्लोकैः।

श्रीजगदीश्वरस्यैष नियमोऽयं यत्, कियत्स्वेकविषयकाभावाभिभूतया सत्स्वपि दुःखितेषु केचनान्यविषयकाभावेन भवन्ति कातराः। किन्तु तदुपलक्षितः काल आपत्समय एवेति वक्ष्यते सर्वैः। सत्यामियत्समयपर्य्यन्तव्यापिन्यामापदि तदभिलक्षितः कालो विपत्समयात्मकत्वेन कथनीय इति न ब्रुवन्ति शास्त्राणि। वरं शास्त्राणि यथा—विपत्समयत्वं प्रतिपादयन्त्यल्पकालव्यापिदुःखिनावस्थायास्तथा बहुसम्वत्सरव्यापिदुःखापन्नावस्थायाश्च।

अतो व्यापत् यत्समयव्यापिनी, तद्विपदस्तत्समय एवापत्काल इति निर्गलितार्थः। विपत्कालविचारावसरे लिखितव्यान्येतद्विवरणसमर्थकानि महाभारतीयापद्धर्मपर्वोक्तवचनादीनि प्रमाणानि द्रष्टव्यानि। निरुक्तविवरणावलिपरिदर्शनेनैवेदानींतनसमयोऽप्यापत्काल इत्यवश्यं स्वीक्रियते मुक्तकण्ठैः सर्वैर्निष्प्रत्यूहम्। तत एतन्निबन्धस्य प्रथमतः कर्त्तव्यो विपत्समयविचारः। परस्परमनुस्यूतस्तदुपयोगिविषयनिर्णयः। तथा सति भारतीयाधुनातनसकलार्य्यसांप्रदायिकाः सन्तः पुष्टकलेवराः प्राणपणं रक्षितुं निजधर्मं भविष्यन्ति सचेष्टाः। अत एवापत्कालतत्धर्मविचारपूर्वको वेदविहितधर्मविचारस्यावश्यकतया निबन्धीयमुखबन्धात्परमेव मीमांसादर्शनाभिमतस्य वैदिकधर्मस्यादावेव विवेको विधेय इति सुस्थिरम्।

समाप्तोऽयं ग्रन्थीय-मुखबन्धः।

---

# अथ पूर्वार्द्धारम्भः।

---

## वैदिकधर्मनिरूपणम्।

यथा,—

वैदिकधर्मरक्षार्थमुल्लेख्योऽयं निबन्ध इत्येतस्य मुखबन्धतः प्रतिज्ञाततया कस्तावद्वैदिकधर्म इत्याकाङ्क्षायामुच्यते स एवात्र। इह खलु संसारे सुखं दुःखनिवृत्तिश्च परमं प्रयोजनं तत्रापि दुःखनिवृत्त्यपेक्षया सुखमेष्यमाणतरं लक्ष्यते।

तथाह्येतद्रूपाभीष्टसाधनार्थमेव सर्व एव लोकास्तत्साधनोपायवस्तूनां सम्पादनादिविषये श्रमायासादिजन्यक्लेशराशीन् सहन्ते। सहन्ते च सुखसाधन सम्पादनसमयेऽवान्तरदुःखराशीन्। यथा भक्ष्यभोजने कण्टकविधं पाकश्रमं, भोजने तदाहरणजन्यक्लेशराशीन्।

तत्र तत्र जायमानानपि क्लेशान् अगणयित्वैव प्रवर्त्तन्ते तत्र तत्र।

तथा जायमानेष्वपि क्लेशेषु तत्तत्कर्मभ्यो न निवर्त्तन्ते केऽपि। प्रत्युत तत्र प्रयतन्त एव। अतो दुःखोत्पत्तिभिया वैषयिकसुखसम्पादनाय नैतत्तत्कर्मभ्यो विरमन्तीति लोकसिद्धम्। ततश्च सर्वं वैषयिकसुखं दुःखानुविद्धमपि न कश्चिदपि हातुमिच्छति। सति च सुखस्यैष्यमाणत्वे सर्व एव जनाः कालान्तरभाविसुखाभिलाषेण सुखसाधनवस्तुसम्पादनार्थं प्रथमतः सहन्ते बहुविधं क्लेशम्। यथा कृषीवला हैमन्तावसरे शस्यलाभप्रत्याशया ग्रीष्मवर्षादिकाले क्षेत्रकर्षणं धान्यादिवपनञ्च कुर्वन्तः सुखमन्तिलाभाशया यौवनसमये विद्याशिल्पकलाकलापादिकमभ्यसन्तो बाल्यकाले सहन्ते बहुविधं क्लेशसञ्चयम्। किन्तु मानवमात्रस्यैवेदृशः स्वभावो दृश्यते यदल्पसुखेन न केऽपि परितृप्यन्ति वरं क्रमशः पूर्वप्राप्तसुखापेक्षयाऽधिकमेव सुखं कामयन्ते।

यथा वृष्टिसलिलैर्देहसन्तापनिवारणरूपे स्नानफले सत्यपि-विद्यमाने निवारयितुं विशिष्टसन्तापं दूरवर्त्तिनीमपि नदीं वापीं चावगाहितुं प्रायेण प्रवर्त्तन्ते सर्व एव, प्रवर्त्तन्ते च प्रात्याह्निकान्नभोजनजन्यसुखे जायमानेऽपि मिष्टान्नभोजनजन्यसुखसम्पादनाय। अनेन विश्वजनीन-प्रवृत्तिदर्शनेन ज्ञायते यत्-आत्मन्युत्कृष्टसुखधारा उत्तरोत्तराधिकास्त्विति सर्वेषामेवैवं कामना। तथाच-विषयवस्तुसम्बन्धसमय एव वैषयिकसुखमुत्पद्यते, विषयवस्तुसम्बन्धविगमसमये-च व्यपैति। विषयसम्बन्धश्च न पुनश्चिरस्थायी। इत्थं वैषयिकसुखं क्षणविनश्वरं-विषयज्ञानसमकालोत्पन्नत्वात्। सुतरां वैषयिकसुखस्यास्य विगमावसरे जायते-मनस्तापादिदुःखम्। विशेषत-एकविषयसुखानुभवोत्तर समयेऽन्यविधशारीरिकपीड़ादिमानसिकेर्ष्यादिकं च दुःखं प्रायशः प्राणिनां भवत्येव। सुखकाले च-तादृशदुःखान्तरनिवारणाय-उपायान्तरादर्शनात् समस्तलोका भवन्ति-उद्वेजिताः। नाद्यापि तादृशो लौकिक उपायः कश्चिदुद्भावितः। येनोपायेन-वैषयिकसुखं चिरस्थायि कर्त्तुं शक्यते। तत्-समये वान्यादृशं दुःखं नोत्पद्यत-इति। अतश्चिरस्थायिनीं दुःखाननुविद्धां सुखसन्ततिमभिलषतो-जनस्य-विशेषतो-देहान्तरभावितादृशसुखधाराभिलाषिणश्च न कश्चिद्दृश्यते लौकिक-उपायः। तथाहि—

यथा, बाल्याभ्यस्तविद्यादिभिर्यौवने जरादिकाले च देहेऽस्मिन्नेव सुखलाभो भवति न तु देहान्तरे। एवमिह देहे समुपार्जितेन येन लौकिकोपायेन-देहान्तरे शर्मलाभो-भवेदेवंविध-उपायो-न दृश्यते कश्चित्।

अपरञ्च—

यथा, दण्डमृत्तिकासलिलसूत्रसामग्रीभ्यो घटः। तुरीतन्त्वादिभ्यः पटः। तृप्तिर्भोजनेन। तथा सुगन्धिघ्राणे सुखं च भवति इति तत्तद्वस्तूनां कार्य्यकारणभावः प्रत्यक्षसिद्धः। चिरस्थायि दुःखरहितं देहान्तरभावि सुखं प्रति तु न-किञ्चित् कारणं प्रत्यक्षेणोपलभ्यते। कारणताग्राहकयोः। तत्सत्त्वे तत्-सत्त्वमन्वयस्तदसत्त्वे तदसत्त्वं व्यतिरेकः। अन्वयव्यतिरेकयोस्तत्रासत्त्वात्-निश्चितकारणभावमेव वस्तुकार्य्योत्पादनाय व्यापार्य्यमाणं दृश्यते। न-खलु क्वापि लौकिकोपाये तादृशसुखान्वयव्यतिरेकौ दृश्येते येन तत्र तादृशसुख-

कारण-तावज्ञो भवेत् । इत्थं प्रत्यक्षप्रमाणेन क्वापि तथाविधसुखस्योपायता-निश्चयाभावे तत्रानुमानप्रवृत्तिरपि न भवति । तथाहि येन पदार्थेन यः-पदार्थोऽनुमीयते तयोर्द्वयोः पदार्थयोरनेकस्मिन् स्थले सहचारावलोकनेनैव-सति व्याप्तिग्रहे गृहीत-व्याप्तिकेन हेतुना साध्यमनुमीयते । यथा, अनेकत्र-सहचारदर्शनात् गृहीत-व्याप्तिकधूमाद्वह्निः । प्रकृते च तथाविधसुखस्य-तत्साधनेन कुत्रापि न सहचारो दृश्यते येन व्याप्तिर्गृह्येत । अतो व्याप्तिनिश्च-याभावान्नानुमानप्रवृत्तिः ।

अतएव चिरस्थायिनो-दुःखाननुविद्धस्य सुखसञ्चयस्य, विशेषतो-देहा-न्तरभाविनः सुखसञ्चयस्य सम्पादनाय न कश्चन लौकिक उपायोऽध्यवसीयते । परिशेषादलौकिकोपायस्यावलम्बनीयत्वे कस्य वस्तुनः कीदृक्कारणं तस्य कारणत्वं वा केन मानेन गृह्यते । प्रमाणमन्तरेणैव कारणत्वे स्वीकृते सर्वाण्येव-वस्तूनि सर्वेषामेव वस्तूनां कारणानि स्युः ।

एवमेवापत्तिरुत्तिष्ठते, सैयमापत्तिराप्तवचनरूपप्रामाण्यात् गृहीतकारण--भावस्यालौकिकोपायस्यैव तादृशसुखहेतुत्वाङ्गीकारान्निरस्यते ।

आप्तश्च यथार्थज्ञानवान् भ्रमप्रमादादिशून्यो-रागद्वेषादिवर्जितः । तस्यो-पदेश-एवाप्तोपदेशः । तेनैवोपदिष्टेन वाक्येनालौकिकपदार्थयोः कार्य्य-कारणभावो निर्णीयते । तत्र सर्वनियन्ता सर्वशक्तिमान् सर्वज्ञः सर्वस्रष्टा-परमेश्वर एव प्रधानमाप्तः । स एव परमेश्वरः पूर्वमचिन्तनीयशक्तिद्वारा-सृष्ट्वा विश्वमण्डलं विश्वसंसारस्य मर्य्यादारक्षार्थं प्रवृत्तिलक्षणं धर्ममुपदिश्य-प्रथमतः प्राणिनो-धर्मानुरक्तान् विधाय परिशेषे निरतिशयानन्दसन्दोहस्वरूप-मुक्तिप्राप्तये निवृत्तिलक्षणमपि धर्ममुपदिदेश । तादृशाप्तोपदेशानुसारेणैव-प्रवृत्तिलक्षणं धर्ममवलम्ब्य संसारयात्रां निर्वाहयन्तः सर्व-एव जनाः क्रमशः-स्वच्छान्तःकरणाः निर्दोषाः निर्लोभाः निर्मलचित्ताश्च भूत्वा परनिर्वृतिसाधनं-तत्त्वज्ञानं लब्ध्वा परमपदं प्राप्नुवन्ति ।

अस्यैव जगत्पातुर्यद्यपि तादात्म्यादिसम्बन्धेनैव सर्व-एव लोकाः समाना-स्तथापि देशकालपात्रशक्तिभेदादधिकारिभेदमुद्दिश्य स धर्मविशेषमादिदेश । यो-यादृशधर्माधिकारी स तादृशधर्ममनुतिष्ठन् परमपदं लभते, न पुनरन्य-

धर्मस्यान्यैरनुष्ठाने तत्र तनुरपि फलोदयः, प्रत्युत तत्रानर्थपरम्परा जायते, यथा शस्यविशेषाणां क्षेत्रविशेष-एव फलोदयः। नहि हैमन्तिकधान्यभूमौ-इक्षुरुत्पद्यते इक्षुभूमौ वा हैमन्तिकधान्यम्। प्रत्युत तथा वैपरीत्येन वपने-तत्तत् क्षेत्रे निर्वीर्य्यतैव जायते। तथा परमेश्वरोऽपि यादृशमानवक्षेत्रे यादृशं-धर्मवीजमुप्यमानं फलोदयाय कल्पते, तन्निश्चित्य तादृशमानवक्षेत्रभेदे तादृश-वीजरूपं कर्मभेदं विधातुमुपदिदेश। इत्यधिकारिभेदाद्धर्मभेदोऽस्तीति गम्यते। तेनेतरेणापरधर्मानुष्ठाने तदाज्ञातिक्रमो-भवति। तदाज्ञामतिक्रम्य कर्मणि कृते च तदवमानना कृता स्यात्। ततश्च तज्जन्ययन्त्रणापि भुज्यते।

"श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते।
आज्ञाच्छेदी मम द्वेषी नरकं प्रतिपद्यते"॥

वाराहम्,—

"यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥
स्वधर्मे निधनं श्रेयः परधर्मो-भयावहः।
चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः॥
लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ!
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्"। इति गीता।

एभिः शास्त्रैर्युक्तिभिश्चाधिकारिभेदेन धर्मभेद-इति सिद्धम्। एतेषां-धर्माणां चानुष्ठानोद्देश्यं परमेश्वराज्ञापालनमेव। धर्माणां बहुवचननिर्देशो वर्णा-श्रमसम्प्रदायादिधर्माभिप्रायेण परमेश्वरकर्त्तृकवैदिकधर्मनिर्देशोऽत्र मन्वाद्यादि-कर्त्तृकस्मृत्यादिधर्माणामुपलक्षक इति बोध्यम्।

ब्राह्मणादिभिः स्वस्वकर्मानुष्ठानेन-आज्ञापालनेन सम्मानितश्च। परमे-श्वरोऽभीष्टफलं चैभ्यो यच्छति। स चैकोऽप्युपासकानां सिद्धयर्थं नानारूपतां-प्राप्तोऽपि यस्य यस्य यत्र यत्र जायते श्रद्धा, तत्तदुपासनयैव तस्य तस्य-प्रयच्छति विशेषफलम्।

तदप्युक्तं गीतायाम्,—

"यो-यो-यां-यां तनुं भक्तः श्रद्धयार्च्चितुमीहते ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान्" ॥

ईश्वराराधने च सर्व्वेषामेवाधिकारः ।

तदुक्तं तत्रैव,—

मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो-वैश्यास्तथा शूद्रास्तेऽपि यान्ति पराङ्गतिम् ॥

इत्थं सर्व्वेषां वर्णानां परमेश्वरस्योपासनैव मुख्योद्देश्या, एवमधिकारि भेदेन धर्म्मभेदे साधिते स्वस्वधर्म्मशास्त्रे यदितरेषां धर्म्माणां निन्दा श्रूयते, तस्येदमेव मुख्योद्देश्यं, यत् स्वस्वशास्त्रानुसारिणि धर्म्मे तदधिकारिणः प्रवर्त्तन्तां-एवमितरेऽस्वधर्म्मे प्रवर्त्तन्तामिति ।

तथा परधर्म्मावलम्बने स्वप्रतिपाल्यधर्म्माकरणे च मङ्गलं मास्त्विदमेव मुख्यं-शास्त्रोद्देश्यम् । परमेश्वर एव प्रधानमाप्त इति लिखितं पूर्व्वतः । किन्तु-मानवान् प्रति परमेश्वरकर्त्तृकधर्म्मोपदेशो-गुरुवन्न सम्भवति साक्षात्-सम्बन्धेन । अतोऽस्मज्जातिपक्षे तु परमेश्वरोद्भासितं वेदशास्त्रमेव प्रधानाप्तोपदेशः । तदेव-शास्त्रमेवावलम्ब्य तदनुसारेणैव कर्म्म कर्त्तव्यम् । वेदशास्त्रञ्च दुरूहं तथा दुष्प्रापं-चेति विविच्य परमकारुणिकाः पूर्व्वपूर्व्वमहर्षिगणा-वेदार्थमनुभूय वेद-समानार्थकं सुगमञ्च स्मृत्यादिशास्त्रं व्यरचयन् । सर्व्वाणि च वेदशास्त्राणि-दुर्लभानि । विशेषतस्तानि प्राप्तान्यपि तेषां दुर्ब्बोधत्वाद् वेदार्थज्ञाने-ऽस्माकमासीन्महान् क्लेशः । पूर्व्वतना महर्षयस्तु वेदधर्म्मानुकूलधर्म्मशास्त्रादि निर्म्माणेनास्माकं क्लेशमपाचक्रुः । अतस्तेषामुपदेशा अपि-आप्तोपदेशा-इत्युच्यते ।

वेदशास्त्रं तु-अलौकिकपदार्थबोधनार्थमेव प्रवृत्तम्। तत्तु वेदलक्षण-दर्शनेनैव शास्त्रनिर्मातारः स्पष्टीचक्रुः। यदाह-ऋग्वेदभाष्ये माधवाचार्य्यः,—

"अनधिगताबाधितार्थबोधकः शब्दो-वेदः"।

प्रत्यक्षेणानुमत्या वा यस्तूपायोन बुध्यते।
एतं विदन्ति वेदेन तस्माद्-वेदस्य वेदता" ॥

इत्यृग्वेदभाष्यधृतस्मृतिवाक्येनापीदमेव तल्लक्षणं प्रतीयते।

शब्दचिन्तामणिग्रन्थेऽप्याह,—

"शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दाजन्यं वाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्"। सुतरां ये यत्पदार्थबोधनार्थं प्रवृत्तास्तेषां तत्पदार्थबोधनेनैव मुख्योद्देश्यः। अतएव वेदादिशास्त्रमलौकिक-पदार्थबोधकम्। अस्मज्जातीयानां पक्षे तु वेदादिशास्त्रमेव परं प्रमाणम्। यथा-वेदशास्त्रे तथा वेदमूलकस्मृत्यादिशास्त्रेऽपि-नानालौकिकपदार्था विद्यन्ते। तन्मध्ये-धर्म-एवातिप्रधानं, स-एव पुरुषस्य-चिरस्थायिनो-दुःखरहितसुखसञ्चयस्य कारणमतो-धर्म-एव विशिष्य प्रदर्श्यते।

भागवते,—

"त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि।
यथाकालं यथादेशं यथादैवोपपादितम्" ॥

नन्वस्मिन् किल भारतवर्षे निखिललोकपुरुषार्थत्वेनाविगीतानां चतुर्णा-मपि धर्मार्थकाममोक्षाणां मध्ये ब्रह्मविद्-ब्रह्मैव भवति न स पुनरावर्त्तते,-इत्यादिश्रुतेर्मोक्षस्य परमपुरुषार्थतया तत्रैव यत्नः करणीय इति। यद्यपि-सकलसन्दर्भसम्मता सरणिस्तथापि धर्मस्य निवृत्तिरूपस्य तद्धेतुतया स-एव-मीमांसाशास्त्रानुमोदितस्तावदस्मिन् ग्रन्थे पुरतो-विवेचनीय-इत्यालोच्य-तत्रादौ धर्म्मो-निरूप्यते।

तत्र जैमिनिसूत्रम्,—

"चोदना लक्षणोऽर्थो धर्म" इति उभयविधचोदनया अर्थात्-प्रवृत्तिनिवृत्त्या-

त्मकविधिवाक्येन लक्ष्यतेऽर्थः, श्रेयःसाधनं ज्योतिष्टोमादिः, अनर्थः प्रत्यवाय-साधनं श्येनादिस्तत्र "वेदप्रमाणम् । श्रेयःसाधनं ज्योतिष्टोमादिर्धर्म-इति सूत्रार्थः ।

तथाच, हारीतः,—

"अथातो धर्मं व्याख्यास्यामः" । "श्रुतिप्रमाणको धर्मः ।

भविष्ये,—

"धर्मः श्रेयः समुदिष्टं श्रेयोऽभ्युदयकारणम् ।
स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः ॥
अस्य सम्यगनुष्ठानात्-स्वर्गो-मोक्षश्च जायते ।
इह लोके सुखैश्वर्य्यमतुलञ्च खगाधिप !" ॥

स्मृत्यादीनामपि वेदमूलकत्वेन धर्मप्रमाणत्वात्तत्प्रमाणकोऽपि धर्म इति । धर्मे स्मृत्यादीनां प्रमाणमग्रे वक्ष्यते ।

अथ धर्मप्रशंसा । तत्र श्रुतिः,—

"धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पयन्ति" । धर्मेण पापमपनुदन्ति धर्मे सर्वं प्रतिष्ठितम । तस्मात्तं धर्मं परमं वदन्तीति ।

अथ धर्मानुष्ठानफलम् । तत्र मनुः,—

"श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्-हि मानवः ।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्" ॥

वाराहे,—

"प्रवृत्तिसंज्ञके धर्मे फलमभ्युदयो-मतः ।
निवृत्तिसंज्ञके धर्मे फलं निःश्रेयसं मतम्" ॥

अथ धर्मप्रमाणानि तत्र मनुः,—

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" ॥

वेद ऋग्यजुःसामाथर्वलक्षणः सर्वो विध्यर्थवादमन्त्रात्मा धर्मे मूलं-

प्रमाणम् । अर्थवादीनामपि विध्येकवाक्यतस्तावकत्वेन धर्मे प्रामाण्यात् । यदाह जैमिनिः,—

"विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधिना स्युरिति"। अखिलः साङ्ग-इत्यन्ये। तद्विदां मन्वादीनां स्मृतिर्धर्मे प्रमाणम्। वेदविदामिति विशेषणो-पादानाद्-वेदमूलकत्वेनैव स्मृत्यादीनां प्रामाण्यमभिहितम्। शीलं श्रुतिस्मृति-प्रत्यक्षदृष्टनिषेधव्यतिरिक्तनिषेधपरिपालनं स्वभावकृतम्। यथा भोजन व्यतिरेकेण मयोदकं न पेयमित्यादि वा शीलम्। ब्रह्मण्यतादिरूपं। तदा हारीतः,—ब्रह्मण्यता, देवपितृभक्तता, सौम्यता, अपरोपतापः—अनसूयता, मृदुता चापारुष्यम्, मित्रता, प्रियवादित्वं, कृतज्ञता, शरण्यता, कारुण्यं, प्रशान्तिश्चेति त्रयोदशविधं शीलम्।

आचारः,—

सदाचारः श्रुतिस्मृतिप्रत्यक्षदृष्टव्यतिरिक्तधर्मानुष्ठानं अर्थात्

"यस्मिन् देशे य आचारः पारंपर्य्यक्रमागतः।
श्रुतिस्मृताविरोधेन स सदाचार उच्यते" ॥

इति गोविन्दराजधृतवचनोक्तेः।

देवलोऽपि,—

"यस्मिन् देशे य-आचारो-न्यायदृष्टः स कल्पितः।
स तस्मिन्नेव कर्त्तव्यो-देशाचारो-भृगोर्मतः" ॥

आत्मनस्तुष्टिर्वैकल्पिकपदार्थविषया।

तदाह गार्ग्यः,—

"वैकल्पिके आत्मतुष्टिः प्रमाणम्। भट्टाचार्य्यैस्तु शिष्टात्मतुष्टिविषयत्वेन-पूर्वमसदेव धर्मत्वमुत्पद्यते नकुलदन्तस्पृष्टौषधिवदित्युक्तम्।

तथा याज्ञवल्क्यः,—

"श्रुतिस्मृतिसदाचारः स्वस्य च प्रियमात्मनः।
सम्यक्-सङ्कल्पजः कामो-धर्म-मूलमिदं स्मृतम् ॥

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" ॥

न्यायपदं न्यायवैशेषिकपरम् । मीमांसा कर्मब्रह्मविषया इति नृसिंह वाजपेयी ।

विष्णुपुराणे,—

"अङ्गानि वेदाश्चत्वारो-मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो-धनुर्वेदो-गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थञ्च विद्या अष्टादशैव ताः ॥

अङ्गानि च,—

शिक्षा कल्पो-व्याकरणं निरुक्तं छन्द-एव च ।
ज्योतिषां प्रचितिश्चैव षडङ्गा-वेद-इष्यते" ।

कल्पः कात्यायनलाट्यायनादिसूत्रं वा कल्पः स्मृतिर्मन्वादीनां धर्मशास्त्रं । दृष्टार्थानामप्यायुर्वेदादीनां चतुर्णां क्वचिदलौकिकार्थप्रतिपादनाद्धर्मप्रामाण्यम् ।

वेदानाह चरणव्यूहः,

"ऋग्वेदो-यजुर्वेदः सामवेदोऽथर्ववेदश्चेति" ।

स्मृतयः शङ्खलिखितोक्ताः,—

यथा स्मृतयो धर्मशास्त्राणि, तेषां प्रणेतारो मनुविष्णुदक्षयमाङ्गिरोऽत्रिबृहस्पत्युशन—आपस्तम्बवशिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्त्तगौतमशातातपहारीतयाज्ञवल्क्यप्रचेतसादयः ।

यमः—

"मनुर्यमो-वशिष्ठोऽत्रिर्दक्षो-विष्णुस्तथाङ्गिराः ।
उशना-वाक्पतिर्व्यास-आपस्तम्बोऽथ गौतमः ॥

कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः ।
सम्वर्त्तश्चैव शङ्खश्च हारीतो लिखितस्तथा ॥
एतैर्यानि प्रणीतानि धर्म्मशास्त्राणि वै पुरा ।
तान्येव तु प्रमाणानि न हन्तव्यानि हेतुभिः" ॥

याज्ञवल्क्यः,—

"वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः ।
वशिष्ठदक्षसम्बर्त्तशातातपपराशराः ॥
आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती ।
गौतमः शङ्खलिखितो हारीतोऽत्रिरहं तथा" ॥

आदिशब्दाच्च देवलसुमन्तुजैमिनिजमदग्निप्रजापतिविश्वामित्रपैठीनसिपितामहबौधायनच्छागलेयजावालिच्यवनमरीचिकश्यपाद्व्येव षट्त्रिंशत् ।

तथाच भविष्ये,—

"अष्टादशपुराणेषु यानि वाक्यानि पुत्रकाः ।
अनालोच्य महाबाहो ! तथा स्मृत्यन्तरेषु च ॥
मन्वादिस्मृतयो याश्च षट्त्रिंशत् परिकीर्त्तिताः ।
तासां वाक्यानि क्रमशः समालोक्य ब्रवीमि ते" ॥

योगियाज्ञवल्क्यबृहन्मनुबृहच्छातातपप्रभृतीनि तैरेव कृतानि । एतद्व्यतिरिक्ता या: स्मृतय उपलभ्यन्ते शिष्टपरिगृहीता: शुनःशेफशुनःपुच्छकार्ष्णाजिनिव्याघ्रकण्वजातुकर्ण्यलोमाक्षिव्याघ्रपादगर्गगार्ग्यनाडीजङ्घपुलस्त्यपुलहभृगुगौतमशौनकयाज्ञपार्श्ववैजवापशाट्यायनभीष्मस्तोकभस्मक्रतु-ऋष्यशृङ्गगोभिलाश्वलायनप्रणीतास्तासामपि तथा स्मृत्यन्तरेषु चेत्यनेन भविष्यपुराण एव परिगणना, यानि पुनर्महाभारतरामायणविष्णुधर्मशिवधर्मप्रभृतीनि गृह्यपरिशिष्टानि च तानि स्मृत्यन्तरेषु चेत्यनेनैवोपात्तानि प्रमाणानि ।

तथा चोक्तं भविष्यपुराणे,—

"अष्टादशपुराणानि रामस्य चरितं तथा ।
विष्णुधर्म्माणि शास्त्राणि शिवधर्म्माश्च भारत ! ॥
कार्ष्णश्च पञ्चमो-वेदो-यन्महाभारतं स्मृतम् ।
सौराश्च धर्मा राजेन्द्र ! मानवोक्ता महीपते ! ।
जयेति नाम चैतेषां प्रवदन्ति मनीषिणः" ॥

एवं यद्यदन्यदप्यविगीतं हेमाद्रिप्रभृतिशिष्टनिबन्धपरिगृहीतं तदपि ृत्यन्तरेषु चेत्यनेन परिगृहीतं वेदितव्यं । षट्त्रिंशन्मतादिकमपि शिष्ट'रिगृहीतत्वेनाविरुद्धत्वेन च प्रमाणं ज्ञेयमिति सांप्रदायिकाः ।

अथ पुराणानि विष्णुपुराणे,—

"ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ।
तथान्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम् ॥
आग्नेयमष्टमञ्चैव भविष्यं नवमं स्मृतम् ।
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं तथा ॥
वाराहं द्वादशञ्चैवं स्कान्दञ्चैव त्रयोदशम् ।
चतुर्दशं वामनञ्च कौर्मं पञ्चदशं स्मृतम् ।
मात्स्यञ्च गारुड़ं चैव ब्रह्माण्डञ्च ततः परम्" ॥

कौर्मे,—

"अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्म्माख्यं साक्षान्नन्दीशभाषितं ।
दुर्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम् ॥

कापिलं मानवं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं चैव कालिकाह्वयमेवच ।
माहेश्वरं तथा शाम्बं सौरं सर्वार्थसञ्चयम् ॥
पराशरोक्तं प्रवरं तथा भागवताह्वयम् ।
इदमष्टादशं चोक्तं पुराणं कौर्ममुत्तमम्" ॥

एवं सति ब्रह्माण्डमेकं महापुराणमेकमुपपुराणं चेति द्वयं ज्ञेयम् । एवमन्यत् ।

मात्स्ये,—

"अष्टादशभ्यस्तु पृथक्पुराणं यत्तु दृश्यते ।
विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो-विनिर्गतम्" ॥

यत्तु पाद्मे पार्वतीपरमेश्वरसम्वादे,—

"शृणु देवि ! प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषां स्मरणमात्रेण पातित्यं ज्ञानिनामपि ॥
प्रथमं तु मयैवोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्या वेशितैर्विप्रैः संप्रोक्तानि ततः परम् ॥
कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं साङ्ख्यं तु कपिलेन वै ॥
द्विजन्मना जैमिनिना पूर्वं वेदप्रकाशनम् ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा" ॥ इति ।

तथा कूर्मपुराणेऽपि,—

"चकार मोहशास्त्राणि केशवः सशिवस्तदा ।
कापालं लाकुलं वामं भैरवं पूर्वपश्चिमम् ॥
पञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ।
क्वचित्-क्वचित्-पुराणादौ वेदमूलेऽपि सर्वथा" ॥

"सन्ति निर्मूलतन्त्रांशास्ते तु ग्राह्या न वैदिकैः" ।

तत्र विरुद्धपञ्चरात्रादीनामेव त्यागकथनम् ।

तथाच पराशरोपपुराणे,—

"पञ्चरात्रं भागवतं बौद्धं दैगम्बरं तथा ।
लोकायतं च कापालं सोमं पाशुपतं तथा ॥
लाकुलं भैरवं वामं शाक्तं शाम्भवयामले ।
एवम्विधानि शास्त्राणि विरुद्धानि महामुने ! ॥
स्वतःप्रमाणभूतेन वेदेन मुनिसत्तम ! ।
वैदिकस्तानि शास्त्राणि मनसापि न संस्मरेत् ॥

तथा,—

"सर्वं वेदाविरुद्धेन प्रमाणं नान्यथा भवेत् ।
तस्मात्-सर्वप्रयत्नेन ब्रह्मन्-वेदविदां वर ! ।
त्यक्त्वा वेदविरुद्धानि वेदमेकं समाश्रयेत्" ॥

यत्र यत्र च वेदमार्गाभावस्तत्र तु वेदाविरुद्धपञ्चरात्रविधिर्ग्राह्यः । "अभावे वेदमन्त्राणां पञ्चरात्रोदितो-विधि"रिति वराहपुराणवचनात् । पञ्चरात्रादीनामधिकारिणो वैष्णवादयः प्रत्यक्षसिद्धाः । वैशेषिकादिषु तु वेदविरुद्धांशत्यागः । न तु सर्वशास्त्रस्य । तथाच विज्ञानेश्वरभट्टधृतं सांख्यभाष्ये-पाद्मवचनम् ।

"गौतमीये च काणादे सांख्ये मीमांसके तथा।
तत्राज्यः श्रुतिविरुद्धोंऽशः श्रुतिसिद्धं न वर्जयेत्" ॥

न्यायवैशेषिकयोः सुखदुःखादिसत्त्वमात्मनः श्रुतिविरुद्धम्। सांख्य-मीमांसयोर्निरीश्वरता श्रुतिविरुद्धा। तदंश-एव तेषामप्रामाण्यमिति। चण्डीटीकायां नागोजिभट्टः,—

"सांख्ययोगयोस्तु वैधहिंसानिषेधप्रतिपादनात्तदंशेन वेदविरोधादेव तदंशे-ऽप्रामाण्य"मिति नृसिंहवाजपेयी। योगशास्त्रस्य त्वप्रामाण्यमन्यत्र कथितम्। तत्वांशिकाप्रामाण्यपरम्।

अतएव योगियाज्ञवल्क्यः,—

"सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा।
अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत्" ॥
"सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते।
हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्"।

एवं च वेदाविरुद्धत्वात् सामुद्रिकवास्तुविद्यादीनामपि प्रामाण्यं शिष्टैः-कथितम्।

कौर्मे—

"वेदार्थवित्तमैः कार्य्यं यत्स्मृतं मुनिभिः पुरा।
स ज्ञेयः परमो-धर्मो-नान्यशास्त्रेषु संस्थितिः ॥

मनुरपि,—

"या वेदबाह्याः स्मृतयो-याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥
उत्पद्यन्ते च्यवन्ते-यान्यतोऽन्यानि च कानिचित्।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च" ॥

तथा,—

"प्रत्यक्षमनुमानञ्च शब्दश्च विविधागमम् ।
त्रयं समुदितं कार्य्यं धर्म्मशुद्धिमभीप्सता ॥
आर्षं धर्म्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्म्मं वेद नेतरः ॥

प्रमाणत्रयं मनोरभिमतम् ।

उपमानार्थापत्त्यादेश्चानुमानान्तर्भाव इति । तर्केण मीमांसादिन्यायेनेति-कुल्लूकभट्टः । तत्र धर्मे करणं वेदो-मीमांसा चेतिकर्त्तव्यतास्थानीया ।

तदुक्तं भट्टवार्त्तिककृता,—

"धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इति कर्त्तव्यताभागं मीमांसा पूरयिष्यति ॥

शातातपः,—

"श्रुतिः स्मृतिश्च विप्राणां चक्षुषी द्वे प्रकीर्त्तिते ।
काणस्तत्रैकहीनस्तु द्वाभ्यामन्धो-द्विजः स्मृतः ॥

पाद्मे,—

"बहुत्वादिह शास्त्राणां धर्ममूलं श्रुतिस्मृती ।
इतिहासपुराणानि तस्मात्तेषु मनः कृथाः" ॥

शङ्खलिखितौ,—

"वेदानां विप्रकीर्णत्वाद्दुर्ज्ञेयं धर्मसाधनम् ।
सुबोधात्तत्समर्थानां ब्रह्मणा विहिता स्मृतिः ॥
श्रुतिस्मृत्युदितान् धर्मान् मानवास्तान् पृथक् पृथक् ।
कुर्वन्तः प्राप्नुयुर्द्धर्ममन्यथा नरके गतिम् ॥
श्रौतस्मार्त्तक्रियावाक्यं हेतुभिर्योऽभिघातयेत् ।
असच्छास्त्रमुपाश्रित्य स ज्ञेयः शिष्टनिन्दितः ॥

अतत्समर्थानामिति च्छेदः ।

महाभारते,—

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति" ॥

व्यासः—

"वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम् ।
यस्य प्रमाणं न भवेत्-प्रमाणं कस्तस्य कुर्य्याद्वचनं प्रमाणम् ।"

धर्मार्थयुक्तं वचनं मीमांसकसन्निबन्धवाक्यम् । यस्येत्यनन्तरोक्तप्रमाणत्रयं यो-न मन्यत—इत्यर्थः ।

अथ प्रमाणद्वैधे क्रियते निर्णयः ।

तत्र मनुः,—

"श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
उभावपि हितौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥

लौगाक्षिः,—

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत्-सदा ॥

प्रयोगपारिजातधृतसंग्रहे,—

"श्रुतिस्मृति-पुराणेषु विरुद्धेषु परस्परम् ।
पूर्वं पूर्वं बलीयः स्यादिति न्यायविदो-विदुः" ॥

व्यासः,—

"अतः स परमो-धर्मो-यो-वेदादवगम्यते ।
अपरः स तु विज्ञेयः पुराणादिषु यः स्थितः ॥

एतेभ्योऽपि यदन्यत्स्यात्ताद्भिन्नं धर्माभिधायकम् ।
तच्च दूरतरं विद्धि मोहस्तस्याश्रयो मतः" ॥

चतुर्विंशतिमते,—

स्मृतेर्वेदविरोधेऽपि परित्यागो यथा भवेत् ।
तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् ॥

कारिकायाम्, –

श्रुतिस्मृतिविरोधेऽपि श्रुतिरेव गरीयसी ।
स्मृत्योर्विरोधे विज्ञेयं वेदमूलं प्रमाणकम् ॥

मनुस्मृतेर्विशेषश्छान्दोग्यब्राह्मणे,—
"मनुर्वै यत्-किंचिदवदत्तद्भेषजं"

बृहस्पतिः,—

"वेदार्थोपनिबद्धत्वात्-प्राधान्यं हि मनोः स्मृतम् ।
मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते ॥

कल्पसूत्रस्मृत्योर्विरोधे प्रत्यक्षश्रुतिमूलत्वेन कल्पसूत्रं प्रधानमित्याह,—

हेमाद्रौ कश्यपः,—

श्रौतानां कर्मणां क्लृप्तिः कल्पसूत्रं तदुच्यते ।
तथैव गृह्यकल्पानां स्मार्त्तानामुपसंग्रहः ॥
शाखानां विप्रकीर्णत्वात्-पुरुषाणां प्रमादतः ।
नानाप्रकरणस्थत्वात् स्मृतेर्मूलं न लभ्यते ॥

एवं वेदकल्पसूत्र-स्मृतिपुराणलोकाचाराणां विरोधे पूर्वं पूर्वं प्रबलमिति सिद्धान्तः ।

अथात्राधिकारिणः ।

तत्र मनुः,—

"निषेकादिश्मशानान्तो-मन्त्रैर्यस्योदितो-विधिः ।
तस्य शास्त्रेऽधिकारोऽस्ति नान्यस्य तु कदाचन" ॥

भागवते,—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

अत्र ब्राह्मणादित्रयस्याध्ययने श्रवणे चाधिकारः । द्विजबन्धुस्त्रीशूद्राणां तु तत्र नाधिकारः । किन्तु ब्राह्मणादिमन्तरा-कृत्वा श्रवणे दोषाभावः ।

श्रावयेच्चतुरो-वर्णान् कृत्वा ब्राह्मणमग्रतः ।

इति भारतवचनात् ।

अथ मोक्षसाधनभूतधर्मद्वयान्तर्गतनिःश्रेयससाधनभूताः युगलोकसाधा-रणधर्माः ।

तत्र मनुः,—

"यत्-कर्म कुर्वतोऽस्य स्यात्-परितोषोऽन्तरात्मनः ।
तत्-प्रयत्नेन कुर्वीत विपरीतन्तु वर्जयेत् ॥

एतच्च विहितानिषिद्धगोचरं वैकल्पिकविषयं चेति कुल्लूकभट्टः ॥

विष्णुः,—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामसिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥

प्रकरणानामर्थात् संकीर्णानामप्ययं धर्मो-वेदितव्य-इति कुल्लूकभट्टः ।

याज्ञवल्क्यः,—

"कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ॥

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
दानं दमो-दया क्षान्तिः सर्वेषां धर्मसाधनम्" ॥

सत्यं अप्राणिपीड़ाकरं यथार्थवचनम्। अन्तःकरणसंयमो-दमः। आपन्नरक्षणं दया। एते सर्वेषां पुरुषाणां ब्राह्मणाद्याचाण्डालानां धर्मसाधनमिति मिताक्षरा।

अथ निःश्रेयससाधनभूताः प्रतिवर्णं साधारणधर्माः।

तत्र श्रुतिः,—

वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्योऽग्नीनादधीत, शरदि-वैश्योऽग्नीनादधीत।

प्रतियुगं सत्स्वपि निःश्रेयससाधनभूतेषु विशेषतस्तदुपयोगितया-तत्तद्विशेषधर्मानाह मनुः,—

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे।
अन्ये कलियुगे नृणां युगह्रासानुसारतः॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते।
द्वापरे यज्ञमित्याहुर्दानमेकं कलौ युगे॥

एतदेवमनुमनुते पराशरः।

महाभारतेऽपि,—

तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम्।
द्वापरे यज्ञमित्याहुः कलौ दानं दया दमः॥

बृहस्पतिरपि,—

त्रयी धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम्।
द्वापरे चाध्वरः प्रोक्तः कलौ दानं दया दमः॥

इतियुगभेदेन धर्मभेदः।

भागवते,—

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवम्" ॥

यथा पराशरः,—

"मातापित्रोश्च शुश्रूषा परिणीताप्रपालनम् ।
संध्यास्नानादिनियमो-वैश्वदेवादिकाः क्रियाः ॥
अतिथेः पूजनं चैव पञ्च धर्माः कलौ युगे ।
यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तु ॥
द्वापरे मासमात्रेण अहोरात्रेण तत् कलौ" ।

कलेरधर्मबहुलतया तत्रत्यमानवानां शक्तिहीनत्वेन च कृतादियुगीयमानवाहृतमोक्षसाधनभूतधर्ममध्यात् वर्ज्याः कतिधर्मा बृहन्नारदीयेऽभिहिताः । यथा,—

"समुद्रयात्रास्वीकारः कमण्डलुविधारणं ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥
दत्ताक्षतायाः कन्यायाः पुनर्दानं वरस्य च ।
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ।
महाप्रस्थानगमनं गोमेधश्च तथा मखः ।
इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥

कमण्डलुः "सोदकश्च कमण्डलु" इत्युक्तः मृण्मयो वा दत्ता ऊढ़ा ।

ऊढ़ायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ।

इति हेमाद्रौ वचनात् ऊढायाः । पुरा पुरुषसंयोगादृते दैवेति केचन, इत्यादिभिर्विवाह्यतोक्ता ।

हेमाद्रौ ब्राह्मे,—

गोत्रान्मातुः सपिण्डाच्च विवाहो-गोबधस्तथा।
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः॥

गोत्रात् गोत्रजायाः पितृष्वसुः मातृसपिण्डान्मातुलात् तत्कन्याया-विवाहः कलौ न कार्य्यः। तेन यानि तद्विधायकानि। तानि युगान्तरविषयाणि-इति कमलाकरभट्टः।

हेमाद्रौ आदित्यपुराणे,—

"विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम्।
बालायाः क्षतयोन्यास्तु वरेणानेन संस्कृतिः
कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः॥
आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनं।
द्विजस्याब्धौ तु निर्य्याणं शोधितस्यापि संग्रहः।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणं॥
महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे।
सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः॥
अग्निहोत्रहवन्याश्च लेहो-लीढापरिग्रहः।
वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा॥
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकं।
संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः॥
वरातिथिपितृभ्यश्च पशूपाकरणक्रिया।
दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः॥
सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि।
अयोनौ संग्रहे वृत्ते परित्यागो-गुरुस्त्रियः॥

परोद्येशात्मसंत्याग-उच्छिष्टस्यापि वर्जनं ।
प्रतिमाभ्यर्च्चनार्थाय संकल्पश्च सधर्मकः ॥
अस्थिसञ्चयनादूर्द्ध्वमङ्गस्पर्शनमेव च ।
शामित्रं चैव विप्राणां सोमविक्रयणं तथा ॥
षड्भक्तानशने चान्नग्रहणं हीनकर्मणः ।
शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् ॥
भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ।
शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता ॥
आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा ।
प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः ॥
ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ।
बलत्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः ॥
यतेश्च सर्ववर्णेषु भिक्षाचर्य्याविधानतः ।
नवोदके दशाहं च दक्षिणा विधिचोदिता ॥
ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च ।
भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा ।
गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया ॥
पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम् ।
यतेः सायंगृहत्वं च सूरिभिस्तत्वदर्शिभिः ॥
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्त्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः ॥

सुराग्रहणस्य तत्कर्त्तुः । संग्रहो व्यवहारकः । सुराग्रहणस्योद्देश्यस्य सौत्रामणिविशेषणाविवक्षया अपिग्रहाश्च वाजपेयेऽपि निषेधः । वाजपेये-

तु तत्प्राप्तौ मानाभावात् सोमसुरयोः सङ्कल्पागीन ग्रंशे सुराद्रव्यत्वात् तत्-प्रख्यतया यागनामत्वेन तां विना संज्ञायोगात् कलौ नाधिकारः ।

दत्तेति,—

एकाहाद्ब्राह्मणः शुद्धेद्योऽग्निवेदसमन्वितः ।

इत्युक्तावस्थाशौचस्य सङ्कोचः ।

न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ।

इत्युक्तस्य प्रायश्चित्तस्य विधानं उपदेशः । संसर्गस्तत्संसर्गी च पञ्चम-इत्यादिना उक्तः स्तेयं च ताभ्यां भिन्नेषु ब्रह्महत्यासुरापानगुरुदारगमनेषु कामकृतेषु मरणान्तिकं विना निष्कृतिः प्रायश्चित्तम् । सवर्णान्या असवर्णा-क्षत्रियादिः तया दुष्टैः । अयोनौ शिष्यादौ ।

"चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ॥"

इत्युक्तस्त्यागः । परोद्देशेन ब्राह्मणाद्यर्थं आत्मनस्त्यागः । यद्वा-परोद्देशात्मतरागो गोदानम् । "मनसा पात्रमुद्दिश्य" इत्युक्तम् ।

उद्दिष्टस्य त्यक्तस्य वर्जनम् । प्रतिग्रहसमर्थोऽपीत्युक्तम् । वेतनग्रहणे-न प्रतिमा पूज्या । "स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः" । इत्युक्तः स्पर्शः । पङ्क्तिति,—

"उपोषितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्" ॥

इत्युक्तमचौर्य्यम् । सामान्यतः कलावपि सति मद्यमांसादिविगीत-द्रव्याशननिषेधे पापाभावाभ्यनुज्ञयैतद्युगीयापद्येतदेव भक्षयेदिताशङ्का-पद्वृत्तिर्दिजाग्रणामितुत्रङ्कितं ग्रन्थकृता । अतः ब्राह्मणानामापद्वृत्तिः सति सुयोगे जीविकानिर्वाहार्थमापत्कालीनेतरस्तौ-भोजनमद्यपानगवादिनिषिद्ध-मांससेवनादिरूपा ।

एतद्व्याख्यानं तु न स्वकपोलकल्पितं, किन्त्वेतस्य गत्यन्तरे सत्यविद्यमाने चाक्रायणाद्यृषिभिर्म्लेच्छादिपाचितकुल्माषादिभक्षणादिरूपापद्वृत्तिनिषेधपरतया व्याख्यानमनुष्ठितम् ।

अन्यथा, "अतद्वृत्त्या वैश्यवृत्तिः प्रशस्ता स्यात् कलौ युग" इति । आश्वलायनवचनस्य नैरर्थक्यापत्तेः । उपलक्षणमेतत् । तेन क्षत्रियादीनामपि-ग्रहणम् ।

तथा, हिन्दुसाम्प्रदायिकशिष्टादृताचारः परिदृश्यते भारतेऽस्मिन् । अश्वस्तनिकता । "त्र्यैहिको-वापि भवेदश्वस्तनिक एव वा" ।

इति मनुवचनोक्तमेवं दिवसव्यापि धनसम्पादनम् ।

यत्तु आपद्वृत्तिर्द्विजाग्र्याणामित्यत्रापद्वृत्तिः क्षत्रियादिवृत्तिरित्यर्थोपयन्ति । तत्तुच्छं, ब्राह्मणानामन्यस्तद्वृत्त्यपेक्षया प्रायशो-विगीतापद्वृत्त्याचरण-परिदर्शनात् ।

अतो-दोषबहुले कलियुगे श्रौतधर्मस्य विशेषतः सङ्कुचिततया प्रायः-स्वजातीयतेजोविहीनस्य विप्रस्य विपत्कालीनात्यन्तनिषिद्धाचरणजनितपाप-भस्मीकरणशक्तिशून्यत्वेन तपोयज्ञादिकष्टकर्मसाध्यधर्मङ्क्षसनवदापदि स्वस्व-जातीयतेजोह्रासकारणमतीवगर्हितवृत्तिसङ्कोचनं विधेयमित्येतद्वचनस्याभिप्राय-इति निष्कर्षः । एतद्युक्तिमनुमोदन्ते पुराणधर्मशास्त्रादिप्रमाणानि । कलियुगे ब्राह्मणादिजातीनां तेज-आदिशक्तिहीनत्वं वर्णितम्,—

भागवते यथा,—

"कृते चतुष्पात्-सकलो-निर्व्याजोपाधिवर्जितः ।
वृषः प्रतिष्ठितो-धर्मो-मनुष्ये भरतर्षभ ! ॥
अधर्मः पादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः ।
त्रेतायां द्वापरेऽर्द्धेन व्यामिश्रो-धर्म-उच्यते ॥
त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति ।
तामसं युगमासाद्य तदा भरतसत्तम ! ॥
चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति ।
आयुर्वीर्य्यमथो-बुद्धिर्बलं तेजश्च पाण्डव ! ॥

मनुष्याणामनुयुगं ह्रसतीति निबोध मे।
राजानो-ब्राह्मणा-वैश्याः शूद्राश्चैव युधिष्ठिर ! ॥
व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका-नराः।
सत्यं संक्षेप्स्यते लोके नरैः पण्डितमानिभिः ॥
सत्यहान्या ततस्तेषामायुरल्पं भविष्यति।
आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपजीवितुं ॥
विद्याहीनानविज्ञानाल्लोभोऽप्यभिभविष्यति।
ब्राह्मणाः क्षत्रिया वैश्याः सङ्कीर्य्यन्ते परस्परम् ॥
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः"। इत्यादि।

अपि च कलियुगे,—

यथैवान्येषामवलम्बनं निषिद्धं, तथैवाश्वस्तनिकतात्मिकाऽपद्वृत्तिः, अर्थात्—ब्राह्मणानामश्वस्तनिकतावस्थायां प्राणरक्षणोपयोगिब्रह्मसत्रात्मकापद्वृत्तिः कलौ परिहरणीयेत्येवं रूपोऽर्थः प्रतिभाति समीचीनतया। अन्यथा-युगेऽस्मिन् प्रत्यक्षतः प्रचलितनिरुक्तप्रमाणव्रातोक्तविगर्हिताचारजातानुष्ठान-परिदर्शनासम्भवात्।

अत-एतद्वृत्तिनिषेधेन सति सुयोगाभावेऽगतिकतया तदतिरिक्तापद्वृत्ति-व्रातावलम्बनमदोषाधायकत्वेनाभ्यनुज्ञातमिति भवति प्रतिभातम्। न चाश्व-स्तनिकतावस्थापरिचायकब्रह्मसत्रनामकवृत्तेः शिलोञ्छवृत्तिवदनापद्वृत्तित्वात् भवेदापद्वृत्त्यात्मिकैषेति वाच्यं, वाणिज्यादिवदस्या निरुक्तोभयवृत्त्यात्मकत्वात्। कक्षीकुर्वन्ति विवेचनमेतन्मानवीयप्रमाणानि,—

यथाह मनुरनापदि,—

"ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा।
सत्यानृताभ्यया वापि न श्ववृत्त्या कथञ्चन ॥

ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतन्तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम् ॥
सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते ।
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥
कुशूलधान्यको-वा स्यात् कुम्भीधान्यक-एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥"

तथाच तट्टीकाकारः कुल्लूकभट्टः कैः कर्मभिरित्यत्राह, —

ऋतामृताभ्यामिति । अनापदीत्यनुवर्त्तते । ऋतादिभिरनापदि जीवेत् । सेवया त्वनापदि कदाचिन्न वर्त्तेत इत्यादि । तथापद्वृत्तित्वमापादयति ऋतादीनां स एव,—

शिलोञ्छमप्याददीत विप्रोऽजीवं यतस्ततः ।
प्रतिग्रहाच्छिलः श्रेयांस्ततोऽप्युञ्छः प्रशस्यते ॥

तथाच कुल्लूकभट्टः,—

शिलोञ्छमिति,—

"ब्राह्मणः स्ववृत्त्या अजीवन् यतस्तत इतुरपपातक्यादिभ्योऽपि शिलोञ्छं गृह्णीयात्, न तु तत्सम्भवे असत्प्रतिग्रहं कुर्य्यात् । यस्मादसत्प्रतिग्रहात् शिलः-प्रशस्त इत्यादि" । सूचितमनेनापद्वृत्तित्वमप्रृतादीनाम् । उभयवृत्तित्वमितेनापि सुसिद्धमेतेषामिति निर्गलितार्थः । ननु प्रमाणेनानेन शिलोञ्छयोरापद्वृत्यात्मकतया परिगृहीतत्वादापद्वृत्तित्वेनाश्वस्तनिकता न भवेत्यरिगणितेति-चेन्न, अश्वस्तनिकतावेदकब्रह्मसत्रस्य शिलोञ्छयोरन्यतरवृत्तिरूपत्वेन मेधातिथिना स्वभाष्ये व्याख्यातत्वात् । यथाह मेधातिथिः,—'चतुर्थः पुनरश्वस्तनिको-ब्रह्मसत्रेण जीवति ब्रह्मसत्रं शिलोञ्छयोरन्यतरा वृत्तिः । ब्रह्मणो-ब्राह्मणस्य सततभवत्वात् सत्रमिव सत्रमिताह" । तथा वृत्तित्वमापादितं कुल्लूकभट्टेनाप्यश्वस्तनिकतायाः ।

यथाह कुल्लूकभट्टः,—

चतुर्णामपीति मानवीयवचनव्याख्यायाम्। "एषां चतुर्णामपि कुशूल-धान्यकादीनां गृहस्थानां ब्राह्मणानां मध्ये यो यः शेषे पठितः स स श्रेष्ठो-ज्ञातव्यः। यतोऽसौ वृत्तिसङ्कोचधर्म्मेण स्वर्गादिलोकजित्तमो-भवति। वृत्ति-सङ्कोचधर्म्मेणेतिपदोपादानेनैव प्रकटीकृतमेतत्।

वृत्तित्वं प्रकरणपठिताश्वस्तनिकतायाः। युगान्तरीयापदि तद्वृत्तेरुप-कारकत्वेऽपि विपद्बहुले कलियुगे तद्वृत्तेरुपयोगित्वाभावात्तन्निवारणमत्र-सुसङ्गतमिति निष्कृष्टार्थः।

यथापदि कलेरन्येषु युगेषु तपःप्रभावादिगतश्याधिक्येन सद्विगर्हितगोमांसादि-द्रव्यभक्षणेऽपि पापाभावः, तथोपवर्णितो-मनुयाज्ञवल्क्याभ्याम्।

मनुर्यथाह,—

"जीवितात्ययमापन्नो-योऽन्नमत्ति यतस्ततः।
आकाशमिव पङ्केन न स पापेन लिप्यते॥
अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः।
न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन्॥
श्वमांसमिच्छन्नार्त्तोऽत्तुं धर्माधर्मविचक्षणः।
प्राणानां परिरक्षार्थं वामदेवो-न लिप्तवान्॥
भरद्वाजः क्षुधार्त्तस्तु सपुत्रो विजने वने।
बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णोर्महातपाः॥
क्षुधार्त्तश्चात्तुमभ्यगाद्विश्वामित्रः श्वजाघनीम्।
चण्डालहस्तादादाय धर्माधर्मविचक्षणः"॥

तथाच याज्ञवल्क्यः,—

"आपद्गतः सम्प्रगृह्णन् भुञ्जानो-वा यतस्ततः।
न लिप्येतैनसा विप्रो-ज्वलनार्कसमो-हि सः"॥

नच युगसाधारण्येनैव निषिद्धमांसाद्यशनोल्लेखनात्कथं कलेरन्ययुगविषयमित्यभिहितमिति वाच्यम् । आपद्वृत्तिर्द्विजाग्र्याणामित्यनेन कलावापद्वृत्तेः संकुचितत्वात् । "सुखेनैव धमेदग्नि" मित्युक्तधमनम् । "दशाहेनैव शुद्धेत भूमिष्ठं च नवोदकम्" । इत्युक्तो दशाहः । शूद्रेषु दासगोपालेति ।

"कन्दुपक्वं स्नेहपक्वं यच्च दुग्धेन पाचितम् ।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्" ॥

इत्यपरार्के सुमन्तूक्ता शूद्रस्य पाकक्रिया ।

"पितापुत्रविवादे तु साक्षिणां त्रिपणो दमः ।" इत्युक्तः । सायं गृहत्वं "विधूमे सन्नमूले" इत्युक्तम् ।

पृथ्वीचन्द्रेण तु,—

"अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च ।
अनिकेता ह्यनाहारा यत्र सायंगृहास्तु ते" ॥ इति,

विष्णुपुराणोक्तो-निषेधः । तेन ज्ञातशीलपान्थादेः श्राद्धादौ विनियोगो न कार्य्यः कलावित्यर्थ-उक्तः । एतानि वर्ज्यानीत्यर्थः ।

निगमः,—

"अग्निहोत्रं गवालम्भं सन्न्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्" ॥

अग्निहोत्रं तदर्थमाधानम् । एतच्च सर्वाधानपरम् ।

"अर्द्धाधानं स्मृतं श्रौतस्मार्त्ताग्न्योस्तु पृथक्कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता" ॥ इति ।

लोगाक्षिवचनादिति स्मृतिचन्द्रिकायाम् । एतेन

"चत्वार्य्यब्दसहस्राणि चत्वार्य्यब्दशतानि च" ।

"कलेर्यदागमिष्यन्ति तदा त्रेतापरिग्रहः ।
सन्न्यासश्च न कर्त्तव्यो-ब्राह्मणेन विजानता" । इति—

व्यासवचनं व्याख्यातम् ।

सर्वाधानेऽपि विशेषमाह देवलः,—

"यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते ।
सन्न्यासं चाग्निहोत्रं च तावत्कुर्य्यात्-कलौ युगे" ।

इत्येतन्मतान्तरविषयम् । इदानीमपि तथा शिष्टाचारदर्शनात् । अन्ये-त्वत्र पूर्वयुगाश्रितेति लोगाक्षिवाक्ये पूर्वयुगानि कृतादीनीत्यर्थापयन्ति । अपरेऽपि युगस्य पूर्वं कलेः पूर्वभागः, स"चत्वार्य्यब्दसहस्राणीति पूर्वोक्त-वाक्याच्चतुश्चत्वारिंशच्छतवर्षावच्छिन्नः । तस्मिन् भागे सर्वाधानं कार्य्यम् । तदुत्तरं तु यावद्वर्णविभागोऽस्तीति वाक्याद्वर्णविभागपर्य्यन्तमर्द्धाधान-मित्याहुः । सन्न्यासस्त्रिदण्डः । एतादृशोभयाचारो-न कुत्राप्यवलोकित-इत्यतोऽयं न समीचीन इति प्रतीमः ॥ शक्त्यपेक्षया कलियुगे निःश्रेयस-साधनीभूतधर्मसंकोचने व्यापृता महात्मान इति स्फुटतः प्रतिपादयन्ति-बृहन्नारदीयवचनानि । तथा,—

हेमाद्र्युद्धृतादित्यपुराणीयप्रमाणोक्तलोकगुप्त्यर्थपदेनैव निःश्रेयसाभ्युदय-साधनीभूतोभयधर्मसंकोचनं स्फुटतः प्रकाशितम् । अतो लोकोन्नतिप्रति पादनतत्परैः पूर्वाचार्य्यैर्यथासमयं संकुचितोऽयं प्रथमः । द्वितीयस्तु फल-हीनतया परिहृतः कदा वांशतः कदा वावश्यकतया परिवर्द्धितः कुत्रापि-परिवर्त्तितश्चानुमीयते । नत्वयमीश्वरनिर्मितः । व्यवस्थापूर्वकं वुधैरित्यत्र वुधपादोपादानेनैव द्वितीयनियमस्य प्रकटीकृतसामाजिककर्त्तृकत्वात् । प्रसङ्गतः कलियुगसाधारणधर्मा-उपवर्ण्यन्तेऽत्र ।

कलिधर्मा-यथा, —

"यदा सदानृत्यं तन्द्री निद्रा हिंसा विषादनम् ।
शोकमोहभयं दैन्यं स कलिस्तु तदा स्मृतः ॥
यस्मिन् जनाः कामिनः स्युः शश्वत्कटुकभाषिणः ।
दस्युक्रुष्टा जनपदा वेदाः पाषण्डदूषिताः ॥

नश्च प्रजाभक्ष्याः शिश्नोदरपरा द्विजाः ।
अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः ॥
तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः ।
ह्रस्वकाया महाहाराश्चौर्य्यमायोरुसाहसाः ॥
त्यक्ष्यन्ति भृत्याश्च पतिं तापसास्त्वखिलं व्रतम् ।
शूद्राः प्रतिग्रहीष्यन्ति तपोवेशोपजीविनः ॥
उद्विग्ना-श्चानलंकाराः पिशाचसदृशाः प्रजाः ।
अस्नातभोजनेनाग्निदेवतातिथिपूजनम् ॥
करिष्यन्ति कलौ प्राप्ते न च पिण्डोदकक्रियाम् ।
स्त्रीपराश्च जना सर्वे शूद्रप्रायाश्च शौनक ! ॥
बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः ।
शिरःकण्डूयनपरा आज्ञां भेत्स्यन्ति सत्पतेः ॥
विष्णुं न पूजयिष्यन्ति पाषण्डोपहता जनाः ।
कलेर्दोषनिधेर्विप्र ! अस्ति ह्येको-महान् गुणः ॥
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ।
कृते यद्ध्यायतो-विष्णुं त्रेतायां यजतः फलम् ॥
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ।
तस्माद्ध्येयो हरिर्नित्यं ध्येयः पूज्यश्च शौनक ! ॥

इति गारुडे युगधर्मे ।

तथा कलियुगधर्मा भागवते,—

उदरंभरिता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ।
दाक्ष्ये कुटुम्बभरणं यशोऽर्थे धर्मसेवनम् ॥

एवं प्रजाभिर्दुष्टाभिराकीर्णक्षितिमण्डले।
ब्रह्मविट्क्षत्रशूद्राणां यो-बली भविता नृप!॥
प्रजा हि लुब्धै-राजन्यैर्निघृणैर्दस्युधर्मभिः।
आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम्॥
शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः।
अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीड़िताः॥
शीतवातातपप्रावृड्हिमैरन्योऽन्यतः प्रजाः।
क्षुत्तृड्भ्यां व्याधिभिश्चैव सन्तप्यन्ते च चिन्तया॥
त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम्।
पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु॥
चौर्य्यानृतवृथाहिंसानानावृत्तिषु वै नृषु।
शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु॥
'गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु।
अनुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु॥
विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु।
इत्थं कलौ गतप्राये जनेषु खरधर्मिषु।
धर्मत्राणाय सत्त्वेन भगवान् वतरिष्यति॥" इति।

कलियुगीयापत्कालसाधारणा एते धर्मा इत्यवधेयम्।

अन्यथा "चत्वार्य्यब्दसहस्राणीत्यारभ्य यदा त्रेतापरिग्रह-इत्यन्तवचनस्य-निष्फलत्वापत्तेः। तथैव समर्थिता एते धर्मा महानिर्वाणतन्त्रपराशराध्यात्म-रामायणादिधर्मशास्त्रीयग्रन्थनिवहेन। एवं सत्स्वपि वर्णाश्रमादिबहुविध-धर्मेषु प्रकृतानुपयोगितया परिहृतस्तद्विचारः।

इदानींतनमानवानां सुस्थकालावलम्बितनियमपरिपालनासामर्थ्येन-

निषिद्धकार्य्यानुष्ठानव्यवहारपरिदर्शनात् प्रतिधर्मशास्त्रं पृथक्तया पूजनीय-महर्षिभिर्निरूपितापद्धर्मस्य पर्य्यालोचनया चाधुनातनकलियुगीयसमयस्तावदापत्कालिक-इति सर्वैरवश्यमङ्गीकरणीयं निर्विवादम्। अतोऽस्य-प्रस्तावितविषयतया तन्निरूपणमत्र कर्त्तव्यमादितः।

अथापत्कालविचारः।

आपद्युक्तः कालः, का तावदापदित्याकाङ्क्षायामिदमुच्यते,—

रोगाद्यभिभूततावस्था, सम्यग्वर्त्तनोपायानुपलम्भो-धर्मविप्लवश्च आपत्, तैर्युक्तः समय-आपत्काल इत्यर्थः। आपदां समूहः आपदं तस्य कालः आपत्कालः।

उदाहरणं यथा महाभारते,—

"पीड़ा चापत्कालस्य पत्तिज्ञानं च पाण्डव!।"

तन्निवृत्तिस्तु कुत्राल्पदिनात्मिका, कदा वानेकसम्वत्सरसापेक्षा।

अतो यस्या आपदः यत्कालव्यापित्वं तस्यास्तत्कालावधिकत्व-मवधार्य्यं, इयत्परिमितकालस्य कैश्चिदपि महर्षिभिरनिर्द्धारितत्वात्। अतएवापत्कालस्य स्वल्पदिनस्थायित्वं बहुसमयव्यापित्वं च सिद्धमित्यर्थः। तथा—ज्वरादिकियद्रोगस्याल्पदिवसस्थायित्वं, कुष्ठादिकियद्गदानां जीवनावधिव्यापित्वं च, एवं दुर्भिक्षादौ सम्यग्वर्त्तनोपायानुपलम्भश्च दृश्यते सर्वत्र। विशेषविवरणमस्य मुखवन्धतः सन्निवेशितमवलोकितव्यम्। एतेनापत्-कालस्य यावत्कालं रोगाद्यभिभूततासम्यग्वर्त्तनोपायानुपलम्भान्यतरजन्य-निषिद्धकार्य्यानुष्ठानप्रवृत्तिजनकत्वविशिष्टत्वं, अथवा धर्मविप्लवस्यापत्काला-त्मकत्वेन विद्यमानतया विधीयते लक्षणान्तरम्। यथा, यावत्कालं-रोगाद्यभिभूततासम्यग्वर्त्तनोपायानुपलम्भधर्मविप्ल-वान्यतमजन्यनिषिद्धाचरण-प्रवृत्तिजनकत्वविशिष्टत्वं आपत्कालत्वमिति लक्षणं समायातम्। इति धर्मविप्लवमादायान्यतमनिवेशः।

एतद्विचारसहायभूतानि प्रमाणानि यथा महाभारतीय-शान्तिपर्वान्तर्गतापद्धर्मपर्वणि,—यथा,—

युधिष्ठिर उवाच,—

"हीने परमके धर्मे सर्वलोकाभिलङ्घिते।
अधर्मे धर्मतां नीते धर्मे चाधर्मताङ्गते॥
मर्य्यादासु विनष्टासु क्षुभिते धर्मनिश्चये।
राजभिः पीड़िते लोके परैर्वापि विशांपते!॥
सर्वाश्रमेषु मूढ़ेषु कर्मस्वपहृतेषु च।
कामाल्लोभाच्च मोहाच्च भयं पश्यत्सु भारत!॥
अविश्वस्तेषु सर्वेषु नित्यं भीतेषु पार्थिव!।
निकृत्याहन्यमानेषु वञ्चयत्सु परस्परम्॥
सम्प्रदीप्तेषु देशेषु ब्राह्मणे चातिपीड़िते।
अवर्षति च पर्जन्ये मिथो-भेदे समुत्थिते॥
सर्वस्मिन् दस्युसाद्भूते पृथिव्यामुपजीवने।
केनचित्ब्राह्मणो जीवेज्जघन्ये काल-आगते॥
अतितिक्षुः पुत्रपौत्राननुक्रोशान्नराधिप!।
कथमापत्सु वर्त्तेत तन्मे ब्रूहि पितामह!॥
कथञ्च राजा वर्त्तेत लोके कलुषतां गते।
कथमर्थाच्च धर्माच्च न हीयेत परन्तप!॥

भीष्म-उवाच,—

"राजमूला महाबाहो! योगक्षेमसुवृष्टयः।
प्रजासु व्याधयश्चैव मरणञ्च भयानि च॥
कृतं त्रेता द्वापरञ्च कलिश्च भरतर्षभ!।
राजमूला इति मतिर्मम नास्त्यत्र संशयः॥

तस्मिँस्त्वभ्यागते काले प्रजानां दोषकारके ।
विज्ञानबलमास्थाय जीवितव्यं भवेत्तदा ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विश्वामित्रस्य सम्वादं चाण्डालस्य च पक्कणे ॥
त्रेताद्वापरयोः सन्धौ तदा दैवविधिक्रमात् ।
अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी ॥
प्रजानामतिवृद्धानां युगान्ते समुपस्थिते ।
त्रेताविमोक्षसमये द्वापरे प्रतिपादने ॥
नववर्षं सहस्राक्षः प्रतिलोमोऽभवद्गुरुः ।
जगाम दक्षिणं मार्गं सोमो व्यावृत्तलक्षणः ॥
नावश्यायोऽपि तत्राभूत् कुत एवाभ्रजातयः ।
नद्यः संक्षिप्ततोयौघाः किञ्चिदन्तर्गतास्ततः ॥
तस्मिन् प्रतिभये काले क्षते धर्मे युधिष्ठिर ! ।
बभ्रमुः क्षुधिता मर्त्याः खादमानाः परस्परम् ॥
ऋषयो नियमांस्त्यक्त्वा परित्याज्याग्निदेवताः ।
आश्रमान् सम्परित्यज्य पर्य्यधावन्नितस्ततः ॥
विश्वामित्रोऽथ भगवान् महर्षिरनिकेतनः ।
क्षुधापरिगतो धीमान् समन्तात् पर्य्यधावत ॥
त्यक्त्वा दारांश्च पुत्रांश्च कस्यांचिज्जनसंसदि ।
भक्ष्याभक्ष्यसमो भूत्वा निरग्निरनिकेतनः ॥

स कदाचित् परिपतन् श्वपचानां निवेशनम्।
हिंस्राणां प्राणिघातानामाससाद वने क्वचित्॥
तत्-प्रविश्य क्षुधाविष्टो विश्वामित्रो-महानृषिः।
आहारान्वेषणे युक्तः परं यत्नं समास्थितः॥
न च क्वचिदविन्दत्स भिक्षमाणोऽपि कौशिकः।
मांसमन्नं फलं मूलमन्यद्वा तत्र किंचन॥
अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः।
पपात भूमौ दौर्बल्यात्तस्मिंश्चाण्डालपक्कणे॥
सञ्चिन्तयामास मुनिः किं नु मे सुकृतं भवेत्।
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम!॥
स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः।
चाण्डालस्य गृहे राजन्! सद्यः शस्त्रहतस्य वै॥
स चिन्तयामास सदा स्तैन्यं कार्य्यमितो मया।
न हीदानीमुपायो मे विद्यते प्राणधारणे॥
आपत्सु विहितं स्तैन्यं विशिष्टस्य महीयसः।
विप्रेण प्राणरक्षार्थं कर्त्तव्यमिति निश्चयः॥
हीनादादेयमादौ स्यात्समानात्तदनन्तरम्।
असम्भवे वाददीत विशिष्टादपि धार्मिकात्॥
सोऽहमन्त्यावसानायां हरामेनां प्रतिग्रहात्।
न स्तैन्यदोषं पश्यामि हरिष्यामि श्वजाघनीम्॥

एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः।
तस्मिन् देशे सुसुष्वाप श्वपचो यत्र भारत!॥
स विगाढ़ां निशां दृष्ट्वा सुप्ते चाण्डालपक्कणे।
शनैरुत्थाय भगवन्! प्रविवेश कुटीमतः॥
सुषुप्त इव चाण्डालः श्लेष्मापिहितलोचनः।
परिभिन्नस्वरो रूक्षः प्रोवाचाप्रियदर्शनः॥

श्वपच-उवाच,—

"कः कुतन्त्रीं घटयति सुप्ते चाण्डालपक्कणे।
जागर्मि नात्र सुप्तोऽस्मि हतोऽस्मीति च दारुणः॥
विश्वामित्रस्ततो भीतः सहसा तमुवाच ह।
तत्र व्रीड़ाकुलमुखः सोद्वेगस्तेन कर्मणा॥
विश्वामित्रोऽहमायुष्मानागतोऽहं बुभुक्षितः।
मा वधीर्मम सद्बुद्धे! यदि सम्यक्प्रपश्यसि॥
चाण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः।
शयनादुपसम्भ्रान्त उद्ययौ प्रति तं ततः॥
स विसृज्याश्रुनेत्राभ्यां बहुमानात्-कृताञ्जलिः।
उवाच कौशिकं रात्रौ ब्रह्मन्! किन्ते चिकीर्षितम्॥
विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन्।
क्षुधितोऽहं गतप्राणो-हरिष्यामि श्वजाघनीम्॥
क्षुधितः कलुषं यातो नास्ति ह्रीरशनार्थिनः।
अटन् भैक्ष्यं न विन्दामि यदा युष्माकमालये॥
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम्।
अग्निर्मुखं पुरोधाश्च देवानां शुचिषाड्विभुः॥

यथावत्-सर्वभुग्-ब्रह्मा तथा मां विद्धि धर्मतः।
विश्वामित्रस्ततो राजन्! इत्युक्तो भरतर्षभ!॥
क्षुधार्त्तः प्रत्युवाचेदं पुनरेव महामुनिः।
येन येन विशेषेण कर्मणा येन केनचित्॥
अभ्युज्जीवेत्सादयमानः समर्थो धर्ममाचरेत्।
ऐन्द्रो-धर्म्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः॥
ब्रह्म वह्निर्मम बलं भक्षामि शमयन्-क्षुधाम्।
यथा यथैव जीवेद्धि तत्कर्त्तव्यमहेलया॥
जीवितं मरणाच्छ्रेयो-जीवन् धर्ममवाप्नुयात्।
सोऽहं जीवितमाकाङ्क्षन्न भक्षस्यापि भक्षणम्।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम्॥
बलवन्तं करिष्यामि प्रणोत्स्याम्यशुभानि तु।
तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः"॥

भीष्म उवाच,—

"एवमुक्ता निवहते मातङ्गः कौशिकं तदा।
विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम्॥
ततो जग्राह स श्वाङ्गं जीवितार्थी महामुनिः।
सदारस्तामुपाहृत्य वने भोक्तुमियेष सः"॥ इत्यादि।

तथात्र गौतमोपाख्यानं यथा,—

भीष्म-उवाच,—

"हन्त ते वर्त्तयिष्येऽहमितिहासं पुरातनम्।
उदिच्यां दिशि यद्वृत्तं म्लेच्छेषु मनुजाधिप!॥

ब्राह्मणो-मध्यदेशीयः कश्चिद्वै ब्रह्मवर्जितम् ।
ग्रामं वृद्धियुतं वीक्ष्य प्राविशद्भैक्षकाङ्क्षया ॥
तत्र दस्युर्धनयुतः सर्ववर्णविशेषवित् ।
ब्रह्मण्यः सत्यसन्धश्च दाने च निरतोऽभवत् ॥
तस्य क्षयमुपागम्य ततो भिक्षामयाचत ।
प्रतिश्रयं च वासार्थं भिक्षां चैवाथ वार्षिकीम् ॥
प्रादात्तस्मै स विप्राय वस्त्रं च सदृशं नवम् ।
नारीं चापि गुणोपेतां रूपयौवनशालिनीम् ॥
तस्मिन् गिरिवरे राजंस्तया रेमे स गौतमः ।
कुटुम्बार्थं च दास्याश्च साहाय्यं चाप्यथाकरोत् ॥
तत्रावसत्-स वर्षाणि समृद्धशवरालये ।
वाणवेधे परं यत्नमकरोच्चैव गौतमः ॥
गौतमः सन्निकर्षेण दस्युभिः समतामियात् ।
तथा तु वसतस्तस्य दस्युग्रामे सुखं तदा ॥
अगमन् बहवो मासा निघ्नतः पक्षिणो बहून् ।
ततः कदाचिदपरो द्विजस्तं देशमागतः ॥
स ब्रह्मचारी तद्देश्यः सखा तस्यैव सुप्रियः ।
तं दस्युग्राममगमद्यत्रासौ गौतमोऽवसत् ॥
स तु विप्रगृहान्वेषी शूद्रान्नपरिवर्जकः ।
ग्रामे दस्युसमाकीर्णे व्यचरन् सर्वतो-दिनम् ॥

ततः स गौतमगृहं प्रविवेश द्विजोत्तम ! ।
गौतमश्चापि संप्राप्तस्तावन्योन्येन संगतौ ।
चक्राङ्गभारस्कन्धं तं धनुष्पाणिं धृतायुधम् ॥
रुधिरेणावसिक्ताङ्गं गृहद्वारमुपागतम् ।
तं दृष्ट्वा पुरुषादाभमपभ्रष्टं चयागतम् ॥
अभिज्ञाय द्विजो-राजन्निदं वाक्यमथाब्रवीत् ।
किमिदं कुरुषे मोहाद्विप्रस्त्वं हि कुलोद्वहः ॥
मध्यदेशपरिज्ञातो दस्युभावं गतः कथम् ।
पूर्वान् स्मर द्विजान् ज्ञातीन् प्रख्यातान् वेदपारगान् ॥
तेषां वंशेऽभिजातस्त्वमीदृशः कुलपांशनः ।
अवबुध्यात्मनात्मानं सत्त्वं शीलं श्रुतं दमम् ॥
अनुक्रोशं च संस्मृत्य त्यज वासमिमं द्विज ! ।
स एवमुक्तः सुहृदा तेन तत्र हितैषिणा ।
प्रत्युवाच ततो राजन् विनिश्चित्य तदार्त्तवत् ।
निर्द्धनोऽस्मि द्विजश्रेष्ठो-नापि वेदविदप्यहम् ॥
वित्तार्थमिह संप्राप्तं विद्धि मां द्विजसत्तम ! ।
त्वद्दर्शनात्तु विप्रेन्द्र ! कृतार्थोऽस्म्यद्य वै द्विज ! ॥
आवां हि सह यास्यावः श्वो वसस्वाद्य शर्वरीम् ।
स तत्र न्यवसद्विप्रो-घृणी किञ्चिदसंस्पृशन् ।
क्षुधितश्छन्द्यमानोऽपि भोजनं नाभ्यनन्दत" ॥ इत्यादि ।

एतदुपाख्यानद्वयसंग्रहणात्र निबन्धृशाकुन्त्येऽपि निर्वेगितमेतद्द्वयं बुभुत्सूनां-संशयनिरासार्थम् । यथाक्रममापदः क्रियत्कालावस्थायित्वं तथा वृत्तमयव्यापित्वं च सूचितमेतदुपाख्यानद्वितयेनेत्यवधेयम् ।

धर्म्मविप्लवस्य चापद्रूपत्वे, पूर्वप्रदर्शितविश्वामित्रीयोपाख्यानेनापि प्रकाशितानि प्रमाणानि विभावनीयान्येव ।

न चैतदुदाहरणद्वयस्य दुर्भिक्षार्थाऽभावरूपापत्कालविषयतया नैतत् प्रकृतोपयोगीति वाच्यं, सर्वत्र दिङ्मात्रैकोदाहरणपरिदर्शनेनैवान्येषां समाहितत्वात्। तथैतट्टीकायां प्रदर्शितं नीलकण्ठेन,—"यथाहीन इति । आपद्यकार्य्यमपि कर्त्तव्यमित्युक्तं । तत्र विश्वामित्रश्वजाघनीपचनरूपं शिष्टाचारं प्रमाणयति" ।

एतदनुसृतानि प्रमाणान्यप्यवलोक्यन्ते महाभारतीयापद्धर्मपर्वणि,—

"एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः ।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥
एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् ।
जीवन् पुण्यमवाप्नोति पुरुषो-भद्रमश्नुते ॥
तस्मात्-कौन्तेय ! विदुषा धर्माधर्मविनिश्चये ।
बुद्धिमास्थाय लोकेऽस्मिन् वर्त्तितव्यं कृतात्मना" ॥ इति ।

ननु बहुकालस्थायिन इदानींतनापत्कालस्य तदुद्धारोपायभूतस्य-पोताद्यारोहणसमुद्रगमनविदेशीयशिक्षानुष्ठानादिकस्य च प्रोक्तप्रमाणान्तर्भूतत्वात् तत्साधारणवचनान्तराभावाच्च तदुभयं न धर्म्मशास्त्रसम्मतमितिचेन्न, धर्म्मशास्त्रीयप्रमाणानां साक्षात्सम्बन्धेनैव समर्थकत्वाभावेऽपि उपलक्षणविधया स्वेतरप्रतिपादकत्वपरिदर्शनात्, आपत्कालरूपेतत्कालस्य तदुद्धारोपायनिवहस्य च सति शिष्टानुमोदनीयत्वे निम्नस्थवाक्यविसरेणैव मनुना तस्य प्रमाणरूपत्वेन तदुभयस्याभ्यनुज्ञातत्वाच्च ।

प्रमाणान्याह मनुः,—

"अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥
दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ।
त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत् ॥

प्रत्यक्षं चानुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्य्यं धर्मशुद्धिमभीप्सता ॥
आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" ॥

अतः सांप्रतिकसमयस्यापत्कालान्तर्भूतः; तदुद्धरणोपायश्च तद्धर्मान्तर्गत इति सारासारविचारनिपुणानां प्रेक्षावतां राद्धान्तः ।

अथापद्धर्म्मविचारः,—

आपद्यनुष्ठेयो-धर्म्मः-वैदिकधर्म्माविरोधिसामाजकधर्म्म इत्यर्थः एष-आपत्कल्पः इति कथ्यते । आपदि उचितः कल्पः विधिः अर्थात्जीवननिर्वाहकोपायः । स च किमात्मक इत्याकाङ्क्षायामुच्यते सः । ब्राह्मणादिजातीनां युगसामान्यनिषिद्धानि यानि यानि स्वस्ववृत्तिभिन्नवृत्त्यन्तरानुष्ठानानि विशेषतो ब्राह्मणस्य यानि यानि कलिवर्ज्यानि, तान्यापद्युत्सर्गापवादन्यायेनाचरणीयानीत्युपायः ।

तेषामुत्सर्गापवादन्यायो,-यथा,—

"मा हिंस्यात्सर्वाणि भूतानीत्युत्सर्गः । अग्निष्टोमीयं पशुमालभेतेत्यपवादः । तत्र मा हिंस्यात्सर्वाणि भूतानीत्येतस्यासङ्कोचेन सर्वहिंसानिषेधपरत्वे अग्नीषोमीयेत्यादेर्निर्विषयत्वमापद्येत । अतो मा हिंस्यात्सर्वाणिभूतानीत्यस्य सङ्कोचेनाग्नीषोमीयपश्वतिरिक्तसर्वभूतहिंसानिषेधपरत्वमङ्गीकरणीयम् । प्रकृते तु युगसामान्ये स्वीयवृत्तिभिन्नवृत्तिग्रहणनिषेधकवचनानां केवलं ब्राह्मणस्य कलिवर्ज्यप्रतिपादकद्विजस्याब्धौ तु नौयानमित्यादिवचनानाञ्चासङ्कोचेन युगसाधारणकलिसामान्यानुष्ठाननिषेधपरत्वेऽपि "सत्येन कर्मणा जीवेद्विप्रो वाप्यापदि द्विज" इत्यादिवचनवृन्दस्य निर्विषयत्वं स्यादेव, अतो युगसाधारणानुष्ठेयवृत्त्यन्तरनिषेधकवाक्यानां कलिसामान्यवर्ज्याब्धियानगवालम्भनादिविषयकप्रमाणानाञ्च सङ्कोचेनापत्कालानुष्ठेयवृत्त्यन्तरादिग्रहणातिरिक्तकृतादियुगचतुष्टयसाधारणस्वस्ववृत्तिभिन्नवृत्त्यन्तराद्यनुष्ठाननिषेधत्वमङ्गीकार्य्यम् । सन्त्यत्र वृत्त्यन्तरादिग्रहणे धर्मशास्त्रीयप्रचुरप्रमाणानि ।

यथा मनुः,—

"अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
जीवेत्-क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥
उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत् ।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्" ॥

"अधुना आपद्धर्ममाह,—

अजीवन्निति, यथोक्तेनाध्यापनादिस्वकर्मणा ब्राह्मणो नित्यकर्मानुष्ठान-कुटुम्बसम्बर्द्धनपूर्वकमजीवन् क्षत्रियकर्मणा ग्रामनगररक्षणादिना जीवेत् । यस्मात् क्षत्रियधर्मोऽस्य सन्निकृष्टा वृत्तिः ।

उभाभ्यामिति,—

ब्राह्मण उभाभ्यां स्ववृत्तिक्षत्रियवृत्तिभ्यामप्यजीवन् केन प्रकारेण वर्त्ततेति-यदि संशयः स्यात्, तदा कृषिपशुरक्षणे आश्रित्य वैश्यस्य वृत्तिमनुतिष्ठेत्, कृषिगोरक्षग्रहणं वाणिज्यस्यापि प्रदर्शनार्थम् । तथाच विक्रेयाणि वक्ष्यति । स्वयंकृतश्चेदं कृष्यादि ब्राह्मणापद्वृत्तिः, अस्वयंकृतस्य ऋतामृताभ्यां जीवेत-इत्यनापद्येव विहितत्वादिति" कुल्लूकभट्टः ।

"वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः ।
अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत् ॥
सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयङ्गतः ।
पवित्रं दुष्यतीत्येतद्धर्मतो-नोपपद्यते ॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ।
दोषो-भवति विप्राणां ज्वलनाम्बुसमा हि ते ॥
जीवेदेतेन राजन्यः सर्वेणाप्यनयङ्गतः ।
न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः।
तं राजा निर्द्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥
वैश्योऽजीवन् स्वधर्मेण शूद्रवृत्त्यापि वर्त्तयेत्।
अनाचरन्नकार्य्याणि निवर्त्तेत च शक्तिमान् ॥
अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम्।
पुत्रदारात्ययं प्राप्तो जीवेत्-कारुककर्मभिः ॥
यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः।
तानि कारुककर्माणि शिल्पानि विविधानि च" ॥

"सर्वत इति। ब्राह्मण आपदं प्राप्तः सर्वेभ्योऽपि निन्दितनिन्दिततर-निन्दिततमेभ्यः क्रमेण प्रतिग्रहं कुर्य्यात्।

अत्रार्थान्तरन्यासनामालङ्कारः।

यस्मात्पवित्रं गङ्गादि रथ्योदकादिना दुष्यतीत्येतत् शास्त्रस्थित्या नोपपद्यते। यस्मान्नाध्यापनादिति, ब्राह्मणानामापदि गर्हिताध्यापनयाजनप्रतिग्रहैरधर्म्मो न भवति। यस्मात् स्वभावतः पवित्रत्वेनाप्युदकतुल्यास्ते।

जीवेदिति,—

क्षत्रिय आपदं प्राप्तः, एतेनेत्यभिधाय सर्वेणेत्यभिधानात् ब्राह्मणगोचरतया-निषिद्धेनापि रसादिविक्रयणेन वैश्यवज्जीवेत्। न पुनः कदाचित् ब्राह्मण-जीविकामाश्रयेत्। न केवलं क्षत्रियः वैश्यादयोऽन्येऽपि। शक्तिमानित्यु-पादानेनैव शक्तिविहीनस्याकार्य्याचरणे न कोऽपि दोष इत्यवगम्यते। विप्रा-दीनामुपलक्षणमेतत्"। इति तद्व्याख्यानकर्त्तारः। "आपद्यपि च कष्टायां सद्यः शौचं विधीयते" इत्यापदि मुख्याशौचकल्पमानुष्ठानासम्भवेन सद्यः-शौचाद्यनुकल्पमुक्त्वेदानीं तत्प्रसङ्गादापदि प्रतिग्रहोऽधिको विप्रे याजनाध्यापने-तथेत्याद्युक्तयाजनादिमुख्यवृत्त्यसम्भवेन वृत्त्यन्तरमाह,—

याज्ञवल्क्यः—

"क्षात्त्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः ।
निस्तीर्य्य तामथात्मानं पावयित्वा न्यसेत्पथि ॥

"द्विजो विप्रो वहुकुटुम्बतया स्ववृत्त्या जीवितुमसमर्थः ।
क्षत्रसम्बन्धिना कर्मणा शस्त्रग्रहणादिनापदि जीवेत्" ॥

तेनापि जीवितुमशक्नुवन् वैश्यस्य सम्बन्धिना कर्मणा वाणिज्यादिना जीवेत्-न शूद्रवृत्त्या । तथा आपद्यपि नहि ब्राह्मी वृत्तिराश्रयणीया । किन्तु ब्राह्मणेन क्षात्री । क्षत्रियेण वैश्यसम्बन्धिनी, वैश्येन च शौद्रीत्येवं स्वानन्तरवृत्तिरेव । "अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन् । न तु कदाचिज्ज्यायसीमि"ति वसिष्ठस्मरणात् । ज्यायसी च ब्राह्मी वृत्तिः ।

तथा च स्मृत्यन्तरं,—

"उत्कृष्टं वापकृष्टं वा तयोः कर्म न विद्यते ।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हिते" ॥ इति
शूद्रस्य उत्कृष्टं ब्राह्मं कर्म न विद्यते ॥

तथा ब्राह्मणस्यापकृष्टं शौद्रं कर्म, मध्यमे क्षत्रवैश्यकर्मणी । पुनरापद्गतसर्ववर्णसाधारणी हिते । इति ।

"शूद्रस्यापद्गतो वैश्यवृत्त्या शिल्पैर्वा जीवेत् ।
शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिक्-भवेत्" ॥

"शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्नि"ति प्रागुक्तत्वात् । अनेनैवन्यायेनानुलोमोत्पन्नानामपि स्वानन्तरवृत्तिरूहनीया । एवं स्वानन्तरहीनवृत्त्या आपदं निस्तीर्य्य प्रायश्चित्ताचरणेनात्मानं पावयित्वा पथि न्यसेत् । स्ववृत्तावात्मानं स्थापयेदित्यर्थः । यद्वायमर्थः, गर्हितवृत्त्या अर्जितं धर्मपथि न्यसेत् उत्सृजेदिति ।

तथाच मनुः—

"जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्।
प्रतिग्रहनिमित्तं तु त्यागेन तपसैव त्वि"ति॥

अनापद्यविहितकर्मान्तराचरणेन साधारणस्य प्रायश्चित्तानर्हत्वेन पातित्य-मपांक्तेयत्वं च जीवनावधि स्थास्यतीति शास्त्रीयमर्य्यादा, किन्त्वापदि सत्यपि-तदाचरणे प्रायश्चित्तानुष्ठानेन तदुभयं विनाशितव्यमिति पावयित्वेत्यनेन प्रति-पादितोऽयं विशेष इत्यवगन्तव्यः। नन्वापदि नीचनीचतरनीचतमजातिगृह-भोजनमितुरपायान्तरं मनुयाज्ञवल्क्याभ्यामभ्यनुज्ञातमपि कथं नोट्टङ्कित-मत्रेति चेन्न, युगान्तरीयविषयतया प्रकृतानुपयोगित्वात्, पूर्वतोऽस्य स्फुटतो-व्याख्यातत्वाच्च।

गौतमोऽप्याह, —

"आपत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनम्। शुश्रूषाऽ-समाप्ते। ब्राह्मणो गुरुः, याजनाध्यापनप्रतिग्रहाः। सर्वेषां पूर्वः पूर्वो गुरुः, तदलाभे क्षत्रवृत्तिस्तदलाभे वैश्यवृत्तिः।

प्रमाणं यथा वृहदारण्यकोपनिषदि;—

"वाचा स्म वै पूर्व उपयन्ति सहोपायनकीर्त्योवास"। अत्र भाष्यं, वाचा स्म किल पूर्वं ब्राह्मणा विद्यार्थिनः सन्तः क्षत्रियान् वा वैश्यानुपयन्ति शिष्टवृत्त्या-उपगच्छन्ति, नोपायनशुश्रूषाभिः, अतः स गौतमः उपायनकीर्त्या उपगम-कीर्त्तनमात्रेणैव उवास उषितवान् नोपायनं चकार"।

तथाऽनन्दगिरिः—

"आपदि समादधिकाद्वा विद्याप्राप्त्यसम्भवावस्थायां उपायनमुपगमनं-पादोपसर्पणं।

तथाच मनुः,—

"अब्राह्मणादध्ययनमापत्काले विधीयते।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः" ॥इति॥

एतद्भिन्नेषु धर्मशास्त्रान्तरेषु विद्यमानान्यपि प्रायश एतत्तुल्यानि बहुनि-वचनानि निबन्धबाहुल्यभियोपेक्षणीयानात्र । जीवनहेतुत्वेनापदि स्थूलतो-ह्यन्तराद्युपाये सत्यपि निरूपिते सम्प्रति विभागशास्त्रहेतुतया मनुयाज्ञ-वल्क्यप्रदर्शिता बहुविधा उपायाः प्रकाश्यन्तेऽत्र ।

यथाह मनुः ;—

"विद्या शिल्पं भृतिः सेवा गोरक्षं विपणिः कृषिः ।
धृतिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः ॥

"विद्येति,—आपत्प्रकरणाज्जीवनहेतव इति निर्देशादेषां मध्ये यया वृत्त्या-यस्यानापदि जीवनं निषिद्धं, तया तस्यापद्यभ्यनुज्ञायते,

यथा ब्राह्मणस्य भृतिसेवादि एवं शिल्पादावपि ज्ञेयं । विद्या वेदविद्या-व्यतिरिक्ता ( जीविकानिर्वाहहेतुका ) वैद्यतर्कविषापनयनादिविद्या ( आदि-पदेन मौलिकधर्माविरोधिविदेशीयविद्याशिक्षादिसंग्रहः ) । सर्वेषामापदि-जीवनार्थं न दुष्यति । शिल्पं लिखनादिकरणं ( आदिपदोपादानेन-सकलकारुकर्मणां संग्रहणं ) । भृतिः प्रेष्यभावेन वेतनग्रहणं । सेवा परा-ज्ञासम्पादनम् । अर्थात् नृपादिधनिकमानवसेवया जीविकापरिचालनम् । गोरक्षं पशुपाल्यं । विपणि वाणिज्या । कृषिः स्वयंकृता । धृतिः सन्तोषः । तस्मिन्नल्पकेनापि जीव्यते । भैक्ष्यं भिक्षासमूहः । कुसीदं वृद्ध्या धनप्रयोगः-स्वयंकृतोऽपि इत्येभिर्दशभिरापदि जीवनीयमिति" कुल्लूकभट्टः ।

तथाहि मेधातिथिः,—

"सर्वपुरुषाणामापदि वृत्तिरियमनुज्ञायते । तत्र विद्या वेदविद्याव्यतिरेकेण वैद्यकतर्कभूतविषासनविद्या सर्वेषां जीवनार्था न दुष्यति । शिल्पं व्याख्यातं । भृतिः प्रेष्यकत्वं । सेवा परवृत्त्यानुवर्त्तित्वं । धृतिः सन्तोषः दृष्टार्थं चैतत् । अतो विहितवृत्त्यभावेन एते जीवनोपायाः संकीर्य्यन्ते पुरुषमात्रविषयत्वात्" ।

यथाह याज्ञवल्क्यः,—

"कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः ।
सेवानूपं नृपो भैक्ष्यमापत्तौ जीवनानि तु" ॥

"किंच, आपत्सौ जीवनानीतिविशेषणात् कृष्यादीनां मध्येऽनापदवस्थायां यस्य या वृत्ति: प्रतिषिद्धा तस्य सा वृत्तिरनेनाभ्यनुज्ञायते। यथापदि-वैश्यवृत्ति: स्वयंकृता कृषिविप्रक्षत्रिययोरभ्यनुज्ञायते। एवं शिल्पादीन्यस्याभ्यनुज्ञायते। शिल्पं सूपकरणादि। भृति: प्रेष्यत्वं, विद्या भृतकाध्यापकत्वाद्या। (आद्यपदोपादानेन कुल्लूकभट्टव्याख्यातविषया संगृहीता अत) कुसीदं वृद्ध्यर्थं द्रव्यप्रयोग:। तत् स्वयंकृतमभ्यनुज्ञायते। शकटं भाटकेन-धान्यादिवहनद्वारेण जीवनहेतु:। गिरिस्तद्गततृणेन्धनद्वारेण जीवनं। सेवा-परचित्तानुवर्त्तनम्। अनूपं प्रचुरतृणवृक्षजलप्रायप्रदेश:। तथा नृपयाचनं-भैक्ष्यं स्नातकस्यापि एतान्यापत्सौ जीवनानि"। इति विज्ञानेश्वर:।

प्रोक्तव्याख्याकर्त्तृभि: संक्षेपतो विवृतस्याप्येतद्वचनद्वयोक्तजीविकानिर्वाह-प्रयोजनकोपायविसरस्य मनुवाक्यप्रकाशितोपायनिवहानुक्रमेण यथासम्भव-मनुष्ठीयतेऽत्र विशेषविवरणम्।

क्रमप्राप्ता विद्या विचार्य्यतेऽत्रादित:।

विद्या, ज्ञानार्थकविदधातो: करणे क्यप् प्रत्ययस्तत: स्त्रियां टाप्। अनया-रीत्या विद्येति पदं निष्पन्नं। सा अध्ययनजन्यज्ञानात्मिका। सा तु चतु-र्दशविधा, चत्वारो वेदा: षड़ङ्गानि, पुराणं, मीमांसा, न्याय:, धर्मशास्त्रं, एतद्रूपा। किन्त्वेषा नि:श्रेयससाधिका नत्वापदि जीविकाप्रचलना-पादिका, अतस्तन्निर्वाहार्थमभ्युदयसाधनं नैदानिकधर्मानुगं यत् किंचिदपि-विद्याध्ययनं करणीयमिति कुल्लूकभट्टाभिप्राय:। सति जीवनधारणे नि:श्रेय-ससाधनधर्म: सुसाध्य एव। अन्यथा तद्रक्षणं निराधारमेव, शरीरधारणमन्तरा धर्मसंपादनस्यासाध्यत्वात्, प्रमाणान्यत्रावलोकितव्यानि पूर्वत: प्रदत्तानि।

अपिचानधीतविद्यानां द्विजातीनां राज्ञा दण्ड्यत्वमपि प्रतिपादितं धर्म-शास्त्रकारैरध:स्थप्रमाणजालेनैव।

यथा पराशर:—

"अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजा:।
तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदो हि स:"॥

वशिष्ठोऽपि,—

"अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः" ॥

प्रोक्तप्रमाणद्वयस्यानधीयाना इति विशेषणपदस्य भैक्ष्यचरविशेषणसाह-चर्य्यादनधीतजीविकानिर्वाहकविद्याकपोऽर्थो वोद्धव्यः। अतो द्विजानामुभय-विधविद्याध्ययनं सदैव करणीयं। किन्त्वापत्सम्भावनया निषिद्धाया-अपि-यस्याः कस्याश्चिद्विद्याया द्विजातिकर्त्तृकाध्ययनस्य धर्मशास्त्रकारैरभ्यनु-ज्ञातत्वाद्विदेशीयविद्याशिक्षानुष्ठानं न दोषाधायकमिति राद्धान्तः। न च-निम्नतमजातेरध्ययनं धर्मशास्त्रविरुद्धमिति वाच्यं। आपदि नीचाध्ययनस्य-शास्त्राभ्यनुज्ञातत्वात्। एतत्तु नीचाध्यापनस्योपलक्षकम्। एतदीयप्रमाणानि-पूर्वतः प्रदत्तानि। यत्तु "न म्लेच्छभाषां शिक्षेते"ति वशिष्ठवचनप्रदर्शनेनैव-म्लेच्छविद्याध्ययने विरोधमुत्पादयन्ति, तत्तुच्छं। निषिद्धविद्यापठनस्या-पद्यभ्यनुज्ञातत्वात् यवनीयराजत्वावसरतस्तच्छिक्षायाः शिष्टैराद्दतत्वाच्च।

अत एतत्-प्रमाणानामनापत्कालविषयकत्वमिति वोद्धव्यं। किन्तु-प्रायशो विनापि भारतभिन्नदेशान्तरगमनं न सम्भवति बहुविषयककौशला-धायकविद्याध्ययनम्। तत्तु शिक्षाद्युद्देश्यकपोतकरणकसमुद्राधिकरणक-गमनानुकूलकृत्याश्रयार्थत्वमपेक्षते। अत्र परस्परं विवदन्ते प्रधानतमा-विद्वांसः। अत्रैके पापविनाशपूर्वकशुभाद्दष्टोत्पादनकरणकसमुद्रगमनमपि-विहायान्यत्र समुद्रगमनमनिषिद्धं कलावर्थापयन्ति। अपरे तु सकलविषयक-समुद्रगमनं निषेधन्ति। तन्मतद्वयं तु विविदुषूणामाकाङ्क्षानिरसनाय यथाक्रम-मत्रप्रदर्श्यते।

"शोधितस्यापीत्यनेन कृतप्रायश्चित्तस्यैव संग्रहपदवाच्यव्यवहार्य्यतानिषेधेन यत्र विषये समुद्रनौयानं निषिद्धं तत्रैव विषये कृतप्रायश्चित्तस्याप्यसंग्रह-इति प्रतिपादितम्। अत्र शोधितत्वोक्त्यैव प्रायश्चित्तनिमित्तीभूतपापनिश्चय-आक्षिप्यते।

तन्निश्चयश्च पापावेदकशास्त्रादेव, समुद्रगमनमात्रे च कुत्रापि शास्त्रे प्रायश्चि-

आचारदर्शनात्र तस्य निषिद्धता, किन्तु तद्गमनकाले म्लेच्छादिस्पृष्टजलान्न-सेवन एव तत्पापापनोदाय तु कृतेऽपि प्रायश्चित्ते न तद्यातुः संग्रह इत्येवं कल्पयितुमुचितम् । शोधितस्यापीति पदस्वारस्यात् । अन्यथा-समुद्रनौगमनमात्रे संग्रह इत्येवाभिदध्यात् । न च तथाभिहितम् । न च-समुद्रयात्रास्वीकार: कमण्डलुविधारणमित्युपक्रम्य "इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिण" इति बृहन्नारदीयवचने समुद्रयात्रास्वीकारस्य कलौ-निषिद्धतयोक्तेर्निषिद्धातिक्रमे च,—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नर: पतनमृच्छति" ॥

इति याज्ञवल्क्यस्मृतौ क्रमशस्तथाचरणे पातित्यप्रतिपादनात् तद्विषय-एव प्रायश्चित्ताचरणसम्भवेन तत्रैव शोधितस्यापीत्यस्यावकाश इति वाच्यम् । बृहन्नारदीयवचने उपसंहारे । "इमान्, धर्मान्" इत्युक्तेर्धर्मरूपसमुद्रयात्रा-स्वीकारस्यैव कलौ निषेधात् वाणिज्यराजाज्ञादिनिमित्तकस्य तस्य निषेधा-भावेन तद्विषयकत्वासम्भवात् । स्मर्य्यते च ब्रह्महत्यादिपापापनोदनार्थं समुद्र-गमनं पराशरेण प्रायश्चित्तप्रकरणे,—

"शतयोजनविस्तीर्णं शतयोजनमायतम् ।
रामचन्द्रसमादिष्टनलसञ्चयसञ्चितम् ।
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्या व्यपोहति" ॥

इत्यनेन न चाप्यत्र समुद्रसेतुदर्शनस्यैव ब्रह्महत्यानाशकत्वं शक्यम्, समुद्रयात्रास्वीकारं विना शतयोजनायतस्य सेतोर्दर्शनासम्भवेनाक्षेपेणैव तद्-गमनलाभात् ।

अन्यथा सेतोर्यत्किञ्चिदंशमात्रस्य तथात्वे "शतयोजनमायत"मिति विशेषणं निरर्थकं स्यात् ।

तथा च शतयोजनविस्तारायतसेतुबन्धदर्शनस्यैव प्रकृतब्रह्महत्यापाप-नाशकत्वम् । अतएव "यो भूय आरभते तस्य फले विशेष:" । इति

जैमिनिना सम्यगायासे फलबाहुल्यं निर्णीतम्। निर्णीतं च ऋग्वेदभाष्ये-माधवाचार्य्येण सम्यगायासादिनानुष्ठिताश्वमेधाद्यपेक्षया तत्तद्यज्ञविद्यावोधक-वेदाध्यायिनोऽतिदिष्टब्रह्मवधादिनाशकत्वम्।

एवं च प्रकृतब्रह्महत्याया अपनोदनार्थं शतयोजनदीर्घविस्तृतसेतु-दर्शनं स्मृतौ विहितम्। तेनैव च समुद्रनौगमनमर्थापत्तिलभ्यम्। एवं द्वारव-त्यादितीर्थयात्राङ्गमपि समुद्रयानगमनमर्थापत्तिप्रमाणलभ्यम्। एवं च-ईदृशसमुद्रयानस्यैव धर्मरूपतया विहितस्य कलौ निषेधो बृहन्नारदीयवचने-कमण्डलुविधारणादिभिः पुण्यापरपर्य्यायधर्मसाधनत्वेन धर्मरूपैः समभि-व्याहारेण पठितत्वात् धर्मस्यैव समुद्रयानस्य निषिद्धत्वौचित्यात्।

"प्रायेण समानरूपाः सहचरा भवन्ति" इति न्यायात्।

एतेन बृहन्नारदीये "समुद्रयातास्वीकार" इति पाठे रघुनन्दनमाधवा-चार्य्यादिबहुनिबन्धकारसम्मते स्थिते निर्णयसिन्धौ समुद्रयातुः स्वीकार-इति क्वाचित्कपाठस्तु अनाकरोऽनुचितश्च। तथासति समुद्रयातुर्जनस्य-स्वीकाररूपव्यवहारस्य धर्मरूपत्वाभावेन "इमान् धर्मान्" इत्यभिधानस्या-युक्तत्वापत्तेः। ततश्च धर्मार्थसमुद्रयात्रास्वीकारस्यैव निषिद्धतया वाणिज्य-राजाज्ञादिनिमित्तकस्य तस्य कृताप्यनिषेधात् तत्समये म्लेच्छादिगुरुतर-संसर्गे सन्ध्यावन्दनादित्यागे च तत्पापापनोदनार्थं शोधितस्य (कृतप्राय-श्चित्तस्य) न संग्रह इत्यत्रैवादित्यपुराणतात्पर्य्यम्। यथा च "कामतो-ऽव्यवहार्य्यस्तु" वचनादिह जायते। इति याज्ञवल्क्येन पातकविशेषे प्राय-श्चित्ताचरणेऽपि अव्यवहार्य्यताभिहिता। तत्समानन्यायादत्रापि प्राय-श्चित्ताचरणेऽपि न व्यवहार्य्यतेति युक्तमुत्पश्यामः। एवं च समुद्रनौगमन-काले सन्ध्यादिकर्त्तृम्लेच्छादिभिर्गुरुतरं संसर्गमकुर्वतश्च प्रायश्चित्तज्ञापक-शास्त्राभावात् नाव्यवहार्य्यता। नापि प्रायश्चित्ताचरणम्।

ततश्च,—

"उषित्वा यत्र कुत्रापि स्वधर्मं प्रतिपालयन्।
षट् कर्माणि प्रकुर्वीरन् इति धर्मस्य निश्चयः॥"

इति स्मृतौ यत्र कुत्रापि वासेऽपि स्वधर्मानुष्ठाने पापशून्यत्वमुक्तं सूपपन्नम्। अतएव कलौ वाणिज्यार्थं समुद्रगमने शिष्टाचारोऽपि दृश्यते। तथाहि-कलियुगनृपवत्सराजामात्ययोर्यौगन्धरायणवाभ्रव्ययोर्युद्धार्थं वत्सराजाज्ञया समुद्रयानं रत्नावलीनाटके वर्णितम्। वर्णितं च भाषाचण्डीपुस्तके श्रीमन्ताभिधवणिजस्तत्पितुश्च इतो-वङ्गदेशात् सिंहलगमनं। न च तद्गमनं तदा केनापि-विगीतम्। यदि तद्-विगीतं स्यात्, तदा ते हि शिष्टाः कथं तत्-कुर्य्युः। इदानींतनानां विगानं तु म्लेच्छभूरिसंसर्गाशङ्कयैवेति। तन्मूलकमेवेदानीमप्यन्यैर्दाचिणात्यैः शिष्टैर्वाणिज्यार्थं सिंहलादिगमनमनुष्ठीयते। अतः समुद्रयानगमनमात्रं निषिद्धमिति रिक्तं वचः। ततश्च धर्मार्थ-समुद्रयानगमनमेव कलौ निषिद्धमित्यायातम्। तद्-गमनकाले च यदा म्लेच्छादिभिर्गुरुतरसंसर्गः सन्ध्यादित्यागश्च, तदैव प्रायश्चित्ताचरणेऽपि द्विजानामव्यवहार्य्यता शूद्राणां तु प्रायश्चित्ताचरणे व्यवहार्य्यतैव द्विजपदस्वारस्यात्। अन्यथा-लोकस्याब्धौ त्वित्यभिदध्यात्। इत्येव द्विजेभ्यः शूद्राणां विशेष इति दिङ्-मात्रमुपदर्शितमित्येके आहुः।

अपरे तु कलियुगे द्विजानां समुद्रयानं सामान्यतो धर्मशास्त्रनिषिद्धं न वेति,-शास्त्रनिषिद्धत्वेऽपि पातित्यहेतुर्न वेति, पातित्यहेतुत्वे तस्य प्रायश्चित्तमस्ति-नवेति, अस्तिचेत्तादृशप्रायश्चित्तेन परिपूतस्य समुद्रयायिसामान्यस्य संसर्गः-सामान्यतः शास्त्रनिषिद्धो नवेति च, चतुर्द्धा विप्रतिपत्तयः सन्ति। तत्र प्रथम-विप्रतिपत्तौ कलियुगे द्विजानां समुद्रयानं सामान्यतो धर्मशास्त्रनिषिद्धमिति-सिद्धान्तः। तथाहि कलिवर्ज्यप्रकरणे "पराशरमाधवीयस्मृतिसंग्रहयोर्द्विज-स्याब्धौ तु निर्याणं शोधितस्यापि संग्रह" इति, स्मृतिसंग्रहे,—"समुद्रयान-स्वीकारः कमण्डलुविधारणमि"ति। मदनपारिजाते "समुद्रयात्रास्वीकारः-कमण्डलुविधारणमि"त्याद्यनेकवचनैः सामान्यतः समुद्रयानस्यैव निषेधात्।

न च बोधायनसूत्रे,—"पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि-दक्षिणतस्तानि व्याख्यास्यामो यथैतदनुपनीतेन सह भोजनं पर्य्युषितभोजनं-मातुलपितृष्वसृदुहितृपरिणयनमित्यथोत्तरत ऊर्णाविक्रयः शीधुपानमुभयतो-दन्निर्व्यवहार—आयुधीयकं समुद्रयानमितीतरदितरस्मिन् कुर्वन् दुष्यतीतरदि-

तरस्मिन्" तत्र तत्र देशग्रामाख्यादित्यनेन समुद्रयानस्यौत्तरीयद्विजधर्मत्वेनोक्ता-वौत्तरीयद्विजकर्त्तृकसमुद्रयाननिषेधासम्भवेन दाक्षिणात्यद्विजकर्त्तृकसमुद्रयान-मात्रनिषेधस्यैव द्विजस्याब्धावित्यादिवचनतात्पर्य्यविषयत्वाङ्गीकारावश्यकतया-न समुद्रयानसामान्यस्य शास्त्रनिषिद्धत्वमिति वाच्यम् । उक्तबोधायनसूत्रे-समुद्रयानस्यौत्तरीयद्विजधर्मत्वेन प्रतिपादनं कलियुगेतरयुगाभिप्रायेणेति-वक्तव्यम् । न च सहपठितानामूर्णाविक्रयशीधुपानादीनां कलिधर्मत्वेन-समुद्रयानस्यापि कलिधर्मत्वमेव वक्तुं शक्यम् ।

आयुधीयकस्य कलिनिषिद्धस्यापि सह-पाठात् । आयुधीयकं शस्त्रधारणं तत् ब्राह्मणानां कलियुगे निषिद्धम् ।

तथाच वैद्यनाथीये,—

ब्राह्मणानामापद्वृत्तिकथनावसरे असम्भवे त्वापदि क्षत्रियादिवृत्तिर्हिंसा-प्राया वर्जनीया ।

## "आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम्" ।

"आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथे"ति कलौ निषिद्धत्वात् ।

"क्षत्रवृत्त्या वैश्यवृत्तिः प्रशस्ता स्यात् कलौ युगे" । इत्याश्वलायनस्मरणा-च्चेत्यादिना शस्त्रधारणरूपायुधीयकस्य हिंसाप्रायक्षत्रियवृत्तिस्वरूपतया तस्य-कलिनिषिद्धत्वं कलिवर्ज्यप्रकरणपठितेन आततायीत्यादिवचनेनाश्वलायनस्मृत्या-च समर्थितम् । अतः कलिनिषिद्धेनायुधीयकेन सहपाठात् समुद्रयानस्यापि-कलिनिषिद्धत्वमेव । न च विनिगमनाविरह इति वाच्यम् । उक्तबोधायनसूत्रस्य-कलियुगेतरयुगसाधारणायुधीयकादिधर्मप्रतिपादकतया कलियुगधर्ममात्रप्रति-पादकत्वाभावेन कल्यादिपदसमभिव्याहृतत्वाभावेन च तदपेक्षया उक्तकलि-वर्ज्यप्रकरणपठितानां द्विजस्येत्यादिवचनानां नियमतः कलिवर्ज्यधर्मबोधनार्थमेव-प्रवृत्ततया कल्यादिपदसमभिव्याहृतत्वेन प्राबल्यस्यैव विनिगमकत्वात् । उक्त-बोधायनसूत्रे आयुधीयकसमुद्रयानयोः कलिनिषिद्धयोरुपादानं कलियुगेतर-युगाभिप्रायकमेवेति कल्यवच्छिन्नद्विजकर्त्तृकसमुद्रयानसामान्यस्य शास्त्रनिषिद्धत्वं-युक्तमेवेति ।

अथ द्वितीयविप्रतिपत्तिनिषेध-कोटिवादिन उक्तरीत्या समुद्रयानस्य कलि-निषिद्धत्वेन प्रत्यवायहेतुत्वेऽपि न तस्य पतनहेतुत्वं सम्भवति। पतनहेतुषु-महापातकेषु तत्तुल्येषु च पातकेषु मनुयाज्ञवल्क्यपराशरादिभिः समुद्रयानस्या-परिगणितत्वात्।

प्रकृते तु समुद्रयानविषये प्रत्यवायविशेषाश्रवणात् प्रायश्चित्तविशेषाविधा-नाच्च न तस्य पातित्यहेतुत्वमित्याहुस्तत्र। बोधायनाचार्य्यैस्तु अथ पतनीया-नीति प्रतिज्ञाय समुद्रयानं ब्राह्मणन्यासापहरणमित्याद्युपन्यासात्समुद्रयानस्य-पतनीयत्वं कण्ठरवेणोक्तम्। न च बोधायनसूत्रे, पतनीयशब्दप्रयोगानुपपत्ति-रिति शंक्यम्। उदाहरिष्यमाणनीचाभिगमनमित्यादि याज्ञवल्क्यवचनेऽभ्या-सानपेक्षया पतनहेतुष्वपि पतनीयशब्दप्रयोगात्। किञ्च "नीचाभिगमनं-गर्भपातनं भर्तृहिंसनम्। विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुव"मिति। याज्ञवल्क्यवचनव्याख्यानावसरे विज्ञानयोगिभिः,—अपिशब्दात् पुरुषस्य-यानि पतननिमित्तानि महापातकातिपातकसमपातकानुपातकान्यभ्यस्तानि-चोपपातकानि तान्यपि स्त्रीणां ध्रुवं निश्चितम् पतनकारणानि भवन्तीति-व्याख्यानात्।

उपपातकस्यैवाभ्यासापेक्षया पतनहेतुत्वं ततः पूर्वोपदिष्टानां गुरुतराणां-अनुपातकसमपातकातिपातकमहापातकानां सकृदनुष्ठानेनैव पतनहेतुत्व-मित्याविष्कृतं। अतः समुद्रयानस्य अभ्यासं विनैव पतनहेतुत्वं सिद्धम्। यदि च महापातकानामेव पतनहेतुत्वमितरेषां तु यावताभ्यासेन-तत्तुल्यत्वं तावदभ्यस्तानामेवेति समुद्रयानस्य वैद्यनाथदीक्षितैरपि पातक-मध्यपाठेऽपि स्मृतौ कुत्रापि अतिपातकत्वानुक्तेः। यदनुक्तं तत्प्रकीर्णक-मिति विष्णुवचनोक्तरीत्या प्रकीर्णकत्वमङ्गीकृत्य यथा दिवा स्वापादीनामल्पाल्प-प्रायश्चित्तापनोद्यत्वेन न पतनहेतुत्वं सम्भवतीत्याग्रहः। तदापि वक्ष्यमाण-रीत्या इदानीन्तनसमुद्रयानस्य कामकृतत्वद्विरावृत्तत्वाभ्यां बोधायनसूत्रोक्त-त्रैवार्षिकप्रायश्चित्तस्य चातुर्गुण्येन द्वादशवार्षिकत्वसम्पत्त्या महापातकतुल्यत्व-सम्भवेन भवदुक्तरीत्यापीदानीन्तनसमुद्रयानस्य पतनहेतुत्वं सिद्धमिति विधि-कोटिरेव ज्यायसीत्यलं पल्लवितेन।

अथ तृतीयविप्रतिपत्तिनिषेधकोटिवादिन उक्तरीत्या समुद्रयानस्य-पातित्यहेतुत्वेऽपि माधवविज्ञानयोगिप्रभृतिभिर्धर्मशास्त्रनिबन्धनकर्त्तृभिः प्राय-श्चित्तस्यानिर्णीतत्वात्मरणमेव प्रायश्चित्तमित्याहुः । तन्न । कलौ द्वीपान्तरे द्विजा-नामभावेनास्माद्द्वीपाद्द्वीपान्तरगमनसाध्यकार्य्याणामभावात्समुद्रयानस्य विशेषतः प्रसक्त्यभावमभिप्रेत्य माधवादिभिः प्रायश्चित्ताकरणेऽपि वैद्यनाथदीक्षितैः-प्रथमं प्रायश्चित्तनिमित्तविभजनावसरेऽतिपातकेषु बोधायनोऽपीतुरुपक्रम्य समुद्र-यानं ब्राह्मणन्यासापहरणमित्यादि बोधायनसूत्रलेखनेन समुद्रयानस्याति-पातकत्वं प्रकटय्य प्रायश्चित्तनिरूपणावसरे पतनीयानां प्रायश्चित्तमाह बोधायन-स्तुरुपक्रम्य समुद्रयानं ब्राह्मणन्यासापहरणं भूम्यनृतं सर्वापण्यैर्व्यवहरणम् । शूद्रसेवनं, शूद्राभिगमनम् ।

यश्च शूद्रायामभिजायते तदपत्यञ्च भवति तेषाञ्च निर्देशश्चतुर्थकालं-मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुकल्पं स्थानासनाभ्यां विहरन्त-एते-स्त्रिभिर्वर्षैस्तदपहरन्ति पापमिति बोधायनसूत्रमुदाहृत्य शूद्राभिगमन-इदं-महत्प्रायश्चित्तं ऋतूपगमनेऽपत्योत्पत्तौ द्रष्टव्यं ।

"वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते" ॥

इतिस्मृतेरितिलेखनेन उक्तबोधायनसूत्रगतं शूद्राभिगमनमित्यस्यैव शूद्राया-मपत्योत्पत्त्याधायक-ऋतुगमनरूपविषयविशेषपरिकल्पनेनेतरेषां समुद्रयान-मित्यादीनां यथाश्रुतार्थपरतया समुद्रयानादिषु असङ्कोचेनैव त्रैवार्षिकप्राय-श्चित्तं विधेयमित्यभिप्रायः स्फुटीकृतः । न च शूद्राभिगमनमात्रे प्रायश्चित्त-निर्णायकत्वमिति वाच्यम् । उपक्रमे पतनीयानामिति बहुवचनविरोधापत्तेः । तस्मात् समुद्रयाने बोधायनोक्तत्रैवार्षिकप्रायश्चित्तमेव विधेयमिति वैद्यनाथा-भिप्राय इति सिद्धम् । तादृशं प्रायश्चित्तं अकामकृतसमुद्रयाने, कामकृतसमुद्र-याने तु ऋग्विधाने, सकृत्कृतसमुद्रयाने तु प्रायश्चित्तमुदाहृतम् ।

"बहुकालादभ्यसने प्रायश्चित्तं तु नैव हि ।
कलौ द्विजोऽब्धौ याने तु प्रायश्चित्तेन शुध्यति" ॥

वर्षत्रयं व्रतं कृत्वा सहस्रञ्च हिरण्यकम् ।
ब्राह्मणेभ्यः प्रदद्याच्च शक्त्या गोदानमेव च" ॥

इत्यादिना,

आश्वलायनोक्तगोदानसहस्रहिरण्यदानसहितत्रैवार्षिकव्रतम्,—वा,

मन्वङ्गिरोव्यासवचनोक्तरीत्या बोधायनोक्तत्रैवार्षिकव्रतं द्विगुणीकृत्य षड्वार्षिकव्रतं वा प्रायश्चित्तं विधेयम् । एवञ्च विवक्षितविवेकेन समुद्रयाने तत्तत्प्रायश्चित्तानि शास्त्रीयाणि सन्त्येवेति विधिकोटिरेव ज्यायसीत्यलं प्रसक्तानुप्रसक्तया ।

अथ चतुर्थविप्रतिपत्तिनिषेधकोटिवादिनः कृतप्रायश्चित्तसमुद्रयायिसामान्यस्य संसर्गः सामान्यतः शास्त्रनिषिद्धो न भवति, परन्तु शास्त्रसम्मत एव । तथाहि,—"एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित्-समाचरेत् । कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचिदि"ति, मनुवचनेन कृतप्रायश्चित्तपापिसंसर्गकर्त्तव्यतायाः सूचितत्वात् तादृशमनुवचनतात्पर्य्यनिर्णायककुल्लूकभट्टव्याख्यायां पापकारिभिरकृतप्रायश्चित्तैः सह दानप्रतिग्रहादिकमर्थं किञ्चिन्नानुतिष्ठेत् । कृतप्रायश्चित्तांश्चैव कदाचिदपि पूर्वकृतपापत्वेन निन्देत्, किन्तु पूर्ववद्व्यवहरेदित्यनेन कृतप्रायश्चित्तपापिनां संव्यवहार्य्यत्वस्य स्फुटं प्रतिपादनाच्च । न च "द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः" इति बृहत्पराशरवचनेन समुद्रयानरूपपापविशेषविषये कृतप्रायश्चित्तस्यापि तादृशपापिनः असंग्राह्यत्वप्रतिपादकत्वेन विरोधात् । निरुक्तमनुवचनस्य समुद्रयानरूपपापातिरिक्तपापविषयकत्वस्याङ्गीकरणीयतया कृतप्रायश्चित्तसमुद्रयायिसंसर्गस्य स्मृतिनिषेधत्वेन न शास्त्रसम्मतत्वमिति वाच्यम् । आश्वलायनब्राह्मणनिरूपणावसरे माधवीयवैद्यनाथीयोदाहृतम्,—

"अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी वन्दी च तैलकः कूटकारकः" ॥

इति यमानुवचनं, यच्च—

"समुद्रयायी वान्ताशी केशविक्रयिणश्च ये ।
अवकीर्णी च वीरघ्नो गुरुघ्नः पितृघातकः"॥

इति यमवचनम् ।

ताभ्यां समुद्रयायिनः श्राद्धवर्ज्यत्वप्रतिपादनं निरुक्तद्विजस्येत्यादिवचनस्य-सामान्यतः समुद्रयायिसंसर्गनिषेधपरत्वेनोपपद्यते । अप्रसक्तस्य प्रतिषेधानर्हत्वात् । अतो निरुक्तद्विजस्येत्यादिवचनगतसंग्रहपदस्य श्राद्धनिमन्त्रणीयत्वरूप-संसर्गविशेषपरत्वमङ्गीकृतं । निरुक्तमनुयमवचनसमानार्थकत्वमुपपादनीयम् । अथवा निरुक्तद्विजस्येत्यादिवचनगतद्विजपदस्य वा अवकीर्णिनैष्ठिकादिद्विज-विशेषपरत्वमङ्गीकृत्य,—

"नैष्ठिकानां वनस्थानां यतीनां चावकीर्णिनाम् ।
शुद्धानामपि लोकेऽस्मिन् प्रत्यासत्तिर्न विद्यते" ॥

इति माधवाचार्योदाहृतकौशिकवचनसमानार्थकत्वमुपपादनीयं । तथाच, समुद्रयायिसामान्यप्रतियोगिकश्राद्धनिमन्त्रणीयत्वरूपसंसर्गविशेषस्य वा अव-कीर्णिनैष्ठिकादिरूपसमुद्रयायिविशेषप्रतियोगिकसंसर्गसामान्यस्य वा उक्त द्विजस्येत्यादिवचनेन निषेधान्न समुद्रयायिसामान्यसंसर्गः सामान्यतः शास्त्र-निषिद्ध इति, तदितरसमुद्रयायिसंसर्गः कर्त्तव्यत्वेन निरुक्तमनुवचनसम्मत एव । तथाचोक्तद्विजस्येत्यादिस्मृत्या कामतस्त्रिवाराधिकतयाऽनुष्ठीयमानसमुद्रयानवत्-पुरुषसंसर्गस्यैव निषिद्धतया अकामतः कामतो वा सकृदनुष्ठितसमुद्रयानवत्-पुरुषसंसर्गस्योक्तपराशरस्मृतिमाधवाचार्यकृततद्व्याख्याभ्यां कर्त्तव्यत्वं शास्त्र-सम्मतमिति सिद्धमित्याहुः । तन्न । कलिवर्ज्यप्रकरणेषु माधवीयस्मृतिसंग्रह-यो"र्द्विजस्याब्धौ तु निर्याणं शोधितस्यापि संग्रह" इति । हेमाद्रावादित्य-पुराणे,—वृद्धपराशरस्मृतावपि, "द्विजस्याब्धौ तु नौयातुः शोधितस्यापि-संग्रह"—इति । वृहन्नारदीये,—"समुद्रयातुः स्वीकारः कमण्डलुविधारण"-मित्युदाहृतैर्वचनैः सामान्यतः समुद्रयायिसंसर्गस्य निषिद्धत्वात् । ननूक्त-द्विजस्येत्यादिवचनानां समुद्रयायिसंसर्गसामान्यनिषेधपरत्वमेव न सम्भवति ।

तथाहि,—

स्मृतिकर्तृभिः संसर्गसामान्यप्रतितीच्छया संसर्गः संकरः संव्यवहारः प्रत्यापत्तिः संप्रयोगः संवसेदित्याद्यानुपूर्वकाख्येव पदानि तत्र तत्र प्रयुक्तानि न तु-संग्रहस्वीकारशब्दौ। तयोर्मध्ये संग्रहशब्दः ग्रह-उपादाने इत्यस्माद्धातोः समित्युपसर्गपूर्वकाद्भावघञन्ततया निष्पन्नः। स्वीकारशब्दस्तु अस्वं स्वं सम्पद्यते तं-करोतीति व्युत्पत्तिमहिम्ना आहनिमन्त्रणीयत्वादिरूपसंसर्गसामान्यम्। इत्युक्तद्विजस्येत्यादिवचनेषु तादृशसंग्रहस्वीकारशब्दयोरेवोपादानेन समुद्रयायिप्रतियोगिकआहनिमन्त्रणीयत्वादिरूपसंसर्गविशेषनिषेधपरत्वात्तेषां न तत्सामान्यनिषेधपरत्वमिति चेन्न। सृज् विसर्गे इत्यस्माद्धातोः समित्युपसर्गपूर्वकाद्भावघञन्ततया निष्पन्नसंसर्गशब्दस्यावयवव्युत्पत्त्या संसर्गसामान्यवाचकत्वेऽपि-सम्प्रयोगसमाचारणसंव्यवहारसंवासप्रत्यापत्तिशब्दानां विभिन्नधातुभ्यो निष्पन्नानामवयवव्युत्पत्त्या संसर्गसामान्यवाचकत्वं न सम्भवतीति। रूढ़िशक्त्यैवतेषां संसर्गसामान्यवाचकत्वस्याङ्गीकरणीयतया संग्रहस्वीकारशब्दयोरपि-रूढिशक्त्यङ्गीकारेण संसर्गसामान्यवाचकत्वसम्भवात्। न च संग्रहस्वीकारशब्दयोः संसर्गसामान्यपरत्वेन इतरत्र स्मृतिषु क्वापि अप्रयुक्ततयाकोषादिष्वप्यपरिदृश्यमानतया न तयोरूढिशक्त्यङ्गीकारः सम्भवतीति वाच्यम्। तयोर्मध्ये संग्रहशब्दस्य कोषादावप्रयुक्तत्वेऽपि बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदित इति सीतामथ्यामपि सुराग्रहणस्य च संग्रह इत्यनयोःकलिवर्ज्यप्रकरणपठितयोर्वचनयोः संसर्गसामान्यपरतयैवोपात्ततया रूढिशक्त्यङ्गीकारावश्यकत्वात्। बलात्कारादीत्यादिवचनगतसंग्रहपदस्य संसर्गसामान्यवाचित्वञ्च।

"जारेण जनयेद्गर्भं मृतेऽव्यक्ते गते पतौ।
तां त्यजेत परे राष्ट्रे पतितां पापकारिणीम्" ॥ इति,
"ब्राह्मणी तु यदा गच्छेत्-परपुंसा विवर्जिता।
गत्वा पुंसश्शतं याति त्यजेयुस्तां गोत्रिणः" ॥

इति च पराशरवचनाभ्यां बलात्कारादिना दुष्टानामतएव पतितानां-

स्त्रीणां सम्भाषणादिसंसर्गसामान्यवर्जनरूपत्यागस्यैवोक्तत्वात् सिद्धम् । सौत्रा-मण्यामपीत्यादिवचनस्य सौत्रामण्यां सुराग्रहणकर्त्तुः संसर्गः संसर्गसामान्य-मपि कलौ वर्ज्यमित्यर्थः । तद्वचनगतसंग्रहपदस्य संसर्गसामान्यवाचिता-तु "ब्रह्महासुरापगुरुतल्पगमातृपितृयोनिसम्बन्धगस्तेननास्तिकनिन्दितकर्म्माभ्या-सिपतितात्याज्यपतितत्यागिनः पतिता" इति गौतमसूत्रेण, सुरापायिनां-पतितत्वस्य "न पतितैः सह संव्यवहारो विद्यते" इत्यापस्तम्बसूत्रेण, पतितप्रतियोगिकसंसर्गसामान्यस्यापि निषिद्धत्वात्-सिद्धा । यदि चावयव-व्युत्पत्तिमहिम्ना स्वीक्रियते, तर्हि संप्रयोगादिशब्दानामप्यविशेषेण संसर्ग-विशेषवाचकत्वापत्त्या संसर्गसामान्यवाचकशब्दस्यैवाभावापत्तेः । अतः-संप्रयोगादिशब्दानां रूढिशक्त्या संसर्गसामान्यपरत्वमिव संग्रहशब्दस्यापि संसर्गसामान्यपरत्वमङ्गीकरणीयम् । एवञ्च तत्प्रतिपाद्यार्थे प्रयुक्तस्य स्वीकार-शब्दस्यापि संसर्गसामान्यपरत्वमङ्गीकरणीयम् । इत्युभयोः संग्रहस्वीकार-शब्दयोरपि संसर्गसामान्यपरतया तादृशपदघटितनिरुक्तद्विजस्येत्यादिवचन-जातस्य समुद्रयायिसंसर्गसामान्यनिषेधपरत्वं सिद्धम् ।

तथाच निरुक्तपराशरवचनविरोधाभावादुक्तद्विजस्येत्यादिवचनजातमसङ्कोचे-नैव स्वार्थं बोधयतीति कलौ सकृत्कृतासकृत्कृतकामकृताकामकृतभेदे-नानेकविधसमुद्रयानवतां कृतप्रायश्चित्ताकृतप्रायश्चित्तभेदेन द्विविधानामपि द्विजानां संसर्गः सामान्यतो धर्मशास्त्रनिषिद्ध इत्यलं बहुना ।

सम्भविष्यत्येतद्व्यवस्थाद्वयमित्याशङ्कयात्रोद्भावितमिदमादितः । व्यवस्था-द्वयस्यास्य तत्तत्कर्त्तॄणां पाण्डित्याधिक्यावेदकत्वेऽपि "स्थूणानिखननन्यायेन" स्वस्वमतदृढ़ीकरणायार्थान्तरं क्रोड़ीकर्त्तुं "मूषिकमारणे पर्वतखननमिति"-न्यायेन बह्वायासमवलम्ब्योद्भावयन्ति बुद्धिकौशलमत्र व्यवस्थापकप्रवरा इति धीः । यदैतादृक्पाण्डित्यं भारतेऽप्याविर्भूतं, तदारभ्य भारतावनत्यापादकमेत-दित्यनुमीयते भारतीयोन्नतिसम्पादनोन्मुखैः सर्वशास्त्रकोविदैरिदानीन्तनैः । निदानमेवैतदत्र । न तावत्प्रायशोऽत्र पूज्यपादैर्महर्षिभिर्निर्मितं स्वस्वधर्म-शास्त्रं सर्वांशमवलोक्य भारतस्येति सम्भाव्यते । किन्तु यदैवार्य्या आर्य्यावर्त्त-स्थापितोपनिवेशास्तद्दिवसमभिवाप्य मनुना स्वायम्भुवेन तद्देशीयाचारव्यवहार-

गोचरीकृत्यानुष्ठितं वेदधर्मानुगतं मनुसंहितानामकं धर्मशास्त्रमिति निर्धार्य्यते-ऽधुनाप्रत्नतत्त्वविद्भिः ।

यद्देव यथाक्रममेतैर्भारतवर्षस्य विभिन्नविभागाः स्वायत्तीकृतास्तदैव-तत्तद्देशीयाचारव्यवहारनिस्यूतानि प्रायेण श्रुतितत्स्मृत्याधारकाणि स्वीयस्वीय-धर्मशास्त्राणि विरचितान्येकैरपरैश्च महर्षिभिः सर्वावयवमवलोकयद्भिरिति, तत्तद्ग्रन्थप्रमाणैः समर्थ्यते युक्तिरेषा ।

मनुः,—

"आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः ॥
तस्मिन् देशे च आचारः पारंपर्य्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन्-पृथिव्यां सर्वमानवाः" ॥

अन्यच्च—

"पतत्यर्द्धशरीरस्य यस्य भार्य्या सुरां पिबेत् ।
पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते ॥

इति मनुवचनविमर्शात् स्फुटतः प्रतीयते-एतच्छास्त्रं तत्रैव निर्मितमिति ।

अङ्गिराः,—

"सर्वेषामेव वर्णानां सूतके मृतके तथा ।
दशाहाच्छुद्धिरथवा इति शातातपोऽब्रवीत्" ॥

भारतस्य विनैवोत्कलं सर्वत्र विप्रादिवर्णानुसारेण सनूक्तदशाहाद्यशौचा-वलम्बनं, केवलमुत्कले तु सकलवर्णानां दशाहाशौचाश्रयणं, अतः शातातपोक्त-

धर्मशास्त्रं प्रायेणोत्कलीयाचारव्यवहारमूलकमिति सम्भाव्यते युक्तिकुशलैः। देशविशेषे दोषो नास्तीति कल्पतरौ,—

"मत्स्यादास्तु नराः पूर्वे व्यभिचाररताः स्त्रियः।
उत्तरे मद्यपा नार्य्यः स्पृश्या नृणां रजस्वलाः॥
शङ्कजाताः प्रगृह्णन्ति भ्रातृभार्य्यामभर्त्तृकाम्।
अनेन विधिना नैते प्रायश्चित्तमनर्हकाः"॥

निरुक्तबोधायनसूत्रेऽपि प्रायशोऽवलोक्यन्ते सर्वदेशीयाचारव्यवहाराः। अनेनोभयग्रन्थकर्त्तृकमितद्ग्रन्थद्वयं सुस्थिरीक्रियते सकलदेशाचारव्यवहारविषयकधर्मशास्त्रमिति। अतस्तद्ग्रन्थनिर्मातृभ्यां भारतस्य सर्वविभागंप्रसमीक्ष्य विरचितं धर्मशास्त्रद्वयमेतदिति सुस्थितम्।

पुनश्चात्र,—

"पतत्यर्द्धशरीरस्ये"ति वचनस्य उत्तरे मद्यपा नार्य्य" इति कल्पतरुवाक्येनसार्द्धं विरोधाशङ्कया तत्परिहारार्थं कल्पतरुवचनं युगान्तरीयविषयकमित्यर्थकरणं विनापि सत्यापलापं न किमपि प्रयोजनकमिति प्रमाणयोरनयोःपरस्परविरोधस्य स्फुटतोऽवभासमानत्वात्। अतएव सकलांशे भरतखण्डस्यव्यवहारादिकं स्पष्टीकर्त्तुं प्रमाणद्वितयस्य तस्य याथार्थ्यपरिहरणे यतमानानांप्रेक्षावतामर्थान्तरकरणं पाण्डित्योत्कर्षोपादकमपि स्वस्वव्यवस्थागतं, न तु लोकेतदन्यथाचरणनिरीक्षणात्सर्वैरनुमोदितमेव।

अत एतदुद्भावनीयायाससहनं न प्रतिभाति समीचीनमिति। यद्भवत्वेतद्व्यवस्थाद्वयस्य कलिसामान्यपरतया न कल्पभ्यन्तरवर्त्यापत्कालोपयोगित्वंमित्युक्तद्विजस्येत्यादिमुनिभाषितेन समुद्रयानादिनिषेधस्य कलिसामान्येऽभ्यनुज्ञातत्वात्। अतोऽर्द्धजरतीन्यायेनैतद्व्यवस्थाद्वितयादरः परिहेय इति सिद्धान्तः। न च युगान्तरापेक्षया युगेऽस्मिन् भविष्यमाणनानाविधानिष्टसङ्कुलस्यार्षेयप्रमाणैः सूचितत्वात् कलिसामान्यमेवापत्समय इति शङ्क्यम्।

"चत्वार्य्यब्दसहस्राणि चत्वार्य्यब्दशतानि च।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः"॥

इति व्यासोक्तवचनेन चतुःशताब्दसहितचतुःसहस्राब्दपरिमितस्य कल्यंशस्य त्रिपादधर्माधारभूतत्रेतायुगात्मकत्वेन परिगणिततया कलिसामान्यस्यानापत्कालत्वात्।

आपद्वृत्तिर्द्विजाग्र्याणामित्यादिवाक्येनैव विप्राणां पूर्वतो व्याख्यातकियत्परिमाणकापद्वृत्त्यनवलम्बनस्यातिदिष्टतया कल्यन्तरालेऽप्यापत्समयस्य सत्ताया विवादास्पदत्वाभावात्, अनेन न कलिसामान्यमेवापत्समय इति राद्धान्तः। न चास्येदानीन्तनस्य समयस्यानापत्कालत्वमिति शङ्कनीयम्। बहुवासरतो भरतखण्डस्य विदेशीयधर्मान्तरावलम्बिनरपत्यधीनतया कलिप्राबल्यस्य शास्त्रीयप्रमाणसुविदितत्वेनापत्समयत्वात्, कलिप्रबलताया आपत्समयत्वाच्च। प्रमाणितं चैतदनेन,—

> "यदा तु म्लेच्छजातीया राजानो धनलोलुपाः।
> भविष्यन्ति महाप्राज्ञे! तदैव प्रबलः कलिः"॥

इत्याद्युक्तासतन्त्रवचनेन। अतोऽनापदि निषिद्धानामप्यापदि विदेशीयविद्याध्ययनवाणिज्यादिकरणार्थं पोताधिकरणताकसमुद्रगमनजात्यन्तरादिसंसर्गप्रभृतिधर्माणामनुष्ठानं नापराधापादकमिति धर्मशास्त्रनिकराभिप्रायः।

केवलं तु तद्गमनविदेशावस्थानाद्यवसरेऽगतिकतया सति सम्भवे सन्ध्यादिनित्यकर्मानुष्ठानविसर्जनस्याभक्ष्यभक्षणविजातीयसंसर्गादेश्च प्रोक्तविद्याध्ययनादिकार्यसमापनानन्तरं कृते सति स्वदेशप्रत्यावर्त्तने तत्पापापनोदनाय देशकालपात्रदृष्टितः सामान्येन प्रायश्चित्तं विधाय विप्रादिवर्णाः पूतो व्यवहार्यश्चेति विदुषां परामर्शः। नन्वनिश्चितावधिकस्य कल्यभ्यन्तरपातिनोऽधुनातनापत्समयस्य विद्यमानतया *"निस्तीर्य्य तमथात्मानं पावयित्वा न्यसेत् पथि"।*

इत्यादि याज्ञवल्कीयवचनेनोत्तीर्णापत्समयस्याभ्यनुज्ञातप्रायश्चित्तत्वेन चविद्याध्ययनादिकर्मसमापनानन्तरं कथं विप्रादीनां प्रायश्चित्तं विधातव्यमितिव्यवस्थापितमिति चेन्न। "अहरहः सन्ध्यामुपासीत"।

इति श्रुतिप्रामाण्यात्।

"नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्वहिष्कार्य्यः सर्वस्मात्-द्विजकर्मणः" ॥

इति मनुस्मृत्युक्तवचनबलाच्चाशौचवदापद्यपि सङ्कोचेनापि प्रात्याह्निकसन्ध्यानुष्ठानस्याभ्यनुज्ञाततयाऽकरणे प्रत्यवायश्रवणाच्चोपायान्तरविहीनतया कादाचित्कतदतिक्रमजन्यपापोपशमनाय कृतेऽपि प्रायश्चित्ते "अधिकं तु प्रविष्टं न च तद्धानिरि"ति न्यायेन प्रकृतस्यासम्भवत्वेनापि दोषाभावात्। समुद्रनौगमनादिकाले सन्ध्यादिकर्त्तुर्विप्रादिवैश्यान्तस्य द्विजस्यापदि प्रायश्चित्तावेदकशास्त्राभावान्नापि प्रायश्चित्ताचरणम्। ततश्च "उषित्वा यत्र कुत्रापि स्वधर्मं प्रतिपालयन्नि"ति निरुक्तस्मृतौ यत्र कुत्राप्यवस्थानेऽपि स्वधर्माचरणेन पापशून्यत्वमुक्तं सूपपन्नम्। "शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद्वृत्तिकर्षित" इति मनुभाषितवचनस्य जागरूकतया शूद्राणां त्वापदि यत्र कुत्रापि वासेऽपि न प्रायश्चित्तानुष्ठानमित्यवधेयम्। अत्राप्ययमेव विशेषः, अनापदि सत्यप्यविहिताचरणे कृतगुरुतरप्रायश्चित्तस्याप्यव्यवहार्य्यता। अत्र त्वविहितेऽपि तादृशकर्मानुष्ठाने संक्षेपतोऽनुष्ठितप्रायश्चित्तस्य व्यवहार्य्यता, अपि च सन्ध्यादिनित्यकर्मोपकरणानां तथा धर्मशास्त्रविहिताहारीयद्रव्याणाञ्च सत्यपि प्राप्तिसम्भवे तदन्यथाचरणजन्यपापोपनुत्तयेऽनुष्ठेयं गुरुतरप्रायश्चित्तम्। तथा तदसम्भवेऽगतिकतया तदनुष्ठानस्य धर्मशास्त्राभ्यनुज्ञाततया लघुतरप्रायश्चित्तविधाने नकापि विप्रतिपत्तिरिति परामर्शः। एवमेव सर्वत्रोह्यं, प्रायश्चित्तविवेचनं तु-सर्वावशेषे वक्तव्यम्। इत्येतदापत्कालविद्यावलम्बनविचारः।

अथ शिल्पविवेचनम्,—

शिल्पपदं शिल्धातोर्भाववाच्यतावेदकपक्प्रत्ययसम्बन्धेन सुसम्पन्नं, तत्तु-विद्यान्तर्भूतत्वेऽपि चित्रकरणवस्त्रादिवयनसूपकरणलिखनगृहमन्दिरमूर्त्यादि-निर्माणादिभेदेन नानाविधात्मकत्वप्रदर्शनार्थं प्राधान्येन पृथक्निर्दिष्ट-मन्वादिसंहिताकारैरिति विभावनीयम्। तद्विषयकशास्त्रं चापदि जीविका-परिचालनार्थं स्वदेशे वाल्पायासेन बहुविधाद्भुतकार्य्यसम्पादनाय विदेशे हीन-

हीनतरहीनतमाचार्य्येभ्योऽपि अवश्यमेव सादरं शिक्षणीयमित्याज्ञप्तं त्रिकालज्ञैर्मुनिभिः।

ततश्च "विविधानि च शिल्पानि समादेयानि सर्वतः"।

इति मनुस्मृत्युक्तं "सर्वतः शिल्पानि समादेयानी"ति प्रमाणं सुसंगतमेव। निकृष्टगुरुभ्यः शिक्षानुष्ठानमेतदर्थं सागरगमनदेशान्तराधिष्ठानादिकं च न-दोषापादकमित्यत्र पूर्वतो लिखितानि प्रमाणान्यत्र विवेच्यानि। इति शिल्प-विचारः।

अथ भृतिविचारः,—

भाववाच्योद्बोधकक्तिप्रत्ययसाहचर्य्येण समुद्भूतस्य भृतिशब्दस्य कुल्लूक-भट्टविज्ञानेश्वरादिभिष्टीकाकारैरुद्भावितो-वेतनादानपूर्वकदासत्वकरणरूपोऽर्थः, तदपकृष्टक्षत्रियादिजातेः सविधे तदनुष्ठानं विप्रस्यापदि न दोषाधायकमिति-सकलधर्मशास्त्रनिर्मातृभिरभिहितम्। एवं क्षत्रियादेरपि बोध्यम्। न च-"न श्ववृत्त्या कदाचन" इति मनुवचनप्रामाण्येनैव दासत्वावलम्बनस्य सदैव-विगर्हितत्वात् कथं प्रेष्यत्वाश्रयणमापदि सुसङ्गतमिति वाच्यम्। क्षत्रियादि-वृत्तावपि सत्यां सुलभायां न प्रेष्यत्वमवलम्बनीयमित्यत्र पापादृष्टजनकनिषेध-विधिबोधकैतद्वचनस्य दत्तावकाशत्वाद्वानापत्कालीनवृत्तिनिर्णायकप्रकरण-पठिततयैतद्वचनस्यापत्समयातिरिक्तकालगोचरीभूतत्वात्।

अन्यथा परस्परवचनविरोधापत्तेः। अत-आपदि क्षत्रियादिवृत्तेः सत्यप्य-सम्भवे दासत्वं समाश्रयणीयमिति शास्त्रीयराद्धान्तः।

इति भृतिविचारः।

अथ सेवादिविवेकः,—

सेव्धातोर्भाववाच्ये अल्प्रत्ययस्ततष्टाप्, अनया रीत्या सेवेतीति पदं सुसम्पन्नं, तस्या-अभिधेयाः भजनाराधनोपभोगाश्रयरूपाः, तन्मध्यान्तर्गताश्रयरूपार्थस्य-साचिव्येन कुल्लूकभट्टेन पराज्ञासम्पादनमिति विज्ञानेश्वरेणापि परचित्तानु वर्त्तनमिति चार्थापितं। उभयोः शब्दतो विभिन्नत्वेऽपि अर्थतोऽभिन्नार्थ-त्वमित्यवधेयं। आपदि तु सा जीविकानिर्वाहोपयोगिनीत्यभ्यनुज्ञाता मन्वा-दिभिः। ननु सेवाया दासधर्मान्तरतया सति भृत्यन्तर्गतत्वेऽपि किमस्याः

पार्थक्येनाभिधाने सुनिदानमितिचेदुच्यते—भृत्यां लेकस्वामिनः सकाशाद्वेतना-दानपूर्वकदासत्वावलम्बनेन तदायत्तत्वं । अत्र तु बहुस्वामिच्छन्दानुवर्त्तित्वेन-यथानिर्दिष्टसमयं तदाज्ञापरिपालनेन च द्रव्यार्जनं न तेषामधीनत्वमिति पृथक्निर्देशस्य तात्पर्य्यमिति ज्ञेयम् ।

इति सेवाविचारः ।

अथ गोरक्षाविचारः,—

गवां रक्षा पशुपाल्यमिति कुल्लूकभट्टः । सेव गोपालकवृत्तिः । स्वानुष्ठितया-तया कुटुम्बपरिपालनमापदीति शास्त्रकारैरभ्यनुज्ञातं । तत्पालनवृत्तिस्तु-द्विविधा, स्वीयगोरक्षणं परेषां गोरक्षणं च, एतयोरभ्यन्तरे स्वपालितगोव्रजादुत्-पन्नक्षीरादिद्रव्यविक्रयणेन परकीयगोचारणरूपपरिपालनेन चोपार्जित-धनादिना परिजनपोषणं न वृजिनजनकमत्रेति बोध्यं ।

इति गोरक्षाविचारः ।

अथ विपणिविचारः,—

वि+पण्+इञ् विपणिः, स एव वणिग्वृत्तिः, स्वानुष्ठितयानया प्रत्यहं-नित्यकर्मानुष्ठानपूर्वकं कुटुम्बसम्वर्द्धनं करणीयमापदीत्यत्र न केषामपि धर्म-शास्त्रकाराणां परिदृश्यते वा विप्रतिपत्तिः, अत एतद्वृत्त्यवलम्बनं-निर्वाधमेव । किन्त्वत्र वैश्यवृत्त्या जीवतो ब्राह्मणस्य यदापणीयं, तदाह मनुः,—

"इदं तु वृत्तिवैकल्यात्त्यजतो धर्म्मनैपुणं ।
विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्द्धनं ॥
सर्वान् रसानपोहेत कृतान्नं च तिलैः सह ।
अश्मनो लवणं चैव पशवो ये च मानुषाः ॥
सर्वं च तान्तवं रक्तं शाणक्षौमादिकानि च ।
अपि चेत्स्युररक्तानि फलमूलं तथौषधीः ॥
अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः ।
क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥

आरण्यांश्च पशून् सर्वान् दंष्ट्रिणश्च वयांसि च।
मद्यं नीलिं च लाक्षां च सर्वांश्चैकशफांस्तथा॥"

"इदं त्विति ब्राह्मणस्य क्षत्रियस्य चात्मीयवृत्तेरसंभवे धर्मं प्रति यथोक्तनिष्णातत्वं त्यजतो वैश्येन यदि विक्रेतव्यं द्रव्यजातं, तद्वक्ष्यमाणवर्जनीयवर्जितं-धनवृद्धिकरं विक्रेयं। तानि वर्जनीयानीत्याह सर्वानिति। सर्वान् चोच्यमानान् रसान् तथा सिद्धान्नतिलपाषाणलवणपशुमनुष्यान् न विक्रीणीत। रसत्वेनैकलवणस्य निषेधसिद्धो विशेषेण निषेधो दोषगौरवज्ञापनार्थः। तच्च प्रायश्चित्तगौरवार्थमेव। एवमन्यस्यापि पृथङ्निषेधो व्याख्येयः,-सर्वमिति, सर्वं तन्तुनिर्मितं वस्त्रं कुसुम्भादिना रक्तं वर्जयेत्। शणक्षुमतन्तुमयान्याविकलोमभवानि च यदा लोहितान्यपि भवेयुस्तथापि न-विक्रीणीत। तथा जलमूलगुडुच्यादीनि वर्जयेत्। अप इति,-

जललोहविषमांससोमक्षीरदधिघृततैलगुडदर्भान् तथा गन्धवन्ति सर्वाणि-कर्पूरादीनि क्षौद्रं माक्षिकं मधु मधूच्छिष्टं "शस्त्रासवमधूच्छिष्टे"ति-याज्ञवल्क्येन वर्जयेत्। आरण्यानिति, आरण्यान् सर्वान् पशून् हस्त्यादीन्-दंष्ट्रिणः सिंहादीन् तथा पक्षिमद्यलाक्षाश्चैकशफांश्चाश्वादीन् न विक्रीणीत-इति" कुल्लूकभट्टः।

आपदि वैश्यवृत्तिमाश्रयता विप्रेण यद्विक्रेयं तदप्याह याज्ञवल्क्यः,—

फलोपलक्षौमसोममनुष्यापूपवीरुधः।
तिलौदनरसक्षारा दधि क्षीरं घृतं जलं॥
शस्त्रासवमधूच्छिष्टं मधु लाक्षा च बर्हिषः।
मृच्चर्मपुष्पकुतुपकेशतक्रविषक्षितीः।
कौशेयनीललवणमांसैकशफसीसकान्॥
शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च"।

नो विक्रीणीतेति प्रत्येकमभिसंबध्यते"।

"फलानि कदलीफलादीनि बदरेङ्गुद्व्यतिरिक्तानि।

मतृपरैः । तदनिषिद्धान्यपि कानिचिद्भूम्यादीनि द्रव्याणि स्वस्वग्रन्थेष्वेतेषां निषेधकोटिप्रविष्टतया गौतमादिभिर्निषिद्धानीति निर्णीयते तैः ।

तत्तत्संहिताव्याख्याकृद्भिश्च मूले त्वविशेषेणानिर्दिष्टान्यपि स्वस्वसमयाचारव्यवहारानुगततया सकलधर्म्मशास्त्राणामैकमत्यप्रतिपादनाय वा व्याख्यातानि तत्तत्संहितोक्तप्रमाणान्येव, कदलीगुडादिद्रव्याणां रसशब्दवाच्यत्वाभावेऽपि फलरसयोरविशेषेण निर्दिष्टतया फलानि तत्तत्समयाव्यवहृततया कदलीफलादीनीति, एवं मन्वादिधर्म्मशास्त्रेण साकमेतत्संहितायाः-विरोधविरामाय "तैलं मधु गुड़ं कुशानि"ति मनुवचननिदर्शनेनैव रसः-गुड़ेक्षुशर्कराप्रभृतय इति व्याख्यातं विज्ञानेश्वरेण । एव मन्यास्वपि व्याख्यासु-द्रष्टव्यमिति दिक् ।

आपदि प्रतिप्रसवकथनावसरे मनुगौतमाभ्यां रसारसैरिति वाक्येनैव-स्वजातीयविनिमयस्याभ्यनुज्ञातत्वेऽपि स्वसंहितायां तद्विषयस्यानुल्लिखिततया निषिद्धोऽयं मन्वाद्युक्तनियमो याज्ञवल्क्येनेति प्रतिभाति । विष्णुस्मृतिरचनावसरे तु न तावत् कानिचिद्द्रव्याणि विक्रेतुं निषिद्धानीत्यनुमीयते । यतस्तत्-संहितायामापद्वृत्तिविचारकाले तु "आपद्यनन्तरावृत्ति" रिति विशेषोल्लेखेन विष्णुना सर्वद्रव्यविक्रयणमभ्यनुज्ञातमेव ।

प्रतिप्रसवे तु यानि विक्रेतुं दत्तप्रसराणि तदभ्यन्तरे धर्मार्थं कुत्र कुत्रा-द्दृतमपि तिलविक्रयणं रसादिजातीयविनिमयश्चेदानीमतीव गर्हित-इति-व्यवहारः परिदृश्यतेऽत्रोत्कलीयानां । विनापि लवणतैलमद्यादिकं-व्याख्याकर्तृनिषिद्धमपि कदलीफलादिविक्रयणमविगीतशिष्टाचारानुमोदित-मेवात्र । आदिपदेन ताम्बूलादीनां संग्रहणं । आपद्यपि धर्म्मशास्त्र-निषिद्धं चर्म्मनिर्म्मितभाजनं दूरतो जलाद्यानयनाय संप्रति तत्तद्देशीय-शिष्टव्यवहृतमेवावलोक्यते भारतीयनिर्जलप्रदेशे सदैव । एवमन्यत्रापि । इदानीमप्यापदि तन्निषिद्धद्रव्याभ्यन्तरे केषांचिद्द्रव्याणां तिलतैललवणा-सवादिकमन्तरेणात्र विक्रयणे सत्येतद्देशीयशिष्टाचरितेऽन्यत्र तदतिरिक्तानां-कतिपयनिषिद्धद्रव्याणां वाणिज्यमपि तत्तत्प्रदेशीयशिष्टाचारानुमतमेवेति परि-लक्ष्यते प्रभेदः सततम् । अतः सर्वावावहृतप्रोक्तनिषिद्धद्रव्यामन्तरा धर्माविरुद्धं

शिष्टाचारानुमोदितं लोकाचारव्यवहारजातं सदाचारस्य प्रमाणत्वात् न दोषाधायकमेव। लिखितमत्र प्रमाणं पूर्वतः।

अथ क्रमप्राप्तकृषिविचारः,—

कृषिरिति पदं भावविहितक्तिप्रत्ययसाचिव्येन निष्पन्नम्। सा त्वापदि-कुटुम्बपरिपालनार्थं स्वयंकृतत्वेनाभ्यनुज्ञाता सकलधर्मशास्त्रकारैः। प्रमाणान्युक्तानि पूर्वतः।

नन्वादितः कृषेरापद्वृत्त्यन्तरत्वे सत्यपि मनुना निर्णीते।

"वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत्॥
कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्"॥

इत्यनन्तरभाविनां तदीयवचनेन तद्वृत्त्यन्तरस्यापदि निषिद्धतया कथं तदवलम्बनं धर्मशास्त्रसम्मतमिति चेन्न। वृहत्पाराशरीयवचने कलिपदस्योपात्ततयैव तद्वचनस्य युगान्तरीयविषयत्वात्। अथवा सत्यपि वाणिज्यादेः सुलभत्वे तदवलम्बनस्य जुगुप्सितत्वमित्यभिप्रायविषयत्वादेतद्वचनस्य। अन्यथा वृहत्पराशरप्रमाणनिवहस्य नैरर्थक्यापत्तेः। रीत्या कयेति चेद्दिशर्यते युक्तिनिर्देशपूर्वकप्रमाणव्रातेन। आस्तां तावदापदि सुदूरतः कृषिवृत्त्याश्रयणं, कलावपि स्वानुष्ठितकृषिवृत्त्या कुटुम्बप्रतिपालनस्य वृहत्पराशरेणाभ्यनुज्ञातत्वेन मानवीयधर्मशास्त्रनिर्माणसमयापेक्षया वृहत्पाराशरीयधर्मशास्त्रस्य भारतान्तःपातिप्रदेशान्तरवासिनां कलियुगीयश्रोत्रियाणां कृषिवृत्त्याश्रयणस्योल्लेखनात्-सम्भावितावरजत्वेन शिष्टानुमोदिततत्कालीनाचारव्यवहारोपजीव्यत्वेन च पश्चाद्भाविनां तद्वचनानां विशेषतः प्रमाणकोटिप्रविष्टतया सति मनुवचनस्यार्थान्तरकरणे प्रसज्येत वृहत्पाराशरीयप्रमाणनैष्फल्यमिति प्रतिभाति।

अतः समीचीनोऽयं निरुक्तार्थ इति निष्कर्षः। तथा परिदृश्यते लोके क्वचित् क्वचित्तथाविधः कर्षणव्यवहारः। तथा चैतद्विवरणं करीक्रियतेऽनन्तरलेखनीयप्रमाणव्रातेन।

तथाहि वृहत्पराशरः,—

“अतःपरं गृहस्थस्य कर्माचारं कलौ युगे ।
धर्मं साधारणं साक्षाच्चतुर्वर्णक्रमागतम् ॥
युष्माकं संप्रवक्ष्यामि पराशरप्रचोदितम् ।
षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत् ॥
हीनाङ्गं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम् ।
क्षुद्युक्तं तृषितं शान्तमनड्वाहं न वाहयेत् ॥
स्थिराङ्गं नीरुजं तृप्तं शान्तं षण्डविवर्जितम् ।
अधृष्टं सबलप्राणमनड्वाहं तु वाहयेत् ॥
वाहयेद्दिवसस्यार्द्धं पश्चात्-स्नानं समाचरेत् ।
कुगवैर्न कृषिं कुर्य्यात्-सर्वथा धेनुसंग्रहम् ॥
बन्धनं पालनं रक्षा बर्द्धन्ते ते यथाक्रमम् ।
संपश्येच्चरतः सर्वान् गोवृषादीन् स्वयं गृही ॥
चिन्तयेत्-सर्वथात्मानं स्वयमेव कृषिं व्रजेत् ।
प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम् ॥
तृतीयं विक्रयः प्रोक्तश्चतुर्थं राजसेवनम् ।
नखैर्विलिखने यस्या ब्रूयुर्दोषं मनीषिणः ॥
तस्याः सीरविदारेण किं न पापं क्षितेर्भवेत् ।
तृणैकच्छेदमात्रेण प्रोच्यते क्षयमायुषः ॥
असंख्यकन्दनिर्वासादसंख्यातं भवेदघम् ।
यत्सेचनात्-कीटबधस्तथा सङ्घर्षणादपि ॥
अंहः कुक्कुटिकानाञ्च तदंहः कृषिजीविनाम् ।
वर्णानाञ्च गृहस्थानां कृषिवृत्त्युपजीविनाम् ॥

तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः ।
द्वादशो नवमो वापि सप्तमः पञ्चमोऽपि वा ॥
धान्यभागः प्रदातव्यो देहिनः चेत्रिणा ध्रुवम् ।
असमर्थ्येऽदत्तभूमौ च विट्पतिः चेत्रभुग्भवेत् ॥
एकैकांशापकर्षं स्याद्यावद्दशमसप्तमौ ।
ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः ॥
स स भागः प्रदातव्यो यतस्तौ कृषिभागिनौ ।
व्यूढौ त्वशवर्य्यमात्राया देयोऽंशः स्याच्चतुर्द्दशः ॥
एकैकांशापकर्षं स्याद्यावद्दशमसप्तमौ ।
ब्राह्मणस्तु कृषिं कुर्वन् वाहयेदिच्छया धराम् ॥
न किञ्चित् कस्यचिद्दद्यात् स सर्वस्य प्रभुर्यतः ।
ब्रह्मा वै ब्राह्मणानां स्यात्-प्रभुस्त्वसृजदादितः ॥
तद्रक्षणाय वाहुभ्यामसृजत्क्षत्रियानपि ।
पशुपाल्याशनोत्पत्त्यै उरुभ्याञ्च तथा विशः ॥
द्विजदास्याय पण्याय पद्भ्यां शूद्रमकल्पयत् ।
यत्किञ्चिज्जगतीसंस्थं भूगेहाश्व गजादिकम् ॥
स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ॥
न तयोरन्तरं किञ्चित्-प्रजाधर्मेण रक्षयेत् ।
तस्मान्न ब्राह्मणो-दद्यात्-कुर्वाणो-धर्मतः कृषिम् ॥
ग्रामेशस्य नृपस्यापि किञ्चिन्मात्रमसौ वलिम् ।
अथान्यत्संप्रवक्ष्यामि कृषिकृच्छुद्धिकारणम् ।
संशुद्धः कृषको-येन स्वर्गलोकमवाप्नुयात् ॥

कुर्य्यात्-कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत् ।
सर्वस्य स्थितिकारण्यात्-सदेवपितृभिः पुनः ॥
मनुष्याणां तु पोष्याय कृषिं कुर्य्यात् कृषीवलः ।
वयांसि चान्यसत्त्वानि क्षुत्तृषार्त्तो विमुच्चयेत् ।
विमुक्तः सर्वपापेभ्यः स्वर्लोकस्तमवाप्नुयात्" ।

हलकरणादिपक्षस्यच्छेदनान्तविषयकाणां भूयसां प्रमाणानामत्र सति विद्यमानत्वेऽपि निबन्धबाहुल्यभिया नोत्तोलितानि तानि ॥

सत्यप्यावश्यकत्वे तत्रैव द्रष्टव्यानि । कलियुगावच्छेदेऽपि स्वानुष्ठित-कृषिवृत्त्याश्रयणस्य प्रमाणैरेतैरनुमोदिततया सुतरामापदि स्वयंकृतकृषिवृत्त्य-नुष्ठानेन पारिवारिकपोषणादिसांसारिककार्य्यविधानं भवेन्निर्विवादं ।

अन्यच्च. "हलान्तं हालान्तं ब्रह्मवर्चस"मिति यच्छ्रुतिप्रमाणमुद्भाव्योत्क-लीयश्रोत्रिया हलधारणमन्तराऽन्यत्सकलं तदीयकार्य्यमनुष्ठाय कृषिं निष्पाद-यन्ति, तत्प्रमाणस्यादृष्टमूलकत्वात् "कृषिगोरक्षवाणिज्ये अस्वयंकृते कुसीदं-चेति" गौतमीयप्रमाणस्य ।

तथा,—

"कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम् ।
आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः" ॥

इति बृहस्पतिवचनस्य चापत्कालातिरिक्तविषयत्वात् । निर्वाचितसाक्षि-वचनानां तदनुष्ठाने जागरूकत्वाच्चापदि स्वयंकृतकृषिसाहाय्येन कुटुम्बादि-कार्य्यपरिचालनं न दोषाधायकमिति राद्धान्तः । न च गौतमीयवचने-ऽनापदापच्छब्दस्योल्लेखाभावादुभयत्रास्वयंकृतकृषिकरणं न गौतमसम्मतमिति वाच्यम् ।

तत्संहितायामनापदि ब्राह्मणादीनां वृत्तिविचारकाले वचनस्यैतस्यो-ल्लेखदर्शनात्, बृहस्पतिवचने तदुभयशब्दोपादानावलोकनेनैतत्प्रमाणस्य तदर्थ-त्वात्, वक्ष्यमाणगरुडपुराणीयप्रमाणेनैव बृहस्पतिवचनस्यानुमोदितत्वाच्च ।

यद्यप्यापद्येतच्छ्रुतिप्रमाणाश्रयणेन यद्यत्प्रदेशेषु प्रोक्तप्रदेशीयश्रोत्रियव्रातवद्विनापि हलकरणमितरकृषिसम्बन्धीयकार्य्यजातानुष्ठानपूर्वकं कृषिमाचर्य्य कुटुम्बादिभरणपोषणमाचरन्ति श्रोत्रियाः, तत्तत्प्रदेशेषु तत्तद्देशीय शिष्टानुमोदितस्तदाचार एव प्रमाणमवेति बोध्यं।

अन्यत् सर्वमेतद्विषयकमादितो लिखितकुल्लूकभट्टविवृत्यामवलोकितव्यं।

इति कृषिविचारः।

अथ धृतिविचारः—

धृतेर्भावबोधकक्तिन्प्रत्ययसंयोगेन संजातं धृतिरितिपदं। तदर्थः सन्तोषः। सति तस्मिन् अल्पकेनापि जीव्यत इति कुल्लूकभट्टः। अतस्तस्याविशेषतोजीविकानिर्वाहोपयोगित्वमापदीत्यभ्यनुज्ञातं मन्वादिसंहिताकारैः।

नन्ववस्थायां सर्वस्यां सत्यपि धृतेरावश्यकत्वे धृतेरापद्येवावलम्बनीयत्वं मसुसङ्गतमिति चेन्न। धृतिभिन्नावस्थायां सर्वस्यां धृतेरसत्त्वेऽपि जीवनविसर्जनस्य सम्भवानर्हत्वात्। तथा, विपद्येव प्राणोत्सर्गस्यावश्यंभावित्वात्।

तथा, "विपदि धैर्य्यमथाभ्युदये क्षमा" इत्यादि नीतिशास्त्रीयप्रमाणेनापदि धृत्यवलम्बनस्यानुमोदितत्वाच्च। अतएवापदि धृत्याश्रयणमेव प्रधानकर्त्तव्यतरमिति यदुच्चैःस्वरेणोक्तं धर्म्मशास्त्रकारैस्तत्त्वतीव समीचीनमिति निरवद्यम्।

इति धृतिविचारः।

अथ भैक्ष्यविचारः, भैक्ष्यमितिपदं भिक्षाशब्दात् समूहार्थकष्णप्रत्ययसंयोगेनसमुद्भूतं। याच्ञासमूहलब्धद्रव्यजातेन जीविकापरिचालनमिति तदर्थः। किन्त्वापदि तदप्याश्रणीयमेवेति धर्मशास्त्रकाराणामभिप्रायः। इममर्थमनुसरतिकुल्लूकभट्टः। यथा भैक्ष्यं भिक्षासमूहः" इति। ननु भिक्षालब्धद्रव्येणैवापदिसति जीविकानिर्वाहे कथं कुल्लूकभट्टेन भैक्ष्यपदस्य भिक्षासमूहात्मकार्थकरणेकृतमनुगमनमिति वक्तव्यमिति चेदुच्यते, अनापदि सत्वर्वेश्यतो भिक्षाऽदानमनुष्ठातव्यं नान्यत इति सङ्कोचितमार्षैः प्रमाणैः। अत-आपदि चाण्डालान्तेभ्यः सर्वेभ्यः कर्त्तव्यं भिक्षाग्रहणमिति कुल्लूकभट्टाकूतमित्यर्थः। लिखितमत्र प्रमाणमादितः।

इति भैक्ष्यविचारः॥

अथ कुसीदविचारः—

कुसीदपदं कुसुधातोरौणादिकेदप्रत्ययप्रयोगेन निपातनात् सिद्धं । नोपधागुणः ।

ह्रस्वादिर्दीर्घादिश्चेति वृत्तिकारहरदत्तादयः ।

एतदर्थं-वृद्धग धनप्रयोगः । तच्चापदि कुटुम्बादिजीवनधारणस्य-सहायीभूतमित्यभ्यनुज्ञातं धर्म्मशास्त्रनिर्माद्दभिर्महर्षिभिः । तत्स्वरूपञ्च नारदेनोक्तम् ।

यथा—

"स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते ।
तत्कुसीदमिति ज्ञेयं तेन वृद्धिः कुसीदिनाम्" ॥

अस्यार्थः ; स्थानं मूलधनावस्थानं, लाभो वृद्धिः, दानग्रहणपदे कर्मणि-ल्युटा साध्ये, तेन मूलधनावस्थाने सत्येव यो लाभस्तदर्थं यद्दानं धनिकेन-दीयमानं मूलधनं अधमर्णेन च ग्रहणम् । तथा स्वीकृत्य गृह्यमाणं यत्-तादृशमिति, अवश्यापकरणीयत्वरूपगुणयोगाद्गौणप्रयोगः। अतएव वाणिज्यार्थ-प्रयुक्तस्य न ऋणत्वमिति मिश्राः । तस्यावयवार्थमाह वृहस्पतिः,—

"कुत्सितात्सीदतश्चैव निर्विशङ्कैः प्रगृह्यते ।
चतुर्गुणं वाष्टगुणं कुसीदाख्यमृणं ततः" ॥ इति ।

अस्यार्थः कुत्सितात्सीदतश्चाधमर्णात् सकलधनं यद्गृह्यते निर्वि-शङ्कैरुत्तमर्णैः चतुर्गुणं वेति वाकारोऽनास्थायां तेन द्वैगुण्यादिलाभः । इति ।
कुसीदविशेषो गारुड़े उक्तो,—

यथा,—

"कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम् ।
आपत्काले स्वयं कुर्व्वन् नैनसा युज्यते द्विजः ॥
बहवो-वर्त्तनोपाया ऋषिभिः परिकीर्त्तिताः ।
सर्वेषामपि चैतेषां कुसीदमधिकं विदुः ॥

अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः ।
कृष्यादिके भवेद्बाधा सा कुसीदे न विद्यते ॥
शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेऽपि वा ।
उष्णे वर्षति शीते वा वर्द्धनं न निवर्त्तते ॥
देशं गतानां या वृद्धिर्नानापण्योपजीविनाम् ।
कुसीदं सर्वतः सम्यक्-संस्थितस्यैव जायते ॥
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव पूजयेत् ।
ते तृप्तास्तस्य तद्दोषं शमयन्ति न संशयः ॥
वणिक् कुसीदी दद्यात्तु वस्त्राङ्गं काञ्चनादिकम् ।
कृषीबलोऽन्नपानानि यानशय्यासनानि च ॥
पण्येभ्यो विंशतिं दत्त्वा पशुस्वर्णादिकं शतम् ।
पादेनायस्य पारक्यं कुर्य्यात् सञ्चयमात्मवान् ॥
अर्द्धेन चात्मभरणं नित्यनैमित्तिकान्वितम् ।
पादञ्च प्राधमानस्य मूलभूतं विवर्जयेत् ॥
विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः ।
वृत्तिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः ॥"

तस्य विप्रादिभिः स्वयं कर्त्तव्यता निर्णीताऽह्निकतत्त्वे रघुनन्दनभट्टाचार्य्येण,—

यथा तत्र—गौतमः,—

"कृषिगोरक्षवाणिज्ये अस्वयं कृते कुसीदं च", कुसीदस्य पृथग्ग्रहण-मनापदि स्वयंकृतस्याभ्यनुज्ञानार्थं, कुसीदं वृद्धिकर्म प्रदेशान्तरेऽभिधानादिति कल्पतरुः ॥

तथाच वृहस्पतिः—

"कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम् ।
आपत्काले स्वयं कुर्वन्-नैनसा युज्यते द्विजः ॥
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव भोजयेत् ।
ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥
वणिक् कुसीदं दद्यात्तु वस्त्रगोकाञ्चनादिकम् ।
कृषीबलोऽन्नपानानि यानशय्यासनानि च ॥
पण्येभ्यो विंशकं दत्त्वा पशुस्वर्णादिकं शतम् ।
वणिक् कुसिद्यदोषः स्याद्ब्राह्मणानाञ्च पूजनात् ॥
राज्ञे दत्त्वा तु षड्भागं देवतानाञ्च विंशकम् ।
त्रिंशद्भागञ्च विप्राणां कृषिं कृत्वा न दोषभाक्" ॥ इति ।

ननु "ब्राह्मणः क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत्" । इति पूर्वार्द्धेनापदि कुसीदवृत्त्याश्रयणं निषिध्य—"कामं तु खलु धर्मार्थं दद्यात्—पापीयसेऽल्पिका"मित्यपरार्द्धेन मनुना सामान्यतः प्रसारितत्वात्, तदर्वाचीनैर्वृहस्पत्यादिमहर्षिभिरापदि निःसंकोचं कुसीदरूपवृत्त्यन्तरावलम्बनस्य प्रसारितत्वमतीवासङ्गतमिति चेन्न, यद्यदाचारस्य यद्यत्समयप्रसिद्धतया तथातथोल्लेखात् । अतो नासङ्गतिरिति सिद्धान्तः । इति कुसीदविवेचनम् ।

अप्यस्मिन् विषये याज्ञवल्क्येनापि परिहृत्य क्षत्रिगोरक्षविपणीः स्ववचनेनृपानूपशकटगिरिनामकान्यापद्वृत्त्यन्तराणि कथं सन्निवेशितानीत्याशंकायांनिरस्यतेऽत्र सा, मनूक्तविपत्कालावलम्बनीयक्षत्यादिवृत्त्यन्तरत्रितयं तदवसरेऽनापद्यप्यवलम्बितमित्यनुमीयतेऽस्माभिः । अन्यथा,—याज्ञवल्कीयवचने मनुवचनोक्तविषयान्यथाचरणपरिदर्शनात् "मन्वर्थविपरीता या सा स्मृतिर्नैवशस्यत" इति वृहस्पत्युक्तवचनस्यान्यथानुपपत्तेः । अतस्तत्समये यद्वृत्त्यन्तराणामापदि परिलक्ष्यते व्यवहारः, तान्येव स्वसंहितायामुपनिवद्धानीतियाज्ञवल्क्यप्रमाणाभिप्रायः । यद्भवतु, "अधिकं तु प्रविष्टं न तु तद्धानि"

रिति न्यायेन याज्ञवल्क्यानुमोदितापत्कालीनसहायभूतहत्त्यन्तरचतुष्टयमत्र-प्रकरणे सन्निवेश्य क्रमशो विचार्य्यते निम्नतः संक्षेपेण ।

अथ शकटविचारः,—

शकतेः कर्त्तृवाच्यज्ञापकाटन्—प्रत्ययसम्मीलनेन निष्पन्नशकटमितिपदम् । भाटकेन धान्यादिवहनद्वारेण जीवनहेतुरिति तत्परिष्काराार्थः । तदेवापद्या-श्रयभूतमिति महर्षिभिरभ्यनुज्ञातम् ॥

धान्याद्यत्रादिपदोपादानेन शकटवाह्यानामन्येषां द्रव्याणां संग्रहः । प्रतिदिनं शकटेन परकीयकार्य्यानुष्ठानेन वित्तस्य सुलभत्वसम्भावनया कुटुम्बादि-परिपालनस्य तद्द्वारा सुगमत्वाच्च तदाश्रयणमापदि सुसङ्गतमितुग्रहङ्गितं यद्याज्ञवल्क्येन स्वग्रमाणे, तदतीव समीचीनमिति राद्धान्तः । इति-शकटविचारः ।

अथ गिरिविचारः,—

गिरिरिति पदं ग्रासार्थकगृधातुना सार्द्धं कर्त्तृवाच्यविहितकिप्रत्ययसंयोगेन सम्पन्नम् । तदर्थः पर्वतः, वाच्यार्थात्मकपर्वतपदार्थाश्रयणेनापद्द्वारासम्भवात् संगच्छते लक्षणया तद्गततृणेन्धनविक्रयलब्धार्थजालेन जीवनधारणरूपार्थः । एतदर्थमनुमनुते "तद्गततृणेन्धनद्वारेण जीवन"मिति वाक्योल्लेखेन योगिविज्ञाने-श्वरः । अतो विपत्तौ गिर्य्यवलम्बनमभ्यनुज्ञातं पूज्यपादैः । इति गिरिविचारः ।

अथानूपविचार —

निकटार्थकस्य वा सहितात्मकाभिधेयस्यानुपसर्गस्याव्यवहितपरवर्त्तिना-ऽपा सह अप्रत्ययसंश्लेषेण तथाऽपाऽकारस्योकारकरणेन च सुसिद्धमनूप-मिति पदं, तदर्थस्तु जलप्रायप्रदेशः । तदर्थेनैवापदि साकल्यतो जीविका-निर्वाहसम्भावनया प्रचुरतृणवृक्षजलप्रदेश इत्यर्थानुष्ठानं कृतमनुधावनं-विज्ञानेश्वरेण । अतएव जीविकापरिचालकोपायान्तराणां तत्रैव सदा विद्य-मानत्वाच्छास्त्रनिषिद्धमपि तत्स्थानाश्रयणमापदि विधेयमित्यादिष्टं मह-र्षिभिस्तैः । इत्यनूपविचारः ।

अथ नृपविचारः,—

नृशब्दोपपदस्य पालनार्थकस्य पाधातोर्डप्रत्ययसंसर्गेणैव नृपपदस्य सुसम्पन्न

तया लोकपालकत्वमभिधेयं बोधयति तत् पदम्। किन्त्वापदि तद्वाच्यार्थस्य-प्रकृतोपयोगाघटकतया तत्संगतये लक्षितोऽर्थो नृपप्रार्थनात्मकः। अर्थेऽस्मिन् परिदृश्यते सम्मतिर्विज्ञानेश्वरस्य। नृपयाचनेनापदि वृत्तिपरिचालनस्य-सत्यपि शास्त्रविरुद्धत्वे गत्यन्तरविहीनतया नृपयाचनमापदि भविष्यत्यवश्यं-श्रेयस्करमित्यादिष्टं जगद्धितकांक्षिभिर्मुनिभिः। इति नृपयाचनविचारः।

वक्तव्यमेतत्पूर्वार्द्धस्योपसंहारे तु निरुपद्रवावसरे धर्मशास्त्रनिषिद्धेनापि-निरुक्तमूलधर्माविरोधिना प्राणहितानापादकेन चेष्टाजालेनापदि यतस्ततोऽपि-वित्ताऽदानेन कुटुम्बादिपरिपालने न कापि विप्रतिपत्तिरिति मर्मेदं शास्त्रीयम्।

अतो-मौलिकधर्मजागतिकसम्मानयोः संरक्षणोपायभूतस्यार्थनिवहस्य-प्रतिभातप्रथमपुरुषार्थतया निर्वाचितया यया कयापि वृत्त्या धर्मतस्तदर्जने-प्रयत्नो विधेयः स्नातकादिभिरिति सदसद्विचारनिपुणानां प्रेक्षावतां-राद्धान्तः।

नैतद्विवेचनं स्वचित्तोद्भावितमेव।

साहाय्यमापादितमत्र जैमिनीयन्यायमालाविस्तरे माधवाचार्य्येण।

यथा—

"द्रव्यार्जनं स्यात् क्रत्वर्थं पुमर्थं वा क्रताविदम्।
नियतत्वात्पुमर्थत्वं दृष्टं क्रत्वर्थतार्थिकी॥"

"ब्राह्मणस्य द्रव्यार्जने प्रतिग्रहयाजनाध्यापनान्येव नियतानि तत्र तत्र-श्रुतानि" राजन्यस्य जयादिकम्, शूद्रस्य सेवादिकम्। तच्च यदेतद्द्रव्यसंपादनं-तदेतत् क्रत्वर्थम्। कुतः, अर्जनोपायानां नियतत्वात्। पुरुषप्रतीतिस्तु येन-केनापि द्रव्येण सिद्धत्वादर्जनोपायनियमसार्थको-नियम-इति प्राप्ते ब्रूमः-द्रव्यार्जने रागः प्रवर्त्तको दृष्ट इति न विधिरपेक्ष्यते। फलं च क्षुन्निवृत्त्यादि-रूपं दृष्टमेव। अतएव स्मर्य्यते,—

"षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" ॥ इति।

क्रत्वर्थे तु जीवनाभावात् क्रतुरेव न सिध्येत ।

पुरुषार्थतायां त्वैहिकप्रीतिकारिभोजनादिवत् क्रतोरामुष्मिकप्रीतिकारितया-पुरुषार्थेष्वन्तर्भावात् क्रत्वर्थताप्यार्थिकी सिध्यति । उपायनियमस्तूपायान्तरेषु-प्रत्यवायविवक्षयोपपद्यते । तस्मात् द्रव्यार्जनं पुरुषार्थम्" । अतएव निर्वाचित-वृत्तिविसरोपार्जितार्थनिकरेण सति जीवनरक्षणे धर्म्मपालनं सुतरां भविष्यत्ये-वेति निष्पूताङ्गम् । समाप्तोयं पूर्वार्द्धः ।

अथारभ्यते उत्तरार्द्धः,—

पूज्यपादा महर्षिवर्य्यास्त्रिकालदृष्ट्या परिचालयितुं प्रोक्तधर्म्मद्वये लोकान्-यथादेशकालपात्रमादितो नियमवृन्दमारचय्य सांसारिकवर्त्म परिष्कुर्निष्कण्ट-कम् । तन्नियमसृष्टियैदैतादृशी यद्यस्य योग्यं, तत्तेन नियमितम् । न तावद्दश्वेन माड्रं हस्तिनः, दरिद्रेण साकं चक्रवर्त्तिनः, रोगिणा सह सुस्थकलेवरस्य-प्रतिपादिता योग्यता पूजनीयचरणैस्तैः । एतद्व्यवहितनिर्णीतप्रमाणव्रातं-प्रति कृते दृष्टिनिक्षेपे सहजतो बोद्धव्यं कीदृशजनमभिलक्ष्य कीदृग्राजशासनं-प्रायश्चित्तं च विधेयमिति । समर्थितमेतद्विवेचनं स्वस्वप्रमाणैर्मन्वादिभिरार्य्य-धर्मरक्षकचूडामणिभिः ।

यथाह मनुः,—

"तान् प्रजापतिराहैत्य मा कृढ्वं विषमं समम् ।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥"

"तानिति, तान् देवानागत्य ब्रह्मा प्रोवाच विषमाश्च मा समं कुरुत । विषमसमीकरणमनुचितमिति कुल्लूकभट्टः । अनेनैव कस्यापि समस्य विषमेण-साकं साम्यसम्पादनं कदापि नानुष्ठेयमित्युपलक्षणम् ।

तथाच राजशासनविचारावसरे मनुः,—

"सत्यमर्थञ्च सम्पश्येदात्मानमथ साक्षिणः ।
देशं रूपञ्च कालञ्च व्यवहारविधौ स्थितः ॥
तं देशकालौ शक्तिञ्च विद्यां चावेक्ष्य तत्त्वतः ।
यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्त्तिषु ॥

स्त्रीबालोन्मत्तवृद्धानां दरिद्राणाञ्च रोगिणाम् ।
शिफां विदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम्" ॥ इति ।

"स्त्रीति,—

स्त्रीबालादीनां पुनः शिफां वेणुदलप्रहाररज्जुबन्धनादिभिर्दमनं राजा-कुर्य्यात्", इति कुल्लूकभट्टः ।

तथा प्रायश्चित्तविचारावसरे याज्ञवल्क्यीयं प्रमाणं तथा मिताक्षरोक्तं प्रमाणजालं च प्रथमतो-लिखितमपि पुनः प्रकटीकृतं पाठकपरिश्रमलाघवाय ।

यथाह याज्ञवल्क्यः,—

"देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्यात्-यत्र चोक्ता न निष्कृतिः" ॥ इति ।

तथा तट्टीकाकारो विज्ञानेश्वरः,—

'यदुक्तं प्रायश्चित्तजातं वक्ष्यमाणं वा तद्देशादिकमवेक्ष्य यथा कर्त्तुः-प्राणविपत्तिर्न भवति । तथा विषयविशेषे कल्पनीयं, इतरथा प्रधाननिवृत्ति-प्रसंगात्, यथा वक्ष्यति वायुभक्षो दिवा तिष्ठेत् रात्रिं नीत्वाप्सु सूर्य्यदृगिति,- तत्र यदि हिमगिरिनिकटवर्त्तिनामुदकवास उपदिश्यते अतिशीताकुलिते-वा शिशिरादिकाले तदा प्राणवियोगो भवेदिति तद्देशकालपरिहारेणोदक-वासः कल्पनीयः । तथा वयोविशेषादपि यदि नवतिवार्षिकादेरपूर्णद्वादश-वार्षिकस्य वा द्वादशाब्दिकं प्रायश्चित्तमुपदिश्यते तदा प्राणा विपद्येरन्निति । ततो ऽन्यवयस्के तत्प्रायश्चित्तं कल्प्यम् । अतएव स्मृत्यन्तरे क्वचिदर्द्धं क्वचित्पादं-इति वृद्धादिषु प्रायश्चित्तस्य ह्रासोऽभिहितः । तत्तु प्राक्प्रपञ्चितम् । तथा-धनदानतपश्चरणादिशक्त्यपेक्षया च न हि निर्द्धनस्य पात्रे धनं वा पर्य्याप्त-मित्याद्युपपद्यते इति, "चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी एतांस्तु-ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेदिति पाराशरीयवचनादिवलाद्यज्जातीय-व्यक्तीनां स्पर्शस्य सत्यपि शास्त्रनिषिद्धत्वे कार्य्यविशेषतस्तत्तज्जातीयव्यक्तीनामपि-प्रतिपादितं परिशुद्धत्वं धर्मशास्त्रनिर्माणृभिः ।

तथाच जैमिनिः निषादस्थपत्यधिकरणे,—

यथा "स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्, लिङ्गदर्शनाच्च"। इति।

तथा जैमिनीयन्यायमालाविस्तरे माधवाचार्य्याः,—

यथा,—

"द्विजः स्थपतिरन्यो वा द्विजः षष्ठीसमासतः।
कर्मधारयमुख्यत्वान्निषादो-रौद्रयागकृत्"॥

"वास्तुमयं रौद्रं चरुं निर्वपेत्" इति प्रकृत्य श्रूयते "एतया निषादस्थपतिं याजयेत्" इति, वास्तुशब्दः किञ्चित् प्रकृतिद्रव्यविशेषमाह। एतस्यामिष्टावधिकारी स्थपतिशब्दवाच्यस्त्रैवर्णिकः। कुतः "निषादानामधिपतिः" इति-षष्ठीसमासस्य त्रैवर्णिके सम्भवात्। तस्य चाधीतवेदत्वेन विद्यासम्भवाच्च इति चेत्। मैवं। "निषादश्चासौ स्थपतिश्च" इति कर्मधारयसमासस्य मुख्यत्वात्। षष्ठीसमासे तु सङ्कीर्णजातिविशेषवाचिना निषादशब्देन तत्सम्बन्ध उपलभ्येत। नत्वयं कर्मधारये दोषोऽस्ति। ततस्तात्कालिकाचार्य्योपदेशादिना विद्यां सम्पाद्य धनिको निषादो रौद्रं यागं कुर्य्यादिति"।

तथाच सत्यपि स्त्रीणां पारतन्त्र्ये मन्वादिभिः स्वाधीनत्वमप्यभ्यनुज्ञातं कार्य्यभेदे।

यथा मनुः,—

"चतुर्णामपि वर्णानां दारा रक्ष्यतमाः सदा।
भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा।
सम्भाषणं सह स्त्रीभिः कुर्य्युरप्रतिवारिताः"॥ इति।

किन्त्वस्मदीयदृष्टेः संकीर्णज्योतिष्कतया बुद्धेः स्थूलात् स्थूलतरत्वेन च-असमं सममिति, असंगतं संगतमिति, अन्याय्यं न्याय्यमिति च मननमेवामोदव्यवसायोऽस्माकम्। सारासारविवेचनमभूत् सुदूरपराहतम्। अत आदावेवास्मदीयमनोराज्ये तदीयनिगूढाभिप्रायो न प्रवेष्टुं शक्नोति, विशेषतः इदानीन्तनैः-स्फुटतः प्रकाशिते सत्यपि तदभिप्राये कतिपये विद्वांसस्तत्सर्वं कुर्वन्तोऽपि-हृदयंगमं स्वस्वाभिमानाधिक्यतः दृढीकर्त्तुं पुरातन-व्यवहारं भवन्ति बहु-

परिकराः । अतएव माकं धर्म्मेहान्या लभते यथाक्रममनिशमवनतिं-भारतम् । अतो निरुक्तापत्समयस्य तत्कालीनवृत्तेश्चानुरूपाचारव्यवहारं-संवर्ण्य यथाक्रमं सह प्रमाणोल्लेखेन व्यञ्जयितुं महर्षीणामभिप्रायमारभ्यतेऽय-मुत्तरार्द्धः । तत्र स्नातकानां सुगुणाधारभूताया वनितायाः प्रधानसहाय-भूतत्वमापादितं सर्वदा महर्षिभिः पूज्यांघ्रिभिः ।

तथाच, मनुः—

"प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥
उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥
अपत्यं धर्मकार्य्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च हि" ॥

तथाच तद्वृत्तिकारः कुल्लूकभट्टः,—

यथा, "प्रजनार्थमिति" यद्यप्यासां रक्षणार्थं दोषा-उक्तास्तथापि शक्य-प्रतीकारत्वादिह दोषाभावः । एताः स्त्रियो महोपकारा गर्भोत्पादनार्थं-बहुकल्याणभाजनभूता वस्त्रालङ्कारादिदानेन सम्मानार्हाः स्वगृहशोभा-कारिण्यःस्त्रियः श्रियश्च गृहे तुल्यरूपाः नानयोर्विशेषो विद्यते । यथा निःश्रीकं गृहं न राजत्येवं निःस्त्रीकमिति" ।

अपिच "उत्पादनमिति"—

अपत्यस्य जननं जातस्य परिपालनं प्रतिदिनं चातिथिमित्रभोजनादेर्लोक-व्यवहारस्य प्रत्यक्षं भार्य्येव निदानम् ।

"अपत्यमिति, तथाच,—

अपत्योत्पादनमुक्तमप्येतदभ्यर्हितत्वज्ञापनार्थं पुनरभिधानम् । धर्मकार्य्या-ण्यग्निहोत्रादीनि परिचर्य्या उत्कृष्टा रतिः पितृणामात्मनश्चापत्यजननादिना-स्वर्ग इत्येतत्सर्वं भार्य्याधीनमिति" ।

निरुक्तप्रमाणेस्तल्लाभस्त्वेतद्विभागीयवर्णितविषयज्ञातात्म्यन्तरे सर्वप्रधान मित्यनुमीयतेऽस्माभिः। तत्रापि विवाहाधीनतया तत्पूर्वानुष्ठितस्य प्रधानाङ्ग-भूतस्योपनयनादेः प्रकृतानुपयोगित्वात्तदीयव्ययबाहुल्यसङ्कोचस्य पुरतः पृथक्-विवेच्यत्वेन च तत्परिहायानुष्ठीयते तद्विवेचनमादितः। तदनन्तरं येन-सार्द्धं विद्यते यस्य विशेषासक्तिः, तत्परं विधेयस्तद्विवेकः। इत्युत्तर-भागीयोपक्रमः।

अथ विवाहविचारः—

विपूर्वकाद् वहधातोर्भाववाच्याविदकघङ्प्रत्ययसंयोगेन सम्पन्नं विवाह-इति पदम्।

तदर्थस्तु कन्यावरयोः संस्कारेण अर्थाद्विवाहविध्यनुष्ठानेन परस्पर-सम्मेलनम्। परिणयोपयमशब्दाभ्यामपि कथितोऽयं विवाहशब्दोऽमरकोषे। गतमेतज्ज्ञातुप्रत्ययानुस्तमभिधेयम्।

अन्यच्च, अत्र विवाहशब्दो वहप्रापणे इत्यस्माद्धातोर्भावे घञि कृते वहनं-वाहः। विशिष्टो वाहो विवाह इति व्युत्पत्त्या निष्पद्यते। वैशिष्ट्यं प्रतिग्रहा-द्यष्टविधोपायान्यतमोपायेन स्वीकृतायां होमादिसप्तपदनयनात्मककर्मभिः-संस्कृतत्वम्। तथाच, विवाहपदार्थो द्विदलः सिध्यति स्वत्वोत्पादनं-संस्काराधानं चेति। तदेतत्स्पष्टीकृतं पारस्करेण "पिता प्रत्तामादाय-गृहीत्वा निष्क्रामतीत्युपक्रम्य प्रदक्षिणमग्निं पर्य्याणीयैके-इत्यादिनाऽचार्य्याय-वरं ददातीत्यन्तेन सूत्रेण। आदाय प्रतिगृह्य गृहीत्वा हस्ते धृत्वा।

परिशिष्टेऽपि,—

"गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये।
पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते"॥

परिणयः स्वीकरणम्। एवं च स्वीकृताऽप्यसंस्कृता संस्कृताप्यस्वीकृता वा-न भार्य्या भवतीति निर्णीयते। विशिष्टस्य विवाहपदार्थत्वात्। तदोत्तरदत्तार्थं-स्पष्टयति।

वशिष्ठः,—

"बलादपहृता कन्या यदि मन्त्रैर्न संस्कृता।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा" ॥ इति ।

अपहारोऽत्र सप्तविधस्वत्वोपायानामुपलक्षणम् ।

पूर्वदलार्थं स्पष्टयति यमः,—

"नोदकेन विना चायं कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे" ॥ इति ।

उदकं उदकपूर्वकं दानं। अलङ्कृत्य कन्यामुदकपूर्वां दद्यादित्याश्वलायनस्मरणात्। एतेन ब्राह्मादिपञ्चके नित्यवद्दानश्रवणादासुरादित्रये,—"गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु।" इति, नारदेन पाक्षिकदानविधानाच्च दानमपि तृतीयं दलं सिध्यति। वस्तुतस्तु उदकपदं स्वीकारपरं। अतश्च दलद्वयमेव विवाहपदार्थः। अन्यथा दानस्याङ्गत्वे आसुरादिष्वव्याप्तेः। ततश्चानुत्पादितस्वत्वायाः कन्यायाः पाणिग्रहणसंस्कारात् पतिःस्वामी स्वत्ववान्न। सप्तमे पदे पतित्वं पतिसंस्कारश्च न। ततश्च स्वीकृतायामेव संस्कारोत्पत्तिरित्यर्थः। नन्वत्र "भार्य्यात्वं सप्तमे पदे" इतिवक्तव्यम्। "उद्वहेत द्विजोभार्य्या"मित्यत्र द्वितीयया भार्य्यया एव संस्कार्य्यत्वाभिधानात्। न तु पत्युः, तस्य द्विज इति प्रथमया संस्कारकर्त्तृत्वप्रतीत्यैकस्य कर्त्तृकर्मभावविरोधेन संस्कार्य्यत्वायोगाच्चेति चेत्, मैवम्। पतित्वस्य उद्वाहविधिभाव्यभार्य्यात्वनान्तरीयकत्वेन तद्बोधकपतित्वशब्दोपादानेऽपि बाधकाभावात्। ननु पतित्वं भार्य्यात्वानुनिष्पादीति न वक्तव्यम्। 'विन्देत सदृशं पति"मित्यादिष्वविधिप्रयुक्तत्वात्। यथोद्वाहेन वरो भार्य्यां कुर्य्यादिति विध्यर्थः, तथा कन्याप्युद्वाहेन वरं कुर्य्यादिति विध्यर्थस्तुल्य एव। तस्मान्नानुनिष्पादि पतित्वमिति चेत्सत्यम्। अस्ति विधिः परं तु नोद्वाहविषयः। उद्वाहस्य मन्त्रसाध्यत्वात्। स्त्रीणां चामन्त्रत्वात् न च प्रधानविधिबलादेव मन्त्रकल्पनम्। प्रधानविधेरेव वराभ्युपगममात्रविषयत्वेनोद्वाहविषयत्वाभावात्। नचाभ्युपगमो विवाहं लक्षयिष्यति। विधौ लक्षणानङ्गी-

कारात्। किञ्च दात्रभावे ऋतुदर्शनादिनिमित्तकोऽयं विधिः न सर्वकालं कन्याकर्त्तृकतां पतित्वस्य गमयितुमीष्टे। तस्मात्सिद्धं भार्य्यात्वानुनिष्पादि पतित्वमिति विवाहस्यार्थद्वयं प्रतिपादितं निबन्धकारैः। वस्तुतस्तु- शाखान्तरे तासां च मन्त्रविधानादिनिगमनाविरहेण च पतित्वस्यैव भार्य्यात्वानुनिष्पादिकत्वे प्रमाणाभावादुभयथा विधिदर्शनाच्चोभयमप्युद्वाहभाव्यम्। अतश्च- पतित्वं सप्तमे पदे इति युक्तमेवोक्तमिति। न चैवं कर्त्तृकर्मविरोधः। एकस्मिन्- वाक्ये उभयोरनुपादानेन शाब्दबोधे तस्याभावात्। वास्तवस्य च कर्त्तृकर्मभावस्य यजेत स्वर्गकाम इत्यत्र स्वर्गकामे गुणप्रधानभावस्येवाविरोधः। तच्च- यथोक्तविधिना सप्तमपदप्रापणात्सिध्यति।

"पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे॥"

इति मनुस्मरणात्।

इति प्रकारान्तरेण विवाहस्यार्थद्वयं प्रतिपादितं निबन्धकारैः।

अपरं च,

"वैवाहिको विधिः स्त्रीणामौपनायनकं स्मृतम्। इति॥

मनुवचनेनाभिहितः स्त्रीणामुपनयनरूपत्वेनायमेव।

तथाच,—

पूज्यपादेन मेधातिथिनाऽपि स्वभाष्ये ब्राह्मधर्मविचारकाले विवाहस्य- यन्निर्धारितं कीदृगर्थरूपत्वं, प्रकाश्यते तदधः। स्वयं प्रागयाचितः स्वपुरुषैर्वाहूय अन्तिकदेशमानाय्य वरं यद्दानं, स ब्राह्मधर्मो विवाहः। अविशेषवचनोऽपि धर्मशब्दः पूर्वापेक्षितत्वादस्य तत्पर एव द्रष्टव्यः। अयाचितलाभाऽभ्यर्हणापूर्वको ब्राह्मो विवाह-इतिलक्षणार्थः। ननु चेदमुक्तं स्त्रीस्वीकारार्थो- विवाह-इति यावद्विवाहपर्य्यन्तं चैतद्दानम्। नाकृते विवाहे दानार्थनिर्वृत्तिः। स हि तस्याः प्रतिग्रहकालः। नचासति प्रतिग्रहे दानं परिसमाप्यते, न स्वत्वनिवृत्तिमात्रं दानम्। परस्वत्वापत्तिपर्य्यन्तं हि तत्। तथाच वक्ष्यति। "तेषां तु निष्ठा विज्ञेया विद्वद्भिः सप्तमे पदे"। एवं विवाहकाल एव कन्या

दातव्या। तथाच ग्रन्थकारस्तस्मिन्नेव काले ब्राह्मविवाहे काश्चिद्धर्मं-दर्शयति,—

यत्तु प्राग्विवाहाद्दानं तदुपसंवादनवाचनमात्रम्।

न हि तस्मिन्नक्रियमाणे अभिप्रेतकालेऽवश्यं विवाहनिर्वृत्तिः, कश्चित्प्राग-निरूपिते न दद्यादपि, इतरोऽपि वा कदाचिन्न प्रतिगृह्णीयात्। तस्मात्-प्राग्विवाहादुपसंवादः कर्त्तव्यः। तदा त्वयेयं देया मया चेयं वोढव्यति। यथैवान्तःक्रतुः सोऽपक्रियोऽचोदिततत्सिद्धार्थोऽर्थात् वहिष्क्रियते। ये तु-मन्यन्ते यथैव गवादेर्द्रव्यस्यादृष्टार्थतया दीयमानस्य मन्त्रपूर्वकेण प्रतिग्रहण-दानमपि निर्वर्त्तते। तेनैवेदमुक्तं ददातिषु चैवं धर्मेष्विति। एवञ्चेह प्रतिग्रह-मन्त्रस्थानीयो विवाह-इति। तथाच उपयमनं विवाह-इत्येकोऽर्थः। उप-यमनं स्वीकरणम्। एवमाहस्म भगवान् पाणिनिः, स्मरति उपाद्यमः-स्वीकरण इति। अतो विवाहः कन्यास्वीकारार्थः। तद्युक्तं स्वीकृतताया-विवाहो-भार्य्याकरणार्थः। नानेन कर्मणा प्रतिगृह्णीयादिति विधिरस्ति। न च-वैवाहिका मन्त्राः प्रतिग्रहप्रकारकाः। यथा देवस्य त्वा प्रतिगृह्णामीति-मन्त्राः। यत्तु स्वीकरण इति तन्न विरुद्धम्। विवाहस्याप्यस्ति स्वीकरणरूपता। दानेन स्वत्वमात्रे प्रतिपन्ने विवाहेन विशिष्टं स्वत्वं क्रियते। नेयं गवादि-द्रव्यवत् स्वं यथेष्टविनियोज्यतया अपि तु जायात्वेन। विशिष्ट एव हि-स्वस्वामिभावो जायापतिलक्षणसम्बन्धः। तथाच, दर्शयिष्यति मंगलार्थं-स्वस्त्ययनम्। विवाहेषु प्रदानं स्वाम्यकारणमिति" साधारणतो-विवाहविवेचनं-परामृष्टमत्र।

संप्रति धर्मशास्त्रकारैस्तु विवाहरूपसंस्कारस्य किमात्मकविध्यन्तर्गतत्व-मापादितं, तदधः विव्रियते।

तथाच मनुः,—

"गुरुणानुमतः स्नात्वा समावृत्तो-यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥
त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।" इति,

तथाच याज्ञवल्क्यः—

"अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ।
वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणां स्वयम्" । इति ।

निरुक्तप्रमाणाभ्यन्तरे उद्वहेत्, उद्वहेत, एवं वहेदित्यादि विधिबोधक-लिङ्विभक्तिनिष्पन्नक्रियापदत्रयपरिदर्शनात् तथैतत्प्रमाणजालमुभयतः-संलग्न-प्रमाणानां समालोचनया कतिपयमीमांसककर्त्तृकव्याख्यावलोकनेन-च बुध्यते-ऽस्माभिः ।

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्त्यते" ॥

इत्युक्तप्रमाणोक्तविधित्रयान्तरालेऽत्यन्ताप्राप्तस्य वंशाविच्छेदरूपफलस्य च-प्रापकापूर्वविधेरनुभूतोऽयं विवाह इति नात्र फलप्राप्तौ प्रमाणाभावः ।

यथा याज्ञवल्क्यः —

"लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।
यस्मात्तस्मात् स्त्रियः सेव्याः कर्त्तव्याश्च सुरक्षिताः" ॥

तथा विज्ञानेश्वरः—

"लोकानन्त्यं वंशस्याविच्छेदः, दिवः प्राप्तिश्च दारसंग्रहस्य प्रयोजनं,—कथमित्याह,—

पुत्रपौत्रप्रपौत्रकैः लोकानन्त्यं,
अग्निहोत्रादिभिश्च स्वर्गप्राप्तिरित्यन्वयः,

यस्मात्-स्त्रीभ्य एतद्वयं भवति, तस्मात् स्त्रियः सेव्याः, उपभोग्याः प्रजार्थं,-रक्षितव्याश्च धर्मार्थं, तथा चापस्तम्बेन धर्मप्रजासम्पत्तिः प्रयोजनं दार-संग्रहस्योक्तम्" ।

तथाच कालसारे गदाधरः—

मनुः—

"असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

"दारकर्मणि दारत्वजनके विवाहे—मैथुने मिथुनवाच्ये स्त्रीपुंससाध्ये-आधानकर्मणि न केवलं स्त्रीमाध्यपाकादिकर्मणि अपि तूभयसाध्येऽपि सा-प्रशस्तेत्यर्थः । मिथुनसाध्यधर्मे पुत्त्रोत्पत्तौ, इति कल्पतरुकाराः । तथा-कत्तीकृत्य नियमविधिं यथा गर्भाधानस्यापूर्वविध्यन्तर्भूतत्वमापादितं, गदा-धरेण तथोद्दृङ्कितं तदत्र ।

मनुः—

"ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा" । इति ।

"अत्र व्रते" इति सूत्रेण व्रतार्थे णिनिप्रत्ययः ।

अयमृतुकालगमनविधिरपूर्वविधिः । पुत्त्रोत्पादनं प्रत्यप्राप्तस्य ऋतुगमनस्य-शास्त्रेण विधानात् । नात्र नियमविधिशङ्का, पुत्त्रोत्पादने ऋतुगमनस्य-पाक्षिकप्राप्तेरभावात् ।

तथाच,

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्त्यते" ॥

यत्तु नियम-इति विज्ञानेश्वरैरुक्तं, तत् पुत्त्रोत्पादनस्य नित्यत्वात् ऋतु गमनमपि नित्यम् । न च निरुक्तवचनानामृतुसम्बन्धितया विवाहविषयाप्रति-पादकत्वादुपयमस्य नापूर्वविध्यन्तर्गतत्वमिति वाच्यम् । व्याख्याकर्त्तृभिरुप-लक्षणविधया विवाहर्त्तुगमनयोः प्रतिपादितत्वात् । विवाहेत्युपलक्षणं विवाह एव तत्रापि ऋताविव व्यवायः कार्य्य इति-क्रमसन्दर्भीयविद्वद्भिरत्र जागरूक-त्वात् । यत्तु व्यवायस्य रागतः प्राप्तत्वात्-परिणयबोधकप्रमाणं नापूर्वविधि-विषयकं, किन्तु परिसंख्याविध्यावेदकं अतएव परिणयस्य सुसिद्धं स्त्रीपुरुषे-च्छाधीनत्वम् । मनुरपि मतमेतदनुमोदते साकल्येन ।

यथा,—

"न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला" ॥

तथा चैकादशस्कन्धे भागवतीये,—

चमसः,—

"लोके व्यवायामिषमद्यसेवे"ति भागवतीयप्रमाणं, तथा श्रीधरीयतद्विवरणञ्च पूर्वतः प्रदर्शितं द्रष्टव्यम् ।

एतत्तुल्यानि धर्मशास्त्रीयप्रमाणान्तराणि चतुर्विधयाण्यपि ग्रन्थबाहुल्यशङ्कया नोत्तोलितान्यत्र ।

विवाहस्यातः स्त्रीपुरुषेच्छापरवशतया केचन परिसंख्याविध्यन्तर्गतत्वमामनन्ति । तत्तुच्छम् । अर्थात् प्रमाणान्येतान्याश्रित्यापत्युत्थापनमसङ्गतमित्यर्थोऽवबुध्यते अस्माभिः धर्मशास्त्रीयवचनप्रमाणोद्धरणपूर्वतः पूर्वापरीयप्रमाणविमर्शस्य तथोद्देशस्य चाविविचितत्वेनातीवायुक्तिसहत्वात् । सत्यत्वमेतस्य प्रत्यक्षीकर्तुमस्ति चेदभिलाषः, तदा न भविष्यति बहुदूरगमनम् । एतदव्यवहितपरामर्शस्य सत्यपि दृष्टिविषयत्वे दूरीभविष्यति सत्वरं सन्देहः ।

यथा—"न मांस भक्षणे दोष" इति मानवीयप्रमाणस्य सार्वकालिकमांसभक्षणादिजन्यदोषनिवारकत्वं वा वैदिकविध्युपयोगिमांसाशनजन्यदोषनिराकरणपरत्वमिति । नाद्यः, निर्वाचितप्रमाणपूर्ववर्त्तिकतिपयमानवीयप्रमाणजालस्य सति परामृष्टत्वेऽस्याप्यतथात्वात् । निबन्धेऽस्मिन् तद्विवेचनस्यावश्यकतया कुत्राप्यननुष्ठितत्वेन चात्र परामर्ष्टुमुत्तोल्यते निम्नतः प्रमाणव्रातम् ।

"यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः ।
अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते ॥
क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा ॥
देवान् पितॄन् चार्चयित्वा खादन् मांसं न दोषभाक् ।
मधुपर्के च यज्ञे च पितृदैवतकर्मणि ॥
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ।
गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः ॥

नावेदविहितां हिंसामापद्यपि समाचरेत् ।
या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ॥
अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ।
योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ॥
स जीवंश्च मृतश्चैव न क्वचित्-सुखमेधते ।
न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ॥
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ।
स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति ।
अनभ्यर्च्य पितॄन् देवांस्ततोऽन्यो नास्त्यपुण्यवान् ॥"

इत्यादिमानवीयप्रमाणानां क्षते सति सुविवेचने को विश्वसेयत् "न मांसभक्षणे दोष"-इति प्रमाणस्य सार्वकालिकमांसभक्षणादिजन्यदोषनिवारकतया स्वाभाविकानुरागवशतः परिसंख्याविधिपरिचायकत्वमिति । न तावत्तत् । किन्तु द्वितीयपक्षीयवैधिकमांसभक्षणजन्यदोषोपशमनावेदकत्वमेतस्य ।

एतादृशार्थो न भवेदशास्त्रीयोऽयौक्तिकश्च । निरुक्तवचनस्य भाष्यकर्त्तुर्मेधातिथेस्तद्वचनव्याख्यातुः कुल्लूकभट्टस्य चैतद्विवृतेः पर्य्यालोचनयाऽस्यार्थस्य स्फुटतः प्रकाशितत्वात् । अतः प्रमाणमेतत् कस्यापि विधेर्न परिचायकं-प्रस्तुतविषयबोधकं प्रोक्तमांसवर्जनमहाफलानुवादमात्रम् । विवरणस्यास्य-समस्तस्य सत्यत्वमनुभवितुमभिलाषश्चेत् तदीयं निरुक्तस्यमेधातिथिभाष्यं-तथा कुल्लूकभट्टस्य तदीयविवृतिं चावलोकयन्तु भवन्तः ।

तथा मेधातिथिः,—

"प्रणस्थानमित्यत आरभ्य यावदयं श्लोकोऽर्थवादसङ्घात एव द्विताः-श्लोका विषयार्थाः । न मांसभक्षणे दोषो, यथा क्रीत्वा स्वयं चाप्युत्पाद्येति-तथायमपि श्लोकः । निवृत्तिस्तु महाफलेत्येतदत्र श्रूयते । बहुभिर्निन्दाकारैरीदृशः संस्कारो जातो यत्र किंचिन्मांसमशितव्यं । भूतानां हत्यर्थमाह । न-

मांसभक्षणे दोष इति। देवार्चनशिष्टे ब्राह्मणकाम्यादिषु निमित्तेषु प्रागुक्तेषु-न दोषः। किंचिदशितुमिच्छन्ति। निवृत्तिर्न भक्षयामीति सङ्कल्पपूर्विका-मन्हाफला। फलविशेषाश्रुतेः स्वर्गः फलमिति मीमांसकाः। एवं मद्ये-क्षत्रियादीनां, मैथुने तु सर्ववर्णानां दिवोदक्या पर्वकालादन्यत्र। अल्पस्वल्पा-प्रवृत्तिरेषा शास्त्रीया भूतानां शरीरस्थितिहेत्वर्था प्रवृत्तिः।

तथा चायुर्वेदशास्त्र.—

"आहारो ब्रह्मचर्य्यं च निद्रा चेति त्रयं मतम्।
मातृकाश्च स्त्रियश्चैव ह्युपस्तम्भनमायुषः॥ इति।

यस्तु तेन विनापि शक्नोति जीवितुं तस्य निवृत्तिर्महाफला। प्रदर्शनार्थश्चै-तदशिष्टाप्रतिषिद्धविषयाणामन्येषामपि निवृत्तिरेवमेव। व्यासश्च भगवानेव-माह। ये तु संसक्तितोऽशिष्टाप्रतिषिद्धा अपि यथाहसितकण्डूयनादयस्ततो-निवृत्तिर्धर्माय"।

तथाच कुल्लूकभट्टः,—

"न मांसभक्षण इति। ब्राह्मणादीनां वर्णानां यथाधिकारमविहिताप्रति-षिद्धभक्षणादौ न कश्चिद्दोषो यस्मात् प्राणिनां भक्षणपानमैथुनादौ प्रवृत्तिः-स्वाभाविकोऽयं धर्मः। वर्जनं पुनर्महाफलं। अविहिताप्रतिषिद्धमद्यमैथुन-निवृत्तेर्महाफलकथनार्थोऽयं उक्तस्य मांसवर्जनमहाफलकथनस्यानुवादः"। गतोऽयं मनुवाक्यपरामर्शः।

संप्रति समालोच्यते निरुक्तभागवतीयवचनं। पूर्वप्रदर्शितस्यैतस्य वचनस्य-व्याख्याकर्तृणां स्वामिचरणानां प्रोक्तविशेषविवृत्या यथा प्रतिपादितम्। परि-संख्याविध्यन्तर्गतत्वमृतुगमनस्य तत्रायौक्तिकं तत्पक्षतः। कुत इति चेदुच्यते,-निरुक्तभागवतीयवचनस्य वक्तुश्चमसस्यावधूततया तद्व्याख्याकारकस्यापि-परमहंसपरिव्राजकतया च तदीयसिद्धान्तेन विवाहस्य सत्येव परिसंख्यान्तर्गत-त्वेऽपि न कोऽपि दोषः संघटेत। यतो नाधिकारिता कर्मकाण्डे ज्ञानैक-परायणानां। अतो मीमांसकैः साकं ज्ञानिनां नानुचितो मतभेदः।

श्रीविश्वनाथचक्रवर्त्तिकर्तृकैतद्वचनविवृतेः मति नयनगोचरीभूतत्वे-

याथार्थ्यमेतत् हृदयादर्शे प्रतिफलितं सत् पाठकानन्दोत्पादकं भविष्यतीत्यनुमिनुमः। अतस्तद्विवृतिः कतिचित्-पंक्तयोऽत्रोत्तोलिताः। यथा, विश्वनाथचक्रवर्त्तिनः। "प्रवृत्तिकर्म्मैकनिष्ठानां मते यथा—अत्यन्तमप्राप्तौ विधिः, यत्र रागतो विध्यन्तरतो वा सर्व्वथैव प्राप्तिर्नास्ति। स विधिरुच्यते।

अहरहः सन्ध्यामुपासीतेत्यादि। माघस्नानं प्रकुर्व्वीतेति, निशि न स्नायात्। चन्द्रग्रहे स्नायादिति॥ अथ निवृत्तिकर्म्मैकनिष्ठानां मतेऽर्थो यथा—

अत्यन्तं सर्वथा प्राप्तौ विधिः, अहरहः सन्ध्यामुपासीतेत्यादि। अथवा वचनस्यास्य यथा स्वयम्बरपक्षे सावकाशत्वं तदेवाग्रे स्फुटीभविष्यति"। यातमेतद्ज्ञानि.र्थ्याणां मतमेव। अधुना मीमांसकचूड़ामणिभिः श्रीविज्ञानेश्वरचरणैर्मिताक्षरानामिकायां स्वकृतयाज्ञवल्क्यटीकायां परिसंख्याविधेः प्रदर्श्यदोषसंकुलतामृतुगमनस्य नियमविध्यन्तर्भूतत्वमापादितं कीदृक्, तत्पश्यन्तु-निम्नतः---

यथा मिताक्षरायां विज्ञानेश्वरः,—"तत्र सुरक्षितत्वं यथा कामित्वेन-स्वान्तरागमनेन भवतीत्यत्राह। तस्मिन् युग्मासु संविशेदिति। किमयं-विधिर्नियमः परिसंख्या वा। उच्यते। न तावद्विधिः प्राप्तार्थत्वात्। नापि-परिसंख्या दोषत्रयसमासक्तेः। अतो नियमं प्रतिपेदिरे न्यायविदः। कः पुनरेषां भेदः! अत्यन्ताप्राप्तप्रापणं विधिः। यथा, "अग्निहोत्रं जुहुयादष्टकाःकर्त्तव्या" इति। पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः। यथा स "समे देशे यजेत" इति। यागः कर्त्तव्यतया विहितः स च देशमन्तरेण कर्त्तुमशक्य-इत्यर्थाद्देशः प्राप्तः, स च समो विषमश्चेति द्विविधः। तदा यजमानः समेयियक्षते, तदा समे यजेतेति वचनमुदास्ते स्वार्थस्य प्राप्तत्वात्। यदा तु विषमेदेशे यियक्षते, तदा समे यजेतेति स्वार्थं विधत्ते स्वार्थस्य तदानीमप्राप्तत्वात्। विषमदेशनिवृत्तिस्त्वार्थिकी, चोदितशब्देन यागनिष्पत्तिः। अचोदितदेशोपादाने यथाशास्त्रं यागो नानुष्ठितः स्यादिति। तथा-"प्राङ्मुखोऽन्नानि भुञ्जीत" इति। इदमपि स्मार्त्तमुदाहरणं पूर्व्वेण व्याख्यातम्। एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्या। तद्यथा,—

"इमामगृह्णन्रशनामृतस्य इत्यश्वाभिधानीमादत्त इत्ययं मन्त्रः। स्व-

सामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्ताः पुनरश्वाभिधानीमादत्त इत्यनेनाश्वाभिधान्या विनियुज्यमानो गर्दभाभिधान्या निवर्त्तते ।

तथा, "पञ्च पञ्चनखा भक्ष्याः", इत्यत्र हि यदृच्छया श्वादिषु शशादिषु च भक्षणं प्राप्तं पुनः शशादिषु श्रूयमाणं श्वादिभ्यो निवर्त्तत इति । किं पुनरत्र युक्तं परिसंख्येत्याह । तथाहि कृतदारसंग्रहस्य स्वेच्छयैवर्त्तौगमनं प्राप्तमिति न विधेरयं विषयः, नापि नियमस्य, गृह्यस्मृतिविरोधात् । एवं हि स्मरन्ति गृह्यकाराः । 'दारसंग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यादि"ति । तत्र द्वादशरात्रात्सम्वत्सराद्वा पूर्वमेव ऋतुसंभवे ऋतौ गच्छेदेवेति नियमात्-ब्रह्मचर्य्य स्मरणं बाध्येत । अपिच,- प्राप्ते भावार्थे वचनं विशेषणपरं युक्तम् । प्राप्तं चर्त्तौ भार्य्यागमनेच्छयैवातो यदि गच्छेदृतावेवेति वचनव्यक्तिर्युक्ता । किंच नैयमिकात्पुत्रोत्पत्तिविधेरेव ऋतौ गमनं नित्यप्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात् । नियमे चादृष्टं कल्पनीयं । किंच, ऋतौ गन्तव्यमेवेति नियमे ऽसन्निहितस्य व्याध्यादिनाऽसमर्थस्यानिच्छोर्यागक्रोऽर्थ उपदिष्टः स्यात् । विध्यनुवादविरोधश्च नियमे, तथाहि एकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षे अनुवदति पक्षे विधत्ते च" इति । तस्मादृतावेव गच्छेन्नान्यत्र परिसंख्यैव युक्ता । तदिदं भारुचिविश्वरूपादयो-नानुमन्यन्ते । यतो नियम एव युक्तः । पक्षे-स्वार्थविधिसम्भवात्, अगमने दोषश्रवणाच्च ।

"ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः" ॥ इति ।

न च विध्यनुवादविरोधः अनुवादाभावात् विध्यर्थत्वाच्च वचनस्य । तत्र-हि विध्यनुवादविरोधः ।

यत्र विधेयाबाधितया तदेवानुवदितव्यमप्राप्ततयाऽन्याद्देशेन विधातव्यञ्च । यथा वाजपेयाधिकरणपूर्वपक्षे वाजपेयेन स्वाराज्यकामो यजेतेति । वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवदितव्यः । स एव स्वाराज्य-लक्षणफलोद्देशेन विधातव्यश्चेति । न चानुवादेनैव कृत्यमस्ति । यत्तु

नियमेऽदृष्टं कल्पनीयमित्युक्तं तत्परिसंख्यायामपि समानम्। अनृतौ-गच्छतो-दोषकल्पनात्। यत्तु नैयमिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमन-प्राप्तेर्न नियम-इति तदसत्। स एवायं नैयमिकपुत्रोत्पादनविधिः-स्यान्मतम्। एवं गच्छन् स्त्रियं चामां लक्षण्यं जनयेदिति स्त्र्यभिगमनाति-रिक्तः पुत्रोत्पादनविधिरिति, तन्न। गमनकरणिकाया भावनाया एव-पुत्रोत्पत्तिकर्मता प्रतीयते। एवं गच्छन् लक्षण्यं पुत्रं जनयेदित्यनेन यथाग्नि-होत्रं जुह्वन् स्वर्गं भावयेदिति। न चासन्निहितादेरशक्यार्थविधिप्रसङ्गः-सन्निहितशक्तयोरेवोपदेशात्। "ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोप-गच्छतीति।" "यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छती"ति विशेषोपा-दानात्। अनिच्छानिवृत्तिस्तु नियमविधानादेव। न च विशेषणपरतापि-पक्षे भावार्थविधिसम्भवात्। नापि गृह्य-स्मृतिविरोधः। सम्वत्सरात्-पूर्वमेव-ऋतुदर्शने संविशतो ब्रह्मचर्य्यस्खलनदोषः श्राद्धादिषु। तस्मात् स्वार्थहानि-परार्थकल्पनाप्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता। स्वार्थस्य श्रुतस्य वाच्यार्थस्य ऋतुगमनस्य त्यागः स्यात्, तथा परार्थस्याश्रुतस्यानृतुगमनस्या नृतौ भार्य्यां नोपेयादित्येवं कल्पनेति दोषद्वयं शब्दव्यवहारेण प्रतीयत इति-शब्दनिष्ठं, तथा रागतः प्राप्तस्यानृतुगमनस्य बाध इत्येको दोषोऽर्थविचारात्-कल्पित इत्यर्थनिष्ठ इत्येवं दोषत्रयं स्यात् यतो-वाच्यार्थासम्भवाल्लक्षणातो निवृत्तिपरिभाषणे दोषत्रयम्। इति।

"पञ्च पञ्चनखा भक्ष्या"-इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्तेर्नियमः,-शशादिषु श्वादिषु च प्राप्तेः परिसंख्येत्युभयसम्भवः। तथापि नियमपक्षे शशाद्य-भक्षणे दोषप्रसङ्गः। श्वादिभक्षणे चादोषप्रसङ्गेन प्रायश्चित्तस्मृतिविरोध इति-परिसंख्यैव श्रिता। एतेन "सायं प्रातर्द्विजातीनामशनं स्मृतिचोदित"मित्य-त्रापि नियमो व्याख्यातः। नान्तरा भोजनं कुर्य्यादिति च पुनरुक्तं स्यात्-परि-संख्यायामेव च नियमे सति ऋतावृतौ विति विप्सा लभ्यते निमित्तावृत्तौ नैमित्तिकमप्यावर्त्तते इति न्यायात्। यथा कामी भवेदित्यपि नियम एव। अनृतावपि स्त्रीकामनायां सत्यां स्त्रियमपि रमयेदेवेति। ऋतावुपेया-त्सर्वत्र वा प्रतिषिद्धवर्ज्यमित्येतदपि गौतमीयसूत्रद्वयं नियमपरमेव।

ऋतावुपेयादनृतावपि स्त्रीकामनायां प्रतिषिद्धवर्ज्यमुपेयादेवेत्यलमतिप्रसङ्गेनेति ।

निरुक्तप्रमाणपरामर्शतो यदुपलब्धमेतत्, प्रवृत्तिमार्गैकनिष्ठानां निवृत्तिकर्म्मैकपरायणानाञ्च मतं पृथगिति ध्रुववचनम् । तथापि विषयेऽस्मिन् पुनरप्यापत्त्यन्तरं भवेदुत्थापितम् । तस्य किमात्मकतायां सति सन्देहे विव्रियतेनिम्नतस्तत् ।

## यथा पराशरस्मृतौ आचाराध्याये माधवः ।

ननु नैष्ठिकब्रह्मचर्य्याङ्गीकारे गार्हस्थ्यं निर्विषयं स्यात् । तन्न, गार्हस्थ्यस्य रागिविषयत्वात् ऐच्छिकत्वञ्च वशिष्ठेन दर्शितम् । "चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकास्तेषां वेदमधीत्यधीत्य वेदान् वा चीर्णब्रह्मचर्य्योयमिच्छेत्तमावसेदिति ।"

भविष्यपुराणेऽपि,—

"गार्हस्थ्यमिच्छन् भूपाल ! कुर्य्याद्दारपरिग्रहम् ।
ब्रह्मचर्य्येण वा कालं नयेत्सङ्कल्पपूर्वकम् ।
वैखानसो वापि भवेत्-परिव्राडथवेच्छया" ॥ इति ।

तस्माद्रागिविषयत्वेनैव गार्हस्थ्यं व्यवस्थापनीयम् ।

तथा ऋक्वेदे मं १० सू ८५ ऋ ९—

"सोमो वधूरभवदश्विनास्तामुभावरा ।
सूर्य्यां यत्पत्ये शंसंतीं मनसा सविता ददात्" ।

सायनः,—

"पत्ये शंसंतीं पतिं कामयमानां पर्य्याप्तयौवनामित्यर्थः" ।

ऋक्वेदे—मं १० सू ८५ ऋ ३७—

"या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम्" ।

सायनः,—"उशतीं कामयमानां" ।

एतादृक्श्रौतस्मार्त्तपौराणिकप्रमाणानां चक्षुर्गोचरीभूतत्वेऽपि बाहुल्यभियाग्रन्थस्य न सन्निवेशितान्यत्र तानि । प्रावल्येनैतत्प्रमाणवृन्दस्य नैष्ठिक-

ब्रह्मचारिणोरिव साधारणस्त्रीपुरुषाणां प्रतिभाति विवाहस्येच्छाधीनत्वमिति पूर्वपक्षः। मैवं। उपर्य्युक्तविश्वनाथचक्रवर्त्तिकृतविवृतेः पर्य्यालोचनयैव-सत्यपि-संजाते समाधाने बहुदूरानुसरणं न समीचीनमिति निष्कर्षः। यत्तु, प्रोक्तप्रमाण-विसरप्रकाशितैच्छिकत्वरागित्वादिशब्दावलोकनेनैव यद्विवाहस्यैच्छिकत्वमुद्-भावितं तन्मन्दं। अतो जननीजनकावगतिविषयत्वमन्तरा वक्ष्यमाणाष्टविध-विवाहादन्यतमे शास्त्रगर्हिते गान्धर्वविवाहे विवाहपूर्वतः परस्परं कामय-मानयोः कन्यावरयोरेतादृशशब्दव्यवहारस्य सुवचत्वं नान्यत्रेति निर्विवादम्। अन्यथा पूर्वापरासङ्गत्यापत्तेः तथा नैष्ठिकब्रह्मचारिणोरुपयमस्यैच्छिकत्व-कल्पने स्वमतसमर्थनमन्तरा नान्यदिति भावः। तथात्वे यागादीना-मपीच्छामूलकत्वेनापूर्वादिविधिकल्पनाभङ्गापत्तिः विनापीच्छां कार्य्यमात्रेऽपि-प्रवृत्तेरचक्षुर्विषयत्वात्, कर्त्तव्यमेवमकर्त्तव्यमेवमिति कार्य्यसामान्यस्यापि-कामनामूलकत्वाच्च।

अन्यच्च

स्त्रीपुरुषयोः संप्रदाने पित्रादीनामधिकारस्य विद्यमानतया न ताव-द्दम्पतीच्छाधीनत्वं विवाहस्येति सुस्थिरम्। दृढीकरणार्थमेतस्य संयोजितान्यत्र-प्रमाणानि।

यथा याज्ञवल्क्यः,—

"पिता पितामहो भ्राता साकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ।" इत्यादि।

अतो विदितमेतद्यत्, मीमांसकानां विवाहविषयेऽपूर्वनियमान्यतरविधि-मवलम्ब्य सत्यपि मतभेदे लक्षितं न तदीयानां केषामपि मुखतो विवाहस्यो-च्चरितं परिसंख्याविध्यन्तर्गतत्वं। ननु स्वयम्बरावसरे गान्धर्वविवाहस्य-दम्पतीच्छया निष्पन्नत्वेन न कथं भवेत्परिसंख्याविध्यन्तर्भूतत्वं तस्येति-चेत्, न। तत्रापि तयोः संप्रदाने पित्रादीनामधिकारस्य पूर्वतः प्रोक्ततया-ऽपूर्वविधिपूर्वकस्य वा नियमविधिपूर्वकस्य परिसंख्याविधेरन्तर्भूतत्वात् केवल-

परिसंख्याविधेरनन्तर्गतत्वाच्च । अतो विवाहस्यापूर्वनियमान्यतरविध्यन्तर्गतत्वेन केवलपरिसंख्याविध्यन्तर्भूतत्वमप्यस्य दूरमपास्तमिति परामर्शः ।

इति विवाहीयविधिविचारः ॥

विवाहस्य विध्यन्तर्भूतत्वविचाराभ्यन्तरे तस्याष्टविधत्वोल्लेखदर्शनात् कीदृगष्टविधत्वं तस्येति समुत्पन्ने सत्यपि सन्देहे तन्निरसनाय नामतो मन्वादिभिर्धर्मशास्त्रकारैस्तस्य यथाष्टविधत्वमापादितं तदधः प्रकाश्यतेऽत्र ।

यथाह मनुः,

"चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान् ।
अष्टाविमान् समासेन स्त्रीविवाहान् निबोधत ॥"

"चतुर्णामपि वर्णानां ब्राह्मणादीनां परलोके इहलोके च कांश्चित् हितान्-कांश्चिदहितान् इमान् अभिधास्यमानान् अष्टौ संक्षेपेण भार्य्याप्राप्तिहेतून्-विवाहान् शृणुते"ति कुल्लूकभट्टः ।

तथा,—

"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥"

"त एते नामतो निर्दिश्यन्ते ब्राह्म इति ।

ब्राह्मराक्षसादिसंज्ञा चेयं शास्त्रसंव्यवहारार्था स्तुतिनिन्दाप्रकाशनार्था च-ब्राह्मण-इवायं ब्राह्मः । राक्षस इवायं राक्षसः । न तु ब्रह्मादिदेवताकत्वं-विवाहानां सम्भवति । पैशाचस्याधमत्वाभिधानं निन्दातिशयार्थमिति" कुल्लूकभट्टः । निरुक्तविवाहनिवहस्य गुणदोषोल्लेखपूर्वकं धर्म्यगर्ह्यपरिहार्य्यत्वं प्रदर्श्यते शास्त्रकारैर्यद्वर्णस्य, संप्रति निर्दिश्यते तद्विभागशस्तत्तद्वर्णस्य भिन्नतः ।

यथाह मनुः—

"यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ ।
तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् ॥"

"धर्मादनपेतो धर्म्यः । यो विवाहो यस्य वर्णस्य धर्म्यो यस्य विवाहस्य यौ गुणदोषौ इष्टानिष्टफले तद्विवाहोत्पन्नापत्येषु ये गुणास्तत्सर्वं युष्माकं प्रकर्षेणाभिधास्यामि वक्ष्यमाणानुकीर्त्तनमिदं शिष्याणां सुखग्रहणार्थमित्ये"-तद्वृत्तिकारः ।

पुनः स एव—

"षड़ानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥
चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो-विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ॥
पृथक्पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥"

"ब्राह्मणस्य ब्राह्मादिक्रमेण षट् । क्षत्रियस्य अवरान् उपरितनान्-आसुरादींश्चतुरः ।

विट्शूद्रयोस्तु तानेव राक्षसवर्जितानासुरगान्धर्वपैशाचान् धर्मादनपेतान्-जानीयात्" ॥ इति तद्व्याख्यातारः । मानवीययुगप्राग्भावि मतमिदम् ।

तथा,—

"ब्राह्मणस्य प्रथमपठितान् ब्राह्मादींश्चतुरः, क्षत्रियस्य राक्षसमेकमेव । वैश्यशूद्रयोरासुरं एतान् श्रेष्ठान् ज्ञातारो जानन्ति । अतएव ब्राह्मणादि-ष्वासुरादीनां पूर्वविहितानामप्यत्रानुपादानं जघन्यत्वज्ञापनार्थं । तेन-प्रशस्तविवाहासम्भवे जघन्यस्यापि परिग्रह इति दर्शितम् । एवमुत्तरत्रापि-विगर्हितपरित्यागो बोद्धव्यः ।" इति विवृत्या पूर्वेण-साकं सामञ्जस्ये व्याख्यात्रा-प्रतिपादिते सत्यपि न तावन्मन्वभिप्रायोऽयमिति स्पष्टतः प्रतीयते परतो-भागेनैव स्वमतस्य प्रकटीकृतत्वात् । अतो मतान्तरमेतदिति सुस्थिरम् ।

तथाच,—

"इह पैशाचप्रतिषेधादुपरितनानां पञ्चानां प्राजापत्यादीनां ग्रहणम् । तेषु मध्ये प्राजापत्यगान्धर्वराक्षसास्त्रयो धर्मादनपेताः । तत्र प्राजापत्यः-क्षत्रि यादीनामप्राप्तो विधीयते ब्राह्मणस्य विहितत्वादनूद्यते । गान्धर्वस्य च-चतुर्णामेव प्राप्तत्वादनुवादः । राक्षसोऽपि वैश्यशूद्रयोर्विधीयते ब्राह्मणस्य-क्षत्रियवृत्तावस्थितस्यापि आसुरपैशाचौ न कर्त्तव्यौ । कदाचनेत्यविशेषा-च्चतुर्णामेव निषिध्यते । अत्र यं वर्णं प्रति यस्य विवाहस्य विधिनिषेधौ तस्य तं-प्रति विकल्पो न च विहितासम्भवे बोद्धव्यः" । इत्येतद्-व्याख्यातुर्व्याख्यानमिदं-विभिन्नमतव्यूहैक्यावेदकमिति प्रतिभाति मनुवचनेनानेनैतद्भावस्याप्रकाशित-त्वात् । मतान्तरबोधकशब्दानामतासत्त्वेन मतमिदं मन्वनुमोदितमिति निर्णयः । तथा—"पृथक् पृथगिति—प्राप्तत्वादनूद्यते,—मिश्राविति विधीयते । पृथक् पृथक् मिश्रौ वा पूर्वविहितौ गान्धर्वराक्षसौ क्षत्रस्य धर्म्यौ मन्वादिभिः-स्मृतौ । यदा स्त्रीपुंसयोरन्योन्यानुरागपूर्वकसम्वादेन परिणीता युद्धादिना विजित्य तामुद्वहेत्,-तदा गान्धर्वराक्षसौ मिश्रौ भवतः ।"

इति तद्व्याख्यातारः । एतदपि तन्मतान्तभूतम् ।

गुणमन्वरोल्लिखिताष्टविधविवाहस्य विस्तरतः केवलं स्वरूपस्य मनुनोप-वर्णिततया याज्ञवल्क्येनापि सगुणस्य तस्य संक्षेपतो युगपदुद्भावितत्वाच्च-पृथुलाकृतित्वभियाऽस्य ग्रन्थस्यैतद्विषयकमनूक्तवचनजालमपहाय संप्रति तेषां-यथाक्रमं तत्तद्विवाहस्वरूपं विवृत्यते याज्ञवल्क्यवचनोपन्यासेनात्र,—

यथाह याज्ञवल्क्यः,—

"ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥

"स ब्राह्माभिधानो विवाहः यस्मिन् उक्तलक्षणाय अर्थात् ( श्रुतशीलवते ) वराय आहूय यथाशक्त्यलंकृता कन्या दीयते उदकपूर्वकम् । तस्यां जातः-पुत्रः उभयतः पित्रादीन् दश पुत्रादींश्च दश आत्मानं चैकविंशं पुनाति सद्-वृत्तश्चेदि"ति मिताक्षरा ।

तथा,—

"यज्ञस्थ ऋत्विजे दैव आदायार्षस्तु गोद्वयम् ।
चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥"

"स दैवो विवाहः यस्मिन् यज्ञानुष्ठाने वितते । (प्रारब्धे) ऋत्विजे कर्म-कर्त्रे शक्त्यलङ्कृता कन्या दीयते ॥

यत्र पुनर्गोमिथुनमादाय कन्या दीयते स आर्षः । प्रथमजो दैवविवाहजः-चतुर्दश पुनाति सप्तावरान् सप्त परान् । उत्तरज आर्षविवाहजः षट् पुनाति त्रीन् पूर्वान् त्रीन् परान्" । इति विज्ञानेश्वरः ।"

तथाचात्र मनुवचनव्याख्याता कुल्लूकभट्टः । स्त्री-गवी पुंगवश्च गोमिथुनं-तदेकं गोमिथुनं द्वे वा वरात् धर्मार्थं यागसिद्धये कन्यायै वा दातुं न शुल्कबुद्ध्या गृहीत्वा यद् यथाशास्त्रं कन्यादानं स आर्षो विवाहो विधीयत" इति ।

पुनः स एव याज्ञवल्क्यः,—

"इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने ।
स कायः पावयेत्तज्जः षट् षट् वंश्यान् सहात्मना" ॥

"सह धर्मं चरतामिति परिभाष्य कन्यादानं प्राजापत्यः । तज्जः षट्-पूर्वान् षट् परान् आत्मना सहेत्येवं त्रयोदश पुनाति" । इति मिताक्षरायां-विज्ञानेश्वरः ।

तथाच,—स एव,—

"आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ।
राक्षसो युद्धहरणात्-पैशाचः कन्यकाछलात्" ॥

"आसुरः पुनर्द्रविणादानात् । गान्धर्वस्तु परस्परानुरागेण भवति । राक्षसो युद्धेनापहरणात् । पैशाचस्तु कन्यकाछलात् छलेन छद्मना स्वापाद्य-वस्थास्वपहरणात् ॥"

इति योगी विज्ञानेश्वरः ।

तथाचात्र यथाह विशेषतो मनुसंहिताव्याख्यातृकुल्लूकभट्टः,—

"कन्याया ज्ञातिभ्य: पित्रादिभ्य: कन्यायै वा यत् यथाशक्ति धनं दत्त्वा-कन्याया आप्रदानं आदानं स्वीकार: स्वाच्छन्द्यात् स्वेच्छया न त्वार्षे इव-शास्त्रीयधनजातिपरिमाणनियमेन स आसुरो विवाह उच्यते ।"

तथा,—

"कन्याया वरस्य चान्योन्यानुरागेण परस्परसंयोग-आलिङ्गनादिरूप: स-गान्धर्वो ज्ञातव्य: ।

सम्भवत्यस्मादिति सम्भव: स्मात् कन्यावरयोरभिलाषादसौ सम्भवति । अतएव मैथुनाय हित: सर्वविवाहानां मैथुन्यत्वे यदस्य-मैथुन्यत्वाभिधानं-तत् सत्यपि मैथुने न विरोध इति प्रदर्शनार्थं"-, इति ।

तथाच मनुभाष्यकर्त्तुर्मेधातिथेर्गान्धर्वविवाहविषयणी विवृति: ।

यथा—

"इच्छया च वरस्य कुमार्य्याश्च प्रीत्या परस्परसंयोग-एकप्रदेशे संगमनं । तस्येयं निन्दा, मैथुन्य: कामसम्भव: । मिथुनप्रयोजनो मैथुन: तस्मै हितो-मैथुन्य: एष एवार्थो विस्पष्टीकृत: कामसम्भव इति, सम्भवत्यस्मादिति सम्भव:-काम: सम्भवोऽस्येति" ।

अपरं च संक्षेपतो विवाहानामेतेषां प्रभेद: प्रदर्श्यते मेधातिथिना स्वभाष्ये,

यथा,—

"एषां च प्रभेद:, अप्रार्थितोपनतो भूमिहिरण्यादिवद् ब्राह्म: । ऋत्विक्त्वेन-विशेषेण दैव: । गोमिथुनेनार्ष: याञ्चयाऽयाञ्चया वा सहोभौ चरतां धर्म्म-मिति व्यवस्थया प्राजापत्य: । शेषा: सुबोध्या भेदा"-इति । ननु निरुक्ताष्टविध विवाहान्तर्गतगान्धर्वराक्षसपैशाचेषु संस्कारस्याविद्यमानतया विवाहत्वं कथं-संगच्छत एतेषामिति संजातायां शङ्कायां निरस्यते सा मेधातिथिभाष्य-प्रदर्शनेनैव ।

तथा मेधातिथि:,—

"इह गान्धर्वराक्षसपैशाचानां प्रकृतविवाहसामानाधिकरण्यात् संयोग-हरणोपगमा एव पाणिग्रहणसंस्कारनिरपेक्षा विवाहा इति मन्यसे, तेषां ब्राह्मादिष्वपि दानविवाहयो: सामानाधिकरण्यात्-संस्कारो विनिवर्त्तते ।

यथाच न निवर्त्तते तथा दर्शितं, लक्षणया विवाहप्रयोजनदाने विवाहशब्दः॥

गान्धर्वे तु भगवता कृष्णद्वैपायनेन दुष्मन्तशकुन्तलासंगमने वर्णितमनग्निकममन्त्रकमिति। तद्दर्शनेन पाणिग्रहणसंस्कारोऽस्ति वर्जितस्तु पैशाचे। पुनर्विवदन्ते मुख्यस्योपगमनं न तु कन्यात्वमपैति संस्कारैस्तदुविनिवर्त्तनात्।

अतः पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः। इति

प्रतिषेधस्याप्रवृत्तेरस्त्येव मन्त्रवत्-संस्कारसम्बन्धः॥

स च प्रतिषेधः कृतः संस्कारप्रतिषेधार्थः। सा हि मन्त्रैः संस्कृतत्वाद्दग्रपगतकन्याभावे। अतएव भवतु प्रथममुपगमस्ततोऽकन्यादोषो नास्ति। तथाच कानीनः कर्ण इति दर्शनं। यदि तु पुरुषप्रयोगेण कन्यात्वमपेयात्-कथमियं वाचो युक्तिः कन्यायाः पुत्रः कानीनः। इति।

अथ त्वसंस्कृता कन्योच्यते। ततो युक्तं कर्णादयो ह्यनूढायाः पुत्रा इतिमुखेऽभ्युपगमने कन्याया अपत्योत्पत्तेः सम्भवः। वर्ण्यते चेतिहासादिषु-तथाभूताया विवाहः। अथ मद्यमदादिना निर्वृत्तेरिति सम्बन्धं किमर्थः-संस्कार इति। अतोच्यते यद्यपि स्त्रीपुंस्वधर्मौ निवृत्तोऽतिक्रान्तश्च कन्यागमनप्रतिषेधस्तथापि तया सहाधिकारार्थं पुनश्च गमने कन्यागमनं माभूदिति तदर्थं संस्कारकरणं। कन्यागमनप्रतिषेधातिक्रमसम्बन्धेन पुरुषार्थतयाऽपि"। इति।

निरुक्तोपयमीयविषयस्य स्थूलतया सति सप्रमाणजालमुपवर्णितत्वेऽपिविषयस्यैतस्य जाटिल्येन सारमुद्धर्त्तुं तन्मध्यतोऽशक्यतया संक्षेपतः प्रदर्श्यते-तद्विवेचनं सुखसुबोधार्थमत्र। ब्राह्माद्यष्टविधविवाहानाम् "षडानुपूर्व्य-त्यादि" प्रमाणबलाद्विप्रादिवर्णभेदेन दृश्यते यादृग्विभागः। तदनन्तरं "चतुरो ब्राह्मणस्ये"त्यादिवचनसामर्थ्येन यथावर्ण परिलक्ष्यते तत्सङ्कोचः।

पञ्चानां तु त्रयो धर्म्या इति—प्रभृतिप्रमाणशक्तितस्तत्परिवर्त्तनमपिनयनगोचरीभूतं तत्परतः। स्फुटतोऽवबोध्यते, समयानुसारेण समाजादृताचारावलीमवलोक्य लिपिबद्धास्वकुस्तां पूज्यपादा महर्षयः स्वस्वनिर्मितसंहिताग्रन्थेष्विति। नैतदसङ्गतम्।

यतः संसारस्य क्रमोन्नतिवशवर्त्तितया परिवर्त्तनशीलत्वं चाविसंवादिनियम्। अतएवाष्टविधविवाहस्य सति निर्विवादं पूर्व्वतः प्रचलितत्वेऽपि शिक्षायाः क्रमशो विस्तृततयाऽनन्तरभाविसमाजहष्टेर्दोषाधायकत्वेन च तत्परिवर्त्तनार्थिनिवहा रक्षणशीलानां यथाजातार्द्धशिक्षितव्यक्तीनां पूर्वाहृतविवाहनिकरे दृढविश्वासमुपलभ्य मूलतस्तदुत्पाटनमविधाय प्रकारान्तरेण जघन्यत्व-प्रतिपादनपूर्वकं स्वारुचिं प्रकटयामासुः सर्वसमक्षत इत्यनुमिनुमो वयम्। समीक्ष्यतां तावत् कीदृक् विभागानुष्ठानं क्रमशः समयानुगुणम् यथा ब्राह्मावधिराक्षसान्तषड्विधो विवाहो ब्राह्मणस्य; गान्धर्व्वादिपैशाचान्तचतुर्विधो विवाहः क्षत्रियस्य; तथा गान्धर्व्वासुरपैशाचात्मकस्त्रिविधो विवाहो वैश्यशूद्रयोः। केवलं पैशाचोऽन्त्यजादेः। ततस्तेषु दोषदृष्ट्या भूसुरवर्गस्य ब्राह्मादिप्राजापत्यान्तचातुर्विध्यात्मकत्वेन तथा द्वितीयवर्णस्य केवलराक्षसरूपत्वेन तृतीयचतुर्थयोस्त्वासुरात्मकत्वेन च प्रतिपादितं सङ्कुचितत्वं तस्य। जघन्यत्वनिर्द्देशेनान्येषामनुष्ठितः परिहारः। तत्परं ब्राह्मणादिशूद्रान्तजातेः प्राजापत्यादिराक्षसावधिकविवाहत्रितयस्य धर्म्यत्वेनाप्तत्वं पैशाचासुरयोरधर्म्यत्वेन परिहेयत्वं चापादितं स्वस्वग्रन्थतः। अतः सम्भाव्यतेऽत्र यदा यदैव यद्यद्वर्णाभ्यन्तरे यद्यद्विवाहजालमासीत्प्रचलितम्, तदा तदैव तत्तज्जात्यन्तराले समादृतं तत्तदुपयमजातं प्रधानतममिति निर्दिश्यते पूर्वाचार्य्यैः। अन्यथा तत्तन्मतान्तरानुपपत्तेः। परन्तु यथाकालं तद्विनिमयस्य वैदिकधर्मबाधाऽनाधायकतया प्रायशः सर्वतदङ्गीकरणे नासन् कुण्ठिता इति धीः।

अन्यच्च,—

मूलतः प्रधानबीजभूतहिन्दुचक्रवर्त्तिनां विद्यमानतया तत्तद्वर्णान्तरालेतत्तद्विवाहनिकरस्य परिवर्त्तितत्वादिकमवलम्बितुं सर्वे नासन् पराङ्मुखाः। समाजाभ्यन्तरे च गर्हितविवाहानुष्ठानस्य निर्बाधमासीत्परिचलनं तदनुरोधतः। भारते तु क्रमशस्तदाधिपत्यविलोपेन साकं जघन्योपयमाः प्रायशस्तिरोभावमलभन्त समाजतः। प्रकृष्टविवाहाः स्थापयामासुराधिपत्यं मर्दमि। अतएवावशेषे विप्रादिशूद्रान्तवर्णाभ्यन्तरं विवाहत्रयमभवन्नाकूपं निष्प्रत्यूहम्।

तत्राप्यदृश्यत ब्राह्मो विप्रवर्णमध्ये प्राजापत्यः क्षत्रियादिजातौ च ।

साक्ष्यमत्र प्रददति निबन्धारो विद्याकरवाजपेयिनः स्वनिबन्धे ब्राह्मणस्य-केवलदैवविवाहनिरूपणेन ।

यथा नित्याचारपद्धतौ विद्याकरवाजपेयिनः,—

अथ ब्राह्मविवाहलक्षणकथनम्,

"ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता" ।

इति यद्ब्रह्मचारिणे अनर्थिने दानं स ब्राह्मः ।

"अद्भिर्या दीयते कन्या ब्रह्मदेयेति तां विदुः ।
ज्योतिष्टोमातिरात्राणां शतं शतगुणान्वितम् ॥
प्राप्नोति पुरुषान् दत्त्वा होममन्त्रैश्च सत्कृताम् । इत्यादि ।

उपलक्षणमेतत्क्षत्रियजात्यादेः प्राजापत्यविवाहापादने ।

संप्रति तद्द्वयस्य वरकन्ययोः शुल्कदानेनासुरसम्मिलितत्वेऽपि वैदिकधर्म-ज्ञानैरसम्भावनया तन्मिश्रितविवाहद्वयं समाचरन्ति सर्वे हिन्दवो निर्विवादम् ।

तथाच्यजादिषु प्रायशो गान्धर्वासुरपैशाचाः समभिलक्ष्यन्ते सर्वतः ।

न च,—

"न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि ।
गृह्णन् शुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥
स्त्रीधनानि तु यो मोहादुपजीवन्ति बान्धवाः ।
नारी यानानि वस्त्रं वा ते पापा यान्त्यधोगतिम्" ॥

इत्यादि मानवीयवचनस्य, तथा—

"क्रीता द्रव्येण या नारी न सा पत्नी विधीयते ।
शुल्केन ये प्रयच्छन्ति सुतां लोभविमोहिताः ॥
न सा दैवे न सा पैत्रे दासीं तां काश्यपोऽब्रवीत् ।

आत्मविक्रयिणः पापाः महाकिल्विषकारिणः।
पतन्ति नरके घोरे घ्नन्ति चासप्तमं कुलम्॥"

इत्यादिविद्याकरवाजपेयिसङ्कलितनिन्धाचारपद्धत्युद्धृतप्रमाणनिकरस्य च-सामर्थ्यबलात् शुल्कादानपूर्वकविवाहस्यातीव गर्हिततया तदवलम्बनं-पुण्यहान्याधायकत्वेन न शास्त्रसङ्गतमिति वाच्यं, प्रमाणानामेतेषामापद्दि-दृष्टावसरत्वात्।

"प्रदाय शुल्कं कन्याया गच्छेद्दाः स्त्रीधनं तथा।
भार्य्या सा वर्षमेकं तु देयान्यस्मै विधानतः॥"

इति नारदीयवचनेन शुल्कग्रहणस्यानुमोदितत्वात्,

"आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्"।

इति वचनोल्लेखेन मनुनोद्भासितमतान्तरत्वाच्च।

अन्यच्च, विद्वत्सदसि प्रधानप्रधानतरप्रधानतमकोविदमण्डलीनां न्यूना-धिकसम्मानप्रदानवत् विशिष्टश्रोत्रियत्वतारतम्यव्यवस्थया विवाहेऽधुना व्यवहृत-सम्मानरूपद्रव्यादानप्रदानस्य न शुल्कात्मकत्वमिति व्यवस्थापयन्ति शिष्टाः।

यद्यपत्यापद्येतदर्पेक्षया निन्दार्हव्यवहारकरणस्य धर्मशास्त्रकारैरभ्यनुज्ञात-तया नैतद्विवाहप्रचलनस्य दोषापादकत्वमिति प्रेक्षावतां सिद्धान्तः। तथापि विपत्समयस्य जीवनोपायाद्यभावात्मकतया नैतत्कालोपयोगित्व-मस्य सम्भाव्यते। कथमिति चेत् विविच्यते। ननु युक्तिप्रमाणाभ्यां शुल्का-दानस्यापराधानाधायकतया तथैतत्समये शुल्कग्रहणेनार्थस्य सुलभत्वेन-च न कथं तदुपकारकत्वमस्य मङ्गच्छत इति चेन्न, शुल्कादानप्रदानसामर्थ्य-शालिनां धनिकानां तत्काले पुत्रयोः सहजसम्पन्नोपयमत्वात्, तथा-गुणान्वितयावतीयकुमाराणां वसुबलेन स्वायत्तीकरणस्यार्थकुबेराणां सुख-साध्यत्वात्, तथा लोके व्यवहारपरिदर्शनात्, तत्सामर्थ्याभावेन धन-विहीनानां तत्पुत्रदुहित्रोराकुमारब्रह्मचर्य्यसम्भवाच्च। अतो ब्राह्मादि-प्राजापत्यान्तविवाहनिवहस्य विपुलद्रव्यव्ययनिरपेक्षत्वेन विप्रवर्गस्य सुख-सम्पन्नत्वात्तच्चतुष्टयस्य गरिष्ठत्वं तदन्येषां बहुव्ययसाध्यतया जघन्यत्वनिर्देशेन

परिष्टेयत्वं चापादितं मन्वादिभिः पूर्वतः, तथा राक्षसासुरयोः प्रचुरव्यय-साध्यत्वेऽपि धनिकप्रवरस्य क्षत्रियवर्णस्य राक्षसानुष्ठानस्य वैश्यशूद्रयोरासुर-विधानस्य च—साधीयस्त्वं सुसम्पादितं तैरादितः। अतएव शुल्कमन्तरा-विप्रवर्णस्य ब्राह्मप्राजापत्यान्यतरोपयमानुष्ठानं तदितरवर्णानां प्राजापत्या-वलम्बनञ्च शास्त्रानुगतं विपत्समयानुकूलं भवेन्नवेति विभाव्यं सुधीभिः। इति सामान्यतो विवाहस्याष्टविधत्वविचारः।

अथ प्रोक्तोपयमानां बाल्ययुवतीविवाहभेदेन शास्त्रकारैर्व्यवस्थापित-मत्यपि द्वैविध्ये कस्य कीदृशत्वस्य सकलस्योभयस्वरूपत्वस्य वा स्फुटतोऽव्यक्त-तया विविच्य ततः कर्त्तव्यकत्वस्य सर्वस्य वा द्वैविध्यात्मकत्वस्य विचारोद्घाटन-मत्रानुष्ठेयं यथाबुद्धितः।

आदौ तावत् किंस्वरूपो बाल्यविवाह इति संजाते सन्देहे तन्निरसन-मारभ्यते युक्तिप्रमाणनिर्देशमुखेनैव। बालावसरे भवः बाल्यः स चासौ-विवाहश्च बाल्यविवाहः। तस्य स्त्रीपुरुषसापेक्षत्वेऽपि केवलं स्त्रिया बाल्यकाल-माश्रित्यैतद्विवाहस्य विहिततया तन्नामनिर्देशस्य सुवचस्त्वेऽपि तस्य कियद्वर्षा-वधिकत्वनिर्णयस्यावश्यकत्वेनापतिततया धर्मशास्त्रनिर्मातृभिर्निर्द्धारितः पूर्वतो-यः, स एव कालः समर्थ्यते तत्तद्धर्मशास्त्रीयप्रमाणोल्लेखेनैव।

यथा शब्दकल्पद्रुमाभिधेयेऽभिधाने बालशब्दविचारावसरे—बालः स तु-षोड़शवर्षपर्य्यन्तः प्रथमवयस्कः।

तथाच स्मृतिः—

"आषोड़शाद्भवेद्बालस्तरुणस्तत उच्यते।
वृद्धः स्यात्सप्ततेरूर्द्धं वर्षीयान् नवतेः परम्"॥ इति।

तथा कालिदासः—

"आषोड़शात्-भवेद्बाला तरुणी त्रिंशता मता।
पञ्चपञ्चाशतः-प्रौढ़ा वृद्धा भवति तत्परम्"॥

इत्यादि प्रमाणव्रातो बाल्यविवाहसमयस्य षोड़शवर्षावधिकत्वेऽपि तावद्-वर्षसीमात्मकतया महर्षिभिर्नाद्रियतेऽयं विवाहः। कुत इति चेदुच्यते-

परतः। यथैतद्भारतवर्षस्य ग्रीष्मप्रधानस्थानात्मकत्वेन जन्मत आरभ्य दशम-सम्वत्सरात् पञ्चान्तरे वा गर्भैकादशवर्षात्परं कन्याया रजोदर्शनसम्भावनया-जन्मतः सप्तमाब्दाद्येकादशवर्षान्तराले बालिकाया गौरीरोहिणीकन्यात्वात्मकोपाधित्रयप्रदानप्रदर्शनेनैव तत्समयं त्रिधा विभज्य तद्विभागत्रयस्य पुण्याधिक्यजनकत्वतारतम्येन यथाक्रमं प्रधानतमप्रधानतरप्रधानत्वात्मकमुख्यगौणत्व-व्यवस्थया गर्भद्वादशवर्षावधिकत्वं व्यवस्थापितमस्य विवाहस्य मन्वन्तरभाविभिः-मुनिभिः कतिपयैः पूज्यपादैः। अतो बाल्यकालात्मकत्वेनाभिमतषोड़शवर्षाभ्यन्तरे प्रसिद्धत्वेन निरुक्तविभागत्रितयस्य परिगणितत्वेऽपि यस्याः कन्यायाः-षोड़शाब्दपर्य्यन्तं परिदृश्यतेऽरजस्कत्वं, तस्या विवाहम् बाल्यविवाहस्वरूपत्वेनाप्यनुमोद्यते पूर्वाचार्य्यैः॥ एष सिद्धान्तः क्रोड़ीक्रियते निम्नस्थप्रमाणजालैः।

यथा, गदाधरपद्धतौ कालसारे,—

"शतानन्दः—

"गर्भादष्टमवर्षे तु दशमे द्वादशेऽपि वा।
कन्यापरिणयः शस्त इति बाल्यादिसम्मतम्"॥

तथा सम्वर्त्तः,—

"विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः"।

गर्भादिति सर्वत्रान्वयः।

अन्यथा,

"कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत्।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम्"॥

इत्यादियमादीनां तु जन्मावधिद्वादशवर्षे विवाहे निन्दावचनमनर्थकं-स्यात्। अतएव जन्मावधिसप्तमवर्षे गौरीत्वमाह कश्यपः,—

"सप्तवर्षा भवेद्‌-गौरी दशवर्षा तु कन्यका।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते"॥

भविष्येऽपि ;—

"सप्तवर्षा भवेद्-गौरी दशवर्षा तु नग्निका ।
द्वादशे तु भवेत्-कन्या अत ऊर्द्ध्वं रजस्वला" ॥

सप्तमवर्षस्य गर्भाष्टमत्वादिति कल्पतरुकाराः ।

अत-आह कश्यपः,—

'अष्टवर्षा भवेद्-गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्-कन्या अत ऊर्द्ध्वं रजस्वला' ॥

तथाच, मासद्वयाधिकषड्वर्षानन्तरं स्त्रीणां विवाहकाल इत्यर्थः । तस्मिन्नेव वर्षे कन्याया गौरीत्वमिति च सिद्धं । एवं स्त्रीणां जन्मावध्येकादशवर्षमभिव्याप्य विवाहकालस्य परमावधिरित्युक्तं भवति" ॥

तथा, निर्णयसिन्धौ ज्योतिर्निबन्धीयप्रमाणम्,—

यथा,—

"षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।
सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः" ॥ इति ।

पराशरमाधवीये—

"जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् ।
कुमारी वरणं दानं मेखलाबन्धनं तथा" ॥ इति ।

महाभारते ; ।—

"त्रिंशद्वर्षः षोड़शाब्दां भार्य्यां विन्देत नग्निकाम् ।
द्वाष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥
अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत्" ।

पुनस्तत्रैव ।

"सप्तसंवत्सरादूर्द्ध्वं विवाहः सार्ववर्णिकः ।
कन्यायाः शस्यते राजन्नान्यथा धर्मगर्हितः" ॥ इति ।

यद्यपि "विवाहस्त्वष्टवर्षाया: कन्याया: शस्यते बुधैः", इति सम्वर्त्तोक्तेः, अत ऊर्द्ध्वं रजस्वला इत्यादेश्च दशवर्षादूर्द्ध्वं विवाहो निषिद्धः, तथापि दातुरभावे-द्वादशषोड़शाब्दे ज्ञेये ।

"त्रीणि वर्षाण्यृतुमती कांक्षेत पितृशासनम्" । इति ।

पराशरमाधवीये वौधायनोक्तेः" ।

नग्निकां अनृतुमतीं । नग्निकालक्षणं तु गृह्यसंग्रहे,—

"नग्निकां तु वहेत्कन्या यावन्नर्त्तुमती भवेत्" ।

ऋतुमती त्वनग्निका । तां प्रयच्छेत्तु नग्निकां ।

"अप्राप्तरजसो गौरी प्राप्ते रजसि रोहिणी ।

अव्यञ्जिता भवेत्कन्या कुचहीना च नग्निका" ॥ इति ।

तथा रजोदर्शनात् प्रागेव विवाहकारणमुक्तं तत्रैव ।

यथा—

"व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।

पयोधरैस्तु गन्धर्वो रजसाऽग्निः प्रकीर्त्तितः ॥

तस्मादव्यञ्जनोपेता अरजा अपयोधरा ।

अभुक्ता चैव सोमाद्यैः कन्यका तु प्रशस्यते । इति" ॥

रघुनन्दनीयोद्वाहतत्त्वे,—

अङ्गिराः,—

"अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।

दशमे कन्यका प्रोक्ता अत-ऊर्द्ध्वं रजस्वला ॥

तस्मात्-सम्वत्सरे प्राप्ते दशमे कन्यका बुधैः ।

प्रदातव्या प्रयत्नेन न दोषः कालदोषतः" ॥

यमः,—

"कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत्।
ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम्" ॥

महाभारते,—

"त्रिंशद्वर्षः षोड़शवर्षां भार्य्यां विन्देत नग्निकाम्।

---

अतोऽप्रवृत्ते रजसि कन्यां दद्यात्-पिता सकृत्।
महादोषः स्पृशेदेनमन्यथैष विधिः सताम् ॥"

नग्निका अन्तर्गतार्त्तवा। अन्यथा प्रवृत्ते रजसि अत्रिकश्यपौ,—

"पितुर्गेहे च या कन्या रजः पश्यत्यसंस्कृता।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता"॥ इत्यादि।

अतएव गुणवतेऽष्टवर्षन्यूनादेरित्याह मनुः,—

"उत्कृष्टायाभिरूपाय वराय सदृशाय च।
अप्राप्तामपि तां कन्यां तस्मै देया यथाविधि ॥"

अप्राप्तविवाहप्रशस्तकालां। स्मृतिः;—

"सप्तसम्वत्सरादूर्द्ध्वं विवाहः सार्व्ववर्णिकः"।

इत्यादियुक्तिप्रमाणवशतो-निरुक्तभारतीयविभिन्नप्रादेशिकनिबन्धकर्त्तॄणां-बाल्यविवाहव्यवस्थापने ऋतुसम्भावनया द्वादशवर्षीयकन्याविवाहनिराकरणे च-प्रायशोऽवगम्यते मतविरोधराहित्यं। किन्तु तत्तन्निबन्धोत्तोलितप्रमाण-सन्दोहपर्य्यालोचनया यथा खण्ड्यते तन्निराकरणं, वक्ष्यते हि तदग्रतः,—

सम्प्रति मानवीययुगे साधारणतो-विवाहस्यासीत्कीदृगादरो-भवेत्त-द्विवेचनमेतदुत्तरतः। न तावन्मनुनापि युवती-बाल्योपयमस्य समुल्लास्यते-पार्थक्यं; किन्तु यत्कर्त्तृकवेदाध्ययनसमाप्तेरभिलक्ष्यते यस्य जन्मतो यावद्-वर्षवयस्कत्वापेक्षित्वं, तस्य त्रिधाविभक्ततत्समयैकांशपरिमितवयस्कया कन्यया

माकं व्यवस्थापितं तैर्विवाहानुष्ठानमेव। नैतावता प्रतिपादितमेतावद्वयस्क-स्त्रीपुरुषयोर्नियमितत्वं, कुत्र कुत्र प्रमाणे तदन्यथाचरणोद्भावनस्य चक्षुर्विषयत्वात्। नैतत्स्वकपोलकल्पितं, किन्तु मानवीयप्रमाणैस्तत्प्रस्ताविमहर्षिसूक्त-वचनव्रातैश्च कक्षीकृतमेतदेव।

यथाह मनुः—

"षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतं।
तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा॥"

इति। "पूर्वचासमाप्तेः शरीरस्येत्यनेन नैष्ठिकब्रह्मचर्य्यमुक्तं, अतस्तस्यैव-गार्हस्थ्यानधिकारः। तत्र कियदवधिविधौ ब्रह्मचर्य्यं तस्य गार्हस्थ्यमित्य-पेक्षायामाह;—षट्त्रिंशदाब्दिकमिति। त्रयो वेदाः ऋग्यजुःसामाख्याः तेषां-समाहारस्त्रीवेदी तद्विषयं व्रतं स्वगृह्योक्तनियमसमूहरूपं, षट्त्रिंशद्वर्ष-यावद्गुरुकुले चरितव्यम्॥ षट्त्रिंशदाब्दिकमिति षट्त्रिंशदब्दशब्दात् काला-ट्ठञ्। अस्मिंश्च पक्षे समं स्यादश्रुतत्वादिति न्यायेन प्रतिवेदशाखां द्वादशवर्षाणि-व्रताचरणं। तदर्धिकमष्टादशवर्षाणि तत्र प्रतिवेदशाखां षट्पादिकं नव-वर्षाणि तत्र प्रतिवेदशाखां त्रीणि, यावता कालेनोक्तावधेरूर्द्धमधो वा वेदान्-गृह्णाति तावत्कालं वा व्रताचरणं, विषमशिष्टत्वेऽपि पक्षाणामेका देया तिस्रो-देयाः षट् देया इति वत् नियमफले न्यूनाधिकापेक्षो विकल्पः। तथा च, श्रुतिः "नियमेनाधीतं वीर्य्यवत्तरं भवतीति"। ग्रहणान्तिकपक्षसंदर्शनात् पूर्वोक्तपक्षत्रये ग्रहणादूर्द्धमपि व्रतानुष्ठानमवगम्यते। इति कुल्लूकभट्टः।

तथा,—

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं।
अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममावसेत्"॥

वेदानधीत्येति—

"वेदशब्दोऽयं भिन्नवेदशाखापरः। स्वशाखाध्ययनपूर्वकवेदशाखात्रयं। द्वयमेकां वा शाखां मन्त्रब्राह्मणक्रमेणाधीत्य गृहस्थाश्रमं गृहस्थविहितकर्म-कलापरूपमनुतिष्ठेत् कृतदारपरिग्रहो गृहस्थः।

गृहशब्दस्य दारवचनत्वात् । अविप्लुतब्रह्मचर्य्य इति पूर्वविहितस्त्री-संयोगमधुमांसभक्ष्यवर्जनरूपब्रह्मचर्य्यानुवादोऽयं प्रकृष्टाध्ययनाङ्गत्वख्यापनार्थः । पुरुषशक्त्यपेक्षयायमेकद्वित्रिशाखाध्ययनविकल्पः" । इति

तथा च स एव,—

"त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
अष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः" ॥

"सत्वरः गृहस्थाश्रमे त्वरायुक्तः सन्नित्यर्थ"। इति गदाधरः ।

तथा कुल्लूकभट्टः ; त्रिंशदिति,—

"त्रिंशद्वर्षः पुमान् द्वादशवर्षवयस्कां मनोहारिणीं कन्यामुद्वहेत् ; चतुर्विंशतिवर्षोऽष्टवर्षां गार्हस्थ्यधर्मे ऽवसादं गच्छति त्वरावान् । एतच्च योग्य-कालप्रदर्शनपरं न तु नियमार्थं प्रायेणैतावता कालेन गृहीतवेदो भवति-त्रिभागवयस्का च कन्या वोढुर्यूनो योग्येति । गृहीतवेदश्चोपकुर्वाणको-गृहस्थाश्रमं प्रति न विलम्बेतेति सत्वर-इत्यर्थः" । इति । तथाच मेधा-तिथिरपि,- इयता कालेन यवीयसी कन्या वोढव्या न पुनरेतावद्वयस-एव विवाह इत्युपदेशार्थं इति ॥"

तथा, चतुर्विंशतिसंग्रहे—

वृहस्पतिः —

"त्रिंशद्वर्षो दशाब्दां तु भार्य्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयादिति" ॥

चतुर्विंशतिमतसंग्रहप्रभृतीनामन्येषां भारतीयनिबन्धग्रन्थानां बाल्यविवाह-विवेकस्योद्धृतप्रशस्तगदाधरपद्धत्यादिनिबन्धद्वयोल्लिखिततद्विवाहविचारेण साम्य-प्रायशस्तुल्यत्वादेतद्ग्रन्थाकारवृद्धिभिया नोत्तोलितानि तत्तद्विवेचनान्यत्र ।

अपिच,—

निरुक्तप्रमाणसन्दोहानां तथा तत्तद्व्याख्यातॄणां निबन्धकर्तॄणां च विहृतेः पर्य्यालोचनयाऽवगम्यते स्त्रीपुरुषयोर्मुख्यगौणत्वव्यवस्थया विवाहयोग्यकाल-

विभागस्य सति बहुविधत्वेऽपि यथाक्रमं तत्तद्योग्यसप्तमषोड़शाब्दात्मक-कालस्य तथा स्त्रिया बाल्यपरिणयपरमावधिकत्वं द्वादशसम्वत्सरस्य, सत्य-रजस्कत्वे षोड़शवर्षावधिकत्वं, तथा पुरुषस्य यावत्परिमितवयस्कत्वस्य-सति त्रिविभक्तत्वे तद्विभागैकनियमितवयस्कत्वस्य कन्यायाः प्रमाणान्तरेणा-न्यथा प्रतिपादितत्वात्तस्यानियमितत्वं चेति ।

यत्तु,—

"कन्याद्वादशवर्षाणीति" द्वादशवर्षविहितकन्याविवाहनिन्दापादकयमीय वचनस्य जागरूकत्वेन तथा तदनुगतस्वस्वदेशीयव्यवहारविरोधसम्भावनया-च "गर्भादष्टमवर्षेऽपीत्यारभ्य सप्तवर्षा भवेद्गौरीत्यन्तगादाधरिकालसारोक्तो लितप्रमाणनिकराणां सत्यन्यान्यविरोधित्वेऽपि सर्वत्र गर्भादितिपदस्यान्वय-विधानेनैवैकवाक्यतां प्रतिपाद्य व्यवस्थापितमेकादशाब्दावधिकत्वं बाल्यविवाहे । तत्तु न प्रतिभाति समीचीनमिति ॥ विभिन्नप्रदेशवास्तव्यानां ग्रन्थ-रचयितॄणां तत्तद्देशीयव्यवहारदृष्ट्या विरचितप्रमाणव्यूहानामेकवाक्यताकरणस्य-पण्डश्रमविषयकत्वात् । प्रोक्तकमलाकरीयपरामर्शतो निरुक्तयमीयवचनस्य-द्वादशवर्षीययुवतिविवाहविषयतया बाल्यविवाहानुपयोगित्वात्, गर्भद्वादश-वर्षस्य कन्याया मासद्वयाधिकैकादशसम्वत्सरात्मकतया, जन्मत एकादशाब्द-परमावधिकत्वोल्लेखनस्यानवगताभिप्रायकत्वात्, तद्भिन्ननिबन्धेषु विवरणस्यै-तादृशस्यानवलोकितत्वात् । तथा प्रोक्तप्रत्येकवचनेषु कन्याया रोहिणीत्वे-कन्यात्वेऽरजस्कत्वे च विभिन्नवर्षस्योल्लेखदर्शनेन परस्परप्रमाणविरोधदर्शनाच्च । अतस्त्रिंशद्वर्ष-इत्यादि-मानवीयवचनोद्धासित -द्वादशवार्षिकीतिशब्दस्य गर्भ-द्वादशवर्षवयस्कामिति विवृतिः कस्यामपि तद्व्याख्यायामचक्षुर्विषयतया-बाल्यविवाहस्य गौणत्वेन जन्मतो द्वादशवर्षावधिकत्वं कुत्र कुत्र वा नग्निकात्वेन-कन्यायाः षोड़शाब्दा-वधिकत्वं व्यवस्थापितं पूर्वाचार्य्यैरिति गाढान्तः । वीरमित्रोदयोद्धृतमहाभारतीयप्रमाणं, यथा,—

"त्रिंशद्वर्षः षोड़शवर्षां भार्य्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा स पूर्वषामवाप्नुयात् ॥"

नग्निकाऽनागतार्त्तवा । पूर्वेषां, लोकमिति शेषः । वर्षैकगुणामारभ्य-पूर्वेषामवाप्नुयादित्यन्तप्रमाणेभ्य उन्नाय्यतेऽयमर्थो ग्रन्थकृता, यथा "अत्रायं-समुदायार्थः । अष्टवर्षान्ता कन्या त्रिगुणवयसा विवाह्या । अष्टवर्षामारभ्य-द्वादशवर्षपर्य्यन्ता तत्सार्द्धद्विगुणवयसा विवाह्या । द्वादशवर्षामारभ्य षोड़श-वर्षपर्य्यन्ता तदष्टमांशन्यूनद्विगुणवयसा विवाह्या ।

अनाश्रमित्यादिना "धर्मे सीदति सत्वरः" इत्युक्तप्रमाणान्यूनवयस्कोऽपि न्यूनवयस्कामुद्वहेत् । अन्ये पुनरुक्तपरिमाणान्यूनपरिमाणो न्यूनपरिमाणा-मुद्वहन् धर्मे सीदति, धर्मातिक्रमकारी भवतीत्याहुः । इत्यनेन मतभेद-परिदर्शनाद्यथादेशकालपात्रं वैद्यशास्त्रानुगता विवाहसमयव्यवस्था विधेयेति निष्प्रत्यूहम् ।

तथा तत्रैवाश्वलायनः—

"ऊर्द्धं दशाब्दा या कन्या प्राग्रजोदर्शनात्तु सा ।
गान्धारी स्यात्समुद्वाह्या चिरं जीवितुमिच्छता ॥"

इत्यादि बहुप्रमाणेषु सत्स्वपि विद्यमानेषु ग्रन्थाकारस्थौल्यभिया नोद्धृता-न्येव तानि ॥

नच मनोस्तत्पश्चाज्ञाविभिर्मुनिभिः सार्द्धं मतैक्यं न प्रतिभातमत्रेति वाच्यं, विभागशो विवाहद्वितयस्य स्फुटतोऽप्रकाशितत्वेऽपि 'अष्टवर्षां द्वादश-वार्षिकी"मिति शब्दद्वयस्योपात्तत्वेनैव यथाक्रमं द्विविधविवाहस्य प्रकारान्त-रेण व्यक्तीकृतत्वात् । तदनन्तरभाविमहर्षिभिस्तदीयाभिप्रायस्य स्फुटतः-प्रकटीकृतत्वाच्च । अन्यथैतच्छब्दद्वयोपादानस्य नैरर्थक्यापत्तेः । नन्वेता-दृशाल्पवयस्कया कन्यया साकं महर्षिभिर्व्यवस्थापितं विवाहानुष्ठानमतीव-निष्प्रयोजनमिति चेन्न । बाल्यतः पातिव्रत्यशिक्षादानस्य प्रयोजनरूपत्वात् । "यन्नवे भाजने लग्न" इत्यादि प्रमाणलिङ्गेन बाल्यकालीनशिक्षायामामरणान्त-मपि विस्मरणायोगात्सत्यपि सतीत्वे युवत्यां सन्देहकरणस्याच स्वभावसिद्धत्वा-च्च । न चेतद्विवाहेऽधुनातनसमयवत् प्राचीनकालाभ्यन्तरे नारीणां विशेषतो-वैधव्यस्यावश्यसम्भवत्वात्कथं नासीत्तदनुष्ठानमसङ्गतं पूर्वत इति वाच्यम् ।

वेदाध्ययनावसरे बाल्यावस्थातो बहुसम्वत्सरं ब्रह्मचर्य्यावलम्बनस्य क्लेशसहन-शीलत्वस्य च सत्त्वात्, वेदाध्ययनसमाप्त्यनन्तरसमयात्मकेऽन्यान्यकाला-पेक्षयाऽतिन्यूने गौणभूते प्रोक्तमहाभारतीयवचनप्रतिपादितषोड़शाब्देऽष्टम-वर्षीयया कन्यकया साकं सत्यपि विवाहे स्त्रीपुरुषसङ्गमनस्य पुंसो विंशति-वर्षानन्तरभावित्वात्, पाशवव्रत्तिपरायणाधुनातनस्त्रीपुरुषनिरन्तरसंसर्गवहृतु-समयगमनमन्तरा सार्वकालिकसहवासस्य तदानीमव्यवहृतत्वात्, तदुत्पन्नापत्य-स्यायुर्वेदसम्मतचिरजीवित्वाच्च । अतोऽयथासमयोपयमे वैधव्यप्राचुर्य्यासम्भवेन-तदा तत्करणं नासङ्गतमिति निष्कर्षः ।

अन्यच्च अवसरेऽस्मिन् बाल्यतो ब्रह्मचर्य्याभावेन पुरुषवर्षापेक्षया प्रायशो-ऽत्यल्पदिवसन्यूनवयस्कया कन्यकया सह संजातोपयमत्वेन, तथा स्त्रीसंसर्गस्य-सार्वकालिकत्वेन तथा मानवानां समुद्भूतपाशवव्रत्तित्वेन च,—

तथा—

"ऊनषोड़शवर्षायामप्राप्तः पञ्चविंशतिम् ।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः ।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्" ॥ इति ।

सुश्रुतीयवचनप्रमाणलिङ्गात् द्वादशसम्बत्सरादधिके षोड़शाब्दान्यूनेऽवसरे-समुत्पन्नस्त्रीसंसर्गत्वेन तत्संजातसन्ततेर्निर्द्धारिताल्पायुस्त्वाच्च, तत्परिणये-वैधव्यबाहुल्यमिदानीं सुसमीचीनमेव ।

अत आपदि एवं च वदता आपद्गतस्य परधर्माश्रयणाद्द्विगुणमपि-स्वधर्मानुष्ठानमेव मुख्य"मिति दर्शितं भवति,

तथाच मनुः,—

"वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः" । इत्यादि—

विज्ञानेश्वरव्याख्याने ।

तथा—

"मुख्यकाले यदावश्यं कर्म कर्त्तुं न शक्यते ।
गौणकालेऽपि तत्कार्य्यं गौणोऽप्येतादृशो मतः" ॥

इति मण्डनाचार्य्योक्तप्रमाणेन च गौणपक्षावलम्बनस्याभ्यनुज्ञाततया-बाल्यविवाहीयबहुविधपक्षाभ्यन्तरे निरुक्तप्रमाणैः, "अथाऽस्मै पञ्चविंशति-वर्षाय द्वादशवर्षां पत्नीमावहेदि"ति सुश्रुतोक्तप्रमाणलिङ्गेन तथा "उदीर्ष्वातः-पतिमनती ह्येषा विश्वावसुं मनसा गीर्भिरीले । अन्यामिच्छ पितृषदं व्यक्तां स-ते भागो जनुषा तस्य विद्धि" । इत्यृग्वेदीयदशममण्डलोक्तैकविंशत्यृक्प्रका-शितव्यक्तेतिपदस्य व्यक्तविवाहलक्षणार्थत्वेनानुमितासन्नयौवनया कन्यकया-साकं विवाहस्य वेदप्रतिपादितत्वात्तथा द्वादशवर्षमन्तरा कन्याया आसन्न-यौवनत्वासम्भवाच्च जन्मतः परमावधिकत्वेनाभिमतस्य गौणरूपस्य कन्याया-द्वादशवर्षीयपक्षस्य तथा विवाहे प्रोक्तवचनव्रातबलेन पुरुषवयसो न्यूनाधिक-व्यवस्थया सत्यनेकशो विभक्तत्वेऽपि संप्रति वेदाध्ययनस्य लुप्तप्रायतया तद्भिन्ने-तत्कालीनसकलविद्यापठनस्य प्रायशो विंशतिचतुर्विंशत्यब्दयोरन्तराले समाप्ते-र्दृष्टिगोचरत्वेनोपयमे पुंसः प्रोक्तबृहस्पतिसुश्रुतवचनानुमोदितस्य विंशादि-पञ्चविंशाब्दान्तावसरस्येदानीमुपकारकत्वं मुख्यत्वं चेत्यवधेयम् । रीत्यानयानु-ष्ठिते बाल्यविवाहे न तावत्सम्भवेन्नारीवैधव्यप्राचुर्य्यमित्यनुमीयतेऽस्माभिः ।

ननु सप्तमवर्षीयया सार्द्धमेकविंशतिवर्षीयपुरुषस्य निरुक्तबृहस्पतिवचनेन-नियमितोपयमत्वात्तथा साकं द्वादशवर्षवयस्कया पञ्चविंशतिवर्षीयपुंसः सन्नि-यमितपरिणयत्वाच्च कथं सङ्गच्छते द्वादशवर्षीयकन्यकया निर्द्धारितप्रोक्तवर्ष-वयस्कपुरुषस्योपयम इति चेन्न, पुंसो वेदाध्ययनसमाप्त्यवधिकयावत्सम्वत्सर-वयस्कत्वस्य विवाहे शास्त्रसम्मतत्वात्तथा "त्रिंशद्वर्षो वहेत्कन्या"मिति मानवीय-वचनव्याख्यावसरे त्रिंशद्वर्षः पुमान् दशवर्षवयस्कां मनोहारिणीं कन्यामु-द्वहेत् । चतुर्विंशतिवर्षो वा अष्टवर्षां गार्हस्थ्यधर्मेऽवसादं गच्छति त्वरावान्-एतच्च योग्यकालदर्शनपरं न तु नियमार्थं प्रायेणैतावता कालेन गृहीतवेदो-भवतीत्येतच्च"दित्युक्तिद्वारा कुल्लूकभट्टेनोपयमे वर्षबोधकनिरुक्तवचनजातस्य-

प्रतिपादितनियमाविषयत्वाच्च। अतएव प्रायशो विंशपञ्चविंशाब्दयोरभ्यन्तरेऽधुनातनविद्याध्ययनसमाप्तिसम्भावनयाऽपयस्यां विवाहे गौणसमयनिर्द्धारणं शास्त्रानुमोदिततया सुसङ्गतमेवेति राद्धान्तः।

अपिच,—

ननु गौणपक्षाश्रयणापेक्षया पूर्वोद्दिष्टब्रह्मचर्य्यावलम्बनस्य श्रेयःसाधकतयैतद्गौणपक्षापेक्षणं भवेन्न शुभाधायकमिति चेन्न, बहुसम्वत्सरतो विस्मृतब्रह्मचर्य्यानुष्ठानस्य प्रायशो हिन्दुसमाजस्य समयेऽस्मिन् ब्रह्मचर्य्यावलम्बनस्य दुःसाध्यत्वात्, निम्नाभिमुखसरित्स्रोतःप्रत्यावर्त्तनस्येव हिन्दुचक्रवर्त्तिनोऽभावतया निरङ्कुशप्रचलितलोकव्यवहारपरिवर्त्तनस्याशक्यत्वात्। तथेदानीन्तनसार्व्वभौमकर्त्तृकशासनभीतेः कथञ्चिदुपरि केषामपि प्रभुत्वाभावेन सर्व्वेषामुच्छासितस्वाधीनत्वाच्च। अतएवापत्कालोपस्थितिसम्भावनया वैदिकधर्म्मप्रतिपन्थिगौणधर्म्मावलम्बनस्य त्रिकालविज्ञैर्महर्षिभिरभ्यनुज्ञाततया "यत्र एकत्र निर्णीतः शास्त्रार्थः बाधकं विनाऽन्यत्राप्युपकुरुते" इति न्यायात् "आकाङ्क्षायामतुल्यत्वाच्च" विवाहे वरकन्ययोः साधीयो गौणकालाश्रयणमेतत्कालोपकारकश्रेयःसम्पादन इति निर्गलितार्थः।

किन्त्वत्र गौणकालावलम्बनस्य बहुश उद्दिष्टतयाऽवगन्तुं तत्स्वरूपं सत्यामाकाङ्क्षायामारभ्यते प्रसंगात्मकत्वेन तद्विचारः। "प्रसङ्गस्तु अन्योद्देशेन प्रवृत्तावन्यस्य सिद्धिः प्रसङ्गः"। इत्यनेन सत्यामपि विवाहविवेचनप्रवृत्तौ गौणत्वरूपज्ञानसिद्धेः प्रसङ्गात्मकत्वेनेत्युक्तम्। अत्रैकस्य मुख्यत्वे सत्यन्यस्य गौणत्वसिद्ध्या "मुख्याभावे गौणस्योपादेयत्व" मिति न्यायाद्गौणत्वमादृतं शास्त्रकारैः। गौणत्वं च मुख्यकालकर्त्तव्यकर्म्मकरणयोग्यकालान्तरत्वम्। तच्च "यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत्। गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि"। यद्वेति पक्षान्तरं। प्राक्तनकार्य्ये मध्यकालवत् आगामिक्रियाया मुख्यकालस्यापि गौणकालत्वम्। "तेन सायंसन्ध्याया रात्रिः प्रातःसन्ध्याकालश्च गौणकाल इति" हरिहरपरतन्त्रधृतवचनेन; तथा "स्वकालादुत्तरो गौणः कालो यस्य च कर्म्मणः"। इति छन्दोगेन "मुख्याभावे प्रतिनिधि"रिति जैमिनीयसूत्रेण च समर्थितम्। अतएवावमरे गौणकालादरे न कापि-

वतिर्मौलिकधर्मस्येति प्रेक्षावतां परामर्शः। एतदवलम्ब्य परतो विधेयं-समाधानम् ।

ननु कन्याया गौणकालात्मकस्य द्वादशसम्वत्सरस्यापदि केवलं बाल्यविवाह-योग्यत्वेन सत्यपि सुस्थिरत्वे "रविगुरुशुद्धिर्व्रते विवाहे चे"ति ज्योतिःशास्त्र-वचनबलाद्ब्राह्मणादिजातौ कन्यायाः सर्वविधविवाहे रविगुरुशुद्धेः समादृत-तया तदभावे तत्र कथमुपयम इति चेन्न, सत्यपि तदभावे तदवसरे विवाहानुष्ठानस्याचार्य्यादीष्टत्वात्, तथा सत्यामपि तच्छुद्धौ तत्कालस्य-विरहितविवाहास्पदत्वात् ; निम्नलिखितधर्मशास्त्रीयप्रमाणानामेतद्युक्त्यनु-कूलत्वाच्च ।

प्रमाणान्याह ज्योतिर्निबन्धे गर्गः,—

"स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् ।
तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण भाषितम् ॥
सर्वत्रापि शुभं दद्याद्द्वादशाब्दात्-परं गुरुः ।
पञ्चषष्ठाब्दयोरेव शुभगोचरता मता ॥
सप्तमात् पञ्चवर्षेषु स्वोच्चस्वर्क्षगतो यदि ।
अशुभोऽपि शुभं दद्याच्छुभर्क्षेषु किं पुनः ॥
रजस्वलायाः कन्याया गुरुशुद्धिं न चिन्तयेत् ।
अर्कगुर्वोर्बलं गौर्य्या रोहिण्यर्कबला स्मृता ॥
कन्या चन्द्रबला प्रोक्ता वृषली लग्नतो बला" ।

तथाच भुजबलभीमे,—

"ग्रहशुद्धिमब्दशुद्धिं शुद्धिमासायनर्त्तुदिवसानाम् ।
अर्वाक्दशवर्षेभ्यो मुनयः कथयन्ति कन्यकानाम्" ॥

दशवर्षाभ्यन्तरे शुद्धौ ग्रहाब्दादीनां विशेषोपादानात्तदूर्द्ध्वं तावन्मात्रा-नियमः ।

तथा राजमार्त्तण्डे,—

"राजग्रस्ते तथा युद्धे पितृणां प्राणसंशये ।
अतिप्रौढ़ा च या कन्या नानुकूल्यं प्रतीक्षते ॥
अतिवृद्धा च या कन्या कुलधर्मविरोधिनी ।
अविशुद्धापि सा देया चन्द्रलग्नबलेन तु" ॥

इत्यादिप्रमाणव्रातैरष्टमादिदशमाब्दयोरन्तराले बाल्यविवाहे प्रतिपादितरव्यादिशुद्धितया तत्सम्वत्सरातिरिक्तवर्षे नग्निकात्वसम्भावनया केवलचन्द्रलग्नशुद्ध्या तत्करणस्याभ्यनुज्ञातत्वेन रव्यादिशुद्धेर्विद्यमानत्वे तदनुष्ठानस्यानिषिद्धतया सत्यामप्यत्र सर्वविधशुद्धौ तत्करणं न दोषाधायकमिति निष्कर्षः। न च बाल्यविवाहे नग्निकायाः कन्याया द्वादशवर्षवयस्कत्वस्य सत्यपि नियमितत्वे तत्सम्वत्सरे तन्मूनावसरे सम्भवति रजस्वलत्वेऽस्याः पित्रादीनां निरयपतनापराधस्य शास्त्रकारैर्निर्णीततया द्वादशवर्षनियमनं न धर्मशास्त्रानुमोदनविषयकमिति वाच्यम् । पूज्यपादैर्महर्षिभिरापदि गौणानुष्ठानस्याभ्यनुज्ञाततया वक्ष्यमाणयुवतीविवाहविधिना तद्विधानस्य धर्मशास्त्रानुमोदनविषयत्वात् ।

अथ युवतीविवाहविचारः,—

सत्यपि परिणयस्य मुख्यगौणत्वव्यवस्थया बाल्यविवाहादिभेदेन चतुर्विधत्वे जातिविशेषं प्रति मुख्यात्मकबाल्ययुवतीत्वभेदेन विवाहस्य पूर्वतः निर्णीतद्वैविध्येन तत्तदनुसारतः प्रथमनिर्दिष्टबाल्यविवाहपर्य्यालोचनं परिसमाप्येदानीं क्रमप्राप्तयुवतीपरिणयविवेचनमुपक्रम्यतेऽस्मवस्थितपरतः। यथा—

युवत्या यौवनावस्थापन्नायाः कन्यायाः भार्य्यात्वसम्पादकग्रहणं युवतीविवाहः तस्य भार्य्यात्वोत्पादकस्त्रीकाररूपज्ञानात्मकत्वं, विशेषस्तु समवायविषयस्तयोर्भेदाद्वरकन्ययोर्यथाक्रमं विवाहकर्त्तृत्वकर्मत्वे सुस्पष्टे, इति, तस्यकालस्तु कन्यायाः षोड़शवर्षादारभ्य पञ्चविंशतिसम्वत्सरावधिकः, पुरुषस्य च विंशतिवर्षादिचत्वारिंशद्वर्षान्त इति ध्येयम् । बाल्यविवाहविवेचनावसरे-प्रोक्तप्रमाणातिरिक्तप्रमाणान्युद्ध्रियन्ते निम्नतोऽस्मैतदुपकारकत्वे ।

यथाह वाग्भटः,—

"पूर्णषोड़शवर्षा स्त्री पूर्णविंशेन सङ्गता।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि॥
वीर्य्यवन्तं सुतं सूते ततो न्यूनाब्दतः पुनः।
रोग्यल्पायुरधन्यो वा गर्भे भवति नैव वा"॥ इति,

तथा,—

युवतीविवाहे विवाहदिवसीयरात्रावेव गर्भाधानकर्मणोऽवश्यभावित्वात्यपि द्वादशवर्षीयकन्यायाः सरजस्कत्वसम्भवे वर्षत्रयानन्तरमेव तद्विवाहोऽनुष्ठेय इति नियमितं शास्त्रकारैः।

यथाह मनुः।

"त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती।
ऊर्द्धं तु कालादेतस्माद्विन्देत सदृशं पतिम्॥"

इत्यनेन विवाहेऽस्मिन् कन्याया निरुक्तकालनियमस्य साचिव्यमापादितं स्फुटतः।

पुनः स एव केवलपुरुषवर्षविषये षट्त्रिंशदाब्दिकमित्यारभ्य गृहस्थाश्रममावसेदित्यन्तप्रमाणजालस्य तथा कुल्लूकभट्टानुष्ठिततट्टीकाजातस्य च पूर्वतो लिखितत्वात्तस्यात्र ग्रन्थप्राचुर्य्यभिया नोत्तोलितत्वेऽप्येतदुपयोगित्वं विव्रियते एतेषां वक्ष्यमाणरूपेण।

यथा,—

प्रोक्तप्रमाणविचारजालतो बाल्यविवाहे षट्त्रिंशदब्दादिकालस्य नियमितत्वेकन्याया ऋतुमत्त्वस्यास्ततो वर्षत्रयानन्तरभावित्वात् षोड़शवर्षानवयस्ककन्यया साकं सहवासस्य दुष्टापत्योत्पत्त्यादिदोषाधायकतया शास्त्रनिषिद्धत्वात्तथा सहवासावसरे पुरुषस्योपस्थितवार्द्धक्येन च युवतीविवाहे तद्विवाहदिवसीयरात्रावेवोभयसंयोगे गर्भाधानकर्मणः सुस्थिरत्वात् षट्त्रिंशदब्दपर्य्यन्तकिञ्चिदूर्द्धग्रहणात्मिकपक्षयोस्तदुपयोगित्वमवश्यं सम्भाव्यमिति निष्कर्षः।

तथा स्त्रीपुरुषयोर्यथाक्रमं निरुक्तनियमितकालादधिके वयसि शास्त्रकारानभिमतत्वमापादितमधःस्थप्रमाणैः।

यथा,—

प्रमाणान्याह राजमार्त्तण्डः—

अतिप्रौढा च या कन्या नानुकूल्यं प्रतीक्षते।
अतिवृद्धा च या कन्या कुलधर्मविरोधिनी।
अविशुद्धापि सा देया चन्द्रलग्नबलेन तु।

इत्यादिप्रमाणोद्भाविताया अतिप्रौढ़ाया अतिवृद्धायाश्च रव्याद्यानुकूल्यमनपेक्ष्य दानस्य विहिततयाऽरुचितत्वं स्फुटतः प्रकाशितं शास्त्रकारैः।

तथा चत्वारिंशदब्दाधिकवयसि पुरुषस्यानुष्ठितोपयमत्वस्य शास्त्रविरुद्धत्वमापद्यतेऽधोलिखितप्रमाणजालैः। यथा—दयानन्दतिमिरभास्करोद्धृतप्रमाणं,—चतस्रोऽवस्थाः शरीरस्य वृद्धिर्यौवनं सम्पूर्णता किञ्चित्परिहाणिश्चेति। आषोड़शाद्वृद्धिः आपंचविंशतेर्यौवनं आचत्वारिंशतः संपूर्णता ततः किंचित्परिहाणिश्चेति" चत्वारिंशदब्दानन्तरमेवावस्थायाः क्रमशोऽवश्यंभाविक्षीणत्वात्तत्परमेव विवाहविधानं न सङ्गतमितिसुस्थिरम्। अतोऽन्यथाचरणं नानाविधदोषापादकमित्यनुमीयते शिष्टैः। अतएव षोड़शवर्षीयकन्यकया समं विंशतिवर्षवयस्कपुरुषस्योपयम-उत्तमः। विंशतिवर्षीयेण त्रिंशद्वर्षवयस्केन वा पुंसा-विंशतिवर्षीयकन्यायाः परिणयो मध्यमः। पञ्चविंशतिवर्षीयया त्रिंशद्वर्षवयस्कया वा कन्यया षट्त्रिंशदब्दवयस्कस्य वा चत्वारिंशद्वर्षीयस्य पुरुषस्योपयमोऽधमो युवतीविवाह इत्यभियुक्ताभिप्रायः। बाल्यविवाहेऽप्येवं तत्समयविभक्त्यनुसारेणोत्तममध्यमाधमत्वमनुमेयमेव। तथाप्यत्र कानीनगूढ़ोत्पन्नपुत्राद्यपराधस्य शङ्कयाऽस्य गर्हितत्वमापादितमधःस्थप्रमाणद्वारेण पूर्वाचार्य्यैः।

यथा,—

कन्याया रजोदर्शने त्वपरार्के संवर्त्तः,—

"माता चैव पिता चैव ज्येष्ठभ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥"

तथा हारीतः—

"पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः" ॥

तथाच देवलात्रिकश्यपाः,—पूर्वार्द्धं तदेव ।

"भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ।
यस्तां समुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्रद्धेयमपांक्तेयं तं विद्याद्वृषलीपतिम् ॥

इत्यादिवचनजातं युवतीविवाहनिषेधमुखेनैव बाल्योपयमविधिस्तुतिपरतयाऽर्थवादात्मभूतं देवलादिवचनं ब्राह्मणपदोल्लेखदर्शनाद्ब्राह्मणवर्णबाल्यविवाहस्य मुख्यत्वापादकं चेति सम्भाव्यते शिष्टैः । नच हारीतादिवाक्ये तत्पदलेखानवलोकनात्समस्तजातिविषयकमेतद्वचनजालमिति वाच्यम्। प्रमाणान्तरे पदस्यास्योल्लेखाभावेऽप्युपलक्षणविधया देवलादिवाक्येन साकमेकवाक्यतयैषांस्वस्वनिबन्धे शिष्टैर्विवेचितत्वेन विवादानास्पदत्वात्, तथैव विप्रजातीयाचारावलोकनाज्जात्यन्तरे मुख्यत्वेन तदन्यथाचरणेक्षणाच्च। अन्यच्च प्रोक्तप्रमाणव्रातेस्तत्परिणयस्य साधारणतो निन्दिततया तत्कन्योपयमे तत्पतेः सत्यपि पातित्ये विप्रवर्णमन्तरा भारतीयक्षत्रियजातावेव वैदिकयुगादारभ्येदानीन्तनसमयपर्यन्तमपि तद्विवाहव्यवहारस्य शास्त्रतो लोकतश्च परिदृश्यमानत्वात्परस्परप्रमाणविरोधपरिहाराय स्वयम्बरादिसमयान्तरे तत्स्वामिनो दोषाभावमापादयन्ति धर्मशास्त्रनिर्मातारः—

यथाविष्णुः, निर्णयसिन्धौ,

"ऋतुत्रयमुपास्यैव कन्या कुर्य्यात् स्वयम्बरम्" ।

अत्र वरस्य दोषाभावमाह यमः,—

"कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत् स्वयम् ॥"

एवं चोपनतां पत्नीं नावमन्येत्कदाचन ।
न तु तां वन्ध्यकीं विद्यान्मनुः स्वायम्भुवोऽब्रवीत्" ॥

तथा मनुः,—

अलङ्कारं नाददीत पितृदत्तं स्वयम्वरे ।
मातृदत्तं पितृदत्तं स्तेयी स्याद्यदि तं हरेत्" ॥

वरं प्रत्याह,—

पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्याद्‌तिक्रामेदृतूनां प्रतिवोधनात् ॥

इति निरुक्तप्रमाणव्रातेन ब्राह्मणवर्णभिन्नजातिव्रजे युवतीविवाहप्रचलनस्यादोषावहत्वे सत्यपि प्रतिपादिते निम्नस्थप्रमाणजालपर्य्यालोचनतः-प्रतीयते स्फुटतः प्रायश्चित्तानुष्ठानपूर्वकं तद्विवाहविधानं न दोषोत्पादकं-विप्रजात्यन्तराल इति ।

यथा कमलाकरभट्टीयेऽत्र प्रायश्चित्तमुक्तमाश्वलायनेन ।

"कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः" ।
शुचिं च कारयित्वा तामुद्वहेदान्नशंसधीः ॥
पिता ऋतून् स्वपुत्त्र्यास्तु गणयेदादितः सुधीः ।
दानावधि गृहे यत्नात्पालयेच्च रजोवतीम् ॥
दद्यात्सदृतुसंख्या गाः शक्तः कन्यापिता यदि ।
दातव्यैकापि निःस्वेन दाने तस्या यथाविधि ॥
दद्याद्वा ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् ।
तस्यातीतर्त्तुसंख्येषु वराय प्रतिपादयेत् ॥
उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ।
अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ॥
तामुद्वहन् वरश्चापि कुष्माण्डैर्जुहुयाद्‌द्विजः" । इति ।

तथा सति तदवसरे कदा कदा कन्यायाः सति रजसः सम्भवे किं-कार्त्तव्यमत्रेति सञ्जातसन्देहनिरसनार्थं तत्कार्त्तव्यतापादकप्रमाणजातं प्रदर्श्यते-प्रसङ्गतः ।

यथा मदनपारिजाते यज्ञपार्श्वः,—

"विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्च्चयित्वा यथाविधि ।
युञ्जानामाहुतिं हुत्वा ततस्तन्त्रं प्रवर्त्तयेत्" ॥

तथा बौधायनसूत्रं—

"अथ यदि कन्योपसाद्यमाना चोह्यमाना वा रजस्वला स्यात्तामनुमन्त्रयेत्" ।

"पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।
पुमानिन्द्रश्च सूर्य्यश्च पुमांसञ्च दधात्वियम्" ॥ इति ।

"अथ द्वादशरात्रमलङ्कृत्य प्राशयेत् पञ्चगव्यमथ शुद्धां ज्ञात्वा विवहेत्" । इत्यादि कमलाकरभट्टीयव्यवस्थावलोकनात्, कुत्र कुत्र भारतीयप्रदेशान्तरे-भूसुरजातौ तद्विवाहप्रचलनं गौणत्वेनेदानीमादृतमित्यनुमीयतेऽस्माभिः । अन्यथा तदुल्लेखो न सम्भवेदत्रेति निर्णयः ।

अपिच,—

भारतीयविप्रवर्णातिरिक्तजातौ विशेषतः चत्रियजाताविवावहमानकालतो-युवतीविवाहस्य मुख्यत्वेन प्रचलनावलोकनात्-तत्तज्जातौ तद्विवाहव्यवहारस्य-मुख्यत्वम्; बाल्यविवाहाचरणस्य मुख्यत्वेन पूर्वतः प्रतिपादितत्वात् विप्रजाता-वेव गौणत्वं चेत्यवधेयम् । नच ब्राह्मणजातिमन्तरा प्रायशः समस्तजातौ-विशेषतः चत्रियजातौ बाल्यविवाहमपहाय युवतीविवाहाचरणे नावलोक्यते-किमपि कारणमिति वाच्यम् । रजःसत्वोपसर्जनप्रकृतिकस्य चत्रियादिवर्णस्य सति मनोजवशगत्वे हिताहितविवेकशून्यतया नानानिष्टसम्भवात्, तथालोके व्यवहारपरिदर्शनाच्च । अतस्तत्प्रचलनं न निष्फलमित्यर्थः ।

अन्यच्च,—

अत्र तु तद्योग्यनियमितसमये रव्यादिशुद्धिरपेक्षणीया कन्यायाः,-तत्कालातिक्रमे बाल्यविवाहवदुह्येया व्यवस्थेत्यवगन्तव्यम् ।

अपरञ्च,—

यद्यज्जातेर्यद्यद्विवाहस्य मुख्यगौणत्वविवेचनं, तत्त्वष्टविधविवाहविचाराव-सरे प्रदर्शिततया बाहुल्यभिया च नोद्धृतमेवात्र ।

अपिच यद्यपि यमादिना दशवर्षायां कन्याशब्दः परिभाषितः, तथापीह-विवाहरहितस्त्रीमात्रपरो-बोध्यः ।

तथा चोमामहेश्वरसम्वादे,—

"ऋतुस्नाता तु या शुद्धा सा कन्येत्यभिधीयते" ।

अष्टावक्रोपाख्याने च वृद्धस्त्रियां प्रयुक्तः ।

"कौमारं ब्रह्मचर्य्यं मे कन्यैवास्मिन्न संशय," इति ।

स्मृत्यर्थसारे,—

विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्च्चयित्वा यथाविधि ।
युञ्जानामाहुतिं हुत्वा ततः कर्म प्रवर्त्तते ॥ इत्यादि ।

उपसंहारे वक्तव्यमेतत्,—

यद्यज्जातावेतद्विवाहाचरणं तत्रैव, विधवाप्राचुर्य्यं न परिदृश्यते प्रत्यक्षतः । तथा पूर्वप्रचलिते सत्यस्मिन् शास्त्रासङ्गतेर्नयनागोचरतया नापि धर्महानेर-सम्भवः । अतः सत्यपि बाल्यविवाहसमयपरिवर्त्तने तर्कच्छलेन विधवाधिक्यस्य-सति सम्भवे ब्राह्मणादिद्विजातित्रये शास्त्रविगर्हितत्वतयोर्निविधवोपयमापेक्षयै-तदाश्रयणे न कापि विप्रतिपत्तिर्नापि शास्त्रासङ्गतिर्यापदि गौणपक्षावलम्बनस्य-पूर्वाचार्य्यैरभ्यनुज्ञातत्वादिति सुधीप्रवराणां सुसिद्धान्तः ।

इति युवतीविवाहविवेचनसमाप्तिः ।

पूर्वतो निर्दिष्टचतुर्विधोपयमस्याभ्यन्तरे यथाक्रमं स्थूलतः प्रथमतो-विवेचितबाल्ययुवतीविवाहद्वयानन्तरं क्रमप्राप्ताऽक्षतयोनिक्षतयोनिविधवापरिणयविवेकस्य सत्यपि सम्भावितत्वे तदुपयमद्वयस्य निरुक्तविवाहविधिविहितपतेः पश्चात्वानन्तरभावित्वात्तद्द्वयमपहायादितः पूर्वोक्तविवाहोपयोगिवरकन्ययोः स्वरूपविवेचने यथा बभूवुरग्रसरा मुनयः पूर्वतः, तदद्य उद्धाय्यते-सप्रमाणं संक्षेपतः।

यथैव वरस्वरूपनिरूपणे मनुः—

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममावसेत्॥
तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः।
स्रग्विणं तल्पमासीनमर्हयेत् प्रथमं गवा॥
गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो-भार्य्यां सवर्णां लक्षणान्विताम्"॥

द्विजपदोपादानमत्र क्षत्रियवैश्ययोरुपलक्षणम्।

तथाच कुल्लूकभट्टः,—

"वेदानधीत्येति" वेदशब्दोऽयं भिन्नवेदशाखापरः। स्वशाखाध्ययनपूर्वकवेदशाखात्रयं द्वयमेकां शाखां मन्त्रब्राह्मणक्रमेणाधीत्य गृहस्थाश्रमं-गृहस्थविहितकर्मकलापमनुतिष्ठेत्। कृतदारपरिग्रहो गृहस्थः गृहशब्दस्य-दारवचनत्वात्। अविप्लुतब्रह्मचर्य्य इति पूर्वविहितस्त्रीसंयोगमधुमांसभक्ष्य-वर्जनरूपब्रह्मचर्य्यानुवादोऽयम्। प्रकृष्टाध्ययनाङ्गत्वख्यापनार्थः। पुरुषशक्त्य-पेक्षयायमेकद्वित्रिशाखाध्ययनविकल्पः। यद्यपि व्रतानि वेदाध्ययनं च-नित्यमुपदिशता मनुनोभयस्नातक एव श्रेष्ठत्वादभिहितस्तथापि स्मृत्यन्तरा-दन्यस्नातकोऽपि बोद्धव्यः"।

तदाह हारीतः,—

"त्रयः स्नातका भवन्ति, विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्चेति।

यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः। यः समाप्य-व्रतानि असमाप्य वेदं समावर्त्तते स व्रतस्नातकः। उभयं समाप्य समावर्त्तते-यः स विद्याव्रतस्नातकः"।

याज्ञवल्क्योऽप्याह,—

"वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा"।

"तमिति, तं ब्रह्मचारिधर्मानुष्ठानेन ख्यातम्—

दीयत इति दायः ब्रह्मैव दायो ब्रह्मदायः तं हरतीति ब्रह्मदायहरं-पितुः पितृतो गृहीतवेदमित्यर्थः।

पितृतोऽध्ययनं मुख्यमुक्तं, पितुरभावे आचार्य्यादेरप्यधीतवेदं माल्यया-ऽलंकृतं उत्कृष्टशयनोपविष्टं गोसाधनमधुपर्केण पिता आचार्य्यो वा विवाहात्-प्रथमं पूजयेत्।

गुरुणेति—दत्तानुज्ञः स्वगृह्योक्तविधिना कृतस्नानसमावर्त्तनः समानवर्णां-शुभलक्षणां कन्यां विवहेत्"।

तथा च याज्ञवल्क्यः,—

"गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वाऽभ्युदयमेव वा॥
अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम्"॥

तथा मिताक्षरायां विज्ञानेश्वरः,—

"पूर्व्वोक्तेन प्रकारेण वेदं मन्त्रब्राह्मणात्मकं मन्त्रब्राह्मणयोर्वेदनामधेयत्वात्। व्रतानि ब्रह्मचारिधर्मान् भक्तान्तान् वा। उभयं वा नीत्वा समाप्य गुरवे पूर्व्वोक्ताय वरमभिलषितं यथाशक्ति दत्त्वा स्नायात्। अशक्तौ तदनुज्ञया दत्त-वरोऽपि एषां पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था। अविप्लुतब्रह्मचर्य्यः-अस्खलितब्रह्मचर्य्यः"।

तथाच गौतमः—

"गृहस्थः सदृशीं भार्य्यां विन्देतानन्यपूर्व्विकाम्"।

"गृहस्थः गृहस्थाश्रमं कर्त्तुं अभिलषन्नित्यर्थः। गृहस्थ इति भाविनि-भूतोपचारः यूपं तक्षतीतिवत्"।

तथा दक्षोऽपि,—

"वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा।
समावर्त्तनपूर्वं तु लक्षण्यां स्त्रियमुद्वहेत्"॥

वेदानधीत्येति प्रमाणलिङ्गाद्वेदादिशास्त्रज्ञ एव विवहेत्। न तु मूर्ख-वधिरक्लीवमूकादय इत्यर्थः प्रतीयते। समीचीना प्रतीतिरेषा। अन्यथा-नानादोषसम्भवात्। यथेदानीं शास्त्रीयप्रमाणादेशमुल्लंघ्योपयमानुष्ठानेन-निरन्तव्यक्तीनां प्रचुरमूर्खसन्तत्युत्पत्तिदुर्भिक्षव्यभिचारादिनानाविधापराधाः-सम्भवन्ति भारते सर्वतः। अतः पूर्वाचार्य्यैः पूज्यचरणैः प्रोक्तमन्तुनिकरोत्-पत्तिशङ्कया निषेधितं प्रमाणैर्य्यथाजातादिविवाहानुष्ठानम्। तान्यधः-प्रकाश्यन्ते प्रमाणजालानि वैशद्येन।

यथाह कात्यायनः,—

"स तु यद्यन्यजातीयः पतितः क्लीव एव वा।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा॥
ऊढ़ापि देया साऽन्यस्मै सहाभरणभूषणा"।

वीरमित्रोदये,—

"उन्मत्तः पतितः क्लीवो दुर्भगस्त्यक्तबान्धवः।
कन्यादोषौ च यौ पूर्व्वोक्तौ दोषगुणौ वरे"॥ इति।

उन्मत्तो वायुादिना। पतितो ब्रह्महत्यादिना। दुर्भगो भाग्यरहितः-त्यक्तबान्धवः यदुष्टाचारबन्धून् विहाय स्वतन्त्रव्यवहारः। पूर्वोक्तकन्यादोषौ-दीर्घकुत्सितरोगव्यङ्गत्वरूपौ नारदोक्तावेव। सार्द्धमेतैर्विवाहो न कार्य्यः। अत एते न विवाहार्हा इत्यर्थः।

तथा वशिष्ठोऽपि—

"कुलशीलविहीनस्य षण्डादिपतितस्य च ।
अपस्मारिविधर्मस्य रोगिणां वेशधारिणाम् ॥
दत्तामपि हरेत् कन्यां सगोत्रोढ़ां तथैव च" ।

अत्र सगोत्रापदं सपिण्डाया अप्युपलक्षणम् । समानन्यायात् ।

तथा पराशरोऽपि—

"कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया ।
कुरूपायाकुलीनाय स प्रेतो जायते नरः" ॥

वृद्धादिभिः सह कन्योपयमो न कार्य्यो धनलिप्सयेति सिद्धान्तः । वृद्धशब्दोऽत्र निरुक्तविवाहसमयातिरिक्तवयस्कपरः । नीचशब्दस्तु श्रोत्रियभिन्नवृत्यन्तरावलम्बिनिकृष्टब्राह्मणपरः न च ब्राह्मणातिरिक्तजातिवाचकः, शास्त्रविगर्हितत्वादसवर्णविवाहस्य" ।

पुनर्वशिष्ठोऽपि—

"अत्यासन्नेऽतिदूरे च अत्याढ्ये चातिदुर्बले ।
वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते ॥

इति कन्याया नानाविधदोषस्य चक्षुर्विषयत्वसम्भावनयाऽतिनिकटवर्त्तिने वराय कन्या न देया । तथा पूर्वतो दुर्गममार्गवशतो गमनागमनजन्यकष्टाशङ्कया वा मात्राद्यसुलभत्वेनातिदूरस्थपात्रस्य परिचयाभावाद्दानयोग्यत्वं नातिदूरवर्त्तिनः । अत्युपसर्गोपादानेनात्र दानार्हत्वमिष्टिदूरस्थवरस्य । किन्त्विदानीं वाष्पीययानेनातिदूरदेशकर्मताकयातायातस्य सहजसाध्यतया निरुक्तदोषासम्भवात् तद्दानं न दोषावहमिति राद्धान्तः । स्वापेक्षया धनविद्याकुलादिभिरत्युन्नताय वराय न प्रशस्तं कन्यादानं तदुपयोगिसम्मानाद्यनुष्ठानाभावेन मनोमालिन्यादेः सम्भाव्यमानत्वात् । सत्यपि तदनुरूपसम्मानदानाद्याचरणे स्वस्यावश्यंभाविदुरवस्थत्वाच्च । अतः सार्कं समानेन वाऽल्पोन्नतेनानुष्ठेयः सम्बन्धो निजापेक्षयेति सिद्धम् । तथा प्राणविनाशादिदोषान्-

मानेनातिदुर्बलाय। तथा स्वपरिवारभरणपोषणादिकरणाक्षमत्वसम्भावनया-सम्पत्तिविहीनाय ( अर्थात् दरिद्राय ) तथा हिताहिताद्याचरणज्ञानविहीनेन-सह सत्युपयमे तदुभयाद्याचरणज्ञानवत्याः कन्यायाः समुत्पन्नदुःखनिवह-त्वात् मूर्खाय च न करणीयं कन्यादानमितीरितद्वचनतात्पर्य्यम्।

ततः कात्यायनोऽपि—

"आक्रान्तस्तेन विहिष्टस्तथा त्यक्तः स्वबन्धुभिः।
अन्या जातिः क्षयी दासो लिङ्गस्थश्चोदरी यदि"॥
"चक्षुःश्रोत्रविहीनश्च तथापस्मारदूषितः"।
वरदोषाः स्मृता ह्येते— ... ... ...
प्राक्पश्चाद्वा समुत्पन्नं दानं तत्र निवर्त्तयेत्"॥

निष्क्रान्तः देशान्तरगमनशीलः, तस्मै नोचितं कन्यादानं स्वामिनः-सदैव वैदेशिकत्वेन कन्याया व्यभिचारादिबहुविधदोषसम्भवात्। तेन-निष्क्रमणेन विहिष्टो रहितः अत्यन्तप्रवासभीरुरिति यावत्। सदैव गृहाव-स्थितत्वेन सकलकार्य्यहानिवशतः समुद्भूतदारिद्र्यात् न तस्मै कन्यादानं-धर्म्मशास्त्रसम्मतम्। कारणमूह्यमग्रतः।

तथाच महाभारते—

"द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव"। इति।

लिङ्गस्थः वेदबाह्यलिङ्गधारी, उदरी जलोदरव्याधिवान्। प्राक् वाग्-दानात्। पश्चात् वाग्दानानन्तरम्।

अन्यानपि वर्ज्यानाह स एव।

"दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम्।
शूराणां च निद्धत्तानां न देया कन्यका बुधैः"॥

षण्ढो वर्जनीय इत्युक्तम्। तद्वर्जने कारणमाह नारदः—

"अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं वीजिनो नराः।
क्षेत्रं वीजवते देयं नावीजी क्षेत्रमर्हति"॥ इति।

तदुपलक्षणमेतदन्येषाम्।

तथा च मनुः—

"काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्" ॥

गुणहीनायेति पदोपादानेनैव गुणविशिष्टाय वराय कन्यायाः प्रदेयत्वसिद्धिः।

निम्नलिखितप्रमाणद्वारा तेनैव समर्थितत्वात्।

यथाह मनुः—

"उत्कृष्टायाभिरूपाय वराय सदृशाय च।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्विचक्षणः" ॥

अप्राप्तामप्राप्तविवाहसमयां बालिकामपीत्यर्थः। कालान्तरे दुर्गुणायापि देयत्वापत्तेरिति भावः। यद्वा काममित्यादिवाक्यं गुणवत्त्वाभे निर्गुणाय न देयेत्येवं परम्। न तु ऋतुमत्यपि तिष्ठेदित्यस्मिन् स्वार्थे तात्पर्य्यम्। अपि वा गुणहीनायेति वाधायनोक्तानुकल्पस्य निर्विषयत्वापत्तेः, किन्त्वत्र निर्गुणशब्दस्यैवमर्थः। शास्त्रज्ञानादिगुणहीनोऽपि सदाचारवान् हिताहितविवेकशीलः स्वकुटुम्बपरिपोषणक्षमः विवहेत्, तदन्यथात्वे नोपयच्छेत् कन्यामिति। तथैव पूर्वतः आसीच्छिष्टाचारः। इदानीमप्येतदनुष्ठानं प्रतिभाति समीचीनम्। विनापि क्षमताशालिनं न विवाहः षण्ढादीनाम्।

यथा प्रयोगपारिजाते ब्राह्मे,—

"ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः।
तस्माच्च षण्डवधिरकुब्जवामनपङ्गुषु ॥
जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु।
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ॥

ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ।
मत्तोन्मत्तौ न संस्कार्य्याविति केचित्प्रचक्षते ॥
कर्म्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः ।
तदपत्यं न संस्कार्य्यमपरे त्वाहुरन्यथा ॥
संस्कारमन्त्रहोमादीन् करोत्याचार्य्य एव तु ।
उपनेयांश्च विधिवदाचार्य्यस्य समीपतः ॥
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ।
कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत्" ॥ इति ।

अतो विना कन्यास्वीकरणादेतेषां सर्वं कार्य्यम् ।

अनेनैव निरूपिताः सर्वे वरदोषाः । ननु दोषनिवहोत्पत्तिरेव वाचनिका वा प्रत्यक्षसिद्धेति चेद्विव्रियते परतः । यथा साकं क्षत्रियाद्यन्यजातीयपुरुषेण सति परिणये ब्राह्मणकन्यायास्तदुभयसंयोगोत्पन्नतनयस्य भवेदेवसमवेतक्रियादिभ्यः संजातमदशक्तिवत्सम्मिलित-विभिन्नजातीयरजोवीर्याभ्यांसमुद्भूतं स्वस्वजातीयस्वभावेतरप्रकृतिमत्त्वमवश्यम् । तथा पुंस्त्वाभावात्क्लीवानां भवेयुः स्त्रियो व्यभिचारिण्यः । सगोत्रसपिण्डोपयमनिषेधनिदानंवक्ष्यतेऽग्रतः ।

श्रुतिस्मृतिपुराणादिवचनैः समर्थितापि प्रमाणितैषा युक्तिः शारीरिकविज्ञानावेदकायुर्वेदीयप्रमाणैः,—

दूरमास्तां तावदन्यजातीयपुरुषेणान्यजातीयकन्याया भगसम्बन्धः । किन्तुस्वजात्युद्भूताधार्मिकादिपुरुषाणां तथा स्वजात्यपेक्षया नीचजातीयमानवानांच स्पर्शादावपि वैज्ञानिकदोषव्रातमापादितं यथा चरकरचकेन सूत्रस्थानीयाष्टमाध्याये, प्रकाश्यते तदधः, यथा,—

"नाधार्मिकैर्न नरेन्द्रद्विष्टैः सहासीत । नोन्मत्तैर्न पतितैर्न भ्रूणहन्तृभिर्नक्षुद्रैर्न दुष्टैर्न दुष्टयानान्यारोहेत । न जानुसमं न कठिनासनमध्यासीत ।१८। न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत ।२०। नानन्तर्य्यमाश्रयेत् । इत्युत्त-

वचनजातोऽङ्गाविताधार्मिकादिव्यक्ति-सहासनप्रभृतिकार्य्यनिरसनमेतत् न भवति-निदानविरहितमेव, निषिद्धानिषिद्धसकलानुष्ठानाभ्यन्तरे सूक्ष्मकारणनिबद्धत्व-विनिहितत्वात् ।

अतो—यथाऽधार्मिकादिषु निजाननुगुणाचारव्यवहारजालस्य विद्यमान-तया "संसर्गजा दोषगुणा भवन्तीति" न्यायेन तैः सहातिवासे तदाचारव्यव-हारसंक्रमणसम्भवाद्रोगोत्पत्तेरवश्यंभावित्वेन तन्निषेधस्यानसङ्गततया सुतरामे-तदपेक्षया यौनसम्बन्धे गुरुतरदोषसम्भवान्नानुष्ठेयमन्यजातीयैः साकं सदोपय-मनमिति निर्गलितार्थः ।

तथा च शरीरस्थानीयद्वितीयाध्याये सुश्रुतः,—

"आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ ।
स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥ ४५
देवताब्राह्मणपराः शौचाचारहिते रताः ।
महागुणान् प्रसूयन्ते विपरीतास्तु निर्गुणान्" । इति । २१

तथाह तदीयचतुर्थाध्याये स एव,—

"शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः ।
प्रकृतिर्जायते तेन तस्या मे लक्षणं स्मृतम् ॥"

तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्य्यनार्य्यो गान्धर्वचित्तः स्फुटि-तकरचरणोऽतिरुक्षः श्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति" । इति ।

न च—

"सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥
शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः ॥"इति-

मानवीयप्रमाणवृन्देन ब्राह्मणादिचतुर्वर्णानामानुलोम्येन सर्ववर्णविवाहस्य-कामतोऽभ्यनुज्ञातत्वादन्यजातीयपुरुषेणान्यजातीयकन्यायाः कथमसवर्णविवाहो-

निरसितः कात्यायनेन निर्हेतुकमिति वाच्यम्, चतुर्वर्णाप्यस्य सत्यपि-मनुप्रतिपादितत्वे,—

"न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते ।
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्" ॥

इति मनूक्तवचनव्रातेन, तथा,—

"यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
नैतन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥" इति-

याज्ञवल्क्यवचनेन चास्य प्रकटितनिषेधत्वात् । न च सुप्रतिपादिता-सवर्णापयमस्य निष्कारणनिषेधोऽस्य नासङ्गत इति वाच्यम् । एतदव्यवधानतः-प्रकाशितविवृतिदृष्ट्यास्य प्रकटितनिदानत्वात् ।

विवृतिर्यथा,—

यदा पूर्वतो-भारतीयादिमवासिषु सत्स्वपि पराभूतेष्वार्य्यैः स्थापितोपनिवेशत्वेऽपि स्वसेनायाः स्वल्पसंख्याकत्वेन तथाच तद्वासिनां प्राचुर्य्येण च वशीकर्त्तुं तांस्तथा वर्द्धयितुं स्ववंशांश्च चक्रुरार्य्या असवर्णविवाहमादितः । किन्तु तदुद्भवसन्तानानां स्वभावतो गुणतश्च निरुक्तायुर्वेदीयप्रमाणैः प्रमाणितवैपरीत्यदर्शनात्तथा विभिन्नप्रकृत्यादिकत्वेन सदा कार्य्यतः स्वाजातिरशान्त्याधायकत्वात्तथा धर्मशास्त्रप्रतिपादितजात्यन्तरत्वेन जननीजनकजातीयैः सार्द्धं शास्त्रनिषिद्धपक्वाशनादिव्यवहारतया निरूढ़वैरवत्त्वस्य लोकतो दृष्टिविषयत्वाच्चनिष्कास्यते स्वस्वजातितोऽसवर्णोपयमो देशहिताभिलाषिभिरुदारचरितैर्मन्वादिभिर्महात्मभिरित्यनुमीयते सूरिभिरधुनातनैः ।

समर्थ्यतेऽ'शतोऽनुमानमेतन्निम्नलिखितप्रमाणव्रातैः,—

यथा, मानवीयतृतीयाध्याये "हीनजातिस्त्रिय"मित्यादिवचनस्यव्याख्यायामाह कुल्लूकभट्टः,—

"हीनजातिस्त्रियमिति, सवर्णामपरिणीय हीनजातिं शूद्रां शास्त्रावि-

वेकात्परिणयन्तो—ब्राह्मणक्षत्रियवैश्यास्ततोत्पन्नपुत्रपौत्रादिक्रमेण कुलान्येव-सन्ततिकानि शूद्रतां गमयन्ति ।

अत्र द्विजातय इति बहुवचननिर्देशात् निन्दया वैश्यस्यापि निषेधः-कल्प्यते ।

ब्राह्मणक्षत्रिययोस्तु पूर्वत्रैव निषेधान्निन्दामात्रार्थतैव ।

तथा, तस्मिन्नध्याये मनुः,—

"शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥
दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।
नाश्नन्ति पितृदेवास्तां न च स्वर्गं स गच्छति ॥
वृषलीफेनपीतस्य निश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते" ॥

तद्व्याख्यातुः कुल्लूकभट्टस्य विवृतिर्यथा,—

"शूद्रावेदीति शूद्रां विन्दति परिणयतीति शूद्रावेदी स पतति पतित इव-भवति इदमत्रेर्मतं उतथ्यतनयस्य गौतमस्य च । चकारादिग्रहणमादरार्थम् । एतद्ब्राह्मणविषयम् । शूद्रासुतनत्सुतनत्सुतोत्पत्त्या पततीति शौनकस्य मतं-क्षत्रियविषयम् । शूद्रासुततत्सुततत्सुतोत्पत्त्या पतति भृगोर्मतं एतद्वैश्य-विषयम् । एतस्य मन्वर्षिमतत्रयस्य व्यवस्थासम्भवे विमद्दशपतनविकल्पा-योगान्मेधातिथिगोविन्दराजयोस्तु मतं शूद्रावेदी पततीति पूर्वोक्तशूद्राविवाह-निषेधशेषः ।

सुतोत्पत्त्या पततीति दैवाज्जातशूद्राविवाहे ऋतौ नोपेयादिति विधानार्थं-ऋतुकालगमने सुतोत्पत्तेः । तदपत्यतयेति तु तान्येव शूद्रोत्पन्नान्यपत्यानि-यस्य तदपत्यस्तस्य भावस्तदपत्यतया पतति । एतेनेदमुक्तं ऋतावुपगच्छतराम

जातापत्य उपेयात्। शूद्रामिति, सवर्णामपरिणीय दैवात् स्वेच्छया शूद्रा-परिणेतुर्ब्राह्मणस्य गमननिषेधोऽयं निन्दया निषेधस्मृत्यनुमानात्, शूद्रां गत्वा-ब्राह्मणो नरकं व्रजति। जनयित्वा सुतं तस्यामिति ऋतुकालगमन-निषेधपरम्। ब्राह्मण्यादेव हीयते इति दोषभूयस्त्वार्थम्। दैवेति, यदि-कथञ्चित् सवर्णानुक्रमेण वा शूद्रापि परिणीयते तदा भार्य्यात्वेन प्रसक्तानि-तत्कर्त्तृकाणि दैवादीनि निषिध्यन्ते। दैवं होमादि, पैत्रं श्राद्धादि,-आतिथेयं अतिथिभोजनादि, एतानि यस्य शूद्रासम्पाद्यानि तद्धव्यं कव्यं-पितृदेवा नाश्नन्ति। न च तेनातिथ्येन स गृही स्वर्गं याति, "यस्तु तत्कारये-न्मोहात्स जात्या स्थितयान्यये"ति। सवर्णायां सन्निहितायां निषेधं वक्ष्यति। अयं त्वसन्निहितायामपीत्यपुनरुक्तिः। वृषलीति, वृषलीफेनोऽधररसः-स पीतो येन स वृषलीफेनपीतः[illegible]हिताग्न्यादिष्वित्यनेन परनिपातः।

अनेन शूद्राया अधररसपानं निषिध्यते। निश्वासोपहतस्य चेति, तया-सहैकशय्यादौ शयननिषेधः। तस्यां जातापत्यस्य शुद्धिर्नोपदिश्यत इति-ऋतुकालगमननिषेधानुवादः।

तथाच तद्दशमाध्याये स एव,—

"सर्व्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते॥
स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्म्मातृदोषविगर्हितान्॥
अनन्तरासु जातानां विधिरेष सनातनः।
द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम्॥"

तथाच तट्टीकायां कुल्लूकभट्टः,—

सर्व्वेति, ब्राह्मणादिषु वर्णेषु चतुर्ष्वपि समानजातीयासु यथाशास्त्रं परि-णीतास्वक्षतयोनिषु आनुलोम्येन ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियाया-मित्यनेनानुक्रमेण ये जातास्ते मातापित्रोर्जात्या युक्तास्तज्जातीया एव-

ज्ञातव्याः। आनुलोम्येन ग्रहणं चात्र अस्योपयोगमुत्तरश्लोके उपयोक्ष्यते। गवाश्वादिवदवयवसन्निवेशस्य ब्राह्मणत्वादिजात्यभिव्यञ्जकत्वाभावादेतद्ब्राह्मणादिलक्षणमुक्तम्। अत्र च पत्नीग्रहणादन्यपत्नीजनितानां न ब्राह्मणादिजातित्वम्।

तथाच देवलः—

"द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते।
अवावट इति ख्यातः शूद्रधर्मा स जातितः॥
व्रतहीना न संस्कार्य्या स्वतन्त्रास्वपि ये सुताः।
उत्पादिताः सवर्णेन व्रात्या इव वहिष्कृताः॥"

व्यासः,—

"ये तु जाताः समानासु संस्कार्य्याः स्युरतोऽन्यथा॥"

याज्ञवल्क्योऽपि —

"सवर्णेभ्यः सवर्णासु जायन्ते हि द्विजातयः॥"

इत्यभिधाय "विन्नास्वेष विधिः स्मृत"—इति ब्रुवाणः सपत्न्युत्पादितस्यैव ब्राह्मणादिद्विजातित्वं निश्चिकाय।

स्त्रीष्विति,—

आनुलोम्येनाव्यवहितवर्णजातीयासु भार्य्यासु द्विजातिभिर्ये उत्पादिताः-पुत्राः यथा ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायां तान् मातुर्हीनजातीयत्वदोषेण गर्हितान् पितृसदृशान् न तु पितृसजातीयान्। मन्वादयआहुः। पितृसदृशग्रहणान्मातृजातेरुत्कृष्टा पितृजातितो-निकृष्टाश्च ज्ञेयाः। एतेषु-च नामानि मूर्द्धावसिक्तमाहिष्यकरणाख्यानि याज्ञवल्क्यादिभिरुक्तानि, वृत्तयश्चैषामुशनसोक्ताः,—हस्त्यश्वरथशिक्षा अस्त्रधारणं च मूर्द्धावसिक्तानां, नृत्यगीतंनक्षत्रजीवनं शस्यरक्षा च माहिष्याणां, द्विजातिशुश्रूषा धनधान्याध्यक्षताराजसेवा दुर्गान्तःपुररक्षा च पारशवोग्रकरणानामिति। अनन्तरास्विति, एष पारम्पर्य्यागततया नित्यो विधिरनन्तरजातिभार्य्योत्पन्नानां यथा ब्राह्मणेन-

वैश्यायां क्षत्रियेण शूद्रायां ब्राह्मणेन शूद्रायामिमं वक्ष्यमाणं धर्मादनपेतं-विधिं जानीयात् । न च "न ब्राह्मणक्षत्रिययोरित्यारभ्य-शूद्राभार्य्योपदिश्यत-इत्यन्तमानवीयवचनेन, तथा, "यदुच्यत इत्यादि-जायते स्वयमित्यन्तयाज्ञवल्क्य-प्रमाणेन च शूद्रात्मकभार्य्याया निषिद्धोपयमतया तथा प्रमाणस्यैतस्य-व्याख्याकर्त्ता योगिविज्ञानेश्वरेण "रतिपुत्रधर्मार्थत्वेन विवाहस्त्रिविधः । तत्र पुत्रार्थो द्विविधः । नित्यः काम्यश्चात्र नित्ये प्रजार्थे सवर्णः श्रोत्रियो वर-इत्यनेन सवर्णा मुख्या दर्शिता । इदानीं काम्ये नित्यसंयोगे चानुकल्पो वक्तव्यः । "यदुच्यते कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोवरा" इत्युपक्रम्य-ब्राह्मणस्य चतस्रो भार्य्याः । क्षत्रियस्य तिस्रः, वैश्यस्य द्वे इति द्विजातीनां-शूद्रावेदनमिति नैतद्याज्ञवल्क्यस्य मतम् ।

यस्मादयं द्विजातिस्तत्र स्वयं जायते, तज्जाया जाया भवति, "यदस्यां-जायते पुनरि"ति श्रुतेः, अत्र च, "तत्रायं जायते स्वयमि"ति हेतुं वदता नैत्यिक-पुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता सवर्णाभावे नैत्यिकपुत्रो-त्पादनानुकल्पे तथा सवर्णाभावे काम्ये च पुत्रोत्पादने ब्राह्मणस्य क्षत्रियावैश्ये,—क्षत्रियस्य वैश्याऽप्यनुज्ञाता भवतीति" विवृत्या ब्राह्मणक्षत्रिययोः क्षत्रिय-वैश्यकन्योपयमनस्याप्यनुज्ञातत्वात् कथमिदानीं न व्यवह्रियते तदुभय-परिणयनमार्य्यैर्भारतवर्षीयैरिति वाच्यम्, प्राशस्त्यतो धर्मतश्च सवर्णाया-यज्ञादिकर्मणि स्वपतिना साकं धर्मशास्त्रैः प्रतिपादिताधिकारित्वमन्तरेण-कामतोऽनुकल्पतश्च विवाहितासवर्णस्त्रीणामत्र निवारितोपयोगित्वात्, तथा-ब्राह्मणवीर्य्येण विप्रक्षत्रियादिनारीगर्भतः समुत्पन्नसन्तानकर्त्तृकपक्वान्नस्य-तत्पितुस्तज्जातीयव्यक्तेश्च शास्त्रतो निषिद्धभक्षणत्वाद्दण्डापूपिकान्यायेन सुतरां-ताभिः सार्द्धं शयनोपवेशनाद्युपभोगानुष्ठानभिन्नपक्वान्नाशनस्य शास्त्रनिषिद्ध-तया परस्परप्रेम्णः क्षीणकलेवरत्वात्, तथा बहुस्त्रीसम्भोगे स्वायुषः क्षीण-त्वात्तथा लोकतोऽवलोकितमनोमालिन्यत्वेन स्वामिनः सन्देहापन्नजीवन-त्वात्, तथा दुर्भिक्षाद्यापदि परिवर्द्धितपरिवारपरिपालनस्यातीवकष्टाधाय-कत्वाच्च, अन्यत् सर्वं कारणं पूर्वतः प्रदर्शिततयात्र नोपस्थापितं, अन्यच्च सति-यजनादिषट्स्ववृत्तीतरकृष्यादिवृत्त्यन्तरावलम्बित्वे सवर्णानामपि स्ववृत्ति-

विष्टैः सवर्णैः समं मन्वादिभिर्निषिद्धैकपंक्त्याशनाद्यनुष्ठानतया सुतरां क्षत्रियवैश्यशूद्राणामपरिवर्जनं सम्प्रति न समीचीनम् ।

अतः सर्वथा परिहरणीया तदनुष्ठानाभिरुचिरिति प्रेक्षावतां राद्धान्तः । धर्मशास्त्रीयप्रमाणसमन्वितामेतां युक्तिम् दूषयन्ति,—

निबन्धायुर्वेदीयप्रमाणान्यतो नोद्धृतानि तानीति निरवद्यम् ।

अपरञ्च,—

असवर्णविवाहनिरसनविवेचनमेतदुपलक्षणमस्वजातीयोपयमनोपरमस्य साकल्यात्, भवतु तावदेतत्, किन्तु को वा वर्णः ! का वा जातिः, किंपार्थक्यमेतयोः, तच्छ्रेणीविभागानुष्ठानं परमेश्वरकर्तृकं वा समाजकृतं, तत्परत्वेऽस्ति किमपि प्रयोजनं न वेति सन्देहनिकरे सत्यपि सञ्जाते तन्निरसनाशया विव्रियते क्रमशो निम्नतः,—यथा

वर्णः—वर्ण इति पदं प्रेरणार्थकवर्णधातोः कर्मविहिताच्प्रत्ययनिष्पन्नं, तदर्थस्तु वर्ण्यन्ते वेदप्रतिपादिताचारानुष्ठाने प्रेर्यन्ते व्यक्तयोऽनेनेति व्युत्पत्त्या ब्राह्मणादिशूद्रान्तव्यक्तयः परिलक्षिता वर्णशब्देन, अर्थात् यतो वेदोक्ताचारमनुष्ठातुं यतन्त एते नान्ये, अत एता जातयो वर्णशब्दवाच्या इति सिद्धं,-शुक्लादिनानार्थत्वे तु विस्तृत्यर्थकवर्णधातोः कर्तृवाच्यविहिताच्प्रत्ययसञ्जातं वर्ण इति पदम् ।

जातिस्तु,—

जननार्थकजनधातोर्भावविहितक्तिप्रत्ययनिष्पन्नं जातिरितिपदम् । न तावदत्र प्रत्यक्षक्रियरूपोऽर्थः । किन्तु प्रकल्प्यक्रियः, यथाहुः शाकटायनादयः । शब्दार्थस्त्रिविधः, प्रत्यक्षक्रियः, प्रकल्प्यक्रियः, अविद्यमानक्रियश्चेति । विविच्यते यथायथं तदर्थत्रयमत्र ।

यथा,—

नामघटकप्रकृतिप्रत्ययार्थः सङ्गच्छते वस्तुन्यभिधेये यत्र, अर्थादभिधेयवस्तुगतां कामपि क्रियामवलम्ब्य प्रवृत्तं यन्नाम प्रत्यक्षक्रियं तन्नाम । यथा, कारकः, हारकः इत्यादि । कारकहारकनामनी पदद्वयेऽत्र करणहरणात्मकक्रियायुक्ततया प्रत्यक्षक्रियात्मकनाम्नः प्रत्यक्षसिद्धत्वम् ।

प्रकल्प्यक्रियाभिधानत्वं नाम धातुसज्जातत्वे सति धात्वर्थानुगतप्रवृत्ति-मत्त्वम्। यथा गवादिशब्दाः धातुतः सन्तोऽपि समुद्भूता धात्वर्थमवलम्ब्य न-प्रतिपादयन्त्यभिधेयवस्तुतो वस्तुनामकरणं न भवति धातुजातम्। अर्थाङ्ग-वादिशब्दघटकगमादिधातुप्रतिपाद्यगमनादिक्रियानुसारेण गवादिवस्तुनो न-सुसङ्गतं गवादिनामधेयत्वम्। सुतरां धात्वर्थानुगमनेन न प्रवृत्तं गवादि-नामधेयम्। शब्दे तस्मिन् धातुतः सत्यपि समुत्पन्ने नामकरणे धातोर्न-किञ्चिन्मात्रं प्रदृश्यते कार्य्यकारित्वं वानुकूल्यम्। अतो वस्तुनः गवादिनाम-प्रकल्प्यक्रियमिति सिद्धान्तितं तैः।

क्रियाकल्पनं त्वेवमेव, यथा,—

शयनाद्यवस्थाविशेषे गवादिषु क्रियायाः सत्यप्रत्यक्षत्वेऽपि क्रियां धातो-रर्थानुसारेण कल्पयितुं शक्नुयात्। अविद्यमानक्रियत्वं नाम क्रियाशून्यनाम-धेयत्वम्। यथा, डित्थडवित्थादिनाम्ना नोचितं क्रियाकल्पनं, यतो यदृच्छा शब्दा डित्थडवित्थादयः। नावलोक्यते यदेषां मूलीभूतं धातुजातं तदनुसारेण कुर्य्युः क्रियाकल्पनम्। अतो डित्थडवित्थादिनामधेयमविद्यमानक्रियमिति-परामर्शः। इति।

अतो जातेः पारिभाषिकोऽर्थ-एवमेव "नित्यत्वे सत्यनेकसमवेता जातिः।" अर्थादेकजातीयपदार्थजातपरिचायकासाधारणधर्मविशेषः। विद्यते यद्धर्मो-यज्जातीयपदार्थजाते स धर्मस्तज्जातिशब्दवाच्यः।

यथा, ब्राह्मणेषु ब्राह्मणत्वं, मनुष्येषु मनुष्यत्वं, पशुषु पशुत्वं, गोषु-गोत्वं चेत्यादि। न च जातिवर्णयोः सत्येकार्थत्वे कथमेतयोः पार्थक्यमिति-वाच्यम्, व्यापकव्यापित्वभेदेनैतयोर्दृष्टपार्थक्यात् व्यापकत्वं नाम तद्वन्निष्ठा-त्यन्ताभावाप्रतियोगित्वम्। व्याप्यत्वं च तदभाववदवृत्तित्वं। अर्थात् बहुदेश-व्यापित्वं व्यापकत्वं, अल्पदेशव्यापित्वं व्याप्यत्वम्। तेन जातेर्ब्राह्मणादि-म्लेच्छान्तमनुष्यव्यक्तिजातेषु तथा पशुत्वादिषु च विद्यमानत्वाद्व्यापकत्वं,-वर्णस्य ब्राह्मणादिशूद्रान्तजातिचतुष्टयव्यापित्वाद्व्याप्यत्वम्। अतोऽनयो-र्भेदो न विप्रतिपत्तियुक्त—इति सुस्थिरम्। यस्मात् पद्मयोनेर्मुखबाहूरुपादतः-यथाक्रमं मुखाद्ब्राह्मणं समुत्थावयवेभ्यो देव्या शक्त्या निर्म्मितवान्। अथतमानां-

सर्वेषां मिथुनसम्प्रयोगद्वारैव तत्त्वेभ्य उत्पत्तिदर्शनात् । परमार्थतस्तु श्रुतिरेषा वर्णानामुत्कर्षापकर्षप्रदर्शनार्थम् । सर्वेषां भूतानां प्रजापतिः श्रेष्ठस्तस्यापि सर्वेषामङ्गानां मुखं ब्राह्मणोऽपि सर्वेषां वर्णानां प्रशस्यमतः । एतेन साम्येन ब्रह्ममुखादुत्पन्न इत्युच्यते । मुख्यकर्माध्यापनाद्यातिशय्याद्वा मुखत इत्युच्यते । क्षत्रियस्यापि बाहुकर्म युद्धं, वैश्यस्याप्युरुकर्म पशुरूपम् । यतो—

गोभिश्चरन्तीभिर्भ्रमणं स्थलपथवारिपथादिषु वाणिज्याय गमनम् । शूद्रस्य पादकर्म शुश्रूषा इति प्रथमाध्यायोक्तलोकानां विवृद्ध्यर्थमिति मानवीयवचनस्य भाष्यकर्तुर्मेधातिथेर्विवृतेः साहाय्येन—

"न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममयं जगत् ।
ब्रह्मणा सृष्टपूर्वं हि कर्मभिर्वर्णतां गतम् ॥"

इति महाभारतीयवचनस्य,

तथा,—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।"

इति गीतावाक्यस्य च परमेश्वरसृष्टमनुष्यजातीयसाधारण्यान्तरिमानवीयाध्यात्मविद्याद्यनुगुणसत्त्वविशिष्टास्तदनुरूपकर्मतत्पराश्च ते ब्राह्मणशब्दवाच्याः, तथा ये लोकसाधारणरक्षणाद्यनुकूलसत्त्वोपसर्जनरजःप्रधानगुणयुक्तास्तत्सदृशकर्मकरणपटवश्च ते क्षत्रियनाम्नाऽभिहिताः, तथा येऽर्थोपार्जनमूलकृषिवाणिज्यादिव्यवहारोत्पादकरज — उपसर्जनतमःप्रधानगुणयुतास्तदनुरूपकर्मानुष्ठाननिपुणाश्च ते वैश्यनामधारिणः, तथा ये शुश्रूषादिजीविकाजनकतमःप्रधानगुणशालिनस्तद्गुणपरिचायककर्मकर्त्तारश्च ते शूद्रनामान इत्यभिप्रायं प्रदर्श्य "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः, ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत" इति यजुर्वेदीयश्रुतेः सकलगुणाकरत्वाद्ब्राह्मणो ब्रह्मणः सर्वावयवप्रधानमुखस्थानीयः, तथा भुजबलप्रभावेन युद्धानुष्ठानप्रजापरिपालनादिकर्मानुष्ठानक्षमत्वाद्ब्राह्मणो बाहुस्थानीयः क्षत्रियः, तथा वैश्यो गमनागमनानुकूलबलतया कृषिवाणिज्याद्यनुरूपवृत्ति-

विशिष्टतया बाहुस्थानीयः, तथा पादसंवाहनादिशुश्रूषासक्ता बुद्धिहीनाः-शूद्राः पादस्थानीया—

इत्थमर्थं विधाय मानवीयजातिविभागस्य समाजकृतत्वं समर्थयन्ति,-तथेदानीन्तनसकलजातीयमानवेषु ब्राह्मणादिजात्युद्बोधकगुणोपलक्षितान् स्वस्वजात्यपेक्षया भिन्नसोपानावस्थितान् मनुष्यान् तत्तदुच्चजातिमुन्नेतुमेकवर्णात्मिति वार्त्तं मतं समुद्घोषयन्ति च यत्, तन्मन्दं, पूर्वापरसङ्गतिविहीन स्वकृततत्तद्वचनाभिधेयस्यातदर्थत्वेन परस्परविरोधसम्भवात्, पृथिव्यवच्छेदावस्थितसकलमानवेष्वेतादृक्जातिविभागस्य चक्षुर्विषयतया वेदात्मकाप्तवाक्येनसिद्धान्तितपरमेश्वरकर्तृकत्वात्, अन्यथैकत्र सत्वेऽन्यत्रासत्वाच्च । द्वितीयतृतीयहेतुविवरणं, वक्ष्यमाणप्राच्यप्रतीच्यशास्त्राभिज्ञपण्डितमतोद्घाटनाभ्यन्तरेलेख्यम् । संप्रत्यत्र तु विव्रियते प्रथमनिदानम्,—

यथा, ननु कथं परस्परविरोधः प्रमाणानामिति चेदुच्यते, यथा, प्रोक्तमेधातिथिविहृतेरवभासितो नैकमानवजातितो वर्णविभागः । केवलं श्रुत्युक्तमुखादिशब्दानां मुख्यत्वाद्यर्थप्रकाशनेन ब्राह्मणादिजातेः प्रतिपादितं प्राशस्त्यादिकमेव ।

तथाप्येतद्विवरणस्य प्रमाणशून्यतयोद्भावितं तत्प्रागल्भ्यमेव, कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थस्येश्वरस्य सर्वशक्त्याधारमयत्वेन तन्मुखादितस्तत्तद्वर्णोत्पत्तेःसन्देहानास्पदत्वात् । अत आदितो दैवशक्त्या सृष्टं वर्णजातमिति व्याख्यातम्, तत्परस्य श्रुत्युक्तमुखाद्यवयवेभ्य उत्पत्त्यर्थमन्तरेण तदुक्तमुखादिशब्दस्य निदानमन्तरोपस्थापितमुख्याद्यर्थतया स्ववचनविरोधादनेनैव परमेश्वरस्य लघुत्वसम्पादनाच्च हेय एव परमार्थत इत्यर्थपक्षः ।

अपरञ्च, ननु प्रसङ्गं कमप्यभिलक्ष्य "न विशेषोऽस्तिवर्णाना"मितिमहाभारतीयवचनमुपन्यस्तमित्येतदविविच्य तद्बलेन समाजकृतो वर्णविभागइति कथं स्थिरीकृतं, स्वोद्धृततत्सहचरचातुर्वर्ण्यमिति गीताप्रमाणेन खण्डितत्वात्तेषामानुष्ठितजातिविभागस्य, तद्विशद्यते,—

यथा, अर्जुनं प्रति वदता पूर्णब्रह्ममयेन श्रीकृष्णचन्द्रेणोक्तमेतद्वचनम् । यतो मया अर्थात् श्रीकृष्णेन मया गुणकर्मविभागशो निर्मितं चातुर्वर्ण्यम्, न तु-

लोकसमाजेन, ततश्चातुर्वर्ण्यविभागस्य परमेश्वरकृतत्वात् मानवोत्पत्तिसमकाल-मेव वर्णविभाग इति ध्येयम्।—

स्वकृतप्रथमोक्तवचनार्थस्य सद्धरवचनाभिधेयभिन्नतयाऽनयोर्विरोधः सुस्पष्ट एव।

अन्यच्च,

"ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥"

इति ऋग्वेदीया ऋक्।

तथाच,—

यथाच ऋचोऽस्या भाष्यकर्त्ता सायनः,—

"इदानीं पूर्वोक्तप्रश्नानामुत्तराणि दर्शयति, अस्य प्रजापतेर्ब्राह्मणो ब्राह्मणत्व जातिविशिष्टः पुरुषो मुखमासीत् मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः-क्षत्रियत्वजातिविशिष्टः स बाहूकृतः बाहुत्वेन निष्पादितः बाहुभ्यां निष्पादित-इत्यर्थः। तत्तदानीमस्य प्रजापतेर्यत् यौ ऊरू तद्रूपो वैश्यः सम्पन्नः-ऊरुभ्यामुत्पन्न इत्यर्थः। तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान्-पुरुषोऽजायत, इयं तु मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः। यजुःसंहितायां-सप्तमकाण्डे स मुखतस्त्रिवृतं निरमिमीत इत्यादौ विस्पष्टमाम्नाता। अतः-प्रश्नोत्तरे उभे अपि तत्परत्वेनैव योजनीये"।

तथा यजुःसंहितायाम्—

"ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत"॥

तथाऽस्या ऋचो भाष्यनिर्माता यथाच महीधरः,—"ब्राह्मणः ब्राह्मणत्वजाति-विशिष्टः पुरुषः अस्य प्रजापतेः मुखं आसीत्। मुखादुत्पन्न इत्यर्थः। राजन्यः-क्षत्रियत्वजातिविशिष्टः बाहुः कृतः। बाहुत्वेन निष्पादितः। तत्तदानीमस्य-प्रजापतेः,—यत् यो विभक्तिलोपः। लिङ्गवचनव्यत्ययो वा। ऊरू तद्रूपो-वैश्यः सम्पन्नः। ऊरुभ्यामुत्पादित इत्यर्थः। तथा पद्भ्यां शूद्रत्वजातिमान्-पुरुषोऽजायत, उत्पन्नः।

तथाथर्ववेदेऽपि,—

"ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्योऽभवत् ।
मध्यं तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत" ॥ इति ।

अथर्ववेदीयार्चन्तराले "अभवत्, मध्यम्," इति पदद्वयोपन्यासेनाल्पा-विभिन्नत्वेऽपि निरुक्तश्रुतिद्वयादर्थः समान एव ।

अर्थमेतं द्रढयति मनुस्तदनुष्ठितसंहितायाः प्रथमाध्यायप्रकाशितप्रमाण-प्रदर्शनेन । यथा,—

"लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्" ॥ इति ।

तथाच कुल्लूकभट्टः,—

"लोकानां त्विति, भूर्लोकादीनां वाहुल्यार्थं मुखबाहूरुपादेभ्यो ब्राह्मण-क्षत्रियवैश्यशूद्रान् यथाक्रमं निर्मितवान् । ब्राह्मणादिभिः सायंप्रातरग्न्या-वाहुतिः प्रक्षिप्ता सूर्य्यमुपतिष्ठते । सूर्य्याद्वृष्टिः वृष्टेरन्नं अन्नात् प्रजा-वाहुल्यम् । वक्ष्यति च अग्नौ प्रास्ताहुतिः सम्यगादित्यमित्यादि दैव्या च-शक्त्या मुखादिभ्यो ब्राह्मणादिनिर्माणं ब्रह्मणो न विशङ्कनीयं श्रुतिसिद्धत्वात् ।

तथाच श्रुतिः,—

ब्राह्मणो मुखमासीदित्यादि ।

स्वयं वेदविभागमाचरता व्यासदेवेन स्वरचितविष्णुपुराणे कीदृगर्थः प्रकाशितो-ऽस्याः श्रुतेर्दृश्यतामिव: ।

यथा विष्णुपुराणीयप्रथमांशस्य षष्ठाध्याये,—

"सत्याभिध्यायिनः पूर्वं सिसृक्षोर्ब्रह्मणो जगत् ।
अजायन्त द्विजश्रेष्ठ ! सत्त्वोद्रिक्ता मुखात्प्रजाः ॥
वक्षसो रजसोद्रिक्तास्तथा वै ब्रह्मणोऽभवन् ।
रजसा तमसा चैव समुद्रिक्तास्तथोरुजाः ॥

पद्भ्यामन्याः प्रजा ब्रह्म ससर्ज द्विजसत्तम !।
तमःप्रधानास्ताः सर्वाश्चातुर्वर्ण्यमिदं ततः" ॥ इति।

यथा—श्रीमद्भागवते द्वितीयस्कन्धीयपञ्चमाध्याये तमर्थमपि विशदयति-कृष्णद्वैपायनः,—

"पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः।
ऊर्वोर्वैश्यो-भगवतः पद्भ्यां शूद्रो व्यजायत" ॥ इति

तथाच तट्टीकाकाराः पूज्यपादाः श्रीधरस्वामिनः, "वर्णानां तत उत्पत्तिं दर्शयति,—ब्रह्म ब्राह्मणः मुखमिति कार्य्यकारणयोरभेदविवक्षयोक्तम्। बाहव-इति च क्षत्रं क्षत्रियः इति"।

"यथा चातुर्विश्वनाथचक्रवर्त्तिनः। प्रसङ्गेन परमेश्वरादुत्पत्तिमाह, ब्रह्म-ब्राह्मणो मुखमिति कार्य्यकारणयोरभेदविवक्षयोक्तम्। क्षत्रं क्षत्रियः, ब्राह्मणो-मुखमासीद्बाहू राजन्यः कृतः इति श्रुतेः"। इति, निरुक्तप्रमाणेष्वेतेषु अजायते-त्यादिक्रियाग्रातस्योपात्तत्वेनैव मुखादित उत्पत्तिरूपाभिधेयादन्योऽर्थो न-प्रकाशितः कैरपि भारतीयपूर्वाचार्य्यैः। कुतो मेधातिथिना श्रुत्युक्तमुखादि-शब्दत आनीतः प्राधान्यादिरूपार्थः। कथं वा सम्पादितः समाजकृत-रूपार्थो वर्णविभागस्य यत्तुना। समुद्भूतेऽतो निरुक्तश्रुत्यादिभिर्विरोधे महा-भारतीयवचनस्य वक्ष्यमाणरूपार्थकरणे न भवेदन्योन्यवचनविप्रतिपत्तिः। कोऽर्थं इत्याकाङ्क्षायां प्रकाश्यते सोऽर्थः।

यथा,—

"यदा प्रथमतो जगत् सर्वं ब्रह्ममयमासीत्"। तदा केवलं ब्रह्मैवाभवत्,-तदवसरे ब्रह्मातिरिक्तो नाविद्यत वर्णविभागः। ततः कर्मभिर्वर्णतां-प्राप्तं जगत् ब्रह्मणा पूर्वं सृष्टं अर्थात् स्वस्वकर्मणा विभक्तवर्णविशिष्टं जगत्-ब्रह्मणा निर्मितमित्यर्थः। इममर्थं द्रढयति श्रुतिजालं सृष्टेः पूर्वं ब्रह्मणि-लीनमासीज्जगत्सर्वम्, अतो ब्रह्ममयमभूत्सर्वं जगत्, तदा नासीद्वर्णविभागः। अनन्तरं "बहुस्यां प्रजायेय" इति श्रुत्या चिन्तान्विता ब्रह्मणो यदा संजाता-सृष्टीच्छा तदा विराड्रूपेणाविर्भूय "स ऐक्षत" "स ईक्षांचक्रे" स विराट्

ऐक्षत वा ईक्षांचक्रे अवलोकितवान् अर्थात् आत्मकर्मानुगतवर्णविभागपूर्वक-प्राणिसृष्टिं कृतवानिति श्रुतिद्वयस्य विशदार्थः ।

मनुस्मृतिरप्येतदर्थपृष्टपोषकतामापादयति प्रकारान्तरेण प्रथमाध्याये,—

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" ॥ इति ।

तथा,—

यथाह कुल्लूकभट्टः,—

"इदं जगत् तमो भूतं तमसि स्थितं लीनमासीत्" ।

तमःशब्देन गुणवृत्त्या प्रकृतिर्निर्दिश्यते ।

तम इव तमो यथा तमसि लीनाः पदार्थाः प्रत्यक्षेण न प्रकाश्यन्ते । एवं-प्रकृतिलीना अपि भावा नावगम्यन्ते इति गुणयोगः । प्रलयकाले सूक्ष्मरूपतया-प्रकृतौ लीनमासीदित्यर्थः ।

तथाच श्रुतिः,—"तम आसीत्तमसा गूढमग्र" इति ।

"प्रकृतिरपि ब्रह्मात्मना अव्याकृतासीत् । अतएव अप्रज्ञातं अप्रत्यक्षं-सकलप्रमाणाविषयतया प्रत्यक्षगोचरः प्रज्ञात इत्युच्यते तन्न भवतीत्यप्रज्ञातं-अलक्षणमननुमेयं लक्ष्यतेऽनेनेति लक्षणं लिङ्गं तदस्य नास्तीति अलक्षणम् ।

अप्रतर्क्यं तर्कयितुमशक्यं तदानीं वाचकस्थूलशब्दाभावात् शब्दतोऽप्य-विज्ञेयम् । एतदेव प्रमाणत्रयं सतर्कं द्वादशाध्याये मनुनाभ्युपगतम् । अतएवा विज्ञेयमित्यर्थापत्त्याद्यगोचरमिति" धरणीधरस्यापि व्याख्यानं ।

न च नासीदेवेति वाच्यम् । तदानीं श्रुतिविरुद्धत्वात् ।

तथाच श्रूयते "तदेवेदमव्याकृतमासीत्" ।

छान्दोग्योपनिषच्च,—"सदेव सोम्येदमग्र आसीत्" ।

"इदं जगत् सदेवासीत्, ब्रह्मात्मना आसीदित्यर्थः सच्छब्दो ब्रह्मवाचकः । अतएव प्रसुप्तमिव सर्वतः प्रथमार्थे तसिः, स्वकार्याक्षममित्यर्थः" । इति ।

तथा,—

"तथा स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥
सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥ इति ।

तथाच कुल्लूकभट्टः,—

अथ किमभूदित्याह, ततः स्वयम्भूर्भगवानित्यादि । ततः प्रलयावसानानन्तरं स्वयम्भूः परमात्मा स्वयं भवति स्वेच्छया शरीरपरिग्रहं करोति । न त्वितरजीववत् कर्म्मायत्तदेहः तथाच श्रुतिः स एकधा भवति द्विधा भवतीति । भगवान् ऐश्वर्य्यादिसम्पन्नः अव्यक्तो वाह्यकरणागोचरः योगाभ्यासावसेय इति यावत् । इदं महाभूतादि, आकाशादीनि महाभूतानि आदिग्रहणात् महदादीनि च व्यञ्जयन् अव्यक्तावस्थं प्रथमं सूक्ष्मरूपेण ततः स्थूलरूपेण प्रकाशयन् वृत्तौजाः वृत्तमप्रतिहतमुच्यते अतएव वृत्तिसर्गतायनेषु क्रम इत्यत्र वृत्तिरप्रतिघात इति व्याख्यातं जयादित्येन । वृत्तमप्रतिहतमोजः सृष्टिसामर्थ्यं यस्य स तथा । तमोनुदः प्रकृतिप्रेरकः ।

तदुक्तं भगवद्गीतायाम्,—

"मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति" ।

प्रादुरासीत् प्रकाशितो बभूव । तमोनुदः प्रलयावस्थाध्वंसक इति तु मेधातिथिगोविन्दराजौ । तथा योऽसाविति सर्वनामद्वयेन सकललोकवेदेतिहासादिप्रसिद्धं परमात्मानं निर्द्दिशति । अतीन्द्रियग्राह्य-इन्द्रियमतीत्य वर्त्तत इत्यतीन्द्रियं मनस्तद्ग्राह्य इत्यर्थः ।

यदाह व्यासः,—

"नैवासौ चक्षुषा ग्राह्यो न च शिष्टैरपीन्द्रियैः ।
मनसा तु प्रयत्नेन गृह्यते सूक्ष्मदर्शिभिः" ॥

सूक्ष्मो वहिरिन्द्रियागोचरः अव्यक्तः व्यक्तिरवयवस्तद्रहितः सनातनो-नित्यः सर्वभूतमयः सर्वभूतात्मा अतएवाचिन्त्यः इयत्तया परिच्छेत्तुमशक्यः। स एव स्वयं उद्बभौ महदादिकार्य्यरूपतया प्रादुर्बभूव। उत्पूर्वो भातिः-प्रादुर्भावे वर्त्तते धातूनामनेकार्थत्वात्। तथाच सोऽभिध्यायेति, स परमात्मा नानाविधाः प्रजाः सिसृक्षुरभिध्याय आपो जायन्तामित्यभिध्यानमात्रेण-अप एव ससर्ज। अभिध्यानपूर्विकां सृष्टिं वदतो मनोः प्रकृतिरेवाचेतना-स्वतन्त्रा परिणमत इत्ययं पक्षो न सम्मतः। किन्तु ब्रह्मैव व्याकृतशक्त्या-त्मना जगत्कारणमिति त्रिदण्डिवेदान्तसिद्धान्ते एवाभिमतः प्रतिभाति।

तथाच छान्दोगोपनिषत्, "तदैक्षत, बहुस्यां प्रजायेय" इति अतएव-शारीरिकसूत्रकृता व्यासेन सिद्धान्तितं ईक्षतेर्नाशब्दमिति। ईक्षतेरीक्षण-श्रवणात् न प्रधानं जगत्कारणं अशब्दः न विद्यते शब्दः श्रुतिर्यस्य तदशब्द-मिति सूत्रार्थः, स्वाच्छरीरात् अव्याकृतरूपात् अव्याकृतमेव भगवद्भास्करीय-वेदान्तदर्शने प्रकृतिस्तदेव तस्य शरीरं अव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रिय-कर्मेन्द्रियप्राणमनःकर्माविद्यावासना एव सूक्ष्मरूपतया शक्त्यात्मना स्थिता-अभिधीयन्ते। अव्याकृतस्य च ब्रह्मणा सहाभेदस्वीकारात् ब्रह्माद्वैतम्। शक्त्यात्मना च ब्रह्म जगद्रूपतया परिणमत इत्युभयमप्युपपद्यते। आदौ-स्वकार्य्यभूमिब्रह्माण्डसृष्टेः प्राक् अपां सृष्टिरेयं महदहङ्कारतन्मात्रक्रमेण-बोद्धव्या, महाभूतानि व्यञ्जयन्निति पूर्वाभिधानात् अनन्तरमिति महदादि-सृष्टेर्वक्ष्यमाणत्वात्। तास्वप्सु वीजं शक्तिरूपं आरोपितवान्।

अन्यच्च,—

श्रुतिस्मृत्याद्यर्थमपहाय महाभारतीयवचनस्य भिन्नार्थकरणेऽपि तदर्थो न-प्रशस्ततमः, श्रुतिस्मृतिपुराणविरोधे तु श्रुतेर्बलीयस्त्वन्यायेनेतिहासिकवचनानु-गतश्रुत्यर्थकरणस्यान्याय्यत्वात्। अतो निरुक्तप्रमाणसन्दोहलिङ्गात्तथा श्रुत्यर्थ विरोधाच्च परमेश्वरकृतो वर्णविभागः उपलक्षणविधया जातिविभागोऽपि-न समाजानुष्ठित इति प्रेक्षावतां धर्मशास्त्रीयसिद्धान्तः। विभागस्यैतस्य-परमेश्वरकर्तृकत्वे प्राच्यपाश्चात्यशास्त्राभिज्ञैर्यन्मतमुद्भावितं तत्सूद्रियतेऽधः। सम्प्रति जातीयकथामालोचयिष्यामि साधारणतः। यथा, समाजवहजीवाभ्यन्तरे-

जातिभेदः प्रचलितः सर्वत्र। समाजनियमितनिम्नजातीयजीवजातम-आरभ्य उन्नततमजीवनिवहपर्य्यन्तं सर्वेषां जीवानामभ्यन्तरेऽपि विद्यते जाति-भेदः। सुतरामस्ति कारणं मौलिकम्। एतदेव वा एष एव जीववस्तुनोऽनन्य-साधारणो धर्मः प्रकृतपक्षतः, एतद्वा एषः तत्कथितचेतनाचेतनात्मक-सकलवस्तुनो धर्मः सकलानामभ्यन्तरेऽपि विद्यमानत्वाज्जातिभेदस्य। यथा,-लोहान्यनेकप्रकाराणि, अङ्गारा बहुप्रकाराः, रौप्यं षड्विधं, अम्लजानोऽन्ततः-प्रकारद्वयविभक्ताः अचेतनपदार्थाः अप्यनेकपरिवारेण नानाविधजात्या च-विभक्ताः। अर्थात् कियत्परिमितपदार्थानां सादृश्यमेतादृक्निकटवर्त्ति यत्, एकजातीया एते, इति वक्तव्यम्। पदार्थानामपरेषां न तावत्सादृक्साहश्य-नैकट्याभावेऽपि विद्यन्तेतत्त्व थापि, तेषामेकजातीयत्वाभावे सत्यप्यस्त्येकपरिवार-भुक्तत्वमेतेषाम्। यथा, क्लोरिणब्रोमिना-इओडिननामकान्यौषधानि इङ्ग-लण्डदेशप्रचलितान्येकपरिवारभुक्तान्यपि विभिन्नजातीयानि। तथा, यव-क्षारफस्फरासर्निकवोरणसिलिकनकान्यानि द्रव्याण्येकपरिवारान्तर्भूता-न्यपि विभिन्नजातीयानीति न शक्नुयात् प्रकाशयितुम्। स्थलेऽस्मिन्, जाति-रधिकसादृश्येन परिवारोऽल्पसादृश्येनेति कथ्यतेऽस्माभिः। तथा, यद्यदल्प-सादृश्यमस्त्येषु, तत्तु रासायनिकशास्त्रतोऽवगन्तव्यं, तद्विवरणमत्र नोल्लिखितं-ग्रन्थबाहुल्यभयात्। समस्तजीवाः परिवारैकभुक्ता इति सत्यनुष्ठिते विवेचने-विभिन्ना उद्भिदः, जन्तवो विभिन्नाश्च विभिन्नजात्यात्मकत्वेनाभिहिताः। पुनश्च-प्रत्येकजन्तुरेकपरिवार इति भवेच्चेदुक्तं,तस्य विभिन्नप्रकारो-विभिन्नजातीय-इति-शक्नुयाद्वक्तुम्। श्रेणीविभागे जीवस्य वैज्ञानिकनिवहा एतदपेक्षया सङ्कीर्णार्थे-परिवारजातिशब्दौ व्यवहरन्ति। किन्तु स्थूलतोऽस्मिन् ब्रूमो वयं एकपरिवार-भुक्ताः सकलमानवा इति सत्यपि कथितं माङ्गोलीयककेशीयप्रभृतयो जात्या-भिहिताः। अन्यच्च ककेशीयगणे सत्येकपरिवाराभ्यन्तरे परिगणिते भारतीयेङ्ग-लण्डीयादयो जात्यात्मकाः, तथा, समस्तभारतीयेषु मत्स्यैकपरिवारभुक्तेषु-ब्राह्मणकायस्थप्रभृतयः कथिता जातिनामतः। स प्रभेदो जन्मगतः कर्मगतश्च। तत्र चेतनाचेतनयोर्न विद्यते विभेदः।

स्थूलतोऽस्मिन् सत्यपि कथितेऽनन्तरं विशेषतो,देशविशेषं मानवजातिविशेषं

माश्रित्य विविच्यते जातिभेदविचारः । यथा, न विद्यतेऽत्र पृथिव्यां हिन्दुजातिवत् प्राचीना जातिः । चीनारबमिसरव्यावलनादयः प्रदेशा आसन् प्राचीनाः-पूर्वतः । किन्त्वलभन्त ध्वंसमेते । न तावद्देते ध्वस्ताः, तैः सार्द्धं तद्देशीयसकलजातयोऽपि विलयमलभन्त साकल्येन । सन्त्येतेऽधुना चीनप्रभृतयो देशाः । किन्तु तत्तद्देशेषु प्रचलितत्वेन नवनवाचारव्यवहाराणां न दृश्यते चिह्नमात्रमपि प्राचीनजातिव्रातस्येदानीम् । न केवलमेतच्छ्रूयादृक्कं भारतविषये । केवलं विशेषतः-सामाजिकव्यवस्थया व्यवस्थाप्रणाल्या च पुराकालतोऽद्यावधि विद्यन्ते हिन्दुव्यक्तयश्चिरदिनम् । स्थास्यन्त्यपि चिरदिवसं, मिसरादितत्तत्प्राचीनप्रदेशेषु-हिन्दुसम्प्रदाय सभ्यतायाः प्रचारितत्वात्कियद्दंशेन चीणायामपि सत्यां तत्तद्देशीयायां सामाजिकव्यवस्थायां धर्मप्रणाल्यां च समाजानां तत्तद्देशीयानामेकदैव विलुप्ततया भारतभिन्नेऽपरस्मिन् कस्मिंश्चिदपि स्थाने नावलोक्यतेऽधुना-तच्चिह्नमात्रमपि । समस्तराजनीतयस्ता आचारव्यवहारधर्मभावाश्च ते-तत्तद्राज्यप्रचलितनूतननीत्यादिना सन्तो-मिलिता नूतनाकारेणैकेनासन्-विवर्त्तिताः । पुनश्च सम्प्रति न परिचीयते पूर्वभावः । किन्तु हिन्दुजातिरियमवगम्यतेऽधुनापि । अस्यात्र कारणमेतत्, हिन्दुभिः स्वेनैव सम्पादितं-स्वसमाजधर्मगठनम् । पुरातनमौलिकसमाजनीतेर्धर्मस्य चानुसरणसामर्थ्येनैवं-तथैव परिचीयन्तेऽद्यापि हिन्दवः । सत्यपि सञ्जाते बहुशः परिवर्त्तने-मौलिकनीतिर्धर्मभावश्चाधुनापि विद्यतेऽलुप्तभावेन चासीत्सत्ययुगे बीजमुप्तं-जातिभेदसनातनधर्मयोर्हिन्दुसमाजे । क्रमशस्तदङ्कुरितं सत्सञ्जातं समाज-धर्मात्मकवृहद्वृक्षरूपेण । स वृक्षोऽसंख्यशाखाप्रशाखाविशिष्टो भूत्वा पल्लवितश्च-क्रमशस्त्रेताद्वापरकलिनामकेषु युगेषु विशालतररूपतयाऽभवत्परिणतः । जातिरियं प्राचीना स्वप्राचीनत्वस्यातिचमत्कारं परिचयमददात्सर्वदा । ब्राह्मणादिजातिः कियत्कालावधिकेति जिज्ञासितास्ते स्मोत्तरयन्ति यत्कालतो विद्येते चन्द्रसूर्य्याविति ।

यथा,—

"यावन्मेरुस्थिता देवा यावद्गङ्गा महीतले ।
चन्द्रार्कौ गगने यावत्तावद्विप्रकुले वयम्" ॥

एवमन्यजातीयपुरुषा ददतुरुत्तरम्।

यथा—"यावच्चन्द्रदिवाकरौ" कथनस्यैतस्यार्थः क,-इत्युच्यमानेऽतिनिगूढ़-एतत्कथनाभिधेयः। चन्द्रसूर्य्योत्पत्त्यवधिकोऽयं ब्राह्मणादिवर्णविभाग-समयः। चन्द्रसूर्य्योत्पत्तेः कः कालः। ददातुरुत्तरमितच्छास्त्रमेव। यथा—वर्त्ततेऽयं संसारोऽनादिकालतः तस्माच्चचर्य्याच्चन्द्रार्कावपि तत्कालतः। यद्यपि चन्द्रार्कयोरनादिकालतोऽस्त्यवस्थानं, तथापि श्रूयतेऽस्माभिर्यच्छास्त्रे-सृष्टिस्थितिप्रलयकथनम्। मिथ्यात्मकं किं तत्। न मृषा तत्,-तत्सत्यमेवम्। कथं तत्सत्यात्मकम्? संसारोऽयं सृष्टिस्थितिप्रलयात्मकतया-विद्यतेऽनाद्यनेहसः एतदवस्थात्रयं वा संसारस्य। कथनमेतत्कियद्दूरं-विज्ञानसम्मतं युक्तिसङ्गतं च, तद्वैदिकसृष्टितत्त्वविवेकतो भविष्यति स्फुटतः,-किन्तु ग्रन्थबाहुल्यभिया नानुष्ठितमेतदत्र। तथापि प्रतिपाद्यतेऽस्याः-कथाया विस्मयाधायकेनैकेन याथार्थ्यम्। यथा, दृश्यते यदयं वृक्षोऽश्वत्थ नामा, सोऽयं प्रकाण्डवृक्षः कीदृक्? किन्तु तस्य वृहत्प्रकाण्ड-वृक्षस्योत्पत्तिर्भवत्येकक्षुद्रसामान्यबीजकोषतः, बीजावस्थायां तादृक् वृहद्वृक्षः-क्षुद्रबीजकोषाभ्यन्तरे निष्क्रियतयासीद्यथा निद्रितः, समयक्रमेण सत्या-मङ्कुरोत्पत्तौ स वृक्षो भूत्वा जागरित आसीत्प्रागचेतन इव। क्रमशो-लब्धवृद्धितयाऽशोभत फलैरनेकैः। तत्फलजालतः समुत्पद्यन्ते बहूनि-बीजानि। प्रत्येकबीजेभ्यो जायन्ते तादृशो-महान्तस्तरवः। पृच्छ्यतेऽत्र-बीजमासीदग्रतो वृक्षो वादितः? प्रश्नस्योत्तरमेतत्। यथा वृक्षोऽयं बीज-कोषाभ्यन्तरालेऽवस्थितो लीनावस्थया, विकाशावस्था तस्य तत्परतः। पुनश्च-परिणतिर्लीनावस्थया। कदापि न विद्यते तस्य ध्वंसः। सुतरामेकस्यैव-बीजवृक्षयोरवस्थाभेदेन यथैकद्रव्यं न तावत् पदार्थान्तरम्। तथापि बीजमिदं-मादिमं वा वृक्षोऽयमग्रिमः, प्रश्नस्यास्योत्तरं सहजं। यथा, न तावत्तयो-रग्रपश्चाद्भावः। चिरकालतो द्रव्यमिदमेकं भवेद्द्विभिन्नावस्थापन्नम्। यथा-निष्क्रियबीजतोऽश्वत्थोत्पत्तिस्तथा निर्गुणैकमूलप्रकृतितो विश्वस्योत्पत्तिः। जगत्प्रसूतिः सैव प्रकृतिः। प्रलयावसरेऽनन्तमिदं विश्वं बीजावस्थायामव-स्थितं निष्क्रियत्वेन। निष्क्रियावस्थात्वं नाम निर्गुणप्रकृतित्वं सैव जडेति-

कथ्यते सांख्यकारैः। समयक्रमेण प्रकृतेस्तस्या निष्क्रियत्वात्मकाया वा निर्गुणत्वस्वरूपाया अवस्थायाः सति साम्यभङ्गे प्रकृतिवीजमेतत् सजीवं सगुणं भूत्वा भवेत्क्रियाशीलम्। प्रकृत्यां सत्यां क्रियाशीलायां महतोऽस्य विश्वस्याभूत्प्रकाशः। विकाशोऽयं भवति नैकदिवसेन, किन्तु प्रकाशः क्रमशः। यथैव महानश्वत्थः क्रमशोऽङ्कुरान्नानाशाखाप्रशाखाभिर्भवेद्विस्तारितः। तथा, ब्रह्माण्डोऽयमपि तदनुरूपादेकस्मान्महतः काण्डाद्वा महत्त्वतो भवति-सम्प्रसारितो विकाशितश्च, तदा प्रलयावसरे पूर्वकाण्डो यो वीजावस्थापन्नः,— स पुनर्ब्रह्माण्ड आसीद्दृष्टिविषयः। दृष्टिपथमारुह्य पुनरवस्थितो व्याप्यानेकसहस्रवत्सरं, पुनरागते समये कालशक्तिप्रभावेन पदार्थसमुदायः प्रलये-वीजावस्थामवाप्तः व्याप्य बहुसहस्रवर्षमवस्थितस्तद्भावेन। पुनः सृष्टिः, प्रलयः-पुनः। सुतरां धारावाहिकक्रमेण ब्रह्माण्डस्य सृष्टिप्रलयाविमौ नित्यनियमः। सकृत्सृष्टिप्रवाहः, पुनः प्रलयः, पुनस्तथैवैवमनादिकालतः संसारस्यायं सृष्टि-प्रलयात्मको नियमः प्रवाहरूपेण नित्यः। अतएव जगदात्मकसंसारस्यैकदैव ध्वंसो न भवेत्कदापि। घटत एवावस्थान्तरं तस्य। कदा तस्य विलीनावस्थत्वं, कदा वा विकाशावस्थत्वम्। विकाशावस्था एव सृष्टिः, विलीनावस्था-एव प्रलयः। यदि सत्योऽयं परिणामिप्रकृतेर्नियमः, तर्हि प्रलयपूर्वतो-विद्यत यद्यत्, तस्य तस्य नासीत्किंयदंशस्य ध्वंसः, प्रलयावसरे चन्द्रसूर्य्यादयः सकलपदार्थाः आसन्नवस्थिता लीनावस्थायाम्। पुनः सृष्टिकाले-विधुभास्करप्रभृतयस्ते सर्वपदार्था आयाता दृष्टिगोचरताम्। समाजतत्त्वमवगन्तुं चेदभिलाषः, तर्हि निरुक्तक्रमानुसारेण ब्रह्माण्डस्य सृष्टिस्थितिप्रलयज्ञान-मावश्यकम्। वैदिकहिन्दुशास्त्रं ददाति शिक्षामेवं, संसारेऽस्मिन् सृष्टिस्थिति प्रलया राशिचक्रन्यायेनैवं प्रचलन्त्यनादिकालतः। जगद्रूपोऽयं संसारः प्रवाहात्मकतया नित्यः। तदभ्यन्तरीणान्यपदार्थजातमपहाय प्रसङ्गोपयोगितया-मनुष्योत्पत्तिविवेचनमारभ्यतेऽत्र।

यथा, सृष्टिप्रलयसाधारणनियमः स्थूलतो व्यक्तीकृतोऽस्माभिः, तन्नियमानुसारेण तर्हि न पुनः किञ्चिन्नूतनं भवेत् सृष्टिव्यापारे, यत्पूर्वं प्रलयावसरे-वीजाकारेण परिणतं भवति तस्य संप्रकाशमात्रमेव। पुराकल्पे सत्त्वरजस्तमो-

गुणान्विता मिलित्वा मानवमण्डलीप्रलयकल्पे यत्साधारणैकमानवजातीय-बीजाकारेणासीत्परिणता, तथोपलभ्य परिणतिमासीन्मूलप्रकृत्यां लीलावस्थया-वस्थिता, कालवशतो वृक्षबीजस्येव कालशक्तिप्रभावेण तत्प्रकृतेर्निष्क्रियत्वं वा-निर्गुणत्वं तथा साम्यं वा जड़त्वं भवेदपसारितं, पुनस्तदा विकाशोऽभवत्त्रि-गुणस्य, सत्वस्य विकाशे पुनस्त्रिगुणात्मकमानवमण्डल्यलभत विकाशम्, अर्थात्-सकलजगद्विकाशेन साकमारुरोह दृष्टिपथं मानवजातिः, पूर्वकल्पे यज्जातीय-धर्मयुक्ता ये, ते तज्जातीयधर्मिमतयैतत्कल्पेऽवलोकिताः। तदभ्यन्तरे-सात्विकगुणसम्पन्ना ब्राह्मणजातीयाः, क्षत्रियजातीयाः सत्वोपसर्जनरजोगुण-विशिष्टाः, वैश्यजातीया रजउपसर्जनतमःप्राधानाः, केवलतमोगुणयुक्ता-लोकाः शूद्रजातीयाः, सत्यमासन्, किन्तु तेषां तत्तद्गुणाः प्रलयावसरे व्याप्य-कोटिकोटिसम्वत्सरान् निष्क्रियत्ववशतो निद्रिताः, अर्थादासन् जड़प्रायाः,-शीघ्रमपसर्त्तुं शक्नुयात् किं तज्जड़तां। प्रकाशितव्यम् तदुत्तरं परतः। युगान्तरेऽ-पसृतायां सत्यां तज्जड़तायां त्रिगुणान्वितायास्तस्या एव मानवमण्डल्या भवे-द्विकाशः साकल्येन। यथा शैशवे मानवस्य सङ्कटेन जड़त्वं जन्मान्तरीण-संस्काराणां तथा सार्द्धं वयोवृद्ध्या च यदाऽपसरेत्तज्जड़त्वं, तदा पूर्वजन्मार्जित-संस्कारव्रातं दृष्टिपथमागतमेकैकशः, तथा संघटतेऽनिशं मनुष्यजातितः। त्रिगुणस्यास्य धर्माधर्माववलम्ब्य जगदेतद्भवेत् स्थावरास्थावरात्मकनानाविधजीव परिपूर्णम्। यत्किञ्चिन्नामरूपधारि, तज्जीवनान्नाऽभिहितमिति वेदान्तमतम्,-यावपि धर्माधर्मौ गुणविभागं चाश्रित्य भवतुत्पत्तिः सर्वजातीयमानवानामस्याः-पृथिव्याश्च, यद्द्वयमवलम्ब्य नक्षत्र-चन्द्रसूर्य्यादीनां ज्योतिष्कपदार्थानां भवत्यु-दयः, पृथिव्यां तस्यां तद्धर्माधर्मानुसारेण समं नानाविधजीवजातिभि र्भवत्युद्भवो-मनुष्यजातेः। ततो मनुष्यजातेरेकस्याः सृष्टेः परिणामक्रमेण त्रिगुणात्मक-प्रकृतेर्गुणानुगत्या तन्मनुष्यजातेरभ्यन्तरे सञ्जातास्चत्वारो वर्णस्योपविभागाः। यः सत्वरजस्तमोगुणेभ्यः सृष्टिविकाशो भवति सकलब्रह्माण्डस्य तेभ्योऽप्या-सीद्विभागश्चतुर्वर्णानां, तद्विभागो गीतायामुक्तो भगवता श्रीकृष्णेन।

यथा,—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः"।

यस्य चतुर्वर्णस्य सृष्ट्या सार्द्धमासीदुत्पत्तिः, स चतुर्वर्णः कीदृग्रूपः । तदुक्तं शास्त्रे पूर्वाचार्य्यैः ।

यथा,—

"सत्वप्रधाना ब्राह्मणाः, सत्वोपसर्जनरजःप्रधानाः क्षत्रियाः, तमउपसर्जनरजःप्रधाना वैश्याः, रजउपसर्जनतमःप्रधानाः शूद्राः । इति । सृष्टिसमयतः सर्व्वविधमनुष्यसमाजे मन्दोत्तमा लोकाः, सृष्ट्यवसरे मानवमण्डल्यभ्यन्तरे वीजगतस्यास्य प्रभेदस्य विद्यमानतया तत्परवर्त्तिकाले-वीजस्यास्य भवति यथा संप्रकाशः, तथा तेन साकं लोकानामादिमगुणावली-क्रमशः स्पष्टं भविष्यति प्राप्तविकाशा । तदर्थं प्रत्येकलोकसमाजेषु क्रमशः-चतुर्व्विधा इमे लोका भवन्ति दृष्टिविषयाः, मन्दोत्तमा लोका न सन्ति कुतेति-न वक्तव्यम्, असभ्यादिपूर्णसभ्यान्तसर्व्वविधसमाजेष्वपि सात्विकलोका बहवस्तथा-ऽनेके लोका राजसिकाः, तथाऽसंख्यतामसिकलोकाः सन्तो विराजमाना-स्तत्तत्समाजस्यापादयन्ति वैचित्र्यं, तस्य मन्दोत्तमस्य मानवस्य विभागानुसारेण कृते मानवजातिविभागे चोपस्थितः शास्त्रोक्तचतुर्व्वर्णविभागः, जगदेतच्चेद्भगवद्रूपं, तद्रूपं तर्हि प्रत्येकमानवसमाजः । मनुष्यसमाजेऽपि विद्यते-परमेश्वरः । समाजस्यचतुर्व्वर्णास्तस्य वर्णरूपेण भवति विद्यमानः । तदेवमुक्तं गीतायाम्,—

यथा,—

"अविभक्तं च भूतेषु विभक्तमिव च स्थितम्" ।

तथाच तट्टीकाकारः पूज्यपादः श्रीधरस्तदेव विशदयति,-तथाच "यथा-समुद्रजातं फेनादि समुद्रादनतिरिक्तं सत् पृथक्भावेन प्रतीयते सततम् । तथेदं-स्थावरजङ्गमात्मकं जगत्सर्व्वमीश्वरात् स्वतन्त्रं केवलम् माययापि प्रतीयते भेद-बुद्धिः, स्वतन्त्रमिदमिति । नोचेत् कारणरूपेण भगवान् चराचरात्मकेषु सर्व्वभूतेषु-विभक्तभावेन तथा कार्य्यरूपेण प्रत्येकजीवशरीरे विभक्तवत्प्रतीयते ह्यनिशं",-तर्हि गीता कथयत्येवं, सोऽयमसमष्टिरूपेणास्ति सर्व्वजीवे, व्यष्टिरूपेणैवं विद्यते-प्रतिजीवदेहं, पूर्व्वतः प्रदर्शितमेवैवं, मनुष्यसमाजे गुणकर्म्मविभागशो घटते-

यश्चतुर्वर्णविभागः, सोऽपि भगवता तेन सृष्ट इति प्रतिपादितं गीतया, यथा-योऽयं समष्टिरूपेण विद्यमानः सर्वजीवे, सोऽयं व्यष्टिरूपेण तेन विद्यमानः-प्रतिवर्णं, प्रयोज्यावश्यं प्रति सर्वदेशीयमनुष्यसमाजं गीतोक्तिः। सुतरां-सर्वदेशीयमनुष्यसमाजेऽपि भगवान् विद्यते चतुर्वर्णात्मकत्वेन। प्रत्येकवर्णोऽपि तद्रूपात्मकः। अतः सामाजिकसृष्टिरूपात्मकस्य तस्य नाम कथ्यते वर्ण-इति सर्वैः।

अपिच दृश्यतेऽस्माभिरेतत्, गुणमवलम्ब्य क्रियते विचारश्चेत्, सकल-देशीयमानवसमाजेष्वपि सात्विक-राजसिक-तामसिकप्रकृतिविशिष्टा लोका-भवन्ति विद्यमानाः, लोका ये सात्विका ज्ञानिनस्ते, ये राजसिकास्ते लुब्धाः,-तामसिका ये ते अविवेकिनोऽज्ञानिनश्च, कारणमेतदुक्तं गीतायाम्,—

"सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च" ॥

क्रियते तर्हि परिचयो ज्ञानेन सत्वगुणावलम्बिलोकानां, तथा राज-सिकानां लोभेन, तथैव तामसिकानामज्ञानेन,-यज्ज्ञानेन भवेत् परिचयः-सात्विकलोकानां, न केवलं तत्पुस्तकगतमुखस्थज्ञानम्। सात्विकतां-प्रापयन्ति लोकान् यज्ज्ञानं, यज्ज्ञानस्योदये भवन्ति लोकाः संयमिनः-सच्चरित्राश्च, यज्ज्ञानगौरवं वशीकरोति सकलान् लोकानपरान्। तज्ज्ञानमपि सात्विकतायाः परिचायकम्। एतादृशज्ञानसम्पन्ना मानवा-अप्यधितिष्ठन्ति सकलसमाजस्य शिरोदेशम्। तदेवमुक्तं दरिद्रेण गोल्डस्मिथ-नामधेयेन कविना, "सर्वत्र चिन्ताशीला जनाः परिश्रमिणामुपर्य्याधिपत्य-माचरन्तीति बहुदर्शितागुणेनानुभूयतेऽस्माभिः" परिभ्रम्य नानादेशं नाना-देशीयलोकसमाजपरीक्षापूर्वकं गोल्डस्मिथाभिधेयेन कविना तत्कथनं कृतं-लिपिबद्धम्। सुतरां साधारणोऽयं नियमः सर्वदेशीयलोकसमाजस्य,-नियमोऽयं, ये ज्ञानिनः विज्ञा विवेकिनश्चिन्ताशीलाश्च तैरेव शासितो लोक-समाजः। ज्ञानवज्जातीया इमे सत्वगुणविशिष्टाः सर्वदेशीया लोका ब्राह्मण-शब्देनाभिधातव्याः। ना भविष्यति चेत्, सत्वगुणविशिष्टः सर्वसमाजस्तर्हि-

कथं भवेत्तन्मन्त्रैर्वशीभूतः। एतादृग्ज्ञानिनो ब्राह्मणजातीयाः सर्व्वदेशीयमानववर्गा अपि देशे सर्व्वस्मिन् सचिवपदमधिष्ठाय राज्ञः शासति नियमयन्ति च जनान् सकलान्, सच्चरित्रप्रभावेणैतेषां यद्बलीयो मन्त्रबलं, मन्त्रबलेनैतेषामङ्गीकुर्व्वन्ति वशतां मानवाः सर्व्वे, सत्यामविद्यमानायां सात्त्विकतायां स्थिरा न भवेद्बुद्धिः, मतावस्थिरायां न भवेत् सुमन्त्रणोत्पत्तिः। एतादृक् लोकोन भवेत् केवलं राजमन्त्री, स भवेन्मन्त्रबलमेव सर्व्वसमाजस्य, तेषां सदुपदेशस्य-माधुतायाश्चोदाहरणेन वश्यतामवलम्ब्यैतेषां प्रचलन्ति लोकाः सर्व्वे। भव त्वमसिबलेन राजा, किन्तु त्वत्पार्श्वे जनैकोऽपेक्षणीयो ज्ञानवृद्धब्राह्मणजातीयसचिवः। यतस्तत्सचिवस्य मन्त्रबलेन भवेच्छासितो रक्षितश्च देशः। भवतु पराक्रमशाली राजा चन्द्रगुप्तः, किन्तु तत्पार्श्वे सचिवश्चाणक्यः, भवतु महाराज्ञी भिक्टोरिया, किन्तु तत्पार्श्वे राजसचिवो ग्लाड्ष्टोननामको ब्राह्मणजातीयमानवः। यो यादृक् समाजस्तस्य तादृक् चाणक्यो विद्यते ग्लाड्ष्टोनः। सर्व्वसमाजोऽपि तैरेव संङ्गठितो भवति नियमितश्च, किन्तु जनैकश्चाणक्यो ग्लाड्ष्टोनः कीदृशो व्यक्तिः, तद्द्वयमपि किं उपवीतधारि, तन्न विद्यते ग्लाड्ष्टोनस्योपवीतं, किन्तु कीदृक् वर्णभुक्तः सः, कीदृक्जातीया व्यक्तिः? न किं भवति स्म ग्लाड्ष्टोनो ज्ञानवृद्धो निवृत्तिपरायणः संयमी लोकः, यद्यप्यस्तितादृक् लोकः, स तर्हि कीदृक्श्रेणीभुक्तः, यच्छ्रेणीभुक्ताः हिन्दुशास्त्रीयब्राह्मणाः, तच्छ्रेण्यन्तर्गतः किं नासीत्तः, परिष्कर्त्तुं कथामेतामहं दृष्टान्तात्मकत्वेन परिगृह्णामि ग्लाड्ष्टोनमेकमत्र। यदुक्तं तत्सम्बन्धे अन्यान्यसमजातीयसमाजपतेः सम्बन्धे वक्तव्यमेतत्। सुतरां सर्व्वदेशेऽपि मानवमण्डल्याःशिरोदेशेऽवस्थिता ये, ते ब्राह्मणशब्दवाच्याः, वा ब्राह्मणजातीयाः, न तु भारतीयब्राह्मणात्मका भारतेतरप्रदेशेषु भारतीयधर्म्मशास्त्रोक्तवर्णाश्रमविभागीयनियमजालप्रचलनविरहात्। किन्तु ते बुद्धिमन्तो ज्ञानिनो निवृत्तिपरायणाःसंयमिनो महात्मानश्च। त एव मानवसमाजस्य मन्त्रदातारः पूजार्हाश्च,-कीदृक्पूजार्हास्ते, सर्व्वसमाजेऽपि ते भावतो ग्लाड्ष्टोनवद्देवपूजामासन्प्राप्ताः, लभन्तेऽधुनाऽपि तां ते। हिन्दुशास्त्रेऽतः सात्त्विकगुणसम्पन्नो ब्राह्मणोदेवतास्वरूपः। सृष्टा ब्राह्मणाः देवत्वलाभार्थम्। कियद्दूरमुत्पातुं शक्नुयाद्-

ब्राह्मणः, कथितं केवलं तद्धिन्दुशास्त्रेण, देवत्वं लभमानो ब्राह्मणः शक्नुयात् प्राप्नुयाच्च क्रमशोऽत्यायोत्यायेश्वरत्वं ततो ब्रह्मपदं, स्थलेऽस्मिन् साकं हिन्दुधर्मेण प्रभेदोऽस्ति धर्मान्तरस्य, ब्राह्मणस्योन्नतादर्शो न निर्द्दिष्टो धर्मान्तरे, केवलं प्रदर्शितो हिन्दुधर्मेण, लभ्यते ब्राह्मणो ब्रह्मपदमित्युच्चादर्शः। न तावत् केवलं शास्त्रादेशः, स्वभावतोऽनेकेऽलभन्त ब्रह्मपदम्। लब्धुं ब्रह्मपदं नियमा ये, उपदिष्टास्ते हिन्दुधर्मशास्त्रैः; नियममेतमनुसर्त्तुं सृष्टिर्यज्जातेः। ब्राह्मणनाम्नाऽभिहिता सा जातिर्हिन्दुसमाजे, तदर्थं हिन्दुब्राह्मणजात्या सार्द्धं प्रभेदो देशान्तरीयसात्त्विकगुणविशिष्टमानवमण्डल्याः। मनुष्यार्थमादर्शो यः प्रदर्शितो हिन्दुशास्त्रेण, तदादर्शस्थानीयः सुब्राह्मणः कस्मिन्नपि निर्दिष्टस्थाने नासीत् सीमाबद्धः स आदर्शः, स्थानमुत्तममुत्थायोत्थायैकक्षत्वो लीन आसीद्ब्रह्मपदेऽनन्ते तदादर्शः। उचितो-भवितुमेतादृशूपादर्शः। गतमेतद्ब्राह्मणविषयकं विवरणम्। संप्रति सत्त्वोपसर्जनरजोगुणविशिष्टस्य क्षत्रियस्य, तथा रजोपसर्जनतमोगुणविशिष्टस्य वैश्यस्य च प्रारभ्यते विवृतिः,- यथा समाजान्तरालेयत्सर्वेऽपि भवेयुर्ब्राह्मणाः, सर्वेऽपि सत्त्वगुणप्रधानाः संयमिनः शान्तिपथपथिका भवेयुर्निवृत्तिपरायणाश्च, नास्त्येवं सम्भावना, अधिकांशतो लोका अपि प्रवृत्तिपरायणा इन्द्रियासक्ता लोभिनः षड्रिपुदासाश्च। यदुक्तं लक्षणं शास्त्रे क्षत्रियवर्णस्य, तदतीव च परिष्कृतम्। सत्त्वोपसर्जनरजोगुणप्रधानः क्षत्रियः, सत्त्वगुणेन साकं रजोगुणस्य द्वन्द्वमेतज्जातीयमानवानां समीपतः। द्वन्द्वेनैतेन रजोगुणः पराजेतुमुत्तिष्ठति सत्त्वगुणम्। येषु सकलेषु लोकेषु द्वन्द्वमिदं प्रचलत्यनवरतम्। अपि च स्वाभाविकसंस्कारवशतो-भवति सततं विजयो रजोगुणस्य। ते हि शास्त्रनिर्दिष्टक्षत्रियजातीयाः लोकाः, क्षत्रियजातीयमानवाभ्यन्तरे यथा साकं सत्त्वगुणेन द्वन्द्वं रजोगुणस्य तथा वैश्यजातीयलोकाभ्यन्तरे रजोगुणस्य द्वन्द्वं समं तमोगुणेन, द्वन्द्वेनैतेन जयो रजोगुणस्य,- पराजयस्तमोगुणस्य। दृश्यते सर्वैतत्। उभयजातीयलोकेष्वस्मिन् प्राबल्यं रजोगुणस्य, किं भवेत्प्राबल्याद्रजोगुणस्य? तथा भूत्वा प्रबलो रजोगुणो यथाऽभिभवेत्सत्त्वतमसी, किं भवेत्तदा? तदा जीवा भवन्ति महाप्रवृत्तिपरायणाः- महाप्रवृत्तिपरायणत्ववशतो जीवाः कर्मिणः।

गोतायामुक्तमेतत्—

"रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निवध्नाति कौन्तेय ! कर्मसङ्गेन देहिनम्" ॥

अतो रजोगुणो वध्नाति जीवं दृष्टार्थक्रियाव्रातेषु कृत्वाऽसक्तं । दृष्टादृष्टार्थिका क्रिया केति जिज्ञासायां क्रियायां यस्यां फलं दृष्टं वाऽवाप्तं, सुखहेतोरुत्पद्यते तस्यां लोकस्यासक्तिः । सा क्रिया दृष्टार्थिका, अपि च यस्यां नलभ्यते फलं प्रत्यक्षतः, सा क्रियाऽदृष्टार्थिका । तत आसक्तिवशतो जीवोभूत्वा दारुणपरतन्त्रो-भवेत्-कर्मण्यनुरक्तः, यत्प्रवृत्तेरेतत्क्रियाहेतोस्तरङ्गो धावत्येकमुखेन, तदर्थं मानसिकाभ्यासवशत-उत्पद्यते सूक्ष्मशरीरम् । तदेवसूक्ष्मशरीरं परिभ्राम्य जन्मजन्मान्तरे जोवं कुर्य्याद्दृढं—संसारे ।

तत आह पूज्यपादः श्रीधरः,—

आसक्तिवशतो "जीवं बध्नीयात्" अतैतद्दृश्यते यथा रजो-गुणप्रधानाः लोकाः प्रवृत्तिपरायणाः ।

तत्परायणत्वात् कर्मप्रधानास्ते । सत्वगुणविशिष्टा लोका न कुर्वन्तिकर्मेति न, कुर्वन्ति कर्म त एव । अपिच तमोगुणप्रधाना ये, कर्म कुर्वन्ति ते,-सत्यं, किन्तु रजोगुणप्रधाना लोकाः कर्मणा भवन्ति जगति विख्याताः । तेषामव्यवदानपरम्परया जगत् परिपूर्णं परिपूर्णा लोकसमाजश्च । क्षत्रियधर्म्मिणो लोकस्य साधुसात्विकक्रियया ऽलङ्कृतो देशः सकलसमाजश्च, भूत्वायशोलिप्सवस्ते वृहता दानधर्म्मेण महता वृहता सात्विकानुष्ठानेन महता चकुर्वन्ति देशान् परिपूर्णान्, दृश्यतामन्यतस्तावत्, दारुणधनलोभो वैश्यान्करोति वृहत्सु वृहत्सु कार्य्येष्वासक्तान् । स्वदेशं सुरक्षितं सुशासितंसुशोभितं च कर्त्तुं यत् कार्य्यमनुतिष्ठन्ति क्षत्रियाः, कार्य्येण तेन प्रत्येकलोकसमाजो रक्षितः सुशृङ्खलया भवति चालितश्च ।

अपिच वैश्यास्तल्लोकसमाजस्य प्रतिपोषणार्थं कृषिकरणे पशुपालनेवाणिज्ये च भूत्वा नियुक्ता धनलिप्सामात्मनः कुर्वन्ति प्रवलप्रवृत्तिश्चचरितार्थाम् ।

ब्राह्मणक्षत्रियवैश्यजातीयमानवैर्यः क्रियते समाजः संगठितः सुशोभितः-सुरक्षितस्तथा परिपुष्टश्च, सेवितुं तान् सन्ति के ? प्रत्येकसमाजेऽप्येकजातीयमानवोऽवश्यमपेक्षणीयः कर्त्तुं तत्सेवां, शूद्रशब्दवाच्यास्तज्जातीयाः।

मानवसमाजमात्र एव चत्वारीमान्यङ्गान्यावश्यकानि। न सन्ति चेच्चत्वार्यङ्गानि, तदा न भवेत् सङ्गठितः कोऽपि लोकसमाजः।

अपिच, भवेच्चेत्संगठितः तथापि न शक्नुयात् स्थातुं, सुतरामिमे चतुर्ज्जातीयलोकाः प्रत्येकलोकसमाजस्यावश्यकान्यङ्गानि, सर्वे समाजाश्चतुःश्रेणीयैरेभिर्लोकैः सन्ति परिपूर्णाः, कुर्वन्ति ते प्रतिएकसमाजसृष्टिं, अपिच रक्षातदुन्नतिं साधयन्ति ते, महाबलमेतदङ्गचतुष्टयं लोकसमाजे। भूत्वा बलीयानेतच्चतुर्विधबलेन भवति दण्डायमानो लोकसमाजः। समाजस्यैषां चतुर्णामवयवानामन्यतालेऽङ्गमेकं भवेच्चेन्निस्तेजस्कं तदा पुनर्न शक्नुयात् स्थातुम्। अन्यदिग्भागतस्त्वहलमागम्याहतवत्तद्बलं, समघटतैषा दुर्गतिर्हिन्दुसमाजस्यैकदिनं। एकदैव निस्तेजस्कमासीत् क्षत्रियबलम्।

क्षत्रियबलं सर्वबलाश्रयस्थानं, गते क्षत्रियबलेऽपरं त्रिविधबलं स्थातुंनाधिकुरुते स्थानं, ततो यवनैरागत्याधिकृतं भारतवर्षं, तदारभ्य भारतीयक्षत्रियबलं भवति क्रमशो निस्तेजस्कं निर्वीर्यञ्च। भारतीयलोकसमाजो भवतीदानीं सुरक्षितः सुशासितश्च सद्भिर्भारतीयमहाक्षत्रियबलात्मकैरिङ्गलण्डीयैः,-गते सत्येकबले बलमन्यद्भवेद्धीनवीर्य्यम्। क्षत्रियबलेन साकं सम्बन्धो घनिष्ठोवैश्यस्य, यतो बलद्वयमेतत्कर्मशक्त्यात्मकं समाजस्य, ततोऽस्य ह्रासे क्षत्रियबलस्यसति साधिते भारते वैश्यशक्तिर्हीनतामागच्छति क्रमशः। भवेत् किं सति क्षीणवीर्य्ये वैश्यगणे, वैश्यगणेनापरदेशीयेन स्वसमाजो रक्षितो यत्नपूर्वम्। यतोन भवेत् कदापि वैश्यशक्तिरहितः समाजः, स्वस्वत्त्वमपहाय सत्यपिक्षीणबले भारतीयवैश्यगणे किं भवेत् समाजोऽचलः ? ह्रस्तितः सा परकीयहस्तगता। स्वीयाभावमपरदेशीयलोकनिवहेन निवारयति सततं भारतीयसमाजः।

येन विना न शक्नुयाच्चलितुं समाजः, तद्विरहितः समाजः कथं शक्नुयात् स्थातुं, दण्डायमानं भवत्येतत्फलमिदानीं। भवेच्चनागमो यो भारतीय-

वैश्यसमाजस्य तं लब्धवान् परदेशीयवैश्यगणः, क्षत्रियवैश्यशक्तेर्भारतीयसमाजस्य भवति ह्रासः, सत्यं, किन्तु तद्भारतस्य ब्राह्मणबलं शूद्रबलञ्च न भवति-निस्तेजस्कमधुना हिन्दुसमाजे, जातिभेदप्रथाया विद्यमानतया तत्समाजस्य-ब्राह्मणशूद्रबलं क्षत्रियवैश्यबलवन्न क्षीणं, यथा दुर्गतिः प्राचीनभारतस्य-तथैकदा प्राचीनरोमस्यैवं ग्रीशस्य चाघटतैषा दुर्गतिः। कथमिति?

रोमस्य ग्रीसस्य चैकदा क्षत्रियबलस्य स्वल्पतेजस्कतयाऽसीत्पराधीनो-देशः स सः, रजोगुणोऽसीमब्रह्माण्डस्यास्य सृष्टिकारिशक्त्यात्मकः, तथा रजो-गुणो हि कार्यशक्ति-स्वरूपः प्रवृत्त्यात्मकश्च यथा विश्वमसीमं संगठितवान्-रजोगुणस्तथा संगठितस्तेन समाजः, न तावत्केवलं मानवसमाजः, किन्तु-रक्षितो मानवेतरप्राणिसमाजोऽपि तेन, दृश्यतां तावत्कीदृक् मधुमक्षिका-समाजः, तत्समाजेऽप्यवलोकिता रीतिरेवं, यथा याः सकलमक्षिकाः क्षत्रिय-जातीयास्तथा वैश्यजातीयाः, तदुभयजातीयाः समादधति सकलकर्म समा-जस्य, राज्ञी मक्षिका तत्र मन्त्रबलं, दलस्यानेका मक्षिका-नियुक्ताः शासने-राज्यकार्ये च, मध्वाहरणेऽनेकास्तथा तद्दलस्य, सेवाकार्येऽनेकाः सत्यो नियुक्ता-समाजं परिचालयन्ति। यद्यवत्यय तत् स्यात् प्रचलितं सृष्टिकालतः। भविष्यत्कालेऽपि। नियमस्यास्य न भवेद्व्यतिक्रमः।

यतो मक्षिकागणस्य तस्य समाजबन्धनमासीत्संगठितं स्वाभाविक-प्रवृत्तिवशतः। यत्परिदृष्टं मधुमक्षिकादले, दृश्यते तन्निर्बाधं मेषवृषप्रभृति-ष्वन्यान्यसामाजिकप्राणिगणेषु। सुतरां यत्र यत्र समाज-स्तत्र तत्रैको विद्यते-द्वितीयो वा समाजपतिरित्यवलोक्यते लोकैः। चालयति सकलान्मन्त्रशक्त्या-ज्ञानबलेन च स एव समाजपतिः। ज्ञानबलं समाजस्य प्रधानबलमिति-मन्तव्यं तद्बलमस्ति स्थापितं सर्वबलानां शिरोदेशे। समाजस्य शासन-परिरक्षणकार्ये तत्पुष्टिश्रीवृद्धिसाधने च व्यक्तयो वह्वो भवन्ति व्याकुलीभूय-सर्वकर्मतत्पराः सततं। अपिच ये समाजस्यावस्थिता निम्नदेशे, तेऽसंख्याः-साधारणाः। शिल्पादिसेवान्तसमस्तकार्यमनेनासंख्यव्यक्तिगणेन भवति-संपादितं, एतेऽसंख्या लोकाः पीठात्मकाः समाजस्य। यतस्तेषामुपरि भवति-दण्डायमानः समाजः। समाजस्य ये कर्मशक्त्यात्मका रजोगुणप्रधाना-

श्च ते क्षत्रियवैश्यजातीयविभागमयाः। प्रवृत्तिः कामनालोभश्च विभागद्वयं-प्रेरयति कार्य्ये। शक्तिर्य्या कार्य्यकारिणी, ततो भवन्ति सृष्टिस्थितिप्रलयाः,-कार्य्यतोऽतः सृष्टिः कार्य्यात् स्थितिः चयः कार्य्यतश्च विरतस्य। सुतरां समाजस्य-क्षत्रियवैश्यजातीया व्यक्तयः साधयन्ति समाजस्य सृष्टिं स्थितिं प्रलयं च-सम्मतं, यत्समाजे प्रवलमेतत् शक्तिद्वयं, भवेत्स्थितिसाधनं तत्समाजस्य,-नोचेत्क्रमशस्तस्य भवेत् संजातो ध्वंसः, अन्यदिग्भागतस्तद्वलं यद्यपि-भवेदागतं तदा तत्समाजस्तेन सन् परिपुष्टोऽवतिष्ठेत सुस्थिरं। कथन-मेतत्-प्रतिपन्नमासीद्धिन्दुसमाजदृष्टान्तेन, घटते यद्धिन्दु-समाजे, भवेत् प्रयुक्तं-तदन्यसमाजे। तद्गतिसाधिका समाजस्य कर्मशक्तिः। कर्म यत्र, गतिस्तत्र,-करोति कर्म मानवो यः। भवेद्धस्तचालना तस्य भवेद्वा पादचालनं। हस्तोरु-देशः शरीरस्य गतिसाधकः शरीरान्तराले। पाददेशस्य वलमूरुः, जरुद्वया-दुत्पद्यते पादद्वयगतिः। सुतरां वाहुवलमूरुवलं च शारीरिककार्य्यस्य-प्रधानसाधकम्। कस्तावत् समाजः। समष्टिमात्रं व्यक्तिपुञ्जस्य। कार्य्यशक्ति-र्विद्यते यदि तत्समाजस्य, तदा समाजशरीरस्य सैव वाहुवलमूरुवलं च,-सर्वशरीरसंगठनमनुतिष्ठन्ति ज्ञानकर्मप्रवृत्तयः।

ज्ञानेच्छाकर्मणामेकत्वं तथा संहतशक्तेश्च यदि नाम शरीरं तथा शक्ति-समूहपरिचालितं तत् शरीरं यदि भवेत् समञ्जसीभूतं यन्त्रमात्रं, समाजः-शरीरात्मक इति कथयेम कथं तर्हि। मनुष्यस्येतरप्राणिगणस्य च यथा शरीरं-शक्तिपुञ्जस्य संहत्यात्मकः समञ्जसीभूतो यन्त्रः। समाजस्तथा तद्रूपः। शास्त्र-मतः शरीररूपेणाऽकल्पयत्पूर्वतः शरीरं, विद्यते शिरोदेशो मनुष्यस्येव समाज-शरीरस्य। विद्यते वाहुरूरुः पाददेशश्च। कस्येदं शरीरम्? प्रतिजीवशरीरं यथा-ब्रह्ममन्दिरं, तथा ब्रह्मशरीरं प्रत्येकसमाजः। ब्रह्मणस्त्रिविधशक्तिबलेन अर्थात् ज्ञानेच्छाकर्मशक्तिबलेन रचितो यथासीद्ब्रह्माण्डः नासीत्केवलं रचितः। सोऽयं ब्रह्माण्डस्तु त्रिविधशक्तिबलेन भवत्यवस्थितः। तथा प्रलयावसरे लभतेऽन्त-विलयं तत्त्रिविधशक्तौ। तथा जीवदेहोऽपि तत्त्रिविधशक्तिपुञ्जेनासीत्संगठितः। भवेत्प्रबन्धबाहुल्यमेतद्विचारकरणेऽतः सूचितमेवेदं, दृश्यतेऽस्माभिरेव तत्त्रि-विधशक्तिप्रभावेनानुष्ठितमेतत्समाजनिर्माणं जगत्कर्त्रा परमेश्वरेण। तथा तत्-

समाजाभ्यन्तरेऽवतिष्ठते स तन्त्रिविधशक्तिरूपेण, तत् ऋग्वेदीयपुरुषसूक्तान्तर्गत-ब्रह्माण्डसृष्टिव्यापारकथनावसरे कथं विधाय समाजसृष्टिं चतुराननो विराड्रूपेण भवति विद्यमानः, तद्वर्णितं तत्र विस्तरतः। सृष्टितत्त्वं तस्य सृष्टिरूपत्वं,-स्थित्यात्मकत्व' तस्य समाजतत्त्वमित्यवगन्तव्यम्। पूर्वतः कथितमेतत् ब्रह्मणः-सामाजिकविराट्शरीरे विद्यते शिरोदेशो-बाहुयुगलमूरुः पाददेशश्चेति। तत्तद्विभागेन तच्छरीरस्य परिचितमासीद्ब्रह्मणः शरीरम्।

ततो ब्राह्मणादिचतुर्विधसमाजविभागः कथितो वर्णशब्देन। तत्तद्वर्णद्वारेण-ज्ञानेच्छाकर्मशक्तिसम्पन्नव्यक्तिपुञ्जस्वरूपस्य समष्टिशक्त्यात्मकब्रह्मणो-भवति-परिचयः शरीरस्य। स एव मनुष्यसमाजात्मकतया वर्त्तमानः तत्समाजस्य-साधयति परिचालनं परिरक्षणं परिपुष्टिञ्च। न मनुष्यः समाजस्य प्रकृताधिपतिः। केवलं मनुष्यो निजाहङ्कारवशतोऽस्यैवाधिपतिरहं कर्त्ताहमिति-मन्यत आत्मानं, सर्वसमाजस्य सर्वलोकमण्डलस्य च कर्त्तात्मकत्वेन परमेश्वरः-परिचालयति प्रतिपालयति च विश्वम्।

सोऽपि समाजरक्षार्थं युगे युगे वोपयुक्तसमये ज्ञानचक्षुषाऽवलोक्यते-मनुष्यैः, तदाऽन्योऽपि मनुष्यः सामाजिकव्यापारे पश्यति हस्तं भगवतः। यदैव रूपेण भगवन्तं मानवमण्डलीसमाजान्तराले पश्येत्तेषां प्रतिपालकत्वेन,-तदा तस्याविर्भावमवतरणं चाङ्गीकुर्वन्ति मानवनिवहाः। न भवेच्चेदेतत्, स-चिरदिवसं समाजशरीरस्याधिष्ठातृदेवतात्मकत्वेन विद्यमानो विराडाकारेण-वर्त्तते सततम्। तदवस्थानं तस्य स्थितिरूपमेव स्थित्यात्मकत्वेनैतेन स-ज्ञानेच्छाकर्मशक्तेः समष्टि-स्वरूपविराड्ब्रह्मात्मकः।

तदेवाह वेदः,—

"ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥"

तथा शुक्लयजुर्वेदे।

न केवलमत्र परिदृश्यते अथर्ववेदेऽपि सोऽयं मन्त्रः।

यथा,—

"ब्राह्मणोऽस्य मुखमासीद्वाहू राजन्योऽभवत्।
मध्यं तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत"॥

इति दृश्यते पाठभेदः स्वल्पपरिमितः, किन्तु समानो भावार्थः। विराजो-मुखं यत्तदेव ब्राह्मणः, बाहू यौ, तत्स्थानीयः क्षत्रियः, तथोरुयं: तत्स्थानीयो-वैश्यः तथा पद्भ्यां शूद्रः अजायत, पादस्थानीयः शूद्रः, अर्थात् मुखादिभ्यो ब्रह्मणः-सम्भूतत्वात्तत्तदवयवानुरूपकार्य्यकारित्वाच्चेते तत्स्थानीया इत्यर्थः प्रकाशितो-ऽत्र। स्थलेऽस्मिन्नुक्तो यो ब्राह्मणः क्षत्रियो वैश्यश्च, न तावदेत एकैकव्यक्तिमात्र-रूपाः, ते सर्वे समष्ट्यर्थे व्यवहृताः। कुत एवं, ब्रह्मापि व्यवहृतो भवति सम-ष्ट्यर्थे, यो ब्रह्मणो भागः, सोऽवश्यं बोद्धव्यः समष्ट्यर्थात्मकत्वेन। ब्राह्मणत्व-क्षत्रियत्ववैश्यत्वविशिष्टलोकसमष्टिर्ब्रह्मणः कायः, ब्रह्माऽपि न तावज्जाति-विशेषेणाबद्धः, किन्तु सकलजातिषु विद्यते स एव। सुतरां ब्राह्मणादिचातुर्वर्ण्यं-यत्प्राकृतिकं, तद्यत्र मानवकृतिमाध्यमिति न वदति गीता केवलं, तथा-कथयति वेदोऽपि। तदेव वेदेऽस्तीति परिचयं ददाति गीतावाक्यम्,—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः"। इति।

प्राकृतिको नियमो यः स नित्यनियमः सोऽपि वैज्ञानिकसत्यात्मकः। वैज्ञानिकपरीक्षया सत्यरूपेण प्रतीयमानतया वेदमन्त्रवातं भवति सत्यात्मकं,-अतो वेदः प्रत्यक्षात्मको नित्य इति निर्दिशन्ति हिन्दुशास्त्रकर्त्तारः, प्राकृतिक-सत्यं यत् तदपि केवलं भवेत्प्रयुक्तं हिन्दुजाताविति न, भवेत्प्रयुक्तं सर्वजातौ। भवेत्प्रयुक्तं कया रीत्या सर्वजातौ, तदस्माभिः समालोच्यते प्रस्तावेऽस्मिन्। न तावन्मनुष्यजातावेवं, मनुष्येतरप्राणिजातिषु तदेव प्राकृतिकनित्यनियम-रूपेणासोत्प्रनीतं। वर्णभेदता भवेत् कथं समाजसृष्टिः, सैव प्रदर्शिता पूर्वतो-ऽस्माभिः, प्रस्तावेऽधुनातने स्थह्यते तस्य विपरीतप्रतिज्ञाऽस्माभिः प्रथमतः। प्रस्तावेऽस्मिन्नादितः प्रदर्श्यते समाजसृष्टितो वर्णभेदोत्पत्तिः। प्रतिज्ञाद्वय-मेतद्विपरीतं, किन्तु न विरोधि। यथा बीजतो वृक्षः, वृक्षतो बीजं, तद्रूपा-

तदुभययुक्तिः। विज्ञानवेदसम्मतैषा युक्तिः। यद्यपि सृष्टः समाजः, तर्हि सृष्टि-नियमे भवेत्तस्य सङ्गतः। तदेव समर्थयति भगवान् कपिलः,—

"रागविरागयोर्योगः सृष्टिः" इति सांख्यसूत्रं, रागविरागाविमौ विश्व-व्याप्येतत्सङ्घर्षणशक्तियोगेन कथमस्य परिदृश्यमानस्य ब्रह्माण्डस्य साधयतः-सृष्टिं प्रकाशं वा, संक्षेपतः सृष्टितत्त्वविवेकेनैव प्रकाश्यते तत्परतः।

यथा, सार्द्धं जलेन जलमाकृष्य भवति परिपूर्णः सागरगर्भः, वायुना-साकमेकीभूय वायुः परिपूरयत्याकाशदेशं, सममग्निना भूत्वा सम्मीलितोऽग्नि-र्ब्रह्माण्डस्यास्य दीपात्मकत्वेन निर्माति स्म सूर्य्यदेवं, सह पृथिव्यैकीभूय पृथिवी-ब्रह्माण्डमिमं पर्य्यपूरयन्नचलमण्डलेनैव, यद्रागविरागयोगेनाभवत् पञ्चभूत-सम्मीलनं। तद्रागविरागयोगेन लोकसृष्ट्यवसरेऽरण्यपरिपूर्णाऽभवत् पृथिवी। मृगकुलमेकीभूयापूरयत्तन्महारण्यं, मत्स्याः सर्वे जलाशयेऽभवन् सम्मीलिताः,-भूमौ सत्यां पतितायां केनापि नियमेनोत्पद्यन्ते तत्रैकजातीयकण्टकवृक्षाः,-उत्पद्य भूमिं पर्य्यपूरयन् जाङ्गलैः, दृश्यते सर्वत्र सजातीयमिलनं सजातीयैः,-पृथग्भावश्च विजातीयेभ्यः। धात्वाकराः सर्वे विशेषविशेषधातुभिरभवन् परि-पूर्णाः। वृक्षैः सार्द्धं वृक्षाः सम्मील्य निर्म्मान्त्यरण्यसृष्टिम्।

अपिच, त्रिभुवनमासीत् परिपूर्णं विशेषविशेषजीवसमाजेन। तद्ववेद्-यदि, तदादिमसृष्टिकाले यदा ब्रह्मणो वा हिरण्यगर्भस्य सूक्ष्मशक्तिमयसमष्टि-शरीरतः समभवत्प्राणिनिवहः, मनुष्यजातिः केन नियमेनैकैकमनुष्यसमाजेन-भूत्वा दलबद्धा परिपूरयति स्म पृथिवीं, तेनैकेन रागविरागयोगेनापरापरस्मात्-प्राणिकुलात् पृथग्भूत्वैकत्वाकृष्टोऽभवत् सम्मीलितश्च। ते तदा सर्वे नरा-कारमात्रमेव। तदा यद्यदशक्तिपुञ्जे निहितं सात्विकबीजं ब्राह्मणस्य।

अपिच, शरीरे येषां क्षत्रियत्वं, वैश्यत्वं तथा शूद्रत्वं, चासीन्निहितं, ते-सर्वे भूत्वैकसमाजभुक्ता वासमेकत्र कृतवन्त एव। तत्तद्धर्मस्य तथा विशेष-विशेषशक्तेश्च नासीत्परिचयः प्रथमतस्तेषां। क्रमशस्तेषां स्फूर्त्तिमलभत-तत्तद्विशेषभावः, ततः प्रादुर्बभूवुः सर्वे वर्णाः, ततो मनुष्यसमाजो ग्रथितोऽभूत्-शतशतबन्धनेन त्रिगुणद्वारेण मानवसमाजो-भूत्वा सन् विभक्तो यथासीत्-संगठितः, यथा चतुर्वर्णैर्विचित्रितश्च, तथैव विद्यते प्रत्येकजीवसमाजे तद्रीतिः।

क्रियतामणुवीचणयन्त्रसाहाय्येन क्षुद्रतमकीटाणुसमाजपर्य्यवेक्षणं युष्माभिः। द्रष्टुं लभेत, तस्मिन् समाजे मनुष्यसमाजस्येव कलहविग्रहकार्य्ये व्याकुलता। रक्षाकार्य्यं, परिपोषणकार्य्यं, सेवाकार्य्यञ्च प्रचलति सन्ततमिति। दृश्यतां-समाजः पिपीलिकानां, तथा तदेव तत्रापि, समाजेऽपि हस्तिवराहप्रभृति-जीवानां दृश्यते स एव नियमः, यानि गुणत्रयपरिचायकानि ज्ञानेच्छा-कर्म्माणि, यथा प्रत्येकजङ्गमसमाजे लभ्यते परिचयस्तत्त्रिगुणस्य, तथा तत्त्रिगुणस्य लभ्यते परिचयः स्थावरसमाजेऽपि। तथा महाभारतीयाश्वमेध-पर्व्वण उनचत्वारिंशदध्यायस्यप्रमाणजालस्य संक्षिप्तार्थोऽत्र प्रकाश्यते ग्रन्थ-बाहुल्यभिया। "स्थावरसमुदाये विद्यते तमोगुणाधिक्यं, किन्त्वेते न विरहिता-रजःसत्त्वाभ्यामेकक्षत्वः। मधुरादिरस एवैषां रजोगुणः, सत्वगुण एतेषां स्नेह-पदार्थ इत्यभिहितं पूर्व्वाचार्य्यैः। वस्तुतो विद्यत इह लोके पदार्थसमुदायो-यः, तन्निवहस्यापि भवेत् प्रकाशितः पर्य्यायेण। गुणत्रयमेतत्प्रकृतिरु इति-सिद्धम्।

समाजशरीरं जीवशरीररूपेण परिकल्पितं वेदेन। तत्कल्पनं किं प्रकारैणै-केन सङ्गतं, न, तत्सङ्गतिः प्रकारेणान्येनासीत्परिदृष्टा, जीवमात्रेऽप्यङ्गप्रत्यङ्गानि-न प्रकाशितान्येकक्षत्वः, जरायुजस्वेदजाण्डजोद्भिज्जनामकमेतच्चतुर्विधजीव-शरीरमङ्गप्रत्यङ्गैः परिपूर्णम्। चतुर्विधमेतज्जीवशरीरं किं प्राप्तं विकाशमेक-दिवसे, इति न, यथा विद्यत उद्भिज्जशरीरं वीजकोषाभ्यन्तराले, जरायुजो-जरायुमध्ये, तथाऽण्डजोऽप्यण्डाभ्यन्तरे, तथा स्वेदजः स्वेदान्तः। तच्छरीरस्याङ्ग-प्रत्यङ्गादि क्रमशो विकाशमुपलभ्यावशेषे प्राप्नोति पूर्णविकाशं। कतिपयाव-स्थातः परं प्रजापतेः सुन्दरशरीरमायाति दृष्टिपथं। समाजशरीरमपि तद्रूपं,-तस्य विद्यन्तेऽवस्था बाल्ययौवनवार्द्धक्याख्याः। विशेषतो मनुष्यसमाजस्य-क्रमविकाशोऽयमेकैकशोऽभवत्सुसम्पन्नः। ततो भवेद्युगान्तरपरिणामस्तस्य। युगान्तरपरिणामोऽयं सत्यत्रेताद्वापरकल्यात्मकतयाऽभिहितः। सत्ययुगं तस्य-वीजावस्था, बाल्यपरिणामश्च। त्रेताद्वापरद्वयं तस्य यौवनं, प्रौढ़ता वा परिण-तिश्च, तथा कलियुगपरिणामे तस्यागता वार्द्धक्यावस्था। यथा समाजो वर्ण-भेदेनासीदविभक्तः, तथा सह तत्सङ्गेनोपस्थितमासीद्युगान्तरं तस्य। समाजस्य-

वर्णभेदेन विभागो नाम समाजस्थलोकमण्डल्यां पूर्णविकाशस्त्रिगुणस्य। इति-तस्मिन् पूर्णविकाशे प्राधान्यतः सात्विकतायाः कथितं ब्राह्मणयुगात्मकत्वेन-सत्ययुगम्।

रजोगुणप्राधान्यवशतो वीरत्वविकाशस्य तथा वैश्यशक्तेश्च स्फूर्त्तिसाधक-तया क्षत्रियवैश्ययुगानामेकत्वेनाभिहितं त्रेताद्वापरद्वयम्।

तथा कलियुगे तमःप्राधान्यस्य लब्धप्रसरतया कलियुगमेवाभिधातुं शक्नु-यात्शूद्रयुगनाम्ना। तथैव प्रतिपादितं कलियुगस्य शूद्रयुगात्मकत्वं हिन्दुधर्म-शास्त्रकारैः। एष युगान्तरपरिणामो विव्रियतेऽस्माभिः क्रमशः। प्रकृतेः सकल-व्यापारो भवेत्क्रमशः। आलोकान्धकारयोः सति क्रमशो विकाशे भवति-दिवसो रात्रिश्च। क्रमशः सञ्चरिता भवन्ति षड़तवः। प्रतिसमयं भवति सम्यक्ता-प्रकृतिसृष्टिः। जगति त्रिगुणविकाशो भवत्येकैकशो महदादिक्रमेण। समर्थ-यत्येतन्मतं विदेशीयविज्ञानशास्त्रमपि। तथा क्रमशो-मानवसमाजसृष्टिः-संघटते सम्मतं तद्रूपेण. एकदैव चातुर्वर्ण्यसमन्वितो न प्रतिष्ठापितः संपूर्ण-मनुष्यसमाजः। महाभारतपठनावसरे श्रुतमस्माभिर्भीष्ममुखतः, आदिसमाजे-स्थापितो राजतन्त्रो नैकत्तत्व इति।

यथा, भीष्मः कथयति, धर्मराज! प्रथमतो यथाभूद्राजत्वसृष्टिः सत्ययुगे, श्रुयतां सावहिततया।

पृथिव्यां सर्वादितो राज्यं राजा, दण्डो वा दण्डार्हव्यक्तिश्च नासीत्-किञ्चिदेतत्।

मनुष्या धर्ममेकमात्रमवलम्ब्य चक्रुरन्योऽन्यरक्षणं पूर्वतः। मानवगण एवं-प्रकारेण कियत्कालमतिवाह्य परिशेषे रक्षणाविषयं परस्परस्यावगच्छति-स्मातीवकष्टकरम्।

समयेऽस्मिन् मोहस्तेषां प्राविशन्मनोमन्दिरे।

मोहाविर्भावात्क्रमशो ज्ञानधर्मलोपस्य सति सम्भवे मानववर्गो लोभपर-तन्त्रतयोत्तिष्ठति स्म क्रमशः, परधनादानतत्परः कामपरायणो विषयासक्तः-कार्य्याकार्य्यविवेकशून्यश्च"।

महाभारतीयप्रमाणजालस्य संक्षिप्तार्थवर्णनमेतदतोव स्वाभाविकं प्रकृति-

सङ्गतञ्च। यदा वीजावस्थायामविद्यत मानवसमाजः, तदा चतुर्वर्णप्रकृतिस्थ-लोकनिवहे सत्यपि विद्यमाने चतुर्वर्गस्य विराड्विकाशो नासीदेकदिवसेन। युवकस्य समस्तगुणो वर्त्तते सत्यं शिशोः शरीरे, किन्तु यथा भवेद्विराड्-विकाशो यौवनावस्थायां, तथा शैशवे किं लब्धो भवेत्परिचयस्तेषाम्। यस्य यस्य-गुणस्य भवति परिचयः प्रौढ़ावस्थायां मनुष्यस्य, यौवने किं न भवति परिचय-स्तत्समस्तगुणस्य? वा तत्समस्तगुणं न किं पश्यति मनुष्यः?। शैशवकाले-मानवसमाजे चातुर्वर्ण्यप्रकृतिविशिष्टलोकनिवहस्य सत्यपि विद्यमानत्वे तेषां-न भवेत्सहसा विराड्विकाशः। यथा वर्द्धते भक्ष्यभोग्यविषयस्य सकलस्यै-कैकशः, तथा भवति प्रसारितं कर्मक्षेत्रं मानवसमाजस्य, तथा समं तत्-कर्मक्षेत्रविस्तारेण भवति विकाशलाभो लोकप्रकृतेः क्रमशः। न भवति त्रि-गुणविकाशोऽनुपलभ्य कर्मक्षेत्रं। यथा लोको न भवेच्चेत्पदस्थः, तदा न भवि-ष्यति प्रकृतिपरिचयस्तस्य। कः कीदृशमानवः? स न परिचीयते सहजतः। तथा समाजस्य कर्मक्षेत्रं न भवेच्चेत्प्रसारितं विकाशितञ्च, तदा क्रमशो-गुणागुणौ प्राप्तुं न शक्नुयातां स्फूर्त्तिम्।

सर्वविधमानवा भवन्ति सरलचित्ताः शैशवे। व्यवहारोऽपि भवति-सरलस्तेषाम्।

यतः कीदृशी कुटिलता? तां न जानन्ति ते। सत्या या कथा व्यष्टिजीवे, सत्या सा समष्टिजीवेऽपि।

अतोऽस्माभिः श्रूयत आदिसमाजवृत्तान्तेऽप्येतत्, आसीत्मनुष्यगणोऽति-सरलो धर्मपरायणश्च सत्ययुगे। समाजान्तराले क्रमशोऽधर्माचरणं प्रविशति स्म-पादशः। पादतः पादतः पापवृद्धेः कारणमेतत्। यथाऽतिवाह्यते स्म कालः,-प्रसारितमासीत् कर्मक्षेत्रं साकं तेन समाजस्याऽपि। तथाच सार्द्धं कार्य्यक्षेत्र प्रसारणेन वृद्धिरासीत्पापाचरणस्य।

अवलोक्यतेऽस्माभिरेतदिदानीम्। यावत्परिमितस्य नवनवभोग्यविषयस्य-वृद्धिर्भवति प्रतिदिनम्।

वर्द्धते तत्परिमितं कर्मक्षेत्रं लोकवृन्दस्य।

अपिच, समं तेन प्रतारणादिकं तथाऽधर्माचरणं वर्धते सततं। यदधुना-

सत्यं, तत्सत्यमतीतकालेऽपि। सुतरां क्रमशो मनुष्यसमाजो युगान्तरपरिणाममुपलभ्य सत्य-त्रेता-द्वापर-कलिनामकयुगाभ्यन्तरे भवति स्मोपनीतः। समाजस्य तस्यासीद्‌या सात्विकता सत्ययुगे, त्रेतायां सात्विकता साऽभवदूनैकमात्रया,-तथा द्वापरे तदपेक्षयाऽधोगतिस्तस्याः। कलियुगे च दृश्यते ह्रासस्तस्यास्तदपेक्षया। सात्विकगुणो भवति यद्‌युगे त्रिमात्रयाऽधिकः, त्रेतेति नाम तस्य। द्विमात्रात्मकः सात्विकगुणो यत्र, द्वापरः स एव। सात्विकगुणो यत्रैकमात्रात्मकः स एव कलियुगनाम्नाभिहितः।

इदानीन्तनसमयेऽस्माभिः दृश्यत एतत्, प्रवृत्तिर्लोकानामपहाय सात्विकपथं प्रतिदिनं गच्छति पापमार्गं क्रमशः। यतते विनाशयितुं भारतीयसात्विकतां विदेशीयभावः। विदेशीयभावो लभेत वृद्धिं यत्परिमाणः क्रमशः,-तत्परिमिताऽधोगतिर्भविष्यत्येव मानवसमाजस्य, कलियुगावशेषे यदैकक्षत्वः-सात्विकतायाः सम्पद्येत विनाशः, तदोपस्थितो भवेत् प्रलयकालः। नोच्यतेऽस्माभिर्युगचतुष्टयेऽस्मिन् सत्वगुणभिन्नान्यान्यगुणस्यादौ न विद्यते विकाश इति। सर्वस्मिन् युगे विद्यते विकाशः सकलगुणानाम्। तथापि विद्यते ह्रासो वृद्धिश्च। तत्परिमाणभागस्य वर्णितमासीत् शास्त्रे युगमाहात्म्यमित्थंरूपेण। युगान्तरपरिणामो यद्भवेत्समाजस्य स्वाभाविकनियमेन, बुध्यते तदेतत्क्षणं-प्रतिपक्षं भवतीति। यथाऽवर्द्धत कर्मक्षेत्रं समाजस्य, तथा विकाशमलभन्त चतुर्विधान्यङ्गानि तस्य, चतुर्विधानीमान्यङ्गानि ब्राह्मणक्षत्रियवैश्यशूद्रनामात्मकत्वेनाभिहितानि। तदेव प्रतिपादितं महाभारतीयशान्तिपर्वणोऽष्टाशीत्यधिकशतपरिमिताध्याये। तदीयसकलप्रमाणोद्धरणेनास्य ग्रन्थस्य बाहुल्यसम्भावनया प्रकाश्यतेऽत्र तदीयसंक्षिप्तार्थः।

भृगुरुवाच,—

भो तपोधन! इह वस्तुतो न विद्येते वर्णस्येतरविशेषौ। यतो जगत्सर्वंब्रह्ममयं अर्थात् पूर्वतो मनुष्यसमाजो गुणानुसारेण स्रष्टा ब्रह्मणा क्रमशस्तद्गुणोपयोगिकार्यद्वारा विभिन्नरूपेणालभत परिणतिम्। सृष्टाः प्रथमतो ये मानवाः, ब्रह्मणा निर्म्मितत्वाद्‌ब्राह्मणशब्दवाच्याः, न तु सत्वादिगुणत्रयविशिष्टमानवनिवहसम्मिलिततया जात्या ब्राह्मणा इति नीलकण्ठः॥

ये ब्राह्मणाः तन्मध्यतो रजोगुणप्रभावेन सन्तः कामभोगप्रियाः क्रोधपरतन्त्राः, साहसिनस्तीक्ष्णस्वभावाश्च परितत्यजुः स्वधर्मं, तेऽलभन्त क्षत्रियत्वं, तथा ये तु रजस्तमोगुणप्रभावेनाचेरुः कृषिकार्य्यं पशुपालनं च, त एवालभन्त वैश्यत्वम्।

तथा,—

ये तमोगुणप्रभावेन बभूवुर्हिंसापरतन्त्राः लुब्धाः सर्वकर्मोपजीविनो मिथ्यावादिनः, शुचिभ्रष्टाश्च, ते प्रापुः शूद्रत्वं, ब्राह्मणगण एवं कार्य्यद्वारेण पृथक् पृथक् प्राप वर्णभावम्। पूर्वतो भगवान् विरञ्चिर्यान्निर्माय वेदमयवाक्यान्यध्येतुं प्रददावधिकारं तेभ्यः, तन्मध्यतो येऽभवन् तमोगुणयुताः लोभवशतः, ते प्राप्नुवन् शूद्रत्वं, वेदाध्ययने व्रताचरणे नियमानुष्ठाने च भवेदनुरक्तो ब्राह्मणगणः, अतो नासीद्विनष्टा तपस्या तस्य, तन्मध्यतो ये न शक्नुयुरवगन्तुं परमार्थब्रह्मपदार्थं, तेऽतिनिकृष्टात्मकत्वेन सन्तः परिगणिताः ज्ञानविज्ञानविहीनां स्वेच्छाचारपरायणां प्रेतपिशाचराक्षसादिविविधजातिमत्तभक्तानिशं, फलतो ह्यादिदेवस्य मानससृष्टिपरतः क्रमशो बभूव भवति च प्राचीनलोकेभ्यो नवनवलोकसृष्टिः"। यादृगुपदेशोऽस्ति महाभारते,- पुराणेष्वन्यान्येष्वपि विद्यते तादृशोपदेशः। ऋषयः सर्वं वेदमपि प्रचारयामासुरेकवाक्येन। दृश्यते कश्यापि तादृशी पद्मपुराणे,—

"न विशेषोऽस्ति वर्णानां सर्वं ब्रह्ममयं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्॥"

अस्यार्थः,—

नास्ति वर्णस्येतरविशेषो ब्रह्ममयमासीज्जगत्सर्वं। परतो ब्रह्मणा सत्वरजस्तमोगुणात्मकत्वेन सृष्टः प्रथमतो मनुष्यसमाजः स्वस्वप्रकृत्यनुकूलकर्मव्रातानुष्ठानेन वर्णानां अर्थात् ब्राह्मणादिचातुर्वर्ण्यं प्राप्तः, नेदं तु समाजेनानुष्ठितमिति सारार्थः।

आदिसृष्ट्यवसरे सञ्जाता ये मानवाः, ते सर्वे आकृत्या समानाः, सत्यं, किन्तु ते समानस्वभावेन समानगुणेन च न सृष्टाः। ब्रह्मसृष्टास्ते सर्व-

इति हेतोर्ब्राह्मणशब्दाभिहितानामपि तेषां सर्वेषामन्तरालेऽविद्यत प्रभेदो-मौलिकः। तन्मौलिकभेदस्य विद्यमानतया ब्राह्मणपदवाच्यमानवजाते-रेकस्याः क्रमशश्चातुर्वर्ण्यमुत्पद्यते स्म कर्मभेदानुसारेण। यद्यपि सञ्जायेरन्-ते सर्वे मन्त्र एकस्वभावा, एकधर्माक्रान्ताश्च, तदान्तराले तेषां विभिन्नप्रवृत्त्य-नुसारेणैकैव सा जातिः प्रवर्त्तिष्यते नानाविधे कर्मणि व्यवसाये च, विभिन्न-प्रवृत्तावस्थां विभिन्नकर्मण्यस्मिन् विद्यतेऽवश्यं कारणं यथेष्टं, किं कारणं-तत् ?

वैजिकविभिन्नतैव तेषां तत्कारणम्। वीजं येषां विभिन्नं तेषामङ्कुरोऽप्य-वश्यं भवेद्विभिन्नः। तदेवास्माभिर्दृश्यते शास्त्रे।

सैका जातिः क्रमशः कर्मानुसारेण परिणतामीद्विभक्ता नानावर्णेन।

अतो मानवसमाजस्यलोकमण्डलीमध्यतः सृष्टिकालादारभ्य गुणविभागा-नुसारेणाऽविद्यत मौलिकविभिन्नता या, तदनुसारिण्या समाजस्य सार्द्धं कर्म-क्षेत्रविस्तृत्या क्रमशो विभिन्नतेयं साधयति स्म स्फूर्त्तिम्। सहैवं तेन समाज-श्चातुर्वर्ण्येनासीदेकैकशो-विभक्तः। भगवता विश्वेश्वरेण यद्यपि दत्तं वेदज्ञानं-मनुष्यसमाजाभ्यन्तरे, तदा सर्वादितोऽर्पितमेतन्मनुष्यसमाजाय। भारते-यत् सर्वप्रथमतो मानवसमाज आसीत् प्रतिष्ठितः, भारतस्य प्राचीनत्वमपि-करोति सप्रमाणं तदेव। मिसरारवतातारकेड़ियाच्याल्ड़ियाचीनादिदेशीय-मानवसमाज आदितः प्रतिश्रितः किम् ? न, तत्तत्प्राचीनराज्यमासीद्-भारतीयसभ्यतया ज्ञानेन च समृद्धं, किं वक्ति पृथिवीतिवृत्तम् ? तदेतिवृत्तं-समुद्धृतं यद्दूरपर्यन्तं, यद्दृश्यते तत्र, भारतमधिकतरप्राचीनमित्यवगम्यते हि-तेन। सर्वापेक्षया प्राचीनो यो मिसरारवौ, तद्वासिनोऽपि प्रथमतो यदा सार्कं-भारतेनानुकुर्वन् संस्रवं, तदासीत् संपूर्णाभ्युदयो भारतस्य, मिसरस्य प्राचीना-वसरे यदा मिसरो ववन्ध सम्बन्धं सार्द्धं भारतेन, तत्पूर्वतोऽवश्यमेव श्रुत-मासीन्नाम भारतस्य मिसरवासिभिः, नो चेत् कीदृग्लोभपरवशतया मिसर-राजस्तत्पट्टमहिषी चाजग्मतुर्भारतं प्रथमतः तदा गमनमेतदधुनातनसमयपूर्वं-सप्तसहस्रसम्बवत्सरसंख्यातकालिकं प्रायशः। यत्समये भारतेन साकमासीत्-संस्रवो मिसरस्य, तत्पूर्वतो यशो भारतस्यारववासिभिर्विस्तारितं मिसर इत्य-

धिकतरसम्भावना। सत्यमेतद्विषयस्यान्वेष्टव्या (ह्यम्यान्—अरिजिन) वम्बन्यन्त-र्गतग्रन्थतः। किं कारणं? भारतस्यातिनिकटवर्त्तीत्वात्। सार्द्धं मिसरेणान्यान्य-पूर्वप्राचीन समाजस्य घनिष्ठताऽलभत वृद्धिं क्रमशः। एतत्सम्बन्धवशतो-भारतीयार्यगौरवं सभ्यताज्ञानं चैतत्सर्वं पृथिव्यां सर्वस्यामासीत् प्रसृतं। किन्तु प्राचीनकालस्येतिवृत्तमिदानीं न कोऽपि शक्नुयात् निश्चिततया वक्तुम्। सम्भवतो यादृशी युक्तिः प्रबला, निरुक्तकथनमस्माकं सर्वं तादृग्युक्तिसङ्गतम्। नासीदस्माकमेतदपेक्षया क्षमताऽधिकप्रबलतरयुक्तौ।

सत्यामप्यविद्यमानायां क्षमतायामिदानीं प्राचीनसमाजं प्रति भवति-प्राचीनेतिवृत्तद्वारा यादृशालोकपातः, तेनैव भवति यत्प्रतिपन्नं, प्राचीन-भारततुल्योऽपरापरप्राचीनलोकालये मानवसमाजो यः प्रतिष्ठापित आसी-दादिकालतः। समाजेऽपि तस्मिन् गुणविभागानुसारेण प्रथमतो मानव-जातेरेकस्या आसीदुत्पत्तिः प्राचीनभारतस्य तुल्या। तत्रापि कर्मविभागानु-सारेण क्रमशो भारततुल्य आसीदभ्युदयश्चातुर्वर्ण्यलोकश्रेण्याः। प्राकृतिको यो नियमः, तन्नियमो भवेत्-सम्भावितः सर्वमनुष्यसमाजेऽपि। कर्मचेत्थं-संसारस्यावश्यं परिणमयति स्म समाजस्थलोकमण्डलीं प्रकारेणैकेन। बभूव-नैतदेकदिवसेन। परिणतिरेषामोत्सङ्घटिता सार्द्धं वृद्धया समाजवयःक्रमस्य। तेन सर्वसमाजेऽप्यासीदुत्पन्नश्चातुर्वर्णिको मानवः। एकजातीयः सत्वगुण-प्रधानः,. सत्वोपसर्जनरजोगुणप्रधानोऽपरो द्वितीयजातीयः, तृतीयजातीय-लोकनिवहो तम-उपसर्जनरजोगुणप्रधानः, चतुर्थजातीयश्च रज-उपसर्जन-तमोगुणप्रधानः, एतस्याश्चतुर्वर्णात्मकजातेरन्तराले धर्मभोगयोगपरायणा-देवभक्तियुक्तः प्रथमश्रेणीयमानवः। द्वितीयश्रेणीयमानवोऽसिवर्मधारी राजन्यः,-तृतीयश्रेणीयमनुष्यो वाणिज्याद्यासक्तः कृषिपशुपालननिरतः, चतुर्थश्रेणीय-मानवश्च शिल्पादिनानाविधोपायेन सेवातत्परः समाजस्य। गुणविभागो-यानकरोद्विभक्तानादितः, कर्मविभागस्तेषां तत्तद्गुणस्य सम्यक् सम्यक्स्फूर्त्तिं-प्रददौ तेषां परिचयं सुस्पष्टं। न तावत्केवलं परिचयः। तेन त्रिगुणेनैव-समाजं बबन्ध प्राकृतिकबन्धनेन।

प्राचीनमिसरासीरियाबैबिलोनियाखाल्डियाप्रभृतिदेशीयसकल-मानव-

समाजे ब्राह्मणजातीयैकप्रकारलोकश्रेण्या: लभ्यते स्म परिचय: स एव। स एव देवदेव्युपासनरूपं धर्मस्य क्रियाकाण्डमवलम्ब्य समाजे सर्वस्मिन् भूत्वा-विद्यमाना: समाजस्य, धर्मभावस्य, भक्तिभावस्य, सात्विकभावस्य, तथा देव-भावस्य चोत्तेजनमुन्मेषणं च रक्षणमकुर्वन् सन्ततं। समाजाभ्यन्तरे राज्यविस्तारे-तथा नानाविधसमाजरक्षणाविचक्षणव्यापारे च भवेद्व्यापृत: सर्वदा राजन्यगण:। प्राचीनराज्यनिवहान्तराले व्यवसायात्मकेन वाणिज्येन भूत्वा व्यापृतो वैश्यगण:-समाजमेकदा समृद्धं पृथिवीस्थसकलसमाजं चैकयोगसूत्रेणाकरोदाबद्धम्।

मिसरादीनि प्राचीनसभ्यराज्यानि संसर्गमुपलभ्य भारतेन सार्द्धं स्वं स्वं-सम्बर्द्धयांचक्रुर्भारतीयधनगौरवज्ञानै:। स्वस्वदेशेषु शूद्रगण: समाजस्य शुश्रू-षायां सन्नासक्त: निर्वाहयामास स्वस्वजीविकां। प्राचीनसभ्यजगत वृत्तिवृत्त-मिदमिदानीं बभूव प्रकाशितं भारतेन साकमस्य प्राचीनजातिनिवहस्य-संस्रवं पश्यामो वयमस्मदीयशास्त्राभ्यन्तरे।

षामनुसमयान्महाभारतावधि लभ्यते तेषां परिचय:।

त्रेता-द्वापरयुगशेषपर्यन्तं तत्तज्जातेरासीदभ्युदय: साम्राज्यं समृद्धिश्च। तत: परमयं सर्वविनाशकारी कलियुग: पर्यागत:। कलियुगस्योदये यथा-विस्तृतमासीत्समाजस्य कार्य्यक्षेत्रं, तेन सह पापपरिमाणमपि तथा वर्द्धितं-वैलक्षण्येन। एतद्युगस्योक्ता शास्त्रकारै: प्रधानलक्षणान्यैकेन्द्रियपरायणता, स्वार्थपरता, स्वेच्छाचारिता, विलासिता, पाशवभावप्रादुर्भूतिश्च। तेन सह भवति ब्रह्मण्यस्य तथा सात्विकगुणस्य च ह्रास:। भारतं विनापि प्राचीन-राज्यसमूहस्येदानीं समपद्यत ध्वंस:।

सार्द्धं तेनास्तगतं द्वापरयुगं। सम्प्रति ध्वंसस्य तस्योपरि दृश्यते यो लोक-समाज:। तेषु प्रादुर्भावोऽयं कलियुगस्य विषम:। धनेन धान्येन समृद्धा च-देशो भवति पूर्णोऽधुना सत्यम्।

देशे सर्वस्मिन् साकं तेनैन्द्रियिकसुखभोग:, स्वार्थपरता, भोगासक्तिरवर्द्धत-च स्वेच्छाचारित्वम्। सम्प्रति ब्राह्मणस्य सात्विकताया: क्षत्रियस्य वीरत्वस्य च-भवति विलक्षणो ह्रास:। सार्द्धं वीरत्वेन यत्सात्विकभावोऽविद्यताऽनेकांशेन प्राची-नराज्यनिवहे तत् क्षत्रियवीरत्वं न विद्यतेऽधुना। भारती कथास्तां तावद्दूरत:।

यथा, सात्त्विकक्रियाकलापपरिपूर्णा भारतीयक्षत्रियधर्मस्तथैरोपीयवीरगणस्य वीरत्वमनेकपरिमाणतः परिपूर्णमासीत्सात्त्विकतया। प्राचीनवीरसमूहस्य वीरत्वेऽप्यासीत्तादृग्भावः।

किन्त्वधुना किमास्ते तद्वीरत्वम्? पतितं कथं भारतम्? भारतीयक्षत्रियगणोऽभवद्धर्मवीरः, शिक्षिताः परिवर्द्धिताश्चासन्ते क्षत्रियधर्मेण। यावनिकशठतायाश्चातुर्य्याश्च सविधे परास्त आसीद्धर्मभावस्तेषां, अधुनातनवीरत्वमेव कौशलचातुरात्मकमधिकसंख्यकमानवमारणस्य, शठतया चातुर्य्याच्च विजयि तद्वीरत्वम्। प्राचीनकालेऽपि राजधर्मान्तरालेऽविद्येतां भेदविग्रहौ, सत्यं, किन्त्वासीद्धर्मयुद्धात्मकं युद्धं तत्समये। धर्मद्वारेणासीच्चालितो भेदबुद्धिरनेकपरिमाणेन। सम्प्रत्यासीदन्तर्हितः स एव धर्मभावः सम्पूर्णभावतः। जगदिदानीं परिपूर्णं शिल्पचातुर्येण, तथा वैश्यगणस्य वाणिज्यव्यवसायेन। तत एवाधुना प्रतिष्ठितं धनगौरवं स्थाने धर्मगौरवस्य यतो वैश्ये शूद्रे च विद्यतेतमोगुणः। तम-उपसर्जनरजोगुणस्य प्रावल्यं वैश्ये, रजःप्रधानतमोगुणस्याधिक्यं शूद्रे। सुतरामधुनातनशिक्षाविस्तारस्य तथा वाणिज्यस्य चातीवपरिवर्द्धनेन समं प्रकाशते तमोगुणस्याऽप्याधिक्यं। सम्प्रति समाजास्तःशूद्रा अधिकतरप्रबलाः वैदेशिकतज्जातीयव्यक्तिनिवहसंसर्गतः। अवसरेऽस्मिन्नमति शूद्रप्रावल्ये तमोगुणस्य कथं भवेदाधिक्यं कलियुगे?। शूद्रस्यातो युगमाहात्म्येन प्रबलो भवति तमोगुणः। शूद्रा भूत्वा प्रबला ब्राह्मणक्षत्रियाणामधिकारे कुर्वन्ति हस्तक्षेपं वैलक्षण्येन। शूद्रजातीयब्राह्मणक्षत्रियाणामिदानीं भवत्यभ्युदयः, सत्यं, तथापि ददति परिचयं ते निजजातीयभावस्याऽप्यधिकपरिमाणेन। ततः पूर्वतनवैदिकमुनिगणः परिस्थापयामासार्यसमाजाभ्यन्तरे जातिभेदम्। कस्याऽप्यन्याधिकारे यातुं नास्ति सामर्थ्यंतत्प्रथानुसारेण। जातिभेदपरिस्थापनस्यायमभिप्रायः; यद्वर्णभेदः स्वाभाविकःपरमेश्वरसृष्टश्च, तस्य तद्रूपेण स्थापनमुचितमेवेति।

यथा, घटिष्यते तद्विपर्ययः तथा भविष्यति ध्वंसः समाजस्य लोकालयस्यच। यत्समयतो विपर्ययस्यास्याऽभवदारम्भः। तत्कालतोऽभवत्-सूत्रपातःकलियुगस्य। तथा तमोगुणस्य प्रावल्यं तत्कालतः।

यथा, जीवव्यक्तिशरीरे यत्समयादारभ्यारभेत तमोगुणाधिक्यं, ततो जड़ताया हृद्धावस्थायाश्च भवेत् सूत्रपात: ।

तथा जीवसमष्ट्यात्मकसमाजशरीरेऽस्ति स एव नियम: । नियमेन तेन समाजस्य तमोगुणान्वितताया: शूद्रजातेर्भवति प्रावल्यमिदानीम्। तेन साकमेवं सकललोकालयोऽपि प्रतिधावति प्रलयाभिमुखम् । सृष्टे: परं ब्राह्मणजातेरेकस्या: अर्थात् ब्रह्मणो जातत्वात् सर्वासामिदानीन्तनजातीनां ब्राह्मणत्वात्मकजातिरित्येका संज्ञाऽसीत्सृष्टे: प्रथमत इति ध्येयं, न तु याथार्थ्येन ।

ब्राह्मणेतरा जातिर्वा लोकश्रेणी: क्षत्रियवैश्यशूद्रजात्यात्मकत्वेनासीत् क्रमश: परिणता । सम्पूर्णभावेनाधुना घटते तद्वैपरित्यं । प्रवलो भूत्वा शूद्रगणो वैश्यत्वं क्षत्रियत्वं ब्राह्मण्यं चाभिभवति कलियुगे । फलमिदं भवत्युपस्थितं, ब्राह्मणक्षत्रवैश्या भूत्वाऽधुनाऽवनता लभन्ते शूद्रत्वं । प्राकृतिकं ब्राह्मण्यं क्षत्रियत्वं वैश्यत्वं च तेषामभवद्गतप्रायम् । भवति पतितं तेषां छायामात्रं,-भवति परिमाणह्रासस्तेषामुत्कृष्टगुणस्य । दृश्यते वैश्यत्वशूद्रत्वयोरेकतमोऽपि गुण: सकलजातीयलोकाऽभ्यन्तरे । धनवलमपीदानीं प्रधानवलं । कौलिन्यं मानो मर्यादा च सर्वमेतद्विद्यते तत्र । वर्द्धते विलासित्वं समं धनेन । ततो वृद्धिमलभत पापपरिमाणं कलियुगे । तथैवं दृश्यते प्रावल्येन स्वार्थपरत्वं,-स्वेच्छाचारित्व', विलासित्वं, पशुत्वं च लोकालये जगति च । भारतमाक्रान्तं तेनैव । दृश्यतेऽस्माभिरेवमेव, प्राक्कालतस्त्रेताया यदा वभूव विषमाभ्युदयो रज:-प्रधानक्षत्रियवलस्य, ब्राह्मणवलमभिभवितुमभवदुद्योगी तदा स: । ततोऽवतीर्य परशुरामोऽकरोत्तत् क्षत्रियवलं निस्तेजस्कम् ।

"परिच्छेदेऽस्मिन् भवत्यालोचित: पुराणोक्तयुगावतारवाद: । सृष्टिस्थितिप्रलयात्मकत्वेन दृश्यते जगदिदं पुन:पुन: प्रतिकल्पं । सार्द्धं तेन प्रतिकल्पं भवति तथा मत्स्यादारभ्य वामनावधि पञ्चयुगम्। तथाच दृश्यते परशुरामादिकल्क्यान्तं पञ्चयुगम् । कलिशेषे सत्यवतीर्णः कल्की संघटयेद्ब्रह्माण्डप्रलयं भगवान् रुद्ररूपेण । पृथिव्यां प्रथमत: सत्यां जलमग्नायां घटते मत्स्ययुगं सृष्टिप्रकरणे । ततो दृष्टे सति स्थलभागे कूर्मावतारमवलम्ब्य तिष्ठति जगदीशो जले स्थले च ।

भगवतोऽनन्तरं वराहावतारे भवेत् सृष्टिः स्थावरनगादीनां। तत्परं-
भगवतो नृसिंहावतारे भवति विकाशो मृगकुलस्य तिर्यग्योनेश्च, सर्वशेषे-
भगवतो वामनावतारे भवेत्-खर्वाकृति-मनुष्योत्पत्तिः। सृष्टियुगपञ्चकमेतत्-
संघटते प्रतिकल्पं पुनःपुनः। तदेव कथयति विष्णुपुराणे प्रथमांशीय-
पञ्चमाध्याये।

"सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा।
अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः"। इत्यादि।

स्थितिप्राकरणिकपञ्चयुग एवं भवेदुपस्थितो ब्राह्मण-क्षत्रिय वैश्य शूद्र-
कालः। भवत्यालोचितः सोऽपि नित्ययुगान्तरपरिणामः स्थलेऽस्मिन्।
घटेत प्रलयः प्रतिकल्पमेतस्मिन् युगान्तरपरिणामावशेषे।

ततः कालमाहात्म्येनागतः परिणामो रजोगुणप्रधानयुगान्तरद्वयस्य त्रेता-
द्वापरनामकस्य। रजोगुणोऽपि वीर्यमयो महाशक्तिधारी च। को हेतुः,-
रजोगुणोऽपि शक्तिमयो विश्वसृष्टिव्यापारे। समाजमात्रेऽपि विद्यते युगद्वय-
मिदं त्रेताद्वापराभिधेयमिति नैत्यिको नियमः। युगद्वये तस्मिन् समाजस्य-
सम्यक् श्रीवृद्धिसाधनस्य तथा वीरत्वस्य च भवति विकाशः,। त्रेताद्वापरयोः-
माकमवसानेन भवत्यवसानं श्रीवृद्धेर्वीरत्वस्य च भरतखण्डस्य। युगद्वयेऽस्मिन्-
त्रेताद्वापरनामके प्रवलमुत्तिष्ठते वलमपि क्षत्रियवैश्ययोः समाजमध्ये। मति-
प्रावल्ये वलद्वयस्यैतस्य न भवत्तत्तेजस्कं शूद्रवलं तमोगुणप्रधानम्। शास्त्रे-
ऽवलोक्यतेऽस्माभिरेतत्, त्रेतायुगे प्रादुर्भवेच्छूद्राचितेन्द्रियपरायणता येषां, ते-
राक्षसनाम्ना प्रथिताः, यतो राक्षसवदिन्द्रियपरायणता सर्वग्रासिका, किं न-
ग्रसेत प्रवृत्तिपरायणता स्वेच्छाचारिता च? वर्द्धियते यत्परिमाणेन प्रवृत्तिः,
प्राप्नुयाद्वृद्धिं तत्परिमाणेन, प्रतिदिनं वर्द्धतापि स्वेच्छाचारिता। प्रत्येकव्यक्तेः-
परमायुःक्षयकारिणीयमपि प्रवृत्तिपरायणता। न तावदेतदेव, समाजाभ्यन्तरे-
सति वर्द्धने प्रवृत्तिपरायणतया धावितुमाभिमुखं समाजः। येनादृक्मानवकुल-
क्षयकारिणी प्रवृत्तिपरायणता, राक्षसनाम्नाऽन्यत्किं नाम दातव्यं तस्याः? शूद्र-
कुलस्येयं प्रवृत्तिपरायणता प्रधानधर्मः, मोहस्याज्ञानस्य चोत्पत्तिहेतुरत्यन्तेन्द्रिय-

परायणता। यत्शूद्रकुलमत्यन्तेन्द्रियासक्तं, ततस्तत्कुलमज्ञानावृतं मोहाच्छन्नमित्यभिहितं शास्त्रे। चत्रियवलं प्रधानं यत्समाजे, तद्दलं तु समाजेतस्मिन् ब्राह्मणवलसाहाय्येन स्वापेक्षया मूलाऽतीववलवत् शूद्रवलं कर्त्तुं तेजस्विनं कदापि न ददाति प्रसरं, विष्णुरपि शक्तौ रक्षिणी। श्रीरामचन्द्रस्तु विष्णुरूपरक्षणशक्तेस्तस्या विकाशात्मकः। ततः शास्त्रे दृश्यतेऽस्माभिरेतत्,-यदा त्रेतायां प्रादुर्बभूव राक्षसकुले चत्रियोचितेन्द्रियपरायणता, तदा-रजोगुणप्रधानचत्रियकुलेऽवतीर्य्य रामो दाशरथिः संदम्य तान् ररक्ष समाजम्। द्वापरेऽप्येवमयथाविक्रमशालिनो दैत्यकुलस्य विनाशयितुं शूद्रवलं वैश्यवलचिह्नस्वरूपमवलम्ब्य हलं वलरामः चत्रकुलगौरवात्मकस्य स्वसहोदरस्य श्रीकृष्णस्य साकमभ्युदयेन परिजग्राह चत्रियतेजः। सोऽपि श्रीकृष्णः ध्वंसं संसाध्य दैत्यकुलस्य चत्रियवलेन पालयामास समाजम्। स्थित्यात्मकविष्णुशक्तेरेतादृग्विराड्विकाशोऽघटत भारते। द्वापरान्ते क्रमशो भवेद्ध्रासो-चत्रियतेजसो भारते। सति कलियुगस्याविर्भावे तमोगुणस्य प्रादुर्भावो-भवति हृष्टिलाभश्च। प्रारम्भे युगस्यास्य कदा वेदधर्मविरोधापादकं ध्वंसयितुं-बौद्धधर्मं दृष्टिपथमागतं शङ्करप्रभृत्याचार्यवृन्दं ब्राह्मणवलप्रधानं। तत्-परमिदानीं हिन्दुसमाजस्यास्य विधाय नियमात्मकवृहद्दालिकानिपातं-कर्म्मैकाकारं सर्वं यथाकालस्रोतसि स्वाधीनतात्मककपटनामधारिण्याः-स्वेच्छाचारिताया महातरङ्गः।

समेत्य समुत्पादयति समाजप्लावनं, भनक्त्यार्यसमाजस्य समस्तसेतुं। तत्तरङ्गाद्रक्षितुं किमस्ति न कस्यापि सामर्थ्यं?

तमोगुणस्य कार्य्यान्तरात्मकेन महामोहेनाच्छन्नो हिन्दुसमाजः। तत्-समाजे प्रविष्टमासीत् कलियुगमाहात्म्यं। निवारयितुमेतत् स्रोतोऽस्ति-कस्य शक्तिः? सृष्टेः परं स्थितिः, स्थितेः परं प्रलय इति प्रकृतेरकाट्यनियमः। तत्प्रलयाभिमुखमनिवार्यवलेन पुनर्धावति संसारः। पूर्णो भवितुमागच्छत्येतत्कल्पस्यावसरः। प्राचीनभारते दृष्ट एवासीत् पुराणोक्तयुगावतारः, नैतत्,-तस्य दर्शनमघटत प्राचीनमिसरप्रभृतिजनपदेऽपि। यतोऽवतारो भवेद्यदि-भगवद्रूपात्मकः तस्य तदा नित्यनियमोऽयम्। तथा, सामाजिकयुगावतरच-

मपि नित्यनियमः;समाजस्य सकलस्य। पुराणं नित्यनियमस्य तस्य दर्शयति-स्म स्थूलरूपमात्रं। नोचेत्, भगवान् सूक्ष्मरूपेण नियमयति क्रमशः सर्वसमाजं। पुरातनपृथिव्या आदिमसमाजे वा सत्ययुगे समधिकाभ्युदयो बभूव सात्त्विकतायाः इति हेतोस्तदेवाभिधातुं पार्य्यते ब्राह्मणकालनाम्ना। प्राचीन-भारतीयसमाजस्तत्कालस्य नेदृक्स्वरूपः, वैदिकधर्मस्य सकलं सारतत्त्वं-सामाजिकसंस्रवेण सम्प्रचारितं सर्वेषु प्राचीनसमाजेषु भक्तिभावेन देवभावेन-च परिपूर्णमकरोत्तत्समाजं। ततो देवदेवार्चनासीत् प्रचलिता प्राचीन-समाजेऽपि। तेषामपि मध्ये युगं क्षत्रियवीरत्वस्य वैश्यवाणिज्यव्यवसायस्य-च सत्याधिक्ये प्राचीनजगदेकदाऽसीत् कंपितं। तथा श्रीवृद्धेर्गौरवपताका-समाजे सर्वस्मिन्नासीदुड्डीयमाना। तद्युगस्यावसाने महाशूद्रबलस्येदानीं भवति समुत्थानम्।

प्रतिघोषित आसीदिरोपीयमहादेशे तत्समुत्थानस्य प्रथमतो महारवः। प्लिबियानगणस्य महाशब्दः कम्पयामास प्रेट्रिसीयानगणं। इरोपीयसमस्तप्रदेशेषु मध्ययुगमासीन्नानासमाजविप्लवः स्वाधीनतानाम्ना। भग्नमासीद्भक्ति-मन्दिरं धर्मसमाजस्य।

समस्तप्रदेशो वा सर्वा पृथिवी कम्पित आसीद्वेगेन तेनाद्य।

आसीदापतितोऽज्ञानतायाः समाजे महामोहः। ततः समाजस्य-गतिरियं नावनतिनिदानमित्युक्तोन्नतिकारणं सेति कथयन्ति सर्वे सर्वत्र। स्वेच्छाचारितायाः प्रवृत्तेश्च वृद्धिसाधनानुष्ठानमेव महामन्त्रः कलियुगस्य। यदि तत्र सुखमस्यास्यत्, तदा तेन सुखेनावश्यमाप्लावितमभविष्यद्भारतवर्षमेतद्दिनावधि। किन्तु बहुयुगस्य परीक्षयाऽपश्यद्भारतं प्रवृत्तेर्वृद्धा न भवेत्-स्थायिसुखमिति; वरं तत्र वर्द्धते परिमाणं दुःखनिवहस्य। यत् सुखं-स्थायित्वेन विद्यते चिरदिनं, प्रवृत्तिवृद्धिजनितं नैव तत्। किन्तु प्रवृत्तिसंयम-जनितमेव। प्रवृत्तिसंयमोऽपि सात्त्विकतासाधकः; सात्त्विकताऽपि शान्तेः-कारणम्। सात्त्विकताऽपि सा ब्राह्मणधर्मः। सत्यां पादेनैकेन क्षीणायां-तस्यां सात्त्विकतायां विराजते क्षत्रियधर्मः। सत्यां पादद्वयेन क्षीणायां तस्यां-समागतो वैश्यधर्मः, पादत्रयेणावनतायां सत्यां तस्यां प्रादुर्भूतः शूद्रधर्मः।

दृष्टे सति शूद्रधर्मस्य बलवत्त्वे क्रमशो भवति ध्वंससाधनं सात्विकतायाः । साङ्कर्यध्वंसेन तेन भवति विनष्टा शान्तिः । शान्तिस्थापनस्यैकमात्रोपायो ब्राह्मणबलमेव । प्राचीनवैदिकार्य्यसमाज एव परिदृश्यते वर्णभेदस्य नामकरणं केवलं गुणकर्मविभागानुसारेण । अन्यसमाजेऽसत्यपि तन्नामकरणे स्वाभाविकव्यापारो यः श्रेणीविभागः ; भवेत् सर्वसमाजे विद्यमानोऽवश्यं सः । ततो दृश्यतेऽस्माभिः श्रेणीविभागोऽयं, सर्वजातीयमानवसमाजेष्वपि स्थितः प्रच्छन्नभावेनेति । प्रकाश्यभावेन तस्य नामकरणं परिस्थापनं च कुतः परिदृश्यते हिन्दुसमाजे ? । उत्तरमेतत् । हिन्दूनां समाजतत्त्वं वेदतः समुत्पन्नम् ।

यदुपदिष्टं वेदेन, वैदिकर्षिवृन्दानां कल्पान्तरीयाऽऽभ्यन्तरिकप्रत्यक्षज्ञानं तदेव । अतस्तदेव विज्ञानसम्मतं संपूर्णसत्यात्मकम् ।

ततो हिन्दुसमाजतत्त्वं तावत्परिशुद्धं सम्पूर्णावयवं सुपरिष्कृतञ्च ।

तदवलोक्यतां न बाध्यमानत्वेन, सर्वसमाजेष्वपि चतुर्विधेन वर्णभेदेन भूत्वा विद्यमानो जगदीश्वरः सम्पादयति सततं स्वीयलीलाम् । विज्ञानानुगतविवरणं वेदोपदेशस्य दिङ्मात्रेण प्रदर्शितव्यमग्रतः । हिन्दुजातिभेदस्योपकारिताविषये इंलण्डीयसुचिकित्सकस्य प्रसिद्धपुरातत्त्वविदः सुविदुषो रवार्टसनामधेयस्योक्तिरनुसन्धेया तद्भाषाभिज्ञैरवश्यैरित्यनुरोधः । इति जातिविचारः ।

अथ वरगुणविचारः,—

वरस्वरूपनिरूपणाभ्यन्तरे प्रसङ्गतोऽसवर्णविवाहनिषेधस्य तथा जातिवर्णयोर्विवेकस्य च सत्यपि बाहुल्ये प्रकृतोपयोगितया ज्ञेयं गुणाधायकत्वं तस्य । अपिच यथाजातादीनां परिणय-निराकरण-प्रसङ्गेन वरदोषस्योपवर्णितत्वात् अत्रेदानीमुपवर्ण्यन्तेऽधः सलक्षणवरगुणाः ।

यथा प्रमाणानि वीरमित्रोदये ;—

तत्र लिङ्गपुराणम्,—

"दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने ।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे" ॥

ब्रह्मचारिणि अस्खलितब्रह्मचर्य्याय। "अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेदिति" योगियाज्ञवल्क्यस्मरणात्।

लक्षणपरीक्षातः प्रागायुःपरीक्षा कर्त्तव्येत्युक्तं तत्रैव—

"पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत्।
आयुर्हीननराणाञ्च लक्षणैः किं प्रयोजनम्॥
वामभागेषु नारीणां दक्षिणे पुरुषस्य तु।
पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम्॥
सप्तरक्तं त्रिगम्भीरं त्रिविस्तीर्णं प्रशस्यते।
बाहुर्नेत्राञ्चलञ्चैव जानुनासा तथैव च॥
स्तनयोरन्तरञ्चैव पञ्चदीर्घं प्रशस्यते।
ग्रीवा पक्षाननं पृष्ठं ह्रस्वं जङ्घे च शोभने॥
ह्रस्वानि यस्य चत्वारि पूजामाप्नोति नित्यशः।
सूक्ष्माण्यङ्गुलिपर्वाणि दन्तकेशनखत्वचः॥
पञ्चसूक्ष्माणि येषां स्युस्ते नरा दीर्घजीविनः।
कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धललाटिकाः॥
एतत्सर्वं विनिर्दिष्टमुन्नतं षट्प्रकाश्यते।
नेत्रान्तं करपादं चाधरोष्ठञ्चैव तालुकम्॥
जिह्वा नखश्च ते सप्त रक्तवर्णाः शुभावहाः।
कर्णकूपौ च नाभिश्च त्रिगम्भीरं प्रशस्यते॥
उरः शिरो ललाटञ्च त्रिविस्तीर्णं प्रशस्यते।
मुखमध्यं शरीरस्य सर्वं वा मुखमुच्यते॥
तत्रापि चक्षुषी श्रेष्ठे घ्राणञ्च तदनन्तरम्।
वर्णात्परतरः स्नेहः स्नेहात्-परतरः स्वरः॥

स्वरात्परतरं सत्त्वं सर्वं सत्वे प्रतिष्ठितम्।

उरो विशालं बहुपुत्रभोगी,-

शिरो विशालं नृपपुङ्गवः स्यात्।

कटीविशालो बहुपुत्रभोगी,-

विशालपादस्तु धनी सुखी स्यात्॥

"चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम्।

त्वचः स्नेहेन शय्या स्यात् पादस्नेहेन वाहनम्॥

अकर्मकठिनौ हस्तौ पादौ चाध्वनि कोमलौ।

यस्य हस्तौ च पादौ च तस्य राज्यं विनिर्दिशेत्"॥

अनामिकापर्वमतिक्रमेत चेत्, कनिष्ठिका वर्षशतं च जीवति।

समे त्वशीतिर्विषमे तु सप्ततिः, पर्वार्द्धहीने खलु षष्टिमादिशेत्॥

"अङ्गुष्ठोदरमध्यस्थे यवाविव विराजिते।

उत्पन्नभोग्यभोगी च स नरः सुखभाग्भवेत्॥

रेखाभिर्बहुभिः क्लेशमल्पाभिर्द्धनहीनता।

रक्ताभिर्द्धनमाप्नोति कृष्णाभिर्दुःखितो भवेत्॥

अतिमेधोऽतिकीर्त्तिश्च विक्रमी च सुखी तथा।

अतिस्निग्धार्थदृष्टिः स्यात् स नरोऽल्पायुषो भवेत्॥

अङ्कुशं कुटमलं चक्रं यस्य पाणितले भवेत्।

तस्य राज्यं विनिर्दिष्टं सामुद्रवचनं यथा॥

मत्स्ये शतं विजानीयान्मकरे तु सहस्रकं।

पद्मे कोटीर्विजानीयाच्छङ्खं कोटिसहस्रकम्।

अतिकृष्णमतिशुक्लमतिरक्तं तथैव च।

इत्थंवर्णो नरो रोगी स्यान्नारस्य वचो यथा"॥ इति लक्षणानि।

"यथा नित्याचारपद्धतौ तान्याह विद्याकरः ।
नातिस्थूलां नातिकृशां न दीर्घां न च वामनां ।
ह्रस्वया निःस्वता प्रोक्ता दीर्घया च कुलक्षयः ।
ग्रीवया पृथुलया योषितः प्रचण्डता,
नेत्रे यस्याः केकरे पिङ्गले वा ।
सा दुःशीला श्यावलीलेक्षणा च ॥
कूपौ यस्या गण्डयोश्च स्मितेषु ।
निःसन्दिग्धं बन्धकीं तां वदन्ति" ॥
प्रविलम्बिनि देवरं ललाटे ।
श्वशुरं हन्त्युदरे स्फिचौ पतिञ्च ॥
अतिलोमचयान्वितान्तरोष्ठी ।
न शुभा भर्त्तुरतीव या च दीर्घा ॥
"कनिष्ठिका वा तदनन्तरा वा ।
स्पृशेन्न यस्या धरणीं युवत्याः ॥
"गताथवाङ्गुष्ठमतित्य यस्याः ।
प्रदेशिनी सा कुलटातिपापा ॥
मध्याङ्गुली या मणिबन्धनोत्था ।
रेखागता पाणितलेऽङ्गनायाः ॥
ऊर्द्धस्थिता पादतलेऽथवान्या ।
पुंसोऽथवा राजसखाय सा स्यात् ॥
कनिष्ठिकामूलभवाग्रता या ।
प्रदेशिनी मध्यमिकान्तरालम् ॥

करोति रेखा परमायुषः सा।
प्रमाणमूना तु तदूनमायुः॥
अङ्गुष्ठमूले प्रसवस्य रेखाः।
पुत्रा बृहत्यः प्रमदास्तु तन्वः॥
अच्छिन्नदीर्घा बृहदायुषां ताः।
स्वल्पायुषां छिन्नलघुप्रमाणाः" ॥

"स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्य्याः,
पादौ समोपचितचारुनिगूढगुल्फौ ।
श्लिष्टाङ्गुलीकमलकान्तिनिभौ च यस्या,
स्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत् ॥
मत्स्याङ्कुशाब्जयववज्रहलासिचिह्ना,-
वस्वेदिनौ मृदुतलौ चरणौ प्रशस्तौ ।
जंघे च रोमरहिते विशिरे सुवृत्ते,
जानुद्वयं सममनुल्बणसन्धिदेशम् ॥
उरू घनौ करिकरप्रतिमावरोमा-
वश्वत्थपत्रसदृशं विपुलं च गुह्यम् ।
श्रोणीललाटमुरुकूर्मसमुन्नतं च,
गूढो मणिश्च विपुलां श्रियमादधाति" ॥ इति ।

स्त्रियं पुरुषं चावलम्ब्य प्रमाणानि यान्युक्तानि पार्थक्येन लक्षणविषये, तदभिन्नानि प्रमाणानि स्त्रीपुरुषसाधारणानीति बोध्यं तद्विषये। प्रकाश्यन्तेऽथ वरगुणाः। तत्र यमः,—

"कुलं च शीलं च वपुर्वयश्च,
विद्याञ्च वित्तञ्च सनाथताञ्च ।

एतान् गुणान् सप्त परीक्ष्य देया,
कन्या बुधैः शेषमचिन्तनीयम्" ।

तथा लल्लः,—

"जातिविद्यावयःशीलमारोग्यबहुपक्षतां ।
अर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः" ॥ इति ।

बहुपक्षता, बहुसहायवत्त्वम् ।

तथा गौतमोऽपि,—

"विद्याचरित्रवन्धुशीलसम्पन्नाय दद्यादि"ति विद्या श्रुतिस्मृतिरूपा । चरित्र" मनुष्ठानं । वन्धुः प्रशस्ताभिजनः । शीलं धर्मरतिः, एतत्सम्पन्नाय-कन्यां दद्यादित्यर्थः ।

तथा शातातपोऽपि,—

"वरो वरयितव्योऽर्थी कुलशीलसमन्वितः ।
रूपवान् पण्डितः प्राज्ञो युवा दोषविवर्ज्जितः" ॥

वरयितव्यः कन्यापित्रेति शेषः ।

आपस्तम्बोऽपि,—

"वन्धुशीललक्षणसम्पन्नः श्रुतवान् अरोग" इति वरसम्पदिति ।

तथा मनुरपि,—

"उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्विचक्षणः" ॥ इति ।

अप्राप्तां अप्राप्तविवाहसमयां वालिकामित्यर्थः ।

तथा वौधायनोऽपि,—

"दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम्" ॥

यत्तु,—

कामममामरणं तिष्ठेद्गृहे कन्यर्त्तुमत्यपि ।
न त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित् ॥

इति मनुवचनम् ।

"तद्गुणवति सम्भवति गुणहीननिषेधपरं न तु सर्वथा गुणहीननिषेधपरम् । "नोचेदपि वा गुणहीनाय इति बौधायनोक्तानुकल्पो निर्विषयः स्यात् । ऋतुमत्यपि तिष्ठेदिति तु उक्तरीत्या न स्वार्थे पर्य्यवस्यति ।

अतो नोपरुन्ध्याद्रजस्वलामित्यनेन न विरुध्येत" ।

अतएव वशिष्ठः,—

"प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात् पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति" ॥ इति ।

तथा याज्ञवल्क्यः,—

"एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः" ॥ इति ।

एतैः पूर्वोक्तैर्लक्षणादिभिः कन्यागुणैः, तत्र लक्षणानि पूर्वोक्तानि, अनन्यपूर्वकत्वं चाविप्लुतब्रह्मचर्य्य इत्यादिनोक्तम् ।

यद्यपि,—

"दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्निंश्चैवाविलम्बयन् ॥
सुरापी व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियम्वदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा" ।

इत्यादिना द्वितीयाद्युद्वाहविधानादनन्यपूर्वकत्वं वरस्य नावश्यकमितिप्रतीयते ।

तथापि,—

"अदग्धहस्ते यद्दत्तं तदनन्तफलं स्मृतम्।
दग्धहस्ते तदर्द्धं स्यान्निष्पन्नं बहुयत्नत:" ॥ इत्यादि।

"अदग्धहस्तदानस्य फलातिशयदर्शनात् फलातिशयकामस्य तदावश्यकता-सिध्यति। कान्तत्वं च लौकिकप्रमाणसिद्धमेव। असपिण्डत्वं, शब्दशक्त्यैव-सिध्यति। सापिण्ड्यस्योभयनिरूपितत्वात्। यवीयस्त्वं तु त्र्यष्टवर्षोऽष्ट-वर्षामित्यादिस्मृत्या वाधितमेवेति नातिदिश्यते। अरोगित्वं च सामर्थ्यादेव सिध्यति। भ्रातृमत्त्वं चापेक्षितं"—इति।

तथाच, चतुर्विंशति संग्रहे भट्टोजदीक्षित:,—

"एतैरेव पूर्वोक्तैर्गुणैर्युक्तो दोषैश्च वर्ज्जितो वरो भवति। तस्यायमपरो-विशेष:, सवर्ण: उत्कृष्टो वा न हीनवर्ण:। श्रोत्रिय: स्वयं च श्रुताध्ययन संपन्न:। यत्नात्प्रयत्नेन पुंस्त्वे परीक्षित:। परीक्षोपायश्च नारदेन दर्शित:।

"यस्याप्सु प्लवते वीजं ह्रादि मूत्रञ्च फेनिलम्।
पुमान् स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्डक:"। इति ॥

युवा न वृद्ध:। धीमान् लौकिकवैदिकव्यवहारेषु निपुणमति:। जनप्रिय:-स्मितपूर्वमृदुभिभाषणादिभिरनुरञ्जजन: अविप्लुतं ब्रह्मचर्य्यं यस्य: स:, विप्लवे सति कृतप्रायश्चित्त इति बोध्यम्।

विविच्यतेऽथ क्रमप्राप्तं कन्यास्वरूपम्। तत्रैव कन्याया: स्वरूपनिरूपणे,—

मनु:,—

"उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम्।
असपिण्डा च या मातुरसगोत्रा च या पितु: ॥
सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने।
अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।
तनुलोम-केशदन्तां मृद्वङ्गीमुद्वहेत्-स्त्रियम्" ॥ इति।

तथाच कुल्लूकभट्ट:,—

"अव्यङ्गाङ्गीमिति, अविकलाङ्गीं मधुरसुखोद्यनाम्नीं हंसराजरुचिरगमनां-अनतिस्थूललोमकेशदशनां, कोमलाङ्गीं कन्यामुद्वहेदिति"।

"यस्याङ्गस्याङ्गेषु अङ्गुल्यादिष्वपि वैगुण्यं नास्ति सा अव्यङ्गाङ्गी" इति-चतुर्विंशतिमतसंग्रहे भट्टोजदीक्षित:।

तथाच याज्ञवल्क्य:,—

"अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्।
अरोगिणीं भ्रातृमतीमसमानर्षगोत्रजाम्"॥ इति।

तथात्र मिताक्षरायां यथाह योगिविज्ञानेश्वर:,—"लक्षण्यां वाह्याभ्यन्तर-लक्षणैर्युक्तां। तनुलोमकेशदशनादीनि मनुनोक्तानि। आभ्यन्तराणि अष्ट-पिण्डान् कृत्वेत्याद्याश्वलायनोक्तविधिनाऽग्रे ज्ञातव्यानि। स्त्रियं नपुंसकत्व-निवृत्तये स्त्रीत्वेन परीक्षितां। अनन्यपूर्विकां दानेनोपभोगेन वा पुरुषान्तरा-परिगृहीतां कान्तां कमनीयां वोढुर्मनोनयनानन्दकारिणीं यस्यां मनश्चक्षुषो-र्निर्वन्धस्तस्यामृद्धिरित्यापस्तम्बस्मरणात्। एतच्च न्यूनाधिकाङ्गादिवाह्यदोषा-भावे। यवीयसीं वयसा प्रमाणतश्च न्यूनामुद्वहेत् परिणयेत्"। इति -

तथाच भट्टोजदीक्षित:,—

"अनन्येति, या दानेनोपभोगेन वा पुरुषान्तरपूर्विका न भवति तां, अनेन-सप्तपुनर्भुवो व्यावर्त्त्यन्ते"।

तथा चाह वोधायन:,—

"वागदत्ता मनोदत्ता अग्निपरिगता सप्तपदं नीता भुक्ता गृहीतगर्भा"-प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां न धर्मं विन्देदिति। अनेनानन्यपूर्विकाया: कन्याया विवाहस्य मुख्यत्वं प्रतिपादितमेतद्भिन्न-कन्योपयमस्य प्रमाणान्तरव्रातेनाभ्यनुज्ञातत्वान्महर्षिभिर्गौणभावेन। अपिच कन्याविषयकविशेषणानामभ्यन्तरेऽसवर्णामितिविशेषणमसवर्णाविवाहविचाराव-

सरे व्याख्यातं। तथा कतिपयानि चान्यानि संक्षेपतो विवृतानि-पूर्वतः। संप्रत्यसपिण्डासमानगोत्रासमानप्रवरात्मकानि व्याख्यायन्तेऽत्र प्रधान-विशेषणानि।

असपिण्डेत्यादिमानवीयवचनजातस्य तथा तादृशयाज्ञवल्कीयप्रमाण-व्रातस्य च सत्यपि पूर्वत उट्टङ्कितत्वे तदन्तर्गतनिरुक्तविशेषणवितयं स्वातन्त्र्येण विशेषतो विवरितुमभिलाषितया पुनरुद्ध्रियन्ते तान्येव वचनानुप्रयोगतोऽत्र।

यथाह मनुः,—

"असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" ॥ इति।

तथाच कुल्लूकभट्टः,—

"असपिण्डा चेति मातुर्या सपिण्डा न भवति।
सप्तमपुरुषपर्य्यन्तं सपिण्डतां वक्ष्यति।

"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते" ॥ इति।

तेन मातामहादिवंशजा या भवतीत्यर्थः। चशब्दात् मातृसगोत्रापि-मातृवंशपरंपराजन्मनाम्नोः प्रत्यभिज्ञाने सति न विवाह्या। तदितरा तु-मातृगोत्रापि विवाह्येति संगृहीतं।

तथाच, व्यासः,—

"सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि।
जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कितः" ॥

यत्तु मेधातिथिना,—

वशिष्ठनाम्ना मातृगोत्रनिषेधवचनं लिखितम्।

"परिणीय सगोत्रां तु समानप्रवरां तथा।
तस्यां कृत्वा समुत्सर्गं द्विजश्चान्द्रायणं चरेत् ॥
मातुलस्य सुताञ्चैव मातृगोत्रां तथैव चेति"।

तदपि मातृवंशजन्मनामपरिज्ञानविषयमेव । असगोत्रा च या पितुरिति- पितुर्या सगोत्रा न भवति । चकारात् पितृसपिण्डापि पितृष्वस्रादिसन्तति- भवा या न भवतीत्यर्थः । सा द्विजातीनां दारत्वसम्पादके विवाहे प्रशस्ता- मिथुनसाध्ये अग्न्याधानकर्मपुत्रोत्पादनादौ चेति" ।

तथा, मत्स्यसूक्तमहातन्त्रे,—

"मातुर्यन्नाम गुह्यं स्यात् सुप्रसिद्धमथापि वा ।
तन्नाम्नी या भवेत् कन्या मातृनाम्नीं प्रचक्षते ॥
प्रमादाद्-यदि गृह्णीयात् प्रायश्चित्तं समाचरेत् ।
ततश्चान्द्रायणं कृत्वा तां कन्यां परिवर्ज्जयेत्" ॥

तस्य प्रतिप्रसवमापादयति राजमार्त्तण्डीयवचनम् ।

यथा,—

"मातृनाम्नी यदा कन्या विवाहे कुलजा हि सा ।
विप्रैर्नामान्तरं कार्य्यं तस्याः पित्रोरनुज्ञया" ॥ इति ।

तथाच, याज्ञवल्क्यः ;—

"अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥
पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा ।
दशपुरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।
स्फीतादपि न सञ्चारिरोगदोषसमन्वितात्" ॥

अपिच—असवर्णामितिविशेषणमपहाय अनन्यपूर्विकादियवीयसीमित्यन्त- विशेषणानां विज्ञानेश्वराभिमतं विवरणं साधारणतो लिखितमादितः । सम्प्रत्य- रोगिण्यादिविशेषणजालस्य लिख्यते विज्ञानेश्वरविवृतिरत्र ।

तथाच,—विज्ञानेश्वरः अरोगिणीं अचिकित्सनीयव्याध्यनुपसृष्टाम् ।

भ्रातृमतीं पुत्रिकाकरणशङ्कानिवृत्तये । अनेनापरिभाषितापि पुत्रिका-

भवतीति गम्यते। असमानार्षगोत्रजां-ऋषे-रिदमार्षं नाम प्रवर इत्यर्थः। गोत्रं परंपराप्रसिद्धं आर्षञ्च गोत्रञ्च आर्षगोत्रे समाने आर्षगोत्रे यस्यासौ-समानार्षगोत्रस्तस्माज्जाता समानार्षगोत्रजा न समानार्षगोत्रजा तां, गोत्र-प्रवरौ-च पृथक् पृथक् पर्युदासनिमित्तम्। तेनासमानगोत्रजां असमानार्षजा-मित्यर्थः। तथाचासमानप्रवरैर्विवाह इति गोतमः।

तथाच,—

"असपिण्डा च या मातुरसगोत्रा च या पितुरिति"। मनुः।

मातृगोत्रामप्यपरिणेयां केचिदिच्छन्ति।

"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवराञ्चैव भुक्त्वा चान्द्रायणं चरेत्"॥ इति—

प्रायश्चितस्मरणात्। अत्र असपिण्डामित्यनेन पितृष्वसृमातृष्वस्रादि-दुहितृनिषेधः।

तथा—असगोत्रामित्यनेनासपिण्डाया अपि भिन्नसन्तानजायाः समान-गोत्राया निषेधः।

असमान-प्रवरामित्यनेनाप्यसपिण्डाया असगोत्राया अपि समानप्रवराया-निषेधः।

तथा, असपिण्डामित्येतत्सार्ववर्णिकम्। सर्वत्र सापिण्ड्यसद्भावात्। असमानार्षगोत्रजामित्येतत्त्रैवर्णिकविषयम्। यद्यपि राजन्यविशां प्रातिस्विक-गोत्राभावः। तथापि पुरोहितगोत्रप्रवरौ वेदितव्यौ।

तथाच—यजमानस्यार्षेयान् प्रवृणीत इत्युक्त्वा पौरोहित्यान् राजविशां-प्रवृणीते इत्याश्वलायनः। सपिण्डासु समानगोत्रासु समानप्रवरासु-भार्यात्वमेव नोत्पद्यते। रोगिण्यादिषु तु भार्यात्वे उत्पन्नेऽपि दृष्ट-विरोधः।

असपिण्डां समानः एकः पिण्डो देहो यस्याः सा सपिण्डा न भवतीति-असपिण्डा ताम्। सपिण्डता च एकशरीरावयवान्वयेन भवति। तं हि-

पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह सापिण्ड्रम् । एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । एवं मातृशरीरावयवान्वयेन मात्रा। तथा मातामहादिभिरपि मातृद्वारेण । तथा मातृस्वसृमातुलादिभिरपि-एकशरीरावयवान्वयात् । तथा पितृव्यपितृष्वस्रादिभिरपि । तथा पत्या-सह पत्न्या एकशरीरारम्भकतया । एवं भ्रातृभार्य्याणामपि परस्पर-मिकशरीरारब्धैः सहैकशरीरारम्भकत्वेन । एवं यत्र यत्र सपिण्डशब्दस्तत्र-तत्र साचात्-परंपरया वा एकशरीरान्वयो वेदितव्यः । यद्येवं मातामहादीनामपि "दशाहं शावमाशौचं सपिण्डेषु विधीयत" इत्यविशेषेण प्राप्नोति ; स्यादेतत् ।

यदि तत्र "प्रत्तनामितरे कुर्य्यु"रित्यादिविशेषवचनं न स्यात् ।

अतश्च यत्र सपिण्डेषु विशेषवचनं नास्ति तत्र दशाहमित्येतद्वचनमवतिष्ठते । अवश्य' चैकशरीरावयवान्वयेन सापिण्ड्यं वर्णनीयम् । 'आत्मा-हि जज्ञे आत्मन" इति श्रुतेः ।

तथा, "प्रजामनुप्रजायसे" इति च । "स एवायं विरूढः प्रत्यक्षेणोपलभ्यत "इत्याद्यापस्तम्बवचनाच्च । तथा गर्भोपनिषदि "एतत् षाट्-कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतः । अस्थिस्नायुमज्जानः पितृतः-त्वङ्मांसरुधिराणि मातृतः" । इति । तत्र तत्रावयवान्वयप्रतिपादनात् । निर्वाप्य सपिण्डान्वयेन तु सापिण्ड्ये मातृसन्ताने भ्रातृपुत्रादिषु च सापिण्ड्यं-न स्यात् । समुदायशक्त्यङ्गीकारेण रूढ़िपरिग्रहे अवयवशक्तिस्तत्र तत्रावगम्यमानापि परित्यक्ता स्यात् । परंपरैकशरीरावयवान्वयेन सापिण्ड्ये यथा नातिप्रसङ्गस्तथा वक्ष्यामः ।

अपिच—असपिण्डामित्यत्रैकशरीरान्वयद्वारेण साचात् परंपरया वा-सापिण्ड्यमुक्तम् । तच्च सर्वत्र सर्वस्य यथा कथंचिदनादौ संसारे भवतीत्यतिप्रसङ्ग इत्यतिप्रसङ्गस्वरूपमत आह विज्ञानेश्वरः,—

"मातृतो मातुः सन्ताने पञ्चमादूर्द्धं पितृतः पितुः सन्ताने सप्तमादूर्द्धं-सापिण्ड्यं निवर्त्तते इति शेषः ।

अतश्चायं सपिण्डशब्दोऽवयवशक्त्या सर्वत्र प्रवर्त्तमानोऽपि निर्मन्थ्य पङ्क-

जादिशब्दवन्नियतविषय एव। तथाच :—पित्रादयः षट् सपिण्डाः, पुत्रादयः-षट् आत्मा च सप्तमः ; सन्तानभेदेऽपि यतः सन्तानभेदस्तमादाय गणयेत्-यावत् सप्तमः ; इति सर्वत्र योजनीयं।

तथाच,—मातरमारभ्य तत्पितृपितामहादिगणनायां पञ्चपुरुषवर्त्तिनी-मातृतः पञ्चमीत्युपचर्य्यते। एवं पितरमारभ्य तत्पित्रादिगणनायां सप्तम-पुरुषसन्तानवर्त्तिनी पितृतः सप्तमीति। तथाच, भगिन्योर्भगिनीभ्रात्रोर्भ्रातृ-पुत्रीपितृव्ययोः। विवाहो द्वादिभूतत्वाच्छाखाभेदोऽवगम्यते। वितृतिरस्यैवं-मातृपितृसापिण्ड्यातिरिक्तावयवशक्त्यङ्गीकरणद्वारेण सापिण्ड्यनिर्णयोऽप्यस्तीत्याह भगिन्योरिति पद्येन। यथा,—भगिन्योः पितृष्वसृमातृष्वस्रोरर्थादुभय-मूलकत्वेनैकः पक्षो विवाहीयसापिण्ड्यनिर्द्धारणे ; तथा भगिनीभ्रात्रोः-स्वभगिनीस्वभ्रात्रोरर्थाद्द्वयोस्तयोरादिभूतत्वेन पक्षो-द्वितीयः। तथा,—तद्भ्रातृपुत्रीपितृव्ययोस्तद्भ्रातृदुहितृखुल्लतातयोरादिभूतत्वेन तृतीयः पक्षः। शाखात्रयमवगणितमेवंरीत्या। यथात्रोदाहरणं ; निरुक्तस्वस्वद्वयसन्तानाभ्यन्तरे-विवाहे कर्त्तुं सतत्रभिप्रेते प्रोक्तभगिनीद्वयस्यादिभूतत्वेन सापिण्ड्यगणनाया-मतीतं भवेच्चेत्-यथासंख्यसापिण्ड्यं, तदोपयमो विधेय इति। एवमन्यपक्ष-द्वयेऽप्यूह्यम्। यद्यपि वशिष्ठेनोक्तं "पञ्चमीं चैव मातृतः पितृतस्तथेति" त्रीन-तीत्य मातृतः पञ्चातीत्य च पितृतः, इति पैठीनसिना; तदप्यर्वाङ्निषेधार्थं-न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः। एतच्च समानजातीये-द्रष्टव्यं। विजातीये तु विशेषः।

यथा शङ्खः,—

"यद्येकजाता वहवः पृथक्क्षेत्राः पृथक्-जनाः।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु॥"

एकस्माद्-ब्राह्मणादेर्जाता एकजाताः। पृथक्क्षेत्राः भिन्नजातीयासु-स्त्रीषु जाताः। पृथक्जनाः समानजातीयासु भिन्नासु स्त्रीषु जाताः ते-एकपिण्डाः सपिण्डाः। किन्तु पृथक्शौचाः पृथक् शौचमशौचप्रकरणे-वक्ष्यामः। पिण्डस्त्वावर्त्तते त्रिषु त्रिपुरुषमेव सापिण्ड्यमिति। पुरुषा एव-

पुरुषाः दशभिः पुरुषैः मातृतः पञ्चभिः पितृतः पञ्चभिर्व्याख्यातं यत्कुलं-तस्मात्। श्रोत्रियाणामधीतवेदानाम्। अध्ययनमुपलक्षणं श्रुताध्ययनसम्पन्नानां। महच्चतत् कुलं च महाकुलं पुत्रपौत्रपशुदासीग्रामादिसमृद्धं तस्मात्कन्या-आहर्त्तव्येति नियम्यते। सञ्चारिणो रोगाः कुष्ठापस्मारप्रभृतयः शुक्रशोणित-द्वारेणानुप्रविशन्तो दोषाः। पुनर्हीनक्रियनिष्पुरुषत्वादयो मनुनोक्ताः। एतैः समन्वितात् श्रीतादपि पूर्वोक्तान्महाकुलादपि नाहर्त्तव्या" इति। मनुयाज्ञवल्क्यीयवचनोक्तानामेवं कन्याविषयकप्रधानविशेषणानां साधारणतः-कुल्लूकभट्टविज्ञानेश्वरकर्त्तृकव्याख्याने मत्युद्धृतेऽपि भारतीयप्रत्येकप्रादेशिक-निबन्धकर्त्तृविवृतिः प्रकाश्यते निम्नतस्तदपेक्षाया सुखबोधार्थं,—यथावीर-मित्रोदये गोत्रप्रवर विचारः—तत्र कश्यपः,—

"आदौ गोत्रविशुद्धिः स्यात्ततः सप्तमपञ्चमम्।
राशिकूटं ततश्चैव त्रेधा सम्बन्धलक्षणम्" ॥

असमानार्षगोत्रजामिति याज्ञवल्क्यस्मरणात्। तस्याश्चादावित्यनेनाव-श्यकत्वमुक्तं। तदभावेऽप्यपत्यस्य चण्डालत्वस्मरणात्,—

तथाच बौधायनः,—

"आरूढपतितापत्यं ब्राह्मण्यां यस्तु शूद्रजः।
सगोत्रोढ़ासुतश्चैव चण्डालास्त्रय ईरिताः" ॥

गोत्रमिति प्रवरस्याप्युपलक्षणं। असमानार्षगोत्रजामिति याज्ञवल्क्य-स्मरणात्। आर्षं च गोत्रं च आर्षगोत्रे समाने आर्षगोत्रे यस्यासौ-समानार्षगोत्रः; न समानगोत्रः असमानगोत्रः; असमानगोत्राज्जाता-असमानगोत्रजा। ततश्च गोत्रप्रवरयोः पृथक्पृथक्कन्यापर्य्युदासे निमित्तं-सिध्यति।

कस्तावत्पर्य्युदास इत्याशङ्कायाम्,—

स निषेधात्मको नञर्थोऽविशेषः। विशेषपदोपादानात्कतिविधस्तर्हि-नञर्थ इति सन्देहे तदुत्तरमापादितं पाणिनिना प्रमाणोपन्यासपूर्वकम्।

यथा ;—

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः" ।

इति वचनानुसारेण सति नञो नानाविधार्थस्य वर्त्तमानत्वेऽपि वक्ष्यमाण-नञर्थद्वयस्यापि शास्त्रोपयोगित्वादेकदैव प्रसज्यप्रतिषेधपर्य्युदासनामकस्य-नञर्थद्वयस्य विवरणमारभ्यतेऽत्र क्रमशः । यथा तत्र निषेधस्य स्वरूपमापादित मर्थसंग्रहे ; "पुरुषस्य निवर्त्तकं वाक्यं निषेधः" । निषेधवाक्यानामनर्थहेतु-क्रियानिवृत्तिजनकत्वेनैव अर्थवत्त्वात् ।

तथाहि,—यथा विधिः प्रवर्त्तनां प्रतिपादयन् स्वप्रवर्त्तकत्वनिर्वाहार्थं-यागादेरिष्टसाधनतामाक्षिपन् पुरुषं तत्र प्रवर्त्तयति । तथा, "न कलञ्जं-भक्षयेदि"त्यादिनिषेधोऽपि निवर्त्तनां प्रतिपादयन् निषेधस्य कलञ्जभक्षणस्य-परानिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्त्तयति" ।

तथा च कलञ्जाधिकरणे,—"सति सम्भवे निषेधः" युक्तिप्रदर्शनसहकारेण-विव्रियते निषेधस्वरूपं पुनरत्र । यथा,—जानन्ति सर्वे यत् ; नास्ति यद्-विषयिका प्राप्तिः, न विद्यते तस्य प्रतिषेधः । अर्थात्—वाक्येनैकवस्तुनः क्रियेत-चेन्निषेधः ; तदा तद्भवेद् यद्रूपं ; तज्ज्ञानमावश्यकं पूर्वतः । तत्र भवे-च्चेत् सम्भवपरो निषेधः । न पिबेन्मद्यमिति विद्यते शास्त्रे । लोके यदि-नाचरेन्मद्यपानं प्रवृत्तिवशतः, तथा मद्यपानात्मिका क्रियैका न भवेद् यदि-प्रचलिता जनसमाजे ; तदा न पिबेन्मद्य-मित्यात्मको निषेधो भवेदुन्मत्त-प्रलापतुल्यः ।

यथा ;—"यदि कोऽपि वदेद् यत्, न शिक्षय वन्ध्यापुत्रमिति", वाक्यमेत-दुन्मत्तप्रलापादन्यत्किं वक्तव्यमस्माभिः । यतोऽसम्भवो वन्ध्यापुत्रः । नास्त्यत-एव क्वापि प्रसक्तिस्तस्य लिखने पठने च । सुतरां कुर्य्यात्कथं तन्निषेधम् । अतो वोद्धुमुचितं यदेतत्, स्थले यस्मिन् प्राप्तं कार्य्यं प्रवृत्तिवशतो निषिध्यते-शास्त्रेण ।

तत्र निषेधः, सोऽपि प्रसज्यप्रतिषेधनामधेयो नञर्थविशेषः,

अर्थात् प्रवृत्तिवशतो लोकस्य प्रसक्तस्य कार्य्यस्य निषेधो वा निवर्त्तनं-प्रसज्यप्रतिषेधशब्दार्थः ।

यथा तल्लक्षणं,—

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र न नञ्" ॥

प्रसज्यप्रतिषेधस्थले विहिते कर्मणि निषेधेन प्रवृत्तिवारणात् विधेरप्राधान्यं-निषेधस्य प्राधान्यं ; इति चण्डीचरणः ।

प्रसज्यप्रतिषेधनामकनञर्थस्य प्रयोगस्थले विशेषज्ञातव्यविषयोऽयमेको यत्-कोऽपि मानवो यदि नाङ्गीकुर्य्यान्निषेधमेतं अर्थात् लोभेन वा मोहेन प्रति-षिद्धक्रियामनुतिष्ठेदेतां, तदा तस्य निषेधाङ्गीकरणात्मकनिदानेनानेन दुःखं-भोक्ष्यति भाविसमये, इत्येतावन्मात्रम् । अथवा पिवेन्मद्यं यः, न भवेत्तत्फला-त्मिका मत्तता तस्येति, न, अर्थात् मिथ्येत्तत्पानं, नाङ्गीक्रियते शास्त्रनिषेध इति, न निवारयेत्सम्मत्ततां तच्छास्त्रं । भवेदयमेव प्रसज्यप्रतिषेधः । विद्यते प्रमाणमत्र मलमासतत्त्वे, "निषेधदर्शनाच्च वैगुण्येऽपि फलसिद्धिरवगम्यते" ।

यथा जैमिनिः,—

"अर्थप्राप्तवदिति चेन्न तुल्यहेतुत्वादुभयं शब्दलक्षणं । उभयं प्रवृत्ति-निषेधरूपं शब्दलक्षणं शब्दस्य प्रमाणमित्यर्थः" ।

गतः प्रसज्यप्रतिषेध विचारः । संप्रत्युपक्रान्तः पर्य्युदासविवेकः । पर्य्यु-दासनिषेधस्य न विद्यते स्वाधीनता कापि । साकं विधिवाक्येनायमेव सम्मील्य विशेषयति तमेव । न लभ्यते लोके पर्य्युदासोदाहरणं । यत्कार्य्यं प्राप्तं शास्त्रेण ; अर्थाच्छास्त्रीयविधिमन्तरेण कार्य्यं यत्-कर्त्तव्यमित्यवगन्तुं न विद्यते किमप्यु-पायान्तरं । यदि पुनस्तत्कार्य्यं स्थले कस्मिन् निषेधयेच्छास्त्रं । तदा तन्निषेधस्य-पर्य्युदासनामकत्वं । यथा तल्लक्षणं मलमासतत्त्वे,—

"प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ्" ॥

"निषेधो विधातुं न शक्यते; सामान्यशास्त्रोपजीवी स हि निषेधविधिर्वक्तव्यः"। इति शूलपाणिः। अत्र श्रीकृष्णतर्कालङ्कारः,—

"रात्रौ श्राद्धप्राप्तिं विना श्राद्धनिषेधो न तत्र विधातुं शक्यते। प्रसक्तं हि-प्रतिषिध्यत-इति न्यायादित्यर्थः।" उदाहरणेनैकेन विशद्यते सः, "विद्यते-धर्मशास्त्रे तथाऽमावास्यायां कुर्य्यात् पार्वणश्राद्धं पितृपितामहादिभ्य" इति।

प्रमाणमाह याज्ञवल्क्यः श्राद्धविवेके—

"अमावस्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसंक्रमः"॥

पार्वणश्राद्धानुष्ठानेन यत्तृप्तिलाभो भवेत् परलोके पितृगणानां तमस्मान्-बोधयति धर्मशास्त्रं।

शास्त्रमन्तरा नास्त्येतादृक् कोऽप्युपायः, यद्द्वारेण बोद्धव्यमस्माभिः-पितृपुरुषतृप्तिसाधकममावास्याश्राद्धमिति। श्राद्धं कुर्य्यादमावास्यायामित्येतद्-विधिवाक्ये सामान्यतोऽमावास्याशब्दस्य विद्यमानतया क्षणे सर्वस्मिन्नमाव-स्यायाः अर्थाद्दिवसे वा रात्रौ यदा सम्बन्धो भवेदमावास्यायाः; समये तस्मिन्-भवेत् श्राद्धानुष्ठानेन पितृतृप्तिरिति बुध्यते तद्वाक्यतः। तदावतिष्ठतेऽमावा-स्यान्वितरात्रिदिवसात्मकसमयः श्राद्धविहितकाल इति। वदत्यतः परं यत्-पुनः शास्त्रं, "रात्रौ न कुर्य्याच्छ्राद्धं"।

प्रमाणमत्राह श्राद्धविवेके शातातपः,—

"रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात्।
सूर्य्योदयमुहूर्त्ते च सन्ध्ययोरुभयोस्तथा॥"

नञमेतं प्रसज्यप्रतिषेधनामकं न शक्नुयाद्वक्तुं। यतोऽयं मद्यपाननिषेधवत्-प्रवृत्तिवशतो न निषेधयति किमपि वस्तु। कारणमिदमत्र। शास्त्रीयप्रमाण-मन्तरेण रात्रौ श्राद्धानुष्ठानं नावबुध्यतेऽस्माभिः केनैवोपायेनान्येन।

रजन्यां श्राद्धानुष्ठानं प्रतिपादयति शास्त्रं। पुनः शास्त्रमिदं निषेधयति-श्राद्धानुष्ठानं रात्रावेव। कथमेतद्—वा सम्भवपरम्? सुतरामेतन्निषेधस्य-सम्पादयितुं सार्थक्यं वदन्ति स्म शास्त्रकर्त्तारो नञोऽस्य रात्रौ श्राद्धाननुष्ठाना-

त्मको न भवत्यर्थः; किन्तु रात्रिभिन्न इति। विनैतं नास्ति कोऽप्यर्थः। रात्रिभिन्न इतीतत्‌च्छब्दस्य च कुर्य्याच्छ्राद्ध-ममावस्यायामित्येतद्विधिवाक्येन सार्द्ध-भवेदन्वयः, अर्थाद्रात्रिभिन्नायाममावस्यायां-कुर्य्याच्छ्राद्धमयमेको वाक्यार्थः। किन्तु "श्राद्धं कुर्य्यादमावास्यायां" तथा "न कुर्य्याद्रात्रौ श्राद्धं" इतीतस्य-वाक्यद्वयस्य सम्मेलनेन प्रतिपन्नोऽयमेवार्थः। तदायमेवावतिष्ठते;-श्राद्धविधानसमयो रात्रिव्यतिरिक्तामावास्यान्वितकालः। समर्थितोऽयमर्थो-मलमासतत्त्वीय-विचारोल्लेखेनात्र। एवमत्र तत्तद्‌विधिप्राप्तश्राद्धकरणमनूद्य-रात्रीतरत्वमात्रं विधीयत" इति।

तथाच, श्राद्धविवेकीयविवेकोपन्यासेन। यथा,—

"तथाहि अमावास्याशास्त्रस्य रात्रिमात्रपरत्वं दिवारात्रिपरत्वं वोपजीव्य-निषेधविधौ रात्रिज्ञानस्य बाध एव"। एतदेव "श्राद्धं कुर्य्यादमावास्यायां" इत्यनेनैकेन विधिवाक्येनासीत्‌प्रतिपादितम्। "रात्रौ न कुर्य्याच्छ्राद्धं" वाक्येऽस्मिन् नञः श्राद्धकरणरूपक्रियया सार्द्धमापाततः सति प्रतीयमाने-सम्बन्धेऽपि वाक्यमेतद्‌वस्तुतो न बोधयत्यर्थमेवंप्रकारम्।

एतदेव, "रात्रिव्यतिरिक्त"मित्येतावन्मात्रं बोधयति।

अन्यच्च, "रात्रिव्यतिरिक्त"मेतद्‌विशेषणं। "कुर्य्याच्छ्राद्धममावास्याया"-मितीतद्‌विधिप्राप्तामावास्यात्मकश्राद्धकालेन समं भूत्वान्वितं विधेयार्थं-विशेषयति। अतो नञर्थोऽयं विधिवाक्यान्तर्गतस्य कस्याप्येकस्य विशेषण-मिति बोध्यम्।

फलमेतदुपस्थितं यत्, प्रसज्यप्रतिषेधस्थले सत्यपि प्रतिषेधेऽनङ्गीकृते-भवेदेव प्रत्यवायभागी; किन्तु प्रतिषिद्धक्रियासिद्ध्यर्थं न घटते कोऽपि-व्याघातः।

प्रमाणानि यथा,—

मलमासतत्त्वे—

"प्रतिषेधे न तु कालान्तरीयानिष्टहेतुत्वं ज्ञाप्यते"।

तथा, "निषेधदर्शनाच्च वैगुण्येऽपि फलसिद्धिरवगम्यते" इति।

पर्य्युदासस्थले निश्चितमेतद्‌विपरीतः; सत्यप्यस्वीकृते पर्य्युदासे-

निषेधेन भवेत् कोऽपि प्रत्यवायः। सत्यं, तदा निषिद्धकार्य्यमिदं न भवतिसिद्धम्। यदि कोऽप्याग्रहतोऽज्ञानतो वा कुर्य्याच्छ्राद्धं रात्रावेव, तदा तेन-श्राद्धकर्त्तुरस्य न सम्भवेत् कोऽपि प्रत्यवायः। किन्तु तदनुष्ठितश्राद्धं अर्थात्-पितृपुरुषगणस्य तृप्त्याधायकं कार्य्यं न भवेत् सिद्धम्। कथं न तद्भवेत्-सिद्धम्? प्रश्नस्योत्तरमेतदेव। शास्त्रविहितं कार्य्यं कुर्य्यात् विहितावसरे-यतः कार्य्यानुष्ठानमिदं कदा भवेत् सिद्धम्? शास्त्रमन्तराऽवगन्तुमेतदन्यो-नास्त्युपायः। तच्छास्त्रं यदा करोति रात्रिं पर्य्युदस्ताम्। अर्थाच्छ्राद्ध-कालात्मकत्वेन न परिगणिता रात्रिस्तेन; तदा केनापि प्रमाणेन वक्तुं-यच्छक्नुयुर्भवन्तः रात्रौ कृतं सत्यपि श्राद्धे भवेत् सिद्धमेतत्? अथवा-"मद्यं न पिबे"दित्यात्मको यथा विद्यते स्फुटं निषेधः। तथा श्राद्धं-नानुतिष्ठेद्रात्रा"वित्यात्मकं नास्ति किमपि निषेधवाक्यम्। "न कुर्य्याद्रात्रौ-श्राद्ध"मेवंभूतं यदस्ति वाक्यमेकं, पूर्वं प्रदर्शितस्तदर्थः। तस्मिन्नापाततो-निषेधात्मकत्वेन सत्यपि प्रतीयमाने प्रकृततः—

सोऽयं न निषेधात्मकः, किन्त्वेतदमावास्यायां कुर्य्याच्छ्राद्धमित्यात्मक-विधिवाक्यस्य विशेषणमात्रम्। साकं युक्त्या तत्कथनमासीत्प्रमाणितं पूर्वतः। यदि कोऽपि कुर्य्याच्छ्राद्धं रात्रौ; तदा तत्कर्तृकश्राद्धं नासीत्सिद्धमिति-तावन्मात्रं भवति सिद्धं तदा। निषेधस्यास्य लङ्घने मद्यपानस्थल इव न-केनापि प्रत्यवायेन भवेत् परिग्रस्तः। यतो निषेधोऽयं न निषेधरूपः। पर्य्युदासमात्रमेवायम्। इति नञर्थद्वयविचारः।

प्रकृतोपयोगितया प्रसङ्गतो दूरगमने सत्यपि संभूतेऽधुना प्रकृतमनु-सरामो वयं पूर्वापरसंगतिं कर्त्तुम्।

तथाच गौतमः,—

"असमानप्रवरैर्विवाह"इति प्रवरमात्रस्यैव पर्य्युदासनिमित्ततां प्रकटयति। ततश्च गोत्रभेदेऽपि प्रवरैक्ये न विवाहः।

तद्यथा,—

यास्कवाधूलमौनमौकशर्कराक्षिशार्ष्टिसावर्णिशालङ्कायनदैवतरायननां-गोत्राणां भेदेऽपि भार्गववैतहव्यसवेतसेतिप्रवरैक्ये।

तथा प्रवरभेदेऽपि गोत्रैक्ये ;

तद्‌यथा,—

तित्तिरिकपिभूमिस्वन्दितखण्डितानां गोत्राणामाङ्गिरससैन्यगार्ग्येति ; अङ्गिरास्तित्तिरि: कपिभूमिरिति चेति गोत्रैक्येऽपि वैकल्पिकप्रवरभेदे । यत्तु ; हरिहरकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति, मान्धत्रम्बरीषयौवनश्वेति वैकल्पिकप्रवरभेदादसमानार्षत्वेन विवाहप्रसक्तौ गोत्रैक्येनतन्निषेध इत्याधुनिकैरुदाहृतम् । तन्न सुन्दरं । आङ्गिरसमान्धात्रोर्विकल्पेनभेदेऽपि अम्बरीषयौवनाश्वयोर्द्वयोरभेदेन विवाहाप्रसक्त्या प्रकृतोदाहरणाभावात् ।

तथाच, प्रवरनिर्णयकाराः स्मरन्ति,—

"पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत्" ॥ इति ।

यत्तु, समानं आर्षं यस्य तत् समानार्षं, समानार्षं च तत् गोत्रं चसमानार्षगोत्रं समानार्षगोत्रे जाता समानार्षगोत्रजा ; न समानार्षगोत्रजाअसमानार्षगोत्रजा इति प्राचां समासकरणं । तन्न सुन्दरं ; विशिष्टनिषेधेगोत्रैक्येऽपि प्रवरभेदे विवाहप्रसङ्गात् । यथा, तित्तिरिकपिभूम्याद्युक्तोदाहरणेन चेष्टापत्तिः । "न सगोत्राय दुहितरं प्रयच्छेदिति" गौतमेन गोत्रमात्रस्यैव पृथक्‌निषेधात् । तत्र गोत्रलक्षणं वीरमित्रोदयस्य संस्कारप्रकाशे,-तत्र गोत्रलक्षणं किं तावदित्याकांक्षायांमुच्यते,—गोत्रलक्षणं, "अगस्त्याष्टमसप्तस्वन्यतमापत्यं साक्षात्परंपराजातं यत् तत् गोत्रमुच्यते ।

तथाच स्मृतिः—

"जमदग्निर्भरद्वाजो विश्वामित्रोऽत्रिगौतमौ ।
वशिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः" ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते" ॥ इति ।

गोत्रकारिणो गोत्रप्रवर्त्तका इत्यर्थः । यत्प्रवर्त्तकतैषां तानि कानिगोत्राणीत्याह ;—एतेषां यान्यपत्यानीति, अत्र गोत्रभूतमपत्यमनन्तरमपि ; न तु पाणिनेरिव पारिभाषिकं पौत्रप्रभृत्येव । तथात्वे प्रमाणाभावात् । न च-

कृत्रिमाकृत्रिमन्यायस्यात्र प्रसङ्गोऽस्ति। कृत्रिमपरिभाषायास्तथाविधाया-बौधायनाश्वलायनादीनां केषांचिददर्शनात्। सत्त्वे वा पाणिनेरिवापत्याधिका-राभवेन तस्य नियमेनाग्रहणात्। किंच व्याकरणेऽप्यपत्याधिकारस्यासत्त्वे-लौकिकगोत्रस्यापत्यमात्रस्य ग्रहणमेव युक्तं। अपत्याधिकारादन्यत्र लौकिक-स्यैव गोत्रस्य ग्रहणमिति भाष्यवैयटपदमञ्जर्यादिषु स्थितत्वात्। दृश्यतेऽपि-तत्क्वचित्। अत्र गोत्रभूता एव केचित् प्रवरास्ते च ऋष्यार्षेयशब्दवाच्या इति-ऋषिभूतं सर्वं तदिति न भ्रमितव्यम्। किन्तु वंशपरंपराप्रसिद्धमेव। यत्र-सूत्रादिषु गोत्रपरिगणनं तदपि प्रसिद्धिमूलकमेव। एतदभिप्रेत्य निबन्धेषु -गोत्रं ऋषिवंशपरंपरेति व्याख्यातं।

अत्र केचिदेवं व्याचक्षते। गोत्रशब्दः सम्बन्धिशब्द इति; किं केषां केषां-गोत्रमिति जिज्ञासायां अगस्त्याष्टमसप्तर्षीणां यान्यपत्यानि तेषां गोत्रमेते-सप्त ऋषय इति। एवं च भरद्वाजादिषु शिष्टानां गोत्रव्यवहारोऽप्युपपद्यते; भरद्वाजगोत्रा वयं वशिष्ठगोत्रा वयमित्यादि, तत्र, सन्दर्भविरोधात्। न हि-घट इति वक्तव्ये अनघट इति विद्वांसो वदन्ति। तेषां च गोत्रत्वे गोत्राण्य-ष्टसंख्यकानि स्युः। ततश्च—

"गोत्राणां च सहस्राणि प्रयुतान्यर्बुदानि च"। इति सूत्रविरोधः। कथं-विश्वामित्रादिषु गोत्रव्यवहारः। आरोपात्। सर्वेषां तेषां गणानां परस्परं-विवाहो नास्तीत्यवान्तर—ऋषिष्वेव गोत्रत्वविवक्षायां प्रयोजनाभावात्। यत्र-तु प्रयोजनमस्ति; ऋषिष्वेव गोत्रविवक्षा, यथा जमदग्निव्यतिरिक्तभृगुगणेषु-केवलाङ्गिरोगणेषु च केषुचित्। अन्यथा गोत्रप्रवरसाम्याभावात् विवाहः-प्रसज्येत। तस्मादगस्त्याष्टमसप्तर्ष्यपत्यमेव गोत्रं।

अत्र गोत्राणां समानत्वं क्वचिदेकत्वं क्वचित् सादृश्यं। तत्राद्यं एकैक-गणान्तःपातिनां गोत्राणां। यथा,—मूलभूतस्य वत्सादेः प्रसिद्धस्य गोत्र-स्यैकत्वं। गणावान्तर-ऋषीणामपि यत्र गोत्रत्वं तत्रापि तेषां स्वपरंपरां-प्रत्येकत्वमप्रतिहतमेव।

द्वितीयं तु गोत्ररूपाणामृषीणां भिन्नभिन्नगणनिविष्टानां तन्मूलभूता-नामवान्तराणां वा। तदप्यगस्त्याष्टमसप्तर्ष्यन्यतमैक-ऋषेरपत्यत्वरूपयानुवृत्त्या।

तदनुवृत्तिज्ञानं च बहुधाप्रवरान्तर्भावादेव । सूत्रादिगतानुक्रमणेषु तु-क्वचित्तथाविधपूर्वापरीभूतगोत्रपाठान्तर्भावात् ।

तथाचोक्तं ;—

"व्रियमाणतया वापि सत्तया वानुवर्त्तनं ।
एकस्य दृश्यते यत्र तद्गोत्रं कस्य कथ्यते ॥"

इति, तद्गोत्रं तस्य ऋषेरपत्यं कथ्यते । इति । तेन रूपेण तेषां गोत्राणां-समानत्वमित्यर्थः । सत्तयेति वदता व्रियमाणतयेत्यस्य बौधायनोक्तैतन्मूलभूते-एक एव ऋषिरिति लक्षणे प्रवरेष्वित्यस्य चोपलक्षणत्वेन यथाकथंचिदेकस्या-नुवर्त्तनं सूचितं भवति । उत्पाद्योत्पादकभावः सत्ता । भूसत्तायामिति-स्मृतेः । क्वचित्तु स्वतयेति पाठः । तत्रापि यमधिकृत्य ये पठितास्ते तस्य-स्वे आत्मीया इत्यक्षरानुसारेण तत्रैव पर्य्यवस्यति । एतदुक्तं भवति । यथा, पारिभाषिकं गोत्रं ; तथा समानगोत्रत्वमपि । इतरथा तस्यानिर्वचनात् ।

किञ्च,—

"एक एव ऋषिर्यावत्-प्रवरेष्वनुवर्त्तते" ।

तावत् समानगोत्रत्वमित्युक्ते एक एव अगस्त्याष्टमसप्तर्ष्यन्यतम एव ति-सृभिः कोटिसंख्याभिः संख्यातानां वक्ष्यमाणानां गोत्राणां मध्ये यावत्संख्य-कानां गोत्राणां एकद्वित्रिपञ्चसंख्यान्यतमसंख्याकेषु प्रवरेष्वनुवर्त्तते तावतां-गोत्राणां तत्समानगोत्रत्वं ।

एवं गोत्रस्वरूपं समानगोत्रत्वञ्च निरूपितं संक्षेपतः ।

इदानीं प्रवरस्वरूपं तत्समानत्वञ्च निरूप्यते । तत्र प्रवरान् व्याख्यास्यामः । समानप्रवराः ; त्र्यार्षेयः प्रवरः ; पञ्चार्षेयः प्रवरः इत्यादिषु प्रव्रियत-इति कर्मव्युत्पन्नः । प्रवरणं प्रवर इति भावव्युत्पन्न इति भार्गवच्यावनाप्नवानौ-र्वजामदग्न्येति ।

जमदग्निवदूर्ववदप्नवानवच्यवनवद्भृगुवदिति तद्धितवत्प्रत्ययान्तप्रयोगेणाग्नेः-प्रकर्षेण वरणानि, प्रार्थनापर्य्यायः प्रवरशब्दो भावव्युत्पन्न इति प्रवर-मञ्जरीकारः । ननु गोत्रत्वेन परिगणिताः केचिदृषय एव गोत्रसम्बन्धिनः-

पितृपुत्रपौत्रक्रमेणावस्थिताः ; प्रवरास्तथैव दर्शपूर्णमासाङ्गभूतहोत्रध्वर्य्यादिवरणविधानाल्लिङ्गादवसीयते।

तथा मत्स्यपुराणेऽपि –

"भृगुः पुलोम्नश्च सुतां दिव्यां भार्य्यामविन्दत।
यस्यामस्मात्ततोऽपत्यभूता द्वादशदेवताः॥
पौलश्चाजनयद्विप्रान् देवानां तु कनीयसः।
च्यवनं तु महाभागमप्नवानं तथाप्यसौ।
अप्नवानात्मजश्चैव जमदग्निस्तदात्मजः" ॥ इति।

तदपत्यभूता ऋषय इत्युक्तं। तद्गोत्रप्रवरान् वक्ष्ये इत्युपक्रम्य च्यवनादीनुक्त्वा इत्येते प्रवरा मता इत्युपसंहृतं।

संग्रहेऽप्युक्तं,—

"पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत्" ॥

इदञ्च, जमदग्निगौतमभरद्वाजरूपेष्वपि भृग्वङ्गिरोगणेषु समानप्रवरत्वेसमानं। अतएव तेष्वविवाहप्रयोजकत्वेन समानप्रवरत्वमेतद्विशेषमहितमेवप्रवरमञ्जरीकृता अभिहितमिति तत्रैवायं विशेषो यद्यपि वक्तुं युक्तः ; तथापितेष्वेकमात्रप्रवरसाम्येऽपि सर्वेषामसाम्येऽपि वा सगोत्रत्वादेवैतद्गोत्रवदविवाहसम्भवान्नैतस्य विधानस्य तत्र व्यतिरेकतः किञ्चित् प्रयोजनमस्तीति तद्भिन्नभृग्वङ्गिरोगणविषयतया व्याख्यातं।

यत्र विशेषविधिर्नास्ति ; तत्रैकप्रवरसाम्येऽपि समानप्रवरसाम्यत्वं ; यथा,—भृग्वङ्गिरोगणभिन्नेषु ; शेषेष्वेकोऽपि वारयेदिति वचनात्। एवञ्चकेवलभृग्वङ्गिरसां गोत्रत्वाभावादसंकीर्णः प्रवरसाम्यादेवाविवाहः।

नन्वेतेषां गोत्रत्वाभावे हरितमुद्गलादीनां सकलार्य्यावर्त्तशिष्टादृतानाविगीतगोत्रत्वस्मृतिः कथमपलपितुं शक्या कथं वा गोत्रस्य प्रवरोपपत्तिः। इयोर्मुद्गलयोर्हरितयोरेव वा विवाहे सगोत्रविवाहनिमित्तं प्रायश्चित्तञ्च कथं स्यात्।

कन्यादाने च हरितमुद्गलादीनां वरत्वे हरितगोत्रायेत्याद्यभिलापः शिष्टैश्च-कथंकारं क्रियेतेति चेत् । यदि बहुतरशिष्टानां निबन्धकृतां वाचाभिनिवेश-स्तदैवमुपपाद्यं ।

तथाहि,—

सत्याषाढ़सूत्रे परिभाषायां प्रवरान् व्याख्यास्याम इत्युक्त्वा तैर्गोत्राणीति-वचनादिति स्वरूपतः समानतया च गोत्राणि प्रवराणां हेतुत्वोक्त्या प्रवरत्व-मेव गोत्रलक्षणमुक्तं भवति । ततश्च यमेवैकमधिकृत्य प्रवराम्नानं सोऽधि-कृतो गोत्रं । तस्यैव चाधिकृतस्य येषु स्वस्वगणान्तर्गतेषु अनुवृत्त्याख्यं साम्यं-ते सगोत्रा इत्युक्तं भवति । तथाच, हरितादिषु गोत्रव्यवहारः समञ्जसो-भवति । अतोऽन्यत्र भृग्वङ्गिरसां गणादिति पर्य्युदासोऽप्युपपन्न इत्याहुः ।

अपरञ्च,—

"अत्रेरेव परं वंशं तव वक्ष्यामि भारत ! ।
अत्रेः सोमः सुतः श्रीमान् तस्य वंशोद्भवो नृपः ॥
विश्वामित्रः सुतपसा ब्राह्मण्यं समवाप्तवान् ।
तस्य वंशमहं वक्ष्ये तन्मे निगदतः शृणु" ॥ इति ।

मत्स्यपुराणे विश्वामित्रस्यात्रिवंशत्वाभिधानात् विश्वामित्रप्रवरेष्वत्रेः-सत्तयानुवृत्तेर्विश्वामित्राणामत्रिभिरप्यविवाहः स्यात् ।

किञ्च, भरद्वाजस्य पुत्रो भवमन्युस्तस्य महावीर्य्यनरगर्भाद्याः पुत्राः । तत्र महावीर्य्यादुरुक्षयः, उरुक्षयात् कपिप्रभृतयः । तथा गर्भात्सिनिः सिनेः सैन्यः सैन्याद्गर्गाद्याः । तत्र यथा,—

भरद्वाजस्य कपिप्रवरेषु सत्तयाऽनुवृत्तिस्तथा संकृतिप्रवरेष्वपि तस्य सत्ता-सम्भवात् भारद्वाजानां संकृतिभिरपि विवाहो न स्यात् ।

अपिच, सत्तयाऽनुवृत्तेरविवाहनिमित्तत्वे प्रवरविकल्पव्यवस्था न स्यात् । सत्तयानुवृत्त्या प्रवराणां सर्व्वत्र साम्यात् विकल्पस्यैवाभावात् । यदि तु व्रिय-माणतयाऽनुवृत्त्या विकल्पव्यवस्थोच्यते तर्हि तादृश्या एवानुवृत्तेरविवाह-निमित्तत्वं वक्तुमुचितम् । अन्यथाऽतिप्रसङ्गस्य दुर्वारतापत्तेः ।

अन्यच्च, भरद्वाजादीनामनुवृत्तिर्न सप्तर्षित्वेन प्रमाणाभावात् ; किन्तु-प्रवरत्वेनैव वाच्या ।

तथा चोक्तम्,—

"एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते ।
तावत्समानगोत्रत्वमिति" ॥

तावत्समानगोत्रत्वमिति । तत्राच व्रियमाणतयैव प्रवराणामविवाह-निमित्तत्वं न सत्तया । अन्यथा त्र्यार्षेयसन्निपाते पञ्चार्षेयाणामविवाह इति नियमो न स्यात् । सत्तयाऽनुवृत्त्या प्रवराणां सर्वत्र साम्यात् । तथाच-सगोत्रत्वेऽपि व्रियमाणतयैवानुवृत्तिरङ्गीकार्य्येति । अथ यस्मिन् वंशे य-उत्पन्नस्तस्य तेन सहाविवाह इति, तद्वंशोत्पन्नत्वमेवाविवाहप्रयोजकं, तर्हि भरद्वाजोत्पन्नत्वात् सङ्कृतीनामपि भरद्वाजैर्विवाहो न स्यात् । तथाङ्गि-रसो "बृहस्पतिस्तस्माद्भरद्वाज"—इति । अङ्गिरोवंश्यैर्गौतमादिभिरपि भरद्वा-जानां विवाहो न स्यात् । विश्वामित्राणामत्रिभिरपि विवाहो न स्यात् । किमपरमाङ्गिरसानां सर्वेषां भार्गवाणाञ्च सर्वेषां परस्परमविवाहः स्यात् । तस्मात् सत्तयाऽनुवृत्तिरविवाहे न निमित्तमिति ।

अत्र वदन्तिः,—

"भरद्वाजाश्च कपयो गर्गा रौक्षायणा इति ।
चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वियुर्मिथः" ॥

तथा,—

"भरद्वाजश्चकपयो गर्गा रौक्षायणा द्विजाः ।
पञ्चैते हि भरद्वाजा गोत्रैक्यान्नान्वियुर्मिथः" ॥

तथा,—

"कपिगर्गभरद्वाजा मिथो रौक्षायणा द्विजाः ।
नोद्वहेयुः सगोत्रत्वात् प्रवरैक्याच्च न क्वचित्" ॥

एवमादीनि स्मृत्यर्थसारकारादीनामतिप्रामाणिकशिष्टपरिगृहीतानां-

वचनानि कपिभरद्वाजयोर्विवाहनिषेधबोधकानि सन्तीति तयोरेव परस्परमविवाह इति निर्णीयते । सङ्कृत्यादिभिस्तथा निषेधाभावाद्-भवति ।

न चास्मादेव निषेधबलात्तयोरविवाहे सिद्धे सत्तयाऽनुवृत्तिकथनमभियुक्तानां व्यर्थं स्यात् । नानेन वाक्येन निषेधः कपिभरद्वाजत्वेनोच्यते । किन्तु सगोत्रत्वेन । तस्य च व्रियमाणतयाऽनुप्रवेशाभावेनासम्भवान्निषेधोऽनर्थकः स्यात् । अतस्तदन्यथानुपपत्त्या तद्धेतुभूतं सगोत्रत्वेऽपि परमशिष्टैर्यथाव्रियमाणतयाऽनुवृत्तिरनपभ्रष्टस्मरणपरंपरामूलककल्पसूत्रनिबद्धैव सगोत्रत्वनिमित्तमङ्गीक्रियते ।

तथा, सत्तयानुवृत्तिरपि तादृश्येव तथेति विज्ञायत इति नात्यतिप्रसङ्गः । अस्ति च भरद्वाजस्य कपिषु तादृशी सा । भरद्वाजानां सर्वेषामविवाह इति । बौधायनसूत्रमप्येतदभिप्रायमेव । अपिच प्रवरमञ्जर्यादौ भृगुगणाङ्गिरोगणौ महागणाविति निरूपितम् । तत्र भृगवो द्विविधाः जामदग्न्या अजामदग्न्याश्च । तत्र जामदग्न्येषु वत्सविदौ द्वौ गणौ । द्वितीये तु-पञ्चगणाः । ते च आर्ष्टिषेणा यस्काः मित्रयुवो वैन्याः शुनका इति । एत-एव केवलभृगव इति व्यवह्रियन्ते । तत्रास्मिन् गणसप्तके पञ्चार्षेयं गणत्रयं, ततस्त्र्यार्षेयं गणत्रयं, तत एक-एकार्षेयः । तत्र जामदग्न्यादि-श्रीवत्सपर्यन्ता वत्साः । तत्र ये जामदग्न्या वत्सास्तेषां पञ्चार्षेयः प्रवरो भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होता, जमदग्निवदूर्ववदप्नवानवत्च्यवनवद्भृगुवदित्यध्वर्युरिति । लौगाक्ष्यापस्तम्बाश्वलायनबौधायनानुसारिणां भृगुवत्च्यवनवदप्नवानवदूर्ववज्जमदग्निवदित्यध्वर्युरिति । कात्यायनानुसारिणां भार्गवौर्वजामदग्न्येति त्रार्षेयोऽपि क्वचित् । अत्र जामदग्न्यस्य सप्तर्षेः प्रवरेष्वनुवृत्त्या परस्परं सगोत्रत्वाज्जामदग्न्यैस्तथोत्तरैः परस्परं स्वे स्वे गणे न विवाहःसमानर्षिबहुत्वात् । अजामदग्न्यानां वत्सानां त्रार्षेय एव भार्गवच्यावनाप्नवानेति ।

शैलावटादयो विंशत्यो विदाः । तेषां भार्गवच्यावनाप्नवानौर्ववैदेतिहोतुः पञ्चप्रवरा भवन्तीति बौधायनाश्वलायनौ । विदवदूर्ववदप्नवानवच्यावनवद्भृगुवदित्यध्वर्युः । भार्गवौर्वजामदग्न्येति त्रार्षेयोऽपि क्वचित् ।

द्विविधा अप्येते विदाजामदग्न्या एव। पञ्चार्षेयेष्वपि और्वशब्दसमन्वयाद्-जमदग्नेः सत्तयानुवृत्तिप्रतीतेस्तस्य जामदग्नेऽप्येव दृष्टत्वात्। तथा चौर्व-जामदग्न्यशब्दौ जामदग्न्यत्वप्रयुक्ताविव्याश्वलायनसूत्रवृत्तिकारेणोक्तम्।

अथाजामदग्न्याः,—नैरथ्याद्यधिताप्यन्तप्रभृतयः आर्ष्टिषेणाः। तेषां-पञ्चार्षेयः प्रवरः भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति होता; अनूपवदार्ष्टिषेण-वदप्नवानवच्यावनवद्भृगुवदित्यध्वर्युः। भार्गवार्ष्टिषेणानूपेति त्र्यार्षेयोऽपि-क्वचित्। वत्सविदार्ष्टिषेणानां परस्परमविवाहः। कुतः पञ्चार्षेयाणाम्। भार्गवच्यवनाप्नवानेति त्र्यार्षेयसाम्यात्। त्र्यार्षेयाणां द्व्यार्षेयसाम्यात्। वत्सविदयोर्जामदग्न्यत्वेन सगोत्रत्वात् पञ्चप्रवरे त्रिप्रवरसाम्येन च न विवाहः। तत्रागस्त्याष्टमसप्तर्षिर्जमदग्नेर्वत्सेषु त्रियमाणतयाऽनुवृत्तेर्जमदग्निमुपक्रम्य विदा-नामप्युक्तत्वात्सत्तया तस्यैवानुवृत्तेस्तेषां सगोत्रत्वम्। मौनादयो यस्कास्त्रि-प्रवराः। भार्गववैतहव्यसावेतसेति होता, सवेतसवद्वीतहव्यवद्भृगुवदित्य-ध्वर्युः। यस्कादिगणानामुत्तरैर्मित्रयुवादिभिः पूर्वैर्वत्सादिगणैश्च विवाहः-असगोत्रत्वात्। त्रियमाणतया सत्तया चैकस्यानुप्रवेशाभावात्। न च भार्गवैक-प्रवरसाम्यादविवाहः।

## "पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयाः"।

भृग्वङ्गिरोगणेष्वेवमिति नियमाद्द्वितीयप्रवरसाम्याभावेन समानार्षत्वा-भावात्। परं तु तेषां सर्वप्रवरसाम्यात्स्वगणे एव परस्परमविवाहः। स्वगणान्तःपातिनां हि यस्कमौनमूकवाधूलादीनां गोत्राणां भार्गववैतहव्य-सावेतसेतिप्रवरैक्यमिति स्पष्टमेव।

रौक्षायनादयो मित्रयुवाः। तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव-वाध्र्यश्वदैवोदासेति होता; दिवोदासवद्वाध्र्यश्ववद्भृगुवदित्यध्वर्युः। दिवो-दासा एते इत्यपि केचित्। एत एव प्रवराः। वाध्र्यश्वेत्येकार्षेयो वा। एतेषां-परस्परमविवाहः समानर्षिबहुत्वात्। पूर्वोक्तैश्च विवाहः सगोत्रत्वाभावात्। एवमुत्तरत्र भृगुगणसमाप्तिपर्यन्तं ज्ञेयम्। वैन्याः पार्थाः वाष्कलाः श्यैता एते-वैन्याः। ते त्रिप्रवराः। भार्गववैन्यपार्थेति होता, पृथुवद्वेनवद्भृगुवदित्यध्वर्युः।

शुनकाः, गार्त्समदाः, यज्ञपयः, सौगन्धयः, खार्दमायनाः, गार्भायणा-इति क्वचित् क्वचिदाङ्गायना इत्यपि मत्स्यगन्धाः प्रत्यूषाः कार्दमायना-श्चैषाः श्रौष्याः शक्त्यायना राजवन्धक्या एते शुनकाः। तेषामेकः प्रवरः। शौनकेति होता, शुनकवदित्यध्वर्य्युः। गात्समदेति होता, गृत्समदवदित्य-ध्वर्य्युरिति वा। द्विप्रवरो वा। भार्गवगार्त्समदेति होता, भृगुवद्-गृत्स-मदवदित्यध्वर्य्युः। त्रिप्रवरो वा। भार्गवशौनकगात्समदेति होता, भृगु-वच्छुनकवद् गृत्समदवदित्यध्वर्य्युः। इत्यादि"। विशेषविवरणमेतस्य वीरमित्रो-दयादौ द्रष्टव्यम्।

अथ क्रमप्राप्तं सापिण्ड्यं निरूप्यतेऽत्र :—

यथा, वीरमित्रोदये,—

तत्र एकपिण्डान्वयनिमित्तको विवाहादिप्रतिबन्धकः पूर्णाशौचप्रयोजको-धर्मविशेषः सापिण्ड्यं। पिण्डशब्दश्चायं नानार्थः। "पिण्डो देहे जपापुष्पे-निर्वापे सिह्लकेऽपि च" इति विश्वकोषात्। तत्रान्नमयपिण्डविवक्षया केचित्-सापिण्ड्यं वर्णयन्ति।

"लेपभाजश्चतुर्थ्याद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषं" ॥ इति—

मत्स्यपुराणवचनात् :—

"पिता पितामहश्चैव तथैव प्रपितामहः।
पिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः॥
लेपसम्बन्धिनश्चान्ये ये वृद्धप्रपितामहात्।
प्रभृत्युक्तास्त्रयस्तेषां यजमानस्य सप्तमः॥
इत्येष मुनिभिः प्रोक्तः सम्बन्धः साप्तपौरुषः"।

इति मार्कण्डेयपुराणवचनाच्च, अस्यार्थः :—

एकस्यां पिण्डदानक्रियायां दातृत्वेन यजमानस्य; देवतात्वेन पितृ-पितामहप्रपितामहानां चानुप्रवेशात्सप्तपुरुषं व्याप्य सापिण्ड्यं भवति। एवं-

भ्रातॄणामपि सापिण्ड्यं योज्यं देवदत्तकर्तृकपिण्डदानक्रियायां येषा-मनुप्रवेशस्तेषामेव यज्ञदत्तकर्तृकपिण्डदानक्रियायामनुप्रवेशात्। एव-मेषां षण्णां मध्ये यद्यद्कर्तृकपिण्डदानक्रियायामन्यतमस्याप्यनुप्रवेश-स्तेषां सर्वेषां सापिण्ड्यं। तेन च मातुलमातामहादिभिरपि सापिण्ड्य-योज्यं समानोद्देश्यकपिण्डदानक्रियान्वयात्। भ्रातृभार्याणां तु स्वस्व-भ्रातृकर्तृकपिण्डदानक्रियायां सहकर्तृत्वेन। एवं यत्र यत्र सपिण्डशब्दप्रयोग-स्तत्र तत्र साक्षात् परम्परया वा एकपिण्डदानक्रियान्वयोऽवगन्तव्य इति। नेदं चतुरस्रं विकल्पासहत्वात्। तथाहि किमत्र पितृशब्दो जनकमात्र-मभिधत्ते आहोस्वित्प्रमीतमात्रम्। न तावदाद्यः भ्रातृपितृव्यादी-नामजनकत्वेनासापिण्ड्यप्रसङ्गात्। समानोद्देश्यकपिण्डदानक्रियाद्यन्वयेन सापिण्ड्यविवक्षायां प्रमाणाभावात्; नापि सापिण्ड्यान्यथानुपपत्तिरेव मानं। तस्यावयवान्वयेनाप्युपपत्तेः। नापि द्वितीयः—गुरुशिष्यसहाध्यायिमित्रा-दिभिरपि पिण्डदानक्रियान्वयेन सापिण्ड्यप्रसङ्गात्। किञ्च मातामहप्रमाता-महादीनां देवदत्तकर्तृकपिण्डदानक्रियायां कथमप्यनन्वयेन सर्ववादिसंप्रति-पन्नमपि सापिण्ड्यं न स्यात् दत्तकादिपुत्राणाम्।

"गोत्ररिक्थे जनयितुर्न भवेद्दत्रिमः सुतः।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा"। इति।

मनुवचने जनकपिण्डदानक्रियानिवृत्त्या तत्सापिण्ड्याभावप्रसङ्गाच्च। न-चेष्टापत्तिः।

"दत्तक्रीतादिपुत्राणां वीजवप्तुः सपिण्डता।
पञ्चमी सप्तमी तद्वत् गोत्रं तत्पालकस्य च"॥ इति।

ऊर्द्धं सप्तमात् पितृबन्धुभ्यो वीजिनश्चेति वृद्धमनुमीतमादिवचनविरोधात्। वस्तुतस्तु सापिण्ड्यशब्दोऽत्र नोक्तलक्षणं सम्बन्धविशेषमभिधत्ते। किन्तु सपिण्डी-करणम्। तस्यैवोपक्रमात्।

तथाहि मत्स्यपुराणेऽष्टादशेऽध्याये सपिण्डीकरणमुपक्रम्य,—

"त्रिभिः सपिण्डीकरणैराशीकहतयेति वा।
यदा प्राप्स्यति कालेन तदा मुच्येत बन्धनात्॥
युक्तोपलेपभागित्वं प्राप्नोति कुशमार्जनात्।
लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपूरुषम्"॥

इति पठितम्।

तत्रोपक्रमस्थसपिण्डीकरणशब्दार्थपरतयैवोपसंहारस्थः सापिण्ड्यशब्दो-वर्णनीयो नाप्रस्तुतसम्बन्धविशेषतयेति न्यायविदां घण्टाघोषोऽपि बाधक एव-भवद्व्याख्याने। तस्मादन्यथा सापिण्ड्यं वर्णनीयम्। तत्र प्रामाणिकाः-पिण्डशब्दं शरीरपरतया व्याचक्षते। समानः एकः पिण्डो देहो येषां ते-सपिण्डाः, तेषां भावः सापिण्ड्यम्। "समानाः सत्समैके स्युः"रिति-त्रिकाण्डीस्मरणात्। "पिण्डो देहे जपापुष्पे निर्वापे ह्रस्वकेऽपि च" इति-विश्वकोषाच्च।

तच्चैकशरीरत्वं द्वयोर्बहूनां वा न सम्भवतीत्यारम्भकशरीरैक्यं विवक्षितम्। तच्चावयवद्वारैव सम्भवति।

तथाच, श्रुतिः,— एतत् षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतः,-अस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृत इति। अतएव स-एवायं विरूढः प्रत्यक्षेणोपलभ्यत इत्यभेदोपचारः। नन्वेवमवयवान्वयसिद्धावपि-तस्य सापिण्ड्यप्रयोजकत्वं कुत इति चेत्।

"यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः।
एकपिण्डाः पृथक् शौचाः पिण्डस्त्वावर्त्तते त्रिषु॥
दत्तक्रीतादिपुत्राणां वीजवप्तुः सपिण्डता।
पञ्चमी सप्तमी तद्वत् गोत्रं तत्पालकस्य च"॥ इति।

ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यो वीजिनश्चेति शङ्खलिखितनुगौतमादिवाक्येषु-

जन्यजनकभावस्य सापिण्ड्यप्रयोजकत्वे प्रतिपादनादिति ब्रूमः। तथैक-शरीरारम्भत्वं साक्षात् पुत्रशरीरे परम्परया पौत्रादिशरीरेष्विति पुत्रपौत्रा-दीनां पितृपितामहादिभिः सह सापिण्ड्यं सिध्यति। एवं पुत्रेऽपि पित्रा-दीनां सापिण्ड्यं सिध्यति। अवयवान्वयमात्रस्याभिप्रेतस्योभयनिरूप्यत्वात्। भ्रात्रोरेकशरीरारब्धत्वेन, दम्पत्योस्त्वेकशरीरारम्भकत्वेन। एवं स्नुषा-श्वशुरयोः श्वशुरशरीरारब्धेन सह पुत्रशरीरारम्भकत्वेन। एतेषाञ्च प्रकारा-णामेकशरीरावयवान्वयत्वेनानुगमः। यद्येवं तर्हि सहोढ़योः सापिण्ड्यं-स्यात्। भ्रातृभार्य्ययोरिव एकशरीरारब्धाभ्यां भगिनीभ्यां सह स्वस्वपुत्र-शरीरारम्भकत्वात्। स्यादेतत्, यदि यत्र यत्र शरीरावयवान्वयस्तत्र तत्र-सापिण्ड्यमिति व्याप्तिः स्यात्। नत्वेवं, किन्तु यत्र यत्र सपिण्डशब्दप्रयोग-स्तत्र तत्र साक्षात् परम्परया वा एकशरीरावयवान्वयः। यत्रैकशरीरावय-वान्वयो नास्ति तत्र सपिण्डशब्दप्रयोगोऽपि नास्तीत्यन्वयव्यतिरेकव्याप्तिस्वीका-रेण व्यापकव्यभिचारस्यादोषत्वात्। यथा,—

पङ्कजपदे कुमुदसाधारणो योगो रूढ़्या नियम्यते तथाऽत्रापीति नाति-प्रसङ्गः। नन्वेवं दत्तकस्य प्रतिग्रहीत्रा पित्रा सह सापिण्ड्यं न स्यात्। अवयवान्वयाभावात्। न चेष्टापत्तिः। लोके अनादिवृद्धव्यवहारे च सपिण्ड-शब्दप्रयोगसद्भावादिति चेन्नैवम्। त्रिविधो हि दत्तको भ्रातृपुत्रः-सपिण्डोऽसपिण्डश्चेति। तत्राद्ययोः पितामहमूलपुरुषयोरवयवान्वयेनास्त्येव-पालकदत्तयोः सापिण्ड्यमिति नास्त्येव दोषः। अन्यत्र तु अवयवान्वयाभावा-दलक्ष्यतयैव न दोषः प्रतिग्रहीत्रवयवान्वयाभावात्।

अतएव वृद्धगौतमः,—

"स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते" ॥

ये दत्तादयः सुताः स्वगोत्रेषु स्वगोत्रमध्ये कृता एव विधिना गोत्रतां सम्प-नित्वं यान्ति। परन्तु तैः सह विधिना सापिण्ड्यं विधीयते नोत्पद्यत इत्यर्थः। स्वगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रे सुतरां सापिण्ड्यानुत्पत्तिरुक्ता।

अतएव देवलः,—

"धर्मार्थं वर्द्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् ।
अंशपिण्डविभागित्वं तेषु केवलमीरितम्" ॥

इति केवलशब्देन सापिण्ड्यमेव निरस्तवान् । गोत्रांशपिण्डानां विधानात् । नन्वेतत् प्रकृतार्थानुपयोगि ; धर्मपुत्रविषयत्वात् । तथाहि, तत् तद्गोत्रेण-तस्य तस्यैव गोत्रेण ये पुत्रवद्धर्मार्थं वर्द्धितास्तेषु पुत्रेषु केवलं अंशपिण्डभागित्वमेव न वर्द्धकसापिण्ड्यमित्यर्थात् ।

तेनैतद्धर्मपुत्रस्यैव वर्द्धकसापिण्ड्याभावं बोधयति । न दत्तकस्येति चेत्-मैवं "पुत्रान् द्वादशजानाह नृणां स्वायम्भुवो मनुः ।" इति परिसंख्याविरोधेन-धर्मपुत्रानभ्युपगमात् । अभ्युपगमेऽपि वा पत्न्यादिष्वगणनेनांशभागित्वा-सम्भवात् । अपसक्त्या सापिण्ड्यनिषेधासंगतेश्च । तस्माद्दत्तकादिपुत्रविषय-मेवैतत् । अंशभागित्वप्रदर्शनात् । धर्मार्थं स्वस्यालोकतापरिहारकधर्म-संपत्त्यर्थं तत्तद्गोत्रेण जनकापेक्षया भिन्नभिन्नगोत्रेणापि परिगृहीता पुत्रवत्-पुत्रप्रतिनिधितया परिगृह्य ये पुत्रा वर्द्धितास्तेषु केवलं परिगृहीतांशपिण्ड-विभागित्वमेव न सापिण्ड्यमिति । तस्मान्न दत्तके परिगृहीतृसापिण्ड्यं किन्तु-जनककुल एव सप्तपुरुषं सापिण्ड्यमिति सिद्धं । नन्वत्र तच्छब्देन सन्नि-धानात् वीप्सापेक्षितश्रुतबहुत्वानां पुत्राणामेव परामर्शो गम्यते, न वर्द्धकानां-पुत्रिणां व्यवहितत्वात् । सन्दिग्धबहुत्वानां वीप्सान्वयायोग्यत्वात् । आत्मनि-परोक्षवन्निर्देशकतच्छब्दान्वयानुपपत्तेरपरोक्षनिर्देशकशब्दस्यैवौचित्याच्चेति चेत् ; मैवं वादीः । सर्वनाम्नां बुद्धिस्थे शक्तिरिति न्यायेन बुद्धिस्थतायाः-प्राधान्यायत्तत्वात्प्राधान्यस्य च संस्कार्यत्वेन फलान्वयेन वा सम्भवात् । "पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया" इत्यादि वचनपर्य्यालोचनया-पुत्रकर्त्तृकपिण्डदानादिक्रियया पितुः संस्कार्य्यत्वावगमात् "पुत्रेण लोकान्-जयतीत्यादिवचनबलात् पितुरेव पुत्रकरणभावनाभाव्यलोकरूपफलयो-गितया प्राधान्यात्तच्छब्देन परामर्शो युज्यते । यथा तप्ते पयसि दध्यानयति-सा वैश्वदेव्यामिक्षेत्यत्रामिक्षायाः संसृष्टदधिपयोरूपत्वेन समाख्यविकारत्वे-

स्थिते, पूर्वपक्षिणा सप्तमीनिर्दिष्टस्य पयसो गुणत्वेन द्वितीयानिर्दिष्टस्य दध्नः-प्रधानत्वात्तस्यैव तच्छब्देन परामर्श इति युक्तं। नन्वेवं दत्तकस्य प्रतिग्रहीतृकुले-सापिण्ड्याभावे कथं विवाहो न स्यादिति चेत्। सगोत्रत्वादिति ब्रूमः। नर्हि तद्भगिन्यादिसन्ततौ विवाहोऽस्तु सगोत्रत्वसपिण्डत्वयोरभावात्। न चाहत्य निषेधकं वचनमुपलभामहे।

प्रत्युत, —

"सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत्।
तद्गोत्रे तत्कुले वापि विवाहो नैव दोषकृत्" ॥

इत्याद्यनुकूलमेव मरीचिवचनमास्ते। न चेष्टापत्तिः। अविच्छिन्नाविगीत-सकलदेशीयशिष्टाचारविरोधात्।

तस्मात् किं तत्राविवाहे निमित्तमिति। अत्राहुः,—

त्रिविधा हि पर्य्युदसनीया सपिण्डा। तत्राद्या पितुः स्वस्य च सपिण्डा। द्वितीया पितुरसपिण्डा स्वस्य सपिण्डा। तृतीया पितुः सपिण्डा स्वस्या-सपिण्डा। तत्राद्या यथा,—

जननीपरिणेतुर्जनकस्य या सपिण्डा सा स्वस्यापि सपिण्डा।

द्वितीया यथा,—पालकस्य पितुरसपिण्डा जनकस्य पितुः सपिण्डा-सा पितुरसपिण्डा सती स्वस्य सपिण्डा।

तृतीया यथा,—पालकस्य पितुः सपिण्डा स्वस्यासपिण्डा। दत्तके पालकावयवान्वयाभावात्।

एवञ्च पितुरपि चातुर्विध्यं सिध्यति। जननीपरिणेता सन् जनकः, क्षेत्री, बीजी, पालकश्चेति। दत्तकजनकस्त्वाद्य एवान्तर्भूतः। तत्र-जनकबीजिभ्यां साक्षादवयवसम्बन्धादौरसक्षेत्रजयोः सापिण्ड्यं, क्षेत्रिणा-तु क्षेत्रद्वारा क्षेत्रजस्य सापिण्ड्यम्। क्षेत्रक्षेत्रिणोरेकशरीरप्रतिपादनात्। तादृशीनां तिसृणामपि स्वसपिण्डानामसपिण्डां यवीयसीमित्यादिवचनेनैव-पर्य्युदासः। पालकसपिण्डा तु दत्तकस्यासपिण्डेति न असपिण्डां यवीयसी-मित्यनेन पर्य्युदसितुं शक्यते। तदर्थं पितुरसपिण्डेति वचनमन्वेष्टव्यम्।

यदाह मनुः,—

"असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" ॥ इति ।

अत्र वाक्ये गौणस्यापि पितुः साप्तपुरुषं सापिण्ड्यं विवाहे वर्जनीयमिति-गम्यते । अन्यथाऽसपिण्डामित्यनेनैव सिद्धौ मातृपितृपदोपादानवैयर्थ्यात् । न-च पितृद्वारा अष्टमस्य वरस्य मातृद्वारा षष्ठ्याः कन्यकाया विवाहत्वम् । तस्या प्रसक्तेरित्येतदर्थं पितुरसपिण्डेति वक्तव्यमिति वाच्यम् ।

"पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा" ॥

इत्याद्यनेकवाक्यविरोधात्, तस्मात् पातीति पितेति व्युत्पत्त्या प्रतिग्रहीतुरपि पितृत्वात् सापिण्ड्यनिवर्त्तनायैतद्वचनारम्भ इत्यवश्यं वक्तव्यम् । न च-"तातस्तु जनकः पितेति" कोषात् सर्वेषां शब्दानां मुख्ये संप्रत्यय इति-न्यायाच्च सर्वत्रापि पितृपदं जनकपरमेवेति वाच्यम् । उर्द्ध्वं सप्तमात्-पितृबन्धुभ्यो वीजिनश्चेत्यत्र गौतमवाक्ये पितृपदेनैव वीजिनः प्राप्तत्वेन पृथक्-वीजिग्रहणानर्थक्यापत्त्या गोबलीवर्द्दन्यायेन पितृपदस्य जनकातिरिक्तपितृपर-त्वावश्यम्भावात् ।

ततश्च मनुवाक्ये पालकपितृसपिण्डाया अपि वर्जनीयत्वान्नोक्तदोषाव-सर इति । तदयुक्तम्,—

असपिण्डादिवाक्यैरेकमूलत्वसम्भवे पृथङ्मूलकल्पनागौरवात् ।

तथाहि,—

मातुः पितुश्च द्वारा या स्वस्यासपिण्डा असगोत्रा चेत्यर्थपरत्वेन-

"पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा" ॥

इत्यादिवाक्यैकमूलत्वसम्भवात् । गौतमवाक्ये तु पितृपदस्य जननी-परिणेतृजनकपरतया परक्षेत्रवीजावापकवीजिप्रतिपादनाय्रह्या गोबलीवर्द्द-न्यायासम्भवाच्च । अन्ये तु क्षेत्रजादीनां पुत्रप्रतिनिधित्वाभिधानात् प्रति-निधिस्तद्धर्मा स्यादिति न्यायेन सकलौरसधर्मप्राप्त्या क्षेत्रादि-पितृ-

सपिण्डवर्जनं सेत्स्यतीत्याहुः। तन्न, "न सापिण्ड्यं विधीयते" इति निषेधेन-सापिण्ड्यस्यैवाप्राप्त्या तद्वर्जनासम्भवात्। एतेन पुत्रनाम्ना औरसधर्मातिदेशात्-प्रतिग्रहीत्रादिपितृसपिण्डवर्जनसिद्धिरित्यप्यपास्तम्। न तौ पशू करोतीति-वदतिदिष्टस्य सापिण्ड्यस्य निषेधेन वर्जनासम्भवात्। तस्मादनन्यगत्या-वचनादेव प्रतिग्रहीत्रादिपितृसपिण्डवर्जनमित्यकामेनाभ्युपगन्तव्यम्। तत्र-हेमाद्रिः, पिण्डान्वयमेवोपादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव-सापिण्ड्यं व्यवातिष्ठिपत्।

तथाच कार्ष्णाजिनिः,—

"यावन्तः पितृवर्गाः स्युस्तावद्भिर्द्दत्तकादयः।
प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह॥
द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम्।
चतुर्थपुरुषे छेदं तस्मात् एषा त्रिपौरुषी"॥ इति।

अस्यार्थः,—ये दत्तकादयः पुत्रास्ते प्रेतानां स्वप्रतिग्रहीतृमातृपित्रा-दीनां यावन्तः पितृवर्गाः पित्रादिमन्त्रयुक्ताः पितृपितामहप्रपितामहादयस्ता-वद्भिः सह योजनं कुर्युः। यावत्तावच्छब्दोपादानादौरसानां केवलदत्तका-नाञ्च एकैक एव पितृवर्गो भवति। द्व्यामुष्यायणानान्तु द्वौ जनकवर्गः-प्रतिग्रहीतृवर्गश्च। एवं त्र्यामुष्यायणानां त्रयः पितृवर्गा भवन्ति। बीजि-वर्गः क्षेत्रिवर्गः पितृवर्गश्चेति। द्व्यामुष्यायणे द्वितीयं वर्गमाह। स्वकीयैः-पितृभिः सहेति। स्वकीयैः द्व्यामुष्यायणीयैः न कर्तृपितृभिः। तेषां-प्रेतेनानन्वयात्। पितृभिर्जनकैः। दत्तकादिपौत्रेषु विशेषमाह; पौत्रा-स्त्वेकेन तत्सममिति। दत्तकपौत्राः स्वपितुर्दत्तकत्वप्रतिग्रहीतृभ्यां एकेन-प्रतिग्रहीतृपित्रा सह योजनं कुर्युः। चतुर्थपुरुषे दत्तकप्रपौत्रे कर्त्तरि छेदं; प्रतिग्रहीतृपितुरिति शेषः।

तस्मादेवा दत्तकसपिण्डता त्रिपौरुषीति सिद्धम्।

एतदेवाभिप्रेत्याह संग्रहकारः,—

"दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रिपूरुषम्।
जनकस्य कुले तद्वद्ग्रहीतुरिति धारणा"। इति।

इदं च दत्तकस्य जनककुले त्रिपुरुषं सापिण्ड्यं "पञ्चमी सप्तमी तद्वदित्यादिहद्वनूमनूक्तसप्तपुरुषसापिण्ड्येन सह विकल्पते। तत्र कल्पद्वयं देशाचारादिभिर्व्यवस्थापनीयम्। यद्यपि निर्वाप्यपिण्डान्वयेन सापिण्ड्यं प्राक्निरस्तं तथाप्यगत्या दत्तकस्य प्रतिग्रहीत्रा सह तदेवाश्रयणीयं अविच्छिन्नशिष्टाचारानुरोधात्।

अथ सपत्नमात्रा सह कथं सापिण्ड्यं तच्छरीरावयवान्वयाभावात्सपिण्डशब्दप्रयोगाभावाच्चेति चेन्नैवं; पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरो भगिन्यो भगिनीसपत्न्यश्च भगिन्यस्तदपत्यानि भागिनेयानि, अन्यथा सङ्करकारकाणीति याप्याः पतिताश्च भवन्तीति सुमन्तुना सापिण्ड्याव्याप्यमातुलत्वादिव्यपदेशात्।

नात्र पञ्चमादिवाक्यं प्रवर्त्तते तस्य साक्षात्-सापिण्ड्यविषयत्वात्। कुत एतदवसीयत इति चेत्।

एतद्वाक्यान्यथानुपपत्त्यै वेति ब्रूमः। ततश्च परिगणितातिरिक्तेषु येषु-सापत्नमातामहसापत्नमातुलपुत्रसापत्नमातृष्वसृपुत्रेष्वेतद्वाक्यं न प्रवृत्तं; न च पञ्चमादि-वाक्यं; तत्र विवाह्यतापत्तिरवशिष्यते। न चेष्टापत्तिः;-उक्तरीत्याऽवयवसम्बन्धसत्वेन सापिण्ड्यसत्वेन सपिण्डानिषेधस्यात्राप्यप्रसक्तत्वात्। तर्हि सपिण्डानिषेधादेव गोत्रविषयेषु विवाह्यताप्रसङ्ग इति चेन्न।

सापिण्ड्यस्यासहस्रपुरुषमप्यविच्छेदेन परिच्छेदकाभावे निषेधस्यातिप्रसङ्गात्। तस्मादनन्यगत्या तद्भ्रात्रादिपदं तत्पित्रादीनामप्युपलक्षणं-वाच्यम्। ततश्चशब्दोपात्तानां प्रचयेन यावतां कथं चिदुपस्थितिः।

तावद्दूरं सापिण्ड्यमनेन परिच्छिद्यत इति पर्य्यवसन्नम्।

तद्यथा,—सापत्नमातामहो मूलपुरुषः प्रथमः; तत्पुत्रः सापत्नमातुलो-द्वितीयः। तत्पुत्रः सापत्नमातुलपुत्रस्तृतीयः। किमस्याश्रुतस्य ग्रहणे-

प्रमाणमिति चेत्; तद्दुहितरश्च भगिन्य इति मातुलमातृष्वसृदुहितृपादानमेवेति ब्रूमः। दुहितॄणां इव पुत्राणां अपि सम्बन्धाविशेषात्। तत्पुत्रः-सापत्नमातुलेयपुत्रश्चतुर्थः।

अत्रापि तदपत्यानि भागिनेयानीति मातुलमातृष्वसृदुहितृपत्यानामप्युपलक्षणं; तुल्यसम्बन्धतया बाधकाभावात्। एवं सपत्नमातृकुले चतुष्पुरुषं-सापिण्ड्यं सिध्यति। एवं सापत्नमातृष्वसृसन्तानेऽपि ज्ञेयम्। मातुलमातृष्वस्रोर्मूलपुरुषस्यैकत्वात्। ततश्च सापत्नमातामहादेव मूलपुरुषात्-दुहितृसपत्नीसन्ताने तत्सन्ताने च यावच्चतुर्थं परस्परमविवाह्यताप्रदर्शनेन-चतुष्पुरुषं सापिण्ड्यमनेनोक्तमिति सिद्धम्। तद्भ्रातरो मातुला भगिनीसपत्नाश्च भगिन्य इत्यन्योऽन्यं तुल्यसम्बन्धप्रतिपादनलिङ्गादुभयतः सापिण्ड्यसिद्धेः।

यत्तु मदनपारिजातेन,—

"पञ्चमीं सप्तमीञ्चैव मातृतः पितृतस्तथा"। इति—

वशिष्ठवाक्यं सपत्नमातामहकुलविषयमवयवानुवृत्तेरभावादिति व्याख्यातं,-तदाकाशलतेव मूलानपेक्षमेवोज्जृम्भितं। उक्तरीत्यावयवानुवृत्तिसद्भावात्-सापत्नादिपदाश्रवणात् सापत्नवाक्यैकवाक्यताभावात् सौमन्तविशेषवाक्यविरोधाच्चेति। न च वशिष्ठवाक्यान्यथानुपपत्तिरेव मूलमिति वाच्यम्। अन्यथोपपत्तेर्वक्ष्यमाणत्वात्। तस्मादुक्तमेव साधीय,-इत्यलमतिविस्तरेण।

अथ सापिण्ड्यपरिच्छेदकपुरुषसंख्याविशेषः।

तत्र बुधस्मृतिः,—

"सवर्णां भार्य्यामुद्वहेत् अतीत्य मातृतः पितृतः पञ्चमीं दशमीमन्यत्र-गोत्रजामिति"। मातृतः पञ्चमीं पितृतः दशमीं अतीत्येत्यन्वयः। पञ्चमीं-दशमीं संख्यामिति शेषः। न कन्यामिति। तथात्वे पितृतः पितृद्वारक-सापिण्डेर दशम्या मातुरन्वये सापिण्ड्यस्य मातृद्वारकतापत्त्या पितृपदग्रहणमनर्थकं स्यात्। तस्मात् संख्येत्येव शेषो वाच्यः।

स्वयम्भूस्त्वस्यैव सापिण्ड्यस्याविवाह्याशौचयोर्द्वयोरप्यावश्यकत्वमाह।

तत्र ब्राह्मणानामेकपिण्डस्वधामामादशमात्कर्मविच्छित्तिर्भवति। आसप्त-

माद्रिक्थविच्छित्तिर्भवति । आतृतीयात्स्वधाविच्छित्तिर्भवति । अन्यथा-सपिण्डाशौचक्रियाव्युच्छेदाद्ब्रह्महतुल्या भवन्तीति ।

अस्यार्थः,—पिण्डो जनकदेहः । स्वधा श्राद्धम् । तच्च न यत्किञ्चित् ; किन्तु प्रौष्ठपद्यां विहितं प्रपितामहपित्रादीनां नान्दीमुखश्राद्धम् । तत्र-प्रपितामहपित्रादयस्त्रयः पिण्डभाजस्तदूर्द्धास्त्रयो लेपभाजः स्वपित्रादयस्त्रि-रूपकाः कर्त्ता चेत्येवं दशपुरुषसम्बन्धि ; तदुभयं येषां ते एकपिण्डस्वधास्ते-सपिण्डाः वाक्यशेषात् ।

तेषामादशमाद्दशमं पुरुषं मर्य्यादीकृत्य आदशमं तस्मादादशमाद्दशमीर्द्ध-मिति यावत् । अत्राङ्पूर्वा मर्य्यादावचनः । आजन्मशुद्धानामितिवत् । धर्मस्य विवाहे सपिण्डावर्जनस्य जननमरणयोः सन्ध्यास्नानादिवर्जनस्य च विच्छित्तिर्निवृत्तिर्भवति । तथा आसप्तमात् सप्तमोर्द्धं रिक्थनिवृत्तिः । तथा तृतीयोर्द्धं स्वधानिवृत्तिः ।

अन्यथा—"दशपुरुषादर्वागेवं अविवाह्यतापरिहारे जननमरणयोः-सन्ध्यास्नानादिवर्जननिवृत्तौ च सपिण्डानामशौचस्य च तन्निमित्तायाः पिण्ड-दानादिक्रियाया आदिशब्दादविवाह्यतायाश्चोच्छेदाद्ब्रह्महतुल्या भवन्ति ।

नन्वेवमप्येकपिण्डस्वधानामित्यत्र विशेषणद्वयोपादानं व्यर्थम् । अन्यतर-विशेषणेनैवावयवपिण्डान्वयरूपैकतरसापिण्ड्यसिद्धेरिति चेन्न । दत्तकपुत्रे-सत्यपि जनकावयवान्वये तत्कर्तृकश्राद्धसम्बन्धाभावान्न दशपुरुषं सापिण्ड्यम् । किन्तु दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।

"पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च" । इति—

वृद्धमनुवचनात् साप्तपुरुषमेव ।

तथा—प्रतिगृहीते पुत्रे सत्यपि प्रतिग्रहीतृश्राद्धान्वयेऽवयवान्वयाभावान्न-दशपुरुषं सापिण्ड्यम् । किन्तु त्रिपुरुषमेव ।

"यावन्तः पितृवर्गाः स्युस्तावद्भिर्द्दत्तकादयः ।
प्रेतानां योजनं कुर्य्युः स्वकीयैः पितृभिः सह ॥

**द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम् ।**

**चतुर्थपुरुषे छेदं तस्मादेषा त्रिपौरुषी" ॥**

इति कार्ष्णाजिनिवचनादिति तद्वारणार्थमुभयोपादानात् एषा सपिण्डता। शेषन्तु सापिण्ड्यावसर एव व्याख्यातं ।

दशपुरुषमेव सापिण्ड्यं रिक्थाशौचयोरपि प्रयोजकमित्याह,—

भगवान् बौधायनः,—

"प्रपितामहः पितामहः पिता स्वयं सोदर्य्या भ्रातरः सवर्णायाः पुत्रः-पौत्रः प्रपौत्रः तत्पुत्रवर्गं तेषां च पुत्रपौत्रमविभक्तदायं सपिण्डानाचक्षते। विभक्तदायान् सकुल्यानाचक्षत इति"। तस्य प्रपौत्रस्य पुत्रवर्गः पुत्र-समुदायः । तेषां समुदायिनां पुत्रपौत्रम् । अविभक्तदायं दायोऽत्र पिण्ड एक-पिण्डान्वयीत्यर्थः ।

पिण्डान्वयश्च दशपुरुष एवेत्युक्तमेव प्राक् । विभक्तदायान् विच्छिन्न-पिण्डान् दशपुरुषादूर्द्धं सकुल्यानाचक्षत इत्यर्थः ।

नचेदं केवलं रिक्थग्रहण एव दशपुरुषं सापिण्ड्यं ; अशौचे सपिण्डे-ष्वासप्तमादिति तेनैव पृथक् सप्तपुरुषाभिधानादिति मन्तव्यम् । सपिण्डे-ष्वादशाहमित्युपक्रम्य जननमरणयोः सन्निपात इत्युपसंहाराम्मध्यपठितयोः सप्तपुरुषदशपुरुषयोः सापिण्ड्ययोः संदशपतितत्वेनोभयत्राप्युभयोरपि वैकल्पि-काङ्गत्वसिद्धेः । तत्रासप्तमाद्रिक्थविच्छित्तिरिति स्वयम्भूवाक्ये सप्तपुरुषस्य-बौधायनवाक्ये च दशपुरुषस्य रिक्थग्रहणे वैकल्पिकमङ्गत्वं स्पष्टमेव । तेन-सप्तपुरुषसपिण्डसत्वेऽष्टमादिभिर्न रिक्थं ग्राह्यमिति सिध्यति ।

अशौचे तु तयोर्वैकल्पिकमङ्गत्वं स्पष्टमाह । पारस्करः,—

"सर्वं ज्ञातयोऽभ्यवयन्त्यासप्तमात्पुरुषाद्दशमाद्वेति ।

**सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्यवयन्त्यपः ।**

याज्ञवल्क्योऽपि,—

यत्तु, सप्तमदशमशब्दयोर्दिनपरतया मिताक्षराव्याख्यानम् । तदसत् । पूर्वोदाहृतपारस्करवचनादर्शनात् ।

इदमेव सापिण्ड्यं श्रुतिलिङ्गमप्युपोद्वलयति,—

"दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे ।
अपामर्थं यतीनां वा ब्रह्मा भवति सारथिः" ॥

ममतायाः अपत्यं पुमान् मामतेयः दीर्घतमा नाम ऋषिः कूटस्थाद्दशमे-युगे द्वन्द्वे मातापितृलक्षणे अतीते जुजुर्वान् भार्य्यां सेवितवान् । जुषी प्रीति-सेवयोरित्यस्यायं प्रयोगः । कुत इत्याह,—

अर्थं गर्भलक्षणं प्रयोजनं आसादयितुं यतीनां गच्छन्तीनां अपां शुक्र-शोणितरूपाणां जलानां सारथिः नेता ब्रह्मा जीवो भवति ।

"स्त्रीपुंसयोश्च संयोगे विशुद्धे हि शुक्रशोणिते ।
पञ्चधातून् स्वयं षष्ठ आदत्ते युगपत्प्रभुः' ॥ इति स्मृतेः ।

तस्मादवयवान्वयरूपं सापिण्ड्यं दशपुरुषमनुवर्त्तेत इति तात्पर्य्यम् । तथा मातृद्वारकं सप्तपुरुषं सापिण्ड्यं स्मर्य्यते ।

यथाह सुमन्तुः,—

मातृपितृसम्बन्धा आसप्तमादविवाह्याः कन्या भवन्ति आपञ्चमादन्येषामिति ।

अत्र मातृपितृद्वारकयोरुभयोरपि सापिण्ड्ययोः स्वमते सप्तपुरुषत्वमुक्तम् । परमते द्वयोरपि पञ्चपुरुषत्वमुक्तम् । याज्ञवल्क्यस्तु मातृतः पञ्चपुरुषं पितृतः-सप्तपुरुषं सापिण्ड्यमाह,—

"पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा" ।

विष्णुरपि,—

"मातृतस्त्वापञ्चमात्पुरुषात् पितृतश्चासप्तमादिति" । अत्राङ् न मर्य्यादायां; किन्तु अभिव्याप्तौ नोद्वहेदित्यनुषज्यते ।

गौतमोऽपि ;—

"ऊर्द्ध्वं सप्तमात्पितृभ्यो वीजिनश्च मातृबन्धुभ्यः पञ्चमादिति" ।

देवलोऽपि,—

"पञ्चमात्-सप्तमादूर्द्ध्वं मातृतः पितृतः क्रमात् ।
सपिण्डता निवर्त्तेत सर्ववर्णेष्वयं विधिः" । इति ।

पैठीनसिरपि,—

"असमानार्षेयां कन्यां वरयेत् पञ्च मातृतः परिहरेत् सप्त पितृतः"। इति।

हारीतोऽपि,—

"तस्माच्छ्रद्धावयविज्ञानोपपन्नां कन्यां वरयेत् पञ्च मातृबन्धुभ्यः सप्त पितृबन्धुभ्य"—इति।

परिहृत्येति शेषः।

नारदोऽपि,—

"पञ्चमात्-सप्तमादर्वाक् बन्धुभ्यः पितृमातृतः।
अविवाह्या सगोत्रा च समानप्रवरा तथा"॥ इति।

वशिष्ठस्तु,—

"मातृतश्चतुर्थ्युरुषं पितृतः षट्पुरुषमाह गृहस्थः सदृशीं भार्य्यां विन्देत पञ्चमीम् मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्य"—इति।

श्लोकवशिष्ठोऽपि,—

"पञ्चमीं सप्तमीञ्चैव मातृतः पितृतस्तथा"। इति।

विष्णुपुराणेऽपि,—

"पञ्चमीं मातृपक्षे तु पितृपक्षे तु सप्तमीम्।
गृहस्थ उद्वहेत्-कन्यां न्याय्येन विधिना नृप!"॥ इति।

शङ्खोऽपि,—

"विन्देत विधिवद्भार्य्यामसमानार्षगोत्रजाम्।
मातृतः पञ्चमीञ्चापि पितृतस्त्वथ सप्तमीम्"॥ इति।

चतुर्विंशतिमतेऽपि,—

"ब्राह्मेण तु विवाहेन शीलरूपगुणान्विता।
मातृतः पञ्चमीञ्चैव सप्तमीं पितृतस्तथा"॥ इति।

अशौचमधिकृत्य मनुविष्णू षाट्पुरुषमाहतुः,—

"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते"। इति।

विष्णुरपि अशौचे तथैव पठति ।

"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते" । इति ।

गौतमोऽप्यशौचे,—

पिण्डनिवृत्तिः सप्तमे पञ्चमे वेति । वशिष्ठस्तु अशौचे साप्तपुरुषमाह ।

"सपिण्डता च साप्तपुरुषी विज्ञायत" इति ।

पैठीनसिस्तु,—

विवाह एव मातृतस्त्रिपुरुषं पितृतः पञ्चपुरुषमाह,—

"त्रीनतीत्य मातृतः पञ्चातीत्य पितृतो वेति" । वारयेदित्यनुसज्यते ।
चतुर्विंशतिमते तु पक्षद्वयेऽपि त्रिपुरुषं द्विपुरुषञ्च सापिण्ड्यमुक्तम्,—

"तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पराशर्य्योऽङ्गिरा यमः ॥
आरभ्य कूटात्-पुरुषात्-पञ्चमो न तु पञ्चमीम् ।
चतुर्थीं पञ्चमोश्चैव चतुर्थः षष्ठ उद्वहेत्" ॥ इति ।

षट्त्रिंशन्मते तु विवाह एव मातृतः पितृतश्च द्विपुरुषमेव सापिण्ड्यमुक्तम् ।

"तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
विवाहयेन्मनुः प्राह पराशर्य्योऽङ्गिरा यमः" ॥ इति ।

एषां वचनानां विरोधे व्यवस्थामाह, विज्ञानेश्वराचार्य्यः,—

वशिष्ठवचनजातन्तु अर्वाङ्निषेधार्थं न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोध-इति ।

अत्रोपपत्तिमाह,—

मिताक्षराटीकायां सुबोधिन्यां भट्टवीरेश्वरः,—

"पञ्चमात् सप्तमाद्वा यः कन्यामुद्वहते द्विजः ।
गुरुतल्पी स विज्ञेयः सगोत्राञ्चैवमुद्वहन् ॥

पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया।
क्रियापरा अपि हि ते सर्वे ते शूद्रतां गताः" ॥

इति विष्णुमरीच्यादिवाक्याभिहितनिन्दार्थवादानुगृहीतेन, —

"पञ्चमात् सप्तमादर्वाक् बन्धुभ्यः पितृमातृतः ।
अविवाह्या सगोत्रा च समानप्रवरा तथा" ॥

इति नारदीयादिस्पष्टनिषेधेनार्वाग्विवाहविधायकवाक्यानामविरोधाय-निषेधस्य निषेध्यापेक्षिततया एकमूलकल्पनालाघवेन च नोद्वहेदित्येकवाक्यता-करणात् सर्वस्मृतीनामविरोध इति भाव इति ।

नैतन्मीमांसकशिरोमणेर्विज्ञानेश्वरस्याशयविवरणं साधीयः । षोडशि-ग्रहणाग्रहणादिविधिनिषेधयोर्विकल्पमात्रोच्छेदप्रसङ्गात् । तस्माद्विधिनिषे-धयोरेकवाक्यताकरणं तेजस्तिमिरयोः सङ्कलनमिवाशक्यमितुपेक्षणीयम् ।

विवाहमञ्जर्यां तु अस्यैवाशयोऽन्यथा वर्णितः ।

तथाहि,—

असपिण्डामुद्वहेदित्यत्र तत्तद्वाक्योपात्तानां तृतीयाद्यष्टम्यन्तानामस-पिण्डानां युगपत्प्राप्तौ पञ्चमात् सप्तमादूर्द्ध्वमिति वचनमर्वाचीनानामस-पिण्डानां परिसंख्यार्थम् ।

सैव च तत्तन्निषेधवाक्यैः स्पष्टीक्रियते । तदभिप्रायेणार्वाङ्निषेधपर-मिति । नैतदपि सारम् । तृतीयाद्यष्टम्यन्तासपिण्डोद्वाहविधीनां विनि-गमनाविरहेण परस्परपरिसंख्यार्थतापत्तेः । वस्तुतस्तु ऐकान्तिको निषेधः-परिसंख्या वा रागतः प्राप्त एव भवति । "न कलञ्जं भक्षयेत्; पञ्च पञ्चनखाः-भक्ष्या" इत्यादिष्विव । न शास्त्रप्राप्ते । तयोस्तुल्यबलत्वेन विकल्पापादक-त्वात् । न चासावपि प्रकृते युक्तः । गत्यन्तरसम्भवाच्च । यद्यपि सप्तम्यादि-विधीनां न तत्तद्विधायकत्वं ; पञ्चमे सप्तमे चैवेत्यादिवचनविरोधात् । किन्तु पञ्चम-सप्तमार्वाचीननिषेधपरत्वम् । पञ्चमात् सप्तमादर्वागित्यादि-वचनैकवाक्यत्वादिति व्याख्यातम् । तदपि न, अपदार्थत्वेन लक्षणाप्रसङ्गात् । यदपि सप्तम्यादिविधायकवाक्येषु अतीतपदाध्याहारेण सप्तमादूर्द्ध्वं विधायक-

वाक्यैकवाक्यताकरणं तदपिन, विष्णुगौतमवशिष्ठादिस्मृतिषु विवाहाशौच-प्रकरणयो: षाट्पुरुषसाप्तपुरुषसापिण्ड्यविधायकवाक्यद्वयारस्यानर्थक्यापत्तेः। षट्पुरुषसापिण्ड्यविधायक-एवातीतपदाध्याहारेण साप्तपुरुषसापिण्ड्यसिद्धेः।

तथाहि विष्णुस्मृतौ,—

"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते" इत्यशौचप्रकरणे अभिधाय-विवाहप्रकरणे मातृतस्त्वापञ्चमात्पुरुषात्पितृतस्त्वासप्तमाच्चोद्वहेदिति पुनरभिहितं।

तथा गौतमेनापि,—

पिण्डनिवृत्तिः सप्तमे पञ्चमे वेत्यशौचप्रकरणे अभिधाय पुनरूर्द्धं सप्तमात्पितृबन्धुभ्यो वीजिनश्च मातृबन्धुभ्यः पञ्चमादिति विवाहप्रकरणेऽभिहितं।

तथा वशिष्ठेनापि,—

सपपिण्डता तु साप्तपुरुषी विज्ञायत-इति अशौचप्रकरणे अभिधाय-गृहस्थः सदृशीं भार्य्यां विन्देत पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्य-इति-विवाहप्रकरणे चाभिहितं। तस्माद्यथा विवाहाशौचयोः पृथक् पृथक्-सापिण्ड्यं अगत्या स्वीक्रियते, तथा विवाहेऽपि सापिण्ड्यभेदः स्वीक्रियतां। अतएव सुमन्तुपैठीनस्यादिस्मृतिषु विवाह एव साप्तपुरुषपञ्चपुरुषसापिण्ड्य-मभिहितं।

तथाहि,—

मातृपितृसम्बन्धा आसप्तमादविवाह्या कन्या भवन्त्यापञ्चमादन्येषामिति-सुमन्तुः। पैठीनसिश्च असमानार्षेयां कन्यां वरयेत् पञ्च मातृतः परिहरेत्-सप्त पितृतः, त्रीनतीत्य मातृतः पञ्चातीत्य पितृतो वेति। न चात्राप्यतीत-पदाध्याहारेणैकवाक्यता सम्भवति। साक्षादेवातीतपदवापदयोः श्रवणात्। तस्मान्न तदपि भाव्यं। तर्हि कथमेषां वाक्यानां विरोधपरिहार इति चेन्-मुख्यानुकल्पताभेदेनेति ब्रूमः। तत्र पितृतो दशपुरुषं सापिण्ड्यं मुख्यकल्पः। वृधस्वयम्भूबौधायनयाज्ञवल्क्यपारस्करादिस्मृत्यनुग्रहात्। प्रत्यक्षश्रौतलिङ्गो-पष्टम्भाच्च। अस्मिन् पक्षे मातृतः साप्तपुरुषं सापिण्ड्यं मुख्यः कल्पः। मातृपितृसम्बन्धा आसप्तमादविवाह्याः कन्या भवन्तीति सुमन्तुस्मरणात्।

तत्परिहाराशक्तौ पितृतः सप्तपुरुषादयः मातृतश्च पंचपुरुषादयः षट्पक्षास्त्व-नुकल्पाः। तत्रापि पितृतः सप्तपुरुषपक्षो मातृतः पञ्चपुरुषपक्षश्च बहुस्मृत्युपलम्भादनिषेधात् प्राशस्त्यवचनात् सकलशिष्टपरिग्रहाच्च प्रशस्तः। अन्ये तु-पूर्वपूर्वासम्भवे अनुकल्पतारतम्येन व्यवस्थाप्याः। अनुकल्पता च मुख्यानुष्ठाना-सम्भवे परानुष्ठानं।

तत्रानुकल्पता द्विविधा,—

नैयायिकी, वाचनिकी चेति। तत्र नैयायिकीमाह विष्णुपुराणं,—

"सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीं।
उद्वहेत द्विजो भार्य्यां न्याय्येन विधिना नृप!॥"

इति न्याय्यो न्यायप्राप्तः। न्यायश्च यथा न दीक्षितस्याश्नमश्नीयादिति-निषेधे अग्नीषोमीये संस्थिते दीक्षितस्यान्नमश्नातीत्यस्य गुरुपक्षस्य प्रतिप्र-सवस्यासम्भवे क्रीतराजको भोज्यान्न—इति लघुपक्षस्याभ्यनुज्ञाने।

वाचनिकी यथा,—

विश्वरूपोदाहृतं चतुर्विंशतिमतं,—

"दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात्।
उद्वहेत्सप्तमादूर्द्ध्वं तदभावे तु सप्तमीं॥
पञ्चमीं तदभावे तु पितृपक्षे त्वयं विधिः।
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च॥
एवमुद्वाहयेत्-कन्यां न दोषः शाकटायनः।
तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि॥
विवाहयेन्मनुः प्राह पाराशर्य्योऽङ्गिरा यमः।
असपिण्डा च या मातुरसगोत्रा च या पितुः॥
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने।
यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत्॥
नित्यं स व्यवहार्य्यः स्याद्वेदाच्चैतत्प्रतीयते।"

इति सप्तमादूर्द्ध्वं प्रशस्तः कल्पः। तदभावे सप्तमीं तदभावे पञ्चमीमिति-पक्षद्वयेऽप्ययं सर्वमतेन प्रशस्तोऽनुकल्पः। तु शब्देन पक्षान्तरं परिगृह्णाति। पितृपक्षे त्वयं वक्ष्यमाणो विधिः। सप्तमीं षष्ठीं पञ्चमीं-तथा। मातृपक्षे चतुर्थ्यादिकां पूर्वपूर्वाभाव एव उद्वहेदेवमुद्वाहेन दोष-इति शाकटायनमतं। एवं स्वमतेन पक्षद्वये अनुकल्पमुक्ता इदानीं मतान्तरेण-पक्षद्वयेऽनुकल्पमाह,—पञ्चम्यभावे चतुर्थीं तदभावे तृतीयामर्थक्रम-प्राबल्यात् पक्षद्वयेऽप्युद्वहेदिति मनुपराशराङ्गिरोयमानां मतं। कन्या-गतमेव सप्तमत्वादिविशेषणं वरेऽपि ज्ञेयं। असपिण्डोऽसपिण्डामुद्वहेदित्यसा-पिण्ड्यस्योभयविशेषणत्वात्। तेन सप्तमः सप्तमीं षष्ठः षष्ठीमित्यादि सिध्यति।

पञ्चमयोस्तु विशेषोऽभिहितस्तत्रैव,—

"आरभ्य कूटात्-पुरुषात्-पञ्चमो न तु पञ्चमीं।
चतुर्थीं पञ्चमीं चैव चतुर्थः षष्ठ उद्वहेत्॥" इति।

नन्वनुकल्पेऽपि यदि दोषाभावस्तुल्यः तर्हि को विशेषो मुख्यकल्पादित्यत-आह सा प्रशस्तेति। साऽतीतसप्तमादिका प्रकर्षेण शस्ता। दारकर्म गृह-कार्य्यं, मैथुनमाधानादि। अनेनानुकल्पस्य द्विजातीनां दोषजनकत्वेऽप्य-प्राशस्त्यमुक्तं भवति। लोकविद्वेषात्। अन्येषां तु नाप्राशस्त्यमपि; प्रोक्तरीत्या-साप्तपुरुषस्य सापिण्ड्यस्य विजातीयेष्विव शूद्रेष्वपि सङ्कोचावश्यभावेन-द्विजातिमात्रविषयत्वात्।

अन्ये तु साप्तपुरुषं सापिण्ड्यं चातुर्वर्ण्यविषयं, तद्विषयमेव चानुकल्प-विधानं; तच्च द्विजेष्वपोद्यते पञ्चमात् सप्तमादर्वागित्यनेन। ततश्च द्विजाना-मेवायमनुकल्पनिषेधो नान्येषामिति द्विजातिरिक्तविषयं सप्तम्यादिविधानमिति-मन्यन्ते। तन्न सुन्दरं,—अनुकल्पविधानस्य श्रोत्रियाणामित्युपक्रमेण-द्विजातीनामित्युपसंहारेण च द्विजातिमात्रविषयत्वेन चातुर्वर्ण्यविषयत्वा-सम्भवात् द्विजातिमात्रविषयत्वे च विधिनिषेधयोरष्टदोषदुष्टविकल्पापत्तेः। न-चाप्यनुमतं सा। विधेरनुकल्पविषयत्वेन निषेधस्य च मुख्यकल्पविषयत्वेनैक-विषयत्वाभावात्। तस्मादस्मदुक्तमेव साधीयः। नन्वनुकल्पोद्वाहे दोषा-

भावावरको न स्यात्। लोकविद्वेषस्तु मधुपर्कगोवधवद्यादेवेत्यत आह,— यत्तु देशेति। देशकुलाचाराभ्यामनुकल्पस्य व्यवस्थितत्वान्नलोकविद्वेषविषयता। तत्र प्रमाणमाह, वेदादिति,—तृतीये सङ्गच्छावहै, चतुर्थे सङ्गच्छावहै, इति-वेदस्तृतीयचतुर्थयोरुद्वाहे प्रमाणं। तेन स्वाध्वन्तेऽवत तन्नो अधिवोचत। मानः पथः पित्र्यान्मानवादधिदूरं नैष्ट परावत— इति, वेदः कुलाचारे-प्रमाणमिति। भो देवास्ते यूयं न स्वाध्वं पालयध्वं। ते यूयं नः अस्मान्-अवत रक्षत ते यूयं नः अस्मानधिवोचत अधिकं हितं ब्रूत। मानवान्-मनुष्यानुष्ठेयात् परावतः परलोकसम्बन्धिनः पित्र्यात् पितृपरंपरागतात्पथो-दूरं नः अस्मान्मा नैष्ट मा नयतेति देवान् प्रार्थ्यते। तस्मात्कुलपरंपरागतेन-मार्गेण सप्तमादर्वागप्युद्वाहे न दोष इति भावः। उत्कलाः पुनरिमान्येव-वाक्यानि दिव्यसिंहमिश्रकृतसंस्कारतिलकोदाहृतेशनःस्मृतिवाक्यबलादन्यथैव व्यवस्थापयन्ति। तद्यथा,—

"सप्तषट्पञ्चचत्वारो वर्ज्या वर्णैः क्रमान्नराः।
सपिण्डतायामुद्वाहे शुद्धौ मरणजन्मनोः।
त्रयोऽनुलोमजैस्त्याज्या द्वावेव प्रतिलोमजैः"। इति।

नराः पुरुषाः गोत्रीणीति यावत्।

गौड़ास्तु शूलपाणिमिश्रकृतसम्बन्धविवेकोदाहृत—बृहन्मनुवचनानुरोधे-नान्यथैव व्यवस्थामाहुः। तद्यथा,—

"असंबद्धा भवेद्या तु पिण्डेनैवोदकेन वा।
सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या"॥

इति। त्रिगोत्रान्तरिता मूलपुरुषगोत्रात् चतुर्थगोत्रोत्पन्नेति यावत्। तथा च स एव,—

"तत्सन्निकर्षे कर्त्तव्यं त्रिगोत्रात्परतो यदि"। इति।

अथ विजातीयसापिण्ड्यनिर्णयः,—

तत्र शङ्खः,—

"यद्येकजाता बहवः पृथक्क्षेत्राः पृथक्जनाः।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु" ॥

अस्यार्थः,—एकजाता एकस्माद्ब्राह्मणादेर्जाताः पृथक्जनाः भर्त्रपेक्षया भिन्नजातीयासु परस्परं समानजातीयासु स्त्रीषु जातास्ते एकपिण्डाः-सपिण्डाः। ते पृथक्शौचाः पितृजात्यपेक्षया विजातीयाशौचाः। पिण्डस्त्वावर्त्तते त्रिषु। तेषां सापिण्ड्यं त्रिपुरुषमेवेत्यर्थः।

ब्रह्मपुराणेऽपि,—

"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु" ॥ इति।

अथ मातुलकन्यापरिणयननिर्णयः।

तत्र तदनुष्ठातारः श्रुतिस्मृतिपुराणेतिहासशिष्टाचारान् प्रमाणानि प्रदर्शयन्ति। तत्र ऋग्वेदश्रुतिः,—

"आयाहीन्द्र पथिभिरीडितेभिर्यज्ञमिमन्नोभागधेयं जुषस्व।
तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव"।

इति।

अस्यार्थः,—हे इन्द्र ईडितेभिः पथिभिः स्तुतैर्मार्गैर्नोऽस्माकमस्माभिरनुष्ठीयमानं इमं यज्ञं आयाहि आगच्छ आगत्य च स्वीयं भागधेयं जुषस्व "जुषी प्रीतिसेवनयोः" प्रीतिपूर्वकं गृह्णीष्व। कोऽसौ भागधेय इत्यत आह,—

वपां तृप्तामाज्यादिभिः संस्कृतां वपां यजमानाध्वर्य्युप्रभृतयो जहुस्त्यक्तवन्तः। तत्र दृष्टान्तद्वयमवतारयति। मातुलस्येव योषेति पैतृष्वसेयीवेति च। अत्र मातुलशब्दस्य सम्बन्धिशब्दत्वात् सम्बन्धी भागिनेय उपतिष्ठते। ततश्च-मातुलस्य योषा मातुलकन्या न पत्नी। पैतृष्वस्रेय्या अनन्वयापत्तेः। यथा—भागिनेयस्य भागः भजनीया परिणेतुं योग्येति यावत्। यथा च पैतृष्वस्रेयी-पितृष्वसुर्दुहिता अर्थान्मातुलपुत्रस्य भागस्तथेयं च वपा तव भागधेयः।

तथा च सूत्यन्तरमपि,—

"गर्भे तु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः।
न किरस्य प्रमिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः"॥इति।

अस्यार्थः,—

त्वष्टा रूपाणां कर्त्ता सविता सर्वेषां शुभाशुभस्य प्रेरकः विश्वरूपः-सर्वात्मकः देवो दानादिगुणयुक्तः नौ आवयोर्भ्रातृभगिन्योः गर्भे जनिता जनितारौ कन्यापुत्रौ दम्पती जायापती कः करिष्यतीर्थः।

अत्र हेतुमाह,—

अस्य प्रजापतेः व्रतानि कर्माणि न किः प्रमिनन्ति न केचित् प्रहिंसन्ति-न लोपयन्त्यर्थः। अपि च नौ आवयोः अस्य प्रजापतेः कर्त्तव्यं दम्पती-जनकत्वं पृथिवी भूलोकः द्यौः स्वर्गलोकश्च न वेद न जानातीत्यर्थः। एतेन भ्रातृभगिन्यपत्ययोर्विवाहयोग्यता सिध्यति।

वाजसनेयकेऽपि,—

"तस्मात् समानादेव पुरुषादत्ता चाद्यश्च जायेते तृतीये सङ्गच्छाव उत चतुर्थे सङ्गच्छावहे"। इति।

अस्यार्थः,—तस्मादित्युक्तमर्थं दृष्टान्तेनोपसंहरति। तौ च मिथः-सङ्कल्पयतः कूटस्थमारभ्य तृतीयपुरुषे आवां सङ्गच्छावहे। इति।

यद्यप्येते मन्त्रार्थवादाः पदार्थत्वान्न स्वार्थविधिपरास्तथाप्यप्राप्तस्यार्थस्य-सिद्धवदनुवादान्यथानुपपत्त्या स्वार्थविधिकल्पका गम्यन्ते।

यथा, उपरि हि देवेभ्यो धारयति मध्यं हि मनुष्या अश्नन्ति इत्यादौ। न च प्रजापतिः स्वां दुहितरमभ्यध्यायत् योषा जारमिव प्रियमित्यादौ-विधिकल्पनातिप्रसङ्गः। तेषां रागप्राप्तत्वात्। अतएव एतच्छ्रुतिमूलिका-स्मृतिरपि षट्त्रिंशन्मते प्रत्यक्षमेव बाधं दर्शयति।

"तृतीयाम्वा चतुर्थीम्वा पक्षयोरुभयोरपि।
विवाहयेन्मनुः प्राह पाराशर्य्योऽङ्गिरा यमः"॥ इति।

पुराणेऽपि, श्रीभागवते :—

"यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानितः ।
व्यतरद्भागिनेयाय सुतां कुर्वन् स्वसुः प्रियाम् ॥
वृतः स्वयम्बरे साक्षादनङ्गोऽङ्गयुतस्तथा ।
राज्ञः समेतान्निर्जित्य जहारैकरथो युधि" ॥ इति ।

तथा तत्रैव—

"दौहित्रायानिरुद्धाय गौरी रुक्मग्रददाद्वरः ।
रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ।
जानन्नधर्मं तं यौनं स्नेहपाशानुबन्धतः" ॥ इति ।

यत्तस्य अधर्मं जानन्नितान्वयप्रतिभानादधर्मत्वव्याख्यानं केषाञ्चित् । तद्भगवद्बादरायणाशयानभिज्ञाननिबन्धनमित्युपेक्षणीयम् ।

तथाहि,—

प्रत्यक्षश्रौतलिङ्गानुमितश्रुतिस्मृत्याद्यनेकप्रमाणप्रमितं तं यौनं दौहित्राय-पौत्रीदानलक्षणं सम्बन्धं धर्मं धर्मत्वेन जानन्नाददात्; किन्तु स्वसुः प्रिय-चिकीर्षया स्नेहपाशानुबन्धत एव । अतएव हरेर्बद्धवैरोऽपीति विशेषणेन तदेवाविष्कृतम् । दौहित्राय प्रद्युम्नपरिणीतस्वदुहितृपुत्राय गौरीं गौराङ्गीं-रोचनां रोचनामिवेति लुप्तोत्प्रेक्षेति शब्दार्थः ।

इतिहासेऽपि, महाभारते—

शूरकन्या कुन्तिभोजेन पुत्रीकृता पाण्डुतोऽर्ज्जुनमजीजनत् । अर्ज्जुनश्च शूरात्मजस्वमातुलवसुदेवसुतां सुभद्रामुपयेमे इत्यपरं लिङ्गम् ।

तथाहि,—

"अर्ज्जुनस्तीर्थयात्रायां पर्य्यटन्नवनीं प्रभुः ।
गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥

तत्र चङ्क्रममाणौ तौ वसुदेवसुतां शुभाम्।
स्वलङ्कृतां सखीमध्ये भद्रां ददृशतुस्तदा॥
ममैषा भगिनी पार्थ सारणस्य सहोदरा।
सुभद्रा नाम भद्रं ते पितुर्मे दयिता शुभा॥
दुहिता वसुदेवस्य वासुदेवस्य च स्वसा।
रूपेण चैव सम्पन्ना कमेवैषा न मोहयेत्॥
कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम्।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव॥
अतः प्रचिन्त्य कल्याणीं प्रसह्य भगिनीं मम।
हर स्वयम्वरे ह्यस्याः को वै वेद चिकीर्षितम्॥
ततः सुभद्रा सौभद्रं केशवस्य स्वसा प्रिया।
जयन्तमिव पौलोमी द्युतिमन्तमजीजनत्"॥

इत्याद्याचारोऽप्यविच्छिन्नपारम्पर्येण दाक्षिणात्यशिष्टानामविगीतो विजृम्भते। तस्मात्सिद्धं मातृष्वसृकन्यापरिणयनम्।

प्राच्योदीच्यप्रतीच्याः प्रत्यवतिष्ठन्ते। कथमविगानं, निषेधस्मृतीनां बहुलमुपलब्धेः।

तथाहि मनुः,—

"पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च।
मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत्॥
एतास्तिस्रस्तु भार्य्यार्थे नोपयच्छेत बुद्धिमान्।
ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन् पुनः"॥

इति मातुश्चाप्तस्य माता भ्रातृत्वेन प्रसिद्धस्य।

तथा च लिङ्गपुराणे,—

"वाक्सम्बन्धकृतानान्तु स्नेहसम्बन्धभागिनाम्।
विवाहोऽत्र न कर्त्तव्यो लोकगर्हा प्रसज्यते।
अतो वंशा विनश्यन्ति लोके सङ्करकारकाः" ॥ इति।

शातातपः,—

"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवराञ्चैव द्विजश्चान्द्रायणं चरेत्" ॥ इति।

पुनरपि स एव,—

"उद्वहेत्तु सगोत्रां यस्तनयां मातुलस्य च।
ऋषिभिश्चैव तुल्याञ्च स तु चान्द्रायणं चरेत्" ॥

महाभारते ययाति-वाक्यमपि,—

"यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छति।
पापा मातुलसम्बन्धात्मजा वै ते भविष्यति" ॥

कलिनिन्दोपक्रमे व्यासोऽपि,—

"तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा।
शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः" ॥

सुमन्तः,—

पितृष्वसृसुतां मातृष्वसृसुतां मातृसगोत्रां समानप्रवरां विवाह्य चान्द्रायणं-चरेदिति।

पैठीनसिः—

कुलोत्पन्नां साध्वाचारां वरयेत्पितृष्वसृमातृष्वसृदुहितरो मातुलसुता च-धर्मतस्ता भगिन्यो वर्जयेदिति। भगिन्य इत्यपरिणेयत्वे हेतुगर्भं विशेषणम्।

अतएव भविष्योत्तरे,—

"प्रथमा श्रावणे मासि तथा भाद्रपदे परा।
तृतीयाऽश्वयुजे मासि चतुर्थी कार्त्तिके भवेत्" ॥

इति चतस्रो यमद्वितीया उपक्रम्य तासु,—

"पितृव्यभगिनीहस्तात्-प्रथमायां युधिष्ठिर!।
मातुलस्य सुताहस्ताद्द्वितीयायां तथा नृप!॥
पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात्।
भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम्।
सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः" ॥

इति चतसृणामपि भगिनीत्वं स्पष्टमेवाभिहितम्। तदेवं मातुलकन्यापरिणयस्य निषेधवचनकदम्बे जाग्रति कथमिव तद्विधायकस्मृत्यादेर्मूलभूतश्रुत्यनुमानमिति प्राप्ते, अभिधीयते दाक्षिणात्यैः। प्रत्यक्षश्रौतलिङ्गाद्यनुमितश्रुत्या शीघ्रोपस्थितिकतया स्मृत्यनुमितलिङ्गाद्यनुमीयमानश्रुतेर्विषयापहारेण बाधादनुमानासम्भवाच्चैतासां स्मृतीनां स्वार्थप्रमापकत्वम्।

तदुक्तम् बलाबलाधिकरणे वार्त्तिकाचार्य्यैः,—

"स्मृतिवैदिकलिङ्गयोर्विरोधे स्मृतेर्मूलान्तरसम्भवाद्वेदलिङ्गानां चानन्यथासिद्धत्वात् स्मृतेर्बाध" इति।

तथा, बलीयो वैदिकं वैदिकनिबन्धायाः स्मृतेरपीति च। विवृतं चैतद्भाणकाचार्य्यैः प्रकृतमेवोदाहरणं प्रस्तुत्य। अथवा विषयविशेषव्यवस्थया विरोधाभावेन विधिनिषेधवाक्यैः स्वस्वमूलभूतश्रुत्यनुमाने बाधकाभावः।

तथाहि,—

ब्राह्मादिषु विवाहेषु दानेन कन्यायाः पितृगोत्रमापिण्ड्ये निवर्त्तेते,—यथा दत्तपुत्रस्य।

तदाह मनुः,—

"गोत्ररिक्थे जनयितुर्न भवेद्दत्त्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा" ॥

दत्तपुत्रो जनयितुर्गोत्ररिक्थं न भजेत् ।

तथा, पुत्रं ददतः पितुः पिण्डं सापिण्ड्यं स्वधाख्यात्र दत्तपुत्राद्व्यपैति तत्र हेतुर्यतो गोत्ररिक्थानुगः पिण्डस्तन्निवृत्तौ निवर्त्तत इत्यर्थः । आसुरादि-चतुर्षु पुनर्दानाभावेन गोत्रसापिण्ड्ययोर्न निवृत्तिरिति ।

अतएव मार्कण्डेयेन,—

"ब्राह्मादिषु विवाहेषु या वूढा कन्यका भवेत् ।
भर्त्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्" । इति ।

गोत्रनिवृत्त्यनिवृत्ती प्रतिपाद्येते । अनेनैकाभिप्रायेण स्मृत्यन्तरेऽप्युक्तम् ।

"एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके" । इति ।

एवञ्च, यानि मातुलसुतादिनिषेधकानि मन्वादिवाक्यानि तान्यनिवृत्त-गोत्रसापिण्ड्येष्वासुरादिविवाहेषु सावकाशानीति । एतेन पुत्रिकापुत्रोऽपि-व्याख्यातः ।

"मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः" ॥ इति ।

लोगाक्षिस्मरणात् । तत्र चतुरस्रं विकल्पासहत्वात् । तथाहि ब्राह्मादि-विवाहेषु सापिण्ड्यनिवृत्तिः किं दानेन उत वचनेन आहोस्वित् मतापि-मापिण्ड्ये वाचनिकोऽयं विवाह इति । न तावदाद्यः दानेन स्वनिवृत्तावपि-सापिण्ड्यानिवृत्तेः, अवयवान्वयः पिण्डान्वयो वा सापिण्ड्यं, तत्रावयवान्वय-निवृत्तिः, प्रत्यक्षवाधिता । पिण्डान्वयनिवृत्तिस्तु,—

"पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥" इति ।

शास्त्रेण वाधिता। यदा तु कन्यादाने परस्वत्वापादानमात्रं न स्वत्व-निवृत्तिरिति दानत्वस्यैवाभावो विद्यादानादिष्विव, तदा सुतरां न सापिण्ड्य-निवृत्तिः। नापि द्वितीयः, तादृशवचनस्य श्रीमद्भिरप्यनुपन्यासात्।

यत्तु,—

"एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके"।

तथा,—

"स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे" ॥ इति, च-

वाक्यद्वयमुपन्यस्तं, तत्राद्ये दम्पत्योः पिण्डैक्यमात्रं वोध्यते न पितृ-मातृसापिण्ड्यनिवृत्तिः। अथ पिण्डद्वयेन सापिण्ड्यमिवोच्यते। तत्रापि तथैव-निवृत्तिपदाश्रवणात्। द्वितीयेऽपि तथैव पितृगोत्रनिवृत्तिः। सापिण्ड्य-पदाश्रवणात्। न च गोत्रनिवृत्त्यैव सापिण्ड्यनिवृत्तिः। परस्परव्यभिचारेण-व्याप्त्यभावात्। यदपि चतुर्विंशतिमते,—

"तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा" ॥ इत्यादि वचनं-

तन्मातुलस्य सुतामूढ्वेत्यादिना भवद्भिरपन्यस्तमेव। प्रतिलोमादि-सापिण्ड्यविषयं वेति न प्रकृतोपयोगि।

यदपि,—

"ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्।
भर्त्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥
"आसुरादिविवाहेषु पितृगोत्रेण धर्मवित् ॥"

इति मार्कण्डेयवाक्येन ब्राह्मासुरविवाहभेदेन गोत्रसापिण्ड्ययोर्निवृत्त्यनु-वृत्ती प्रतिपाद्येते। इत्युक्तं,—

तदपि न सापिण्ड्यनिवर्त्तकपदाश्रवणात्। गोत्रनिवृत्तिस्त्वासुरेऽपि-भवत्येव; "पूर्वं परिग्रहस्तेषां पश्चाद्धोमो विधीयते" इति परिग्रहेन होमादि सप्तमपदप्रक्रमान्ते सकलभार्य्यात्वोत्पादकसंस्कारविधानात्। तत्र च सप्तमे पदे पितृगोत्रनिवृत्तेरावश्यकत्वात्।

आसुरादिविवाहेषु मातुः पिण्डदानादौ पितृगोत्रप्राप्त्यर्थं। ब्राह्मादिवचनं-तु दृष्टान्तार्थमनुवाद-इति सर्वं सुस्थं। यत्तु मातुलस्येव योषेत्यादि श्रौत-लिङ्गानुमितश्रुतिरत्र प्रमाणमिति तदपि।

"आयाहीन्द्र पतिभिरीड्डितेभिर्यज्ञमिमं नो वाजसा तौ जुषस्व।

तृप्ता जहुर्मातुलस्येव योऽयं भागः पैतृष्वसेयमपामिवौघः॥

इतरपरार्कोदाहृतशाखान्तरीयश्रौतलिङ्गानुमितश्रुतया सत्प्रतिपक्षग्रस्तम्। तस्याश्चार्थस्तेनैव व्याख्यातः। आयाहीन्द्र! अस्मदीययज्ञमन्त्रैरपि सोमप-तिभिः ईड्डितेः स्तोतृभिः सह, आगतः च वाजसा तौ सोमरूपान्नभोजन-प्रस्तावे जुषस्व सोममिति सम्बध्यते। एवं प्रार्थ्येन्द्रस्तुत्यर्थं स्वरूपार्थवादं-करोति, ये सोमपतयो भवता सहायास्ते मरुत् सोमपानेन तृप्ताः सन्तः-सोमं जहुस्त्यक्तवन्तः। के कामिव मातुलस्य सुताः पैतृष्वसेयीमिव भार्य्यात्वे-नाप्यन्तामिलषणीयां त्यजन्ति स्वकीयमातुलस्य सम्बन्धायोग्यत्वात्। तद्वद्भवदुद्देशेन सोमं त्यक्तवन्तो निराकाङ्क्षतया। तव पुनरयं सोमभागः-अपामिवौघः सातत्यनाकर्मसमाप्तेरिति।

यदपि, "गर्भे नु नौ जनिता दम्पतीकरिति" श्रुतेः नौ आवयोर्गर्भे जनि-तारौ त्वष्टा देवः दम्पती करिष्यतीति व्याख्यानम्। तदपि नौ आवां जनिता-जनयिता देवः गर्भे नु गर्भ एव दम्पती कन् कृतवानिति विद्यारण्यश्रीपाद-कृतव्याख्याविरुद्धत्वादुपेक्षणीयम्। युक्तं चैतदेव, ओचिदिति चतुर्दशर्चस्य-सूक्तस्य। ओचित् पत्नूना वैवस्वतयोर्यमयम्योः सम्वादः। षष्ठ्यर्गुग्भिर्मिथु-नार्थं यमं प्रोवाच, स तां नवमीयुग्भिरनिच्छन् प्रत्याचष्टे इति सर्वानु-क्रमेऽस्याः पञ्चम्या ऋचः यमं प्रति यम्या पूर्वपक्षत्वेनाभिधानात्। सिद्धान्ते-'न वा उ ते तन्वा तन्वां सम्पृच्यां पापमाहुर्यः स्वसारं निगच्छात्। अन्येन-मत्-प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतदिति"।

अस्यार्थः,—हे सुभगे ते तव तन्वा शरीरेण तन्वां स्वीयां तनुं न वा उ नैव सम्पृच्यां सम्पर्कयिष्यामि। तत्र हेतुमाह,—

यः स्वसारं निगच्छात् गच्छति तं लोका देवाश्च पापं पापिष्ठं आहुः। तर्हि मत्सन्तोषः कथं स्यादित्यत आह। मत्प्रमुदः मत्तः जायमानाः प्रमुदः-

त्वं अन्येन पुंसा कल्पयस्व अर्जयस्व । न ते भ्राता यमः एतत् कर्म वष्टि न-काङ्क्षतीति यमेन तत्प्रत्याख्यानाच्च ।

अथ तृतीये सङ्गच्छामहै इति शतपथश्रुत्या मातुलकन्यापरिणयः सेत्स्य-तीति । तत्रोच्यते न तावद्विधित्वेनेदं गमकं । उत्तमपुरुषश्रवणात्, नापि-विधिकल्पनया, स वै स्रुचौ व्यूहतीति स्रुग्व्यूहनविधिशेषत्वात् । यथाप्राप्तार्थ-कत्वेनान्यशेषस्यापि विधिकल्पकत्वं । तर्हि नापुत्रस्य लोकोऽस्ति, तत्सर्वे-पशवो विदुः । तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहतीत्यस्यापि पुत्रोत्-पादनविधिशेषस्य मात्रादिगमनविधिकल्पकत्वं केन वार्य्यते । अथास्य छन्दोग-श्रुतिविरोधान्न विधिकल्पकत्वम् । तर्हि प्रकृते अपरार्कादाहृतश्रुतिविरोधान्न-विधिकल्पकत्वमिति समः समाधिः ।

अथ तस्मात्समानादेव पुरुषादत्ता चाद्यश्च जायते । इत्यस्मात्तदर्थ-सिद्धिः । तदपि न, एकस्मादुत्पन्नयोर्भ्रातृभगिन्योर्दाम्पत्यस्य पापमाहुर्यः-स्वसारं निगच्छादिति प्रत्यक्षश्रुतिबाधितत्वेन मुख्यार्थासम्भवात् ।

अर्थकान्तरविवक्षया विवक्षितार्थसिद्धिः । तर्हि मुख्यार्थत्यागाविशेषा-च्छास्त्रान्तराविरोधाय पञ्चम्यन्तरविवक्षया एकपुरुषसन्तानजात्पञ्चमात्समादूर्द्ध-मित्येवार्थः कुतो न कल्प्यते ।

यथा, जातेऽष्टौ मुख्यकालबाधेन शास्त्रान्तरविरोधायाशौचानन्तरः-पर्वकालः कल्प्यत इति । नहि पञ्चम्या अव्यवहितस्यैवापादनत्वमुच्यते । चिरनिर्गतेऽपि पुरुषे गौड़ादागत इत्यादिप्रयोगदर्शनात् । तेन वाजपेयस्य यूप इति षष्ठीवद्व्यवहितसम्बन्धेऽपि पञ्चम्युपपत्तेः । यतो वंशभेदस्तमादाय-गणयेदित्यादिस्मृतिमूलत्वमेवास्याः श्रुतेः कल्पयितुं युक्तम् । ननु कल्प्यता-मन्तरं तथापि पञ्चम्यन्तरकल्पने किं प्रमाणं वाक्यशेषश्रुततृतीयचतुर्थपुरुष-संख्ययैव निराकाङ्क्षत्वादस्य वाक्यस्य ।

उपसंहृतश्चायमेवार्थश्चतुर्विंशतिमतसङ्ग्रहेऽपि,—

"तृतीयाम्बा चतुर्थीम्बापक्षयोरुभयोरपि ।
विवाहयेदिति प्राहुः पाराशर्य्याङ्गिरोयमाः ॥" इति ।

तस्मान्निरुक्तमेतावत्येवान्तरे विवाहविधायकत्वमस्येति चेत्। सत्यं, तथापि-मातुलकन्यापरिणयनासिद्धेः। मातृष्वस्रीयादिपरिणयनप्रसङ्गात्। न चाचाराभावेन तदपरिणयनसिद्धिः, प्रत्यक्षश्रुतिविहितेऽनाचारस्याप्रयोजकत्वात्। न चास्य सामान्यरूपस्यापि मातुलस्यैव योषितयादिलिङ्गकल्पितविशेषश्रुत्युपसंहारेण नातिप्रसङ्ग इति वाच्यम्। अपरार्कादाहृतश्रौततयागलिङ्गविरोधेन-तदुद्वाहविधायकविशेषश्रुत्यनुमानस्यैवासम्भवात्। किञ्च मातुलकन्यापरिणयनपरत्वे तयोः श्रुतिस्मृत्योस्तृतीयपुरुषसंकीर्त्तनमेव कर्त्तव्यम्, न-चतुर्थपुरुषसंकीर्त्तनं तस्य मातुलत्वाभावात्। तस्मान्नेदं मातुलकन्यापरिणयनपरत्वेन व्याख्येयम्। किं तर्हि, द्विपुरुषसापिण्ड्यकीर्त्तनं प्रतिलोमजविषयं व्याख्येयं त्रिपुरुषानुलोमजसापिण्ड्यसमभिव्याहारात्।

"तयोऽनुलोमजैस्त्याज्या द्वावेव प्रतिलोमजैः", इत्युशनःस्मरणात् तेषां तथाचारदर्शनाच्च। अथ विधिनिषेधयोः प्रत्यक्षश्रौतलिङ्गद्वयानुमितश्रुतिद्वयमूलकयोस्तुल्यबलतया विकल्प एव देशभेदेन व्यवस्थितो-मन्तव्यः।

तथाच बौधायनः,—

"पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तान्यनुव्याख्यास्यामो, यथैतदनुपनीतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं-मातुलपितृष्वसृदुहितृपरिणयनमिति।

अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहारः आयुधीनकं-समुद्रयानमिति। तत्रेतरदितरस्मिन् कुर्वन् दुष्यति इतरदितरस्मिन् तत्र तत्र देशप्रामाण्यमेव स्यादिति"।

अस्यार्थः—विप्रतिपत्तिर्विरुद्धार्थानुष्ठानम्। इतरदिति दक्षिणदेशीयं-कर्म उत्तरदेशे उत्तरदेशीयञ्च कर्म दक्षिणदेशे कुर्वन् दुष्यति न स्वस्वदेशे-तत्र तत्र देशनिबन्धनप्रामाण्यादिति। विशेषविवरणमेतद्विषयकं वीरमित्रोदयादावन्वेष्टव्यम्।

तथाच,—विषयेऽस्मिन्नुद्वाहतत्त्वे यथाह रघुनन्दनः।

यथा मत्स्यपुराणम्,—

"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्"॥

एतत्प्रपञ्चितं शुद्धितत्त्वे असपिण्डा च या मातुरिति चकारात् मातुरसगोत्रा च।

"सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि"

इति व्यासोक्तेः,—असगोत्रा चेति चकारात् पितुरसपिण्डा च।

विष्णुपुराणे,—

पितृपक्षे सप्तमीनिषेधात्।

यथा,—

"सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्।
उद्वहेत द्विजो भार्य्यां न्यायेन विधिना नृप!"॥

सप्तमीं पञ्चमीं परिहृत्येति शेषः। अतएव एकपितृकस्यापि पितृपक्षतया सप्तमवर्जनाय मनुवचने पितुरिति सार्थकं न वरापेक्षयेति शूलपाणिमहामहोपाध्यायैस्तु क्षेत्रमात्रगोत्रस्य द्विपितृकस्य क्षेत्रजादेर्बीजिसगोत्रावर्जनाय पितुरित्युक्तम्।

"उद्वहेत द्विजो भार्य्यामि"त्यादौ भाविनि भूतोपचारः विवाहानन्तरमेव भार्य्यात्वनिष्पत्तेः। "न सगोत्रां न समानप्रवरां भार्य्यां विन्देत मातृतस्त्वा-पञ्चमात्, पितृतस्त्वासप्तमादि"ति विष्णुसूत्रे सप्तमीनिषेधाच्च अत्र मातृपदेन मातामहो लक्षणीयः। अथात्मीयांस्त्रीन् पितृतस्त्रीन् मातृतस्तत्पत्नीश्चेति पितृतर्पणमिति गोभिलसूत्रे त्रीनित्ति पुंलिङ्गनिर्देशेन तत्पत्नीश्चेति पृथगुपादानेन च मातृत इति मातामहपरत्ववत्।

अन्यथा,—

"अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्।
प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामहः"॥

इति रत्नाकरधृतकूर्मपुराणवचनात् मातुर्विवाहेन तत्पितृकुले-सापिण्ड्यनिवृत्तेः भर्त्तृसापिण्ड्येन सापिण्ड्यसिद्धेः विवाहेन च तस्याः पितृ-गोत्रत्वनिवृत्तेः पितृसपिण्डा पितृसगोत्रावर्जनादेव तत्सिद्धेरसपिण्डा च या-मातुरित्यत्र मातुरुपादानं व्यर्थं स्यात् ।

एवमेव विवेककृतः,—

**मातामहपक्षे तु, "सापिण्ड्यं पाञ्चपौरुषम् ।**
**पञ्चमात्-सप्तमादूर्द्ध्वं मातृतः पितृतः क्रमात् ।**
**सपिण्डता निवर्त्तेत सर्ववर्णेष्वयं विधिः" ॥**

इति हरिनाथोपाध्यायोद्धृतनारदवचनात् ।

"पिण्डनिवृत्तिः सप्तमे पञ्चमे वा" इति हारलताधृतगौतमसूत्रे पञ्चम-इत्यत्रस्यापि मातामहपक्षविषयत्वाच्च, पिण्डनिवृत्तिरित्यत्र सापिण्ड्यनिवृत्ति-रित्याचारमाधवीये पाठः । तदा व्यक्त एवार्थः । एवञ्चादत्त-कन्यानां-पितृपक्षे सापिण्ड्यं साप्तपौरुषम् । मातामहपक्षे पाञ्चपौरुषं सापिण्ड्यञ्च-विवाहमात्रे पूर्वोक्तविष्णुपुराणविष्णुसूत्राभ्याम् ।

"असमानार्षेयां कन्यां वरयेत् पञ्च मातृतः परिहरेत् सप्त पितृतः त्रीन्-मातृतः पञ्च पितृतो वा" ।

इति पैठीनसिवचनैकवाक्यत्वात् त्रीन् पञ्चेत्यासुरादिविवाहविषयं-क्षत्रियादिविवाहविषयञ्चेति विवेककृतः ।

असमानजातीयाविवाहे त्रीनित्यादिव्यवस्थितविकल्पित—इति रत्ना-करादयः । असमानजातीया च मूर्द्धाभिषिक्तादेः । वस्तुतस्तु त्रीनित्यादि-अधिकदोषार्थम् ।

अन्यथा, मातृष्वसृ-पितृष्वसृ-दुहितरो मातुलसुताश्च धर्मतस्ता भगिन्यो-भवन्ति तदा वर्जयेत् । इति पैठीनसिवचनान्तरस्य का गतिः । एवं त्रीन्-मातृत इति प्रमातामहवृद्धप्रमातामहमातृबन्धुपेक्षया सन्ताने बोद्धव्यम् । एवं मातामहापेक्षया मातृष्वसृदुहितृमातुलदुहित्रोस्त्रितयान्तर्गतत्वे पृथङ्-निषेधः प्रमातामहवृद्धप्रमातामहमातृबन्धुसन्तानत्रितयेभ्योऽप्यधिकदोषाय ।

एवं पितृपक्षेऽपि। यस्तु मातृपितृसम्बन्धा आसप्तमादविवाह्याः कन्या भवन्ति।

आपञ्चमादन्येषां मतमिति सुमन्तुवचने मातृकुलेऽप्यासप्तमत्वमुक्तम्। तद्वचनान्तरैकवाक्यतया मातामहादिपञ्चानामेव पञ्चमी अन्यथा नानाश्रुतिकल्पना स्यात्। एवमापञ्चमादिति पैठीनस्युक्त्या त्रीन् मातृतः पञ्च पितृतः,-इत्यस्य समानम्। अत्रापि मातृपक्षे वरं तन्मातरं चादाय गणनया न-विरोधः। एतेनासप्तमादिति पितृपक्षपरम्। आपञ्चमादिति मातृपक्षपरम्।

"सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्"।

इत्यनेकवचनैकवाक्यत्वादिति निरस्तम्। भवन्तीत्यनेन उभयपक्षे स्वमतमभिधायापञ्चमादन्येषामित्यस्य उभयपक्षे परमताभिधानेनैव युक्तत्वात्।

एवञ्च, सुमन्तुवचने मातृकुले सप्तमवर्जनेनान्यवचनोक्तपञ्चमादिवर्जनमातृपदे मातामहलक्षणा स्फुटैव। एतेन जनन्यपेक्षया वा अप्रशस्तानां विपोकपमिति वशिष्ठोक्तानूढकन्या त्रिपुरुषसपिण्डापेक्षया वरापेक्षया वा पैठीनस्युक्तमातृपक्षपञ्चमविवेचनं निरस्तम्।

अतएव याज्ञवल्क्यटीकायां शूलपाणिमहामहोपाध्यायैर्मातामहस्योपर्यधः सपिण्डसन्ततिः पञ्चमी परिहरणीयेत्युक्तम्।

एवं मनुवचने,—चकारादुक्तव्याख्यानेन मातृपितृसगोत्रावर्जनेनैव तत्सपिण्डयोर्निषेधसिद्धेर्यदसपिण्डेति पृथगुक्तं, तत्सपिण्डकन्यापरम्पराजातीयाया अपि पञ्चमीसप्तमीपर्यन्ताया निषेधार्थम्।

अतएव वक्ष्यमाणत्रिगोत्रात्परतो यदीति प्रतिप्रसवः सार्थकः सपिण्डारूपकन्यावर्जने तु व्यर्थः स्यादिति। अत्र केवलपितृमातृशब्दाभ्यां पितृमातृसम्बन्धित्वेन पितृसपिण्डमातामहसपिण्डपितृबन्धुमातृबन्धुपरिग्रहात् तत्सन्ततीनां निषेधः।

बन्धुनिषेधे नारदः,—

"आसप्तमात्-पञ्चमाच्च बन्धुभ्यः पितृमातृतः।
अविवाह्या सगोत्रा च समानप्रवरा तथा॥

सप्तमे पञ्चमे वापि येषां वैवाहिकी क्रिया ।
ते च सन्तानिनः सर्वे पतिताः शूद्रतां गताः" ॥

मातृतः पितृतो बन्धुभ्य इति पञ्चमीविभक्तिर्विनिगमकाभावात् पूर्वापरावधिकार्थो । बान्धवाश्च,—

"पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः" ॥

तत्र पितामहभगिनीपुत्रः पितामहीभगिनीपुत्रः पितामहीभ्रातृपुत्रश्चेति त्रयः पितृबान्धवाः । तथा, मातामहीभगिनीपुत्रो मातामहभगिनीपुत्रो मातामहीभ्रातृपुत्रश्चेति त्रयो मातृबान्धवा भवन्ति ।

अत्र च,—

"जमदग्निर्भरद्वाजो विश्वामित्रात्रिगोतमाः ।
वशिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ।
एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते" ॥

इति स्मृतेः,—

गोत्राणि च तन्नामकगोत्रताभागीनि ।

वंशपरंपराप्रसिद्धमादिपुरुषब्राह्मणरूपं गोत्रं । तत्र काश्यपो गोत्रं यस्य-काश्यपगोत्रः, प्रवरस्तु गोत्रप्रवर्त्तकस्य मुनेर्व्यावर्त्तको मुनिगण इति माधवाचार्य्यः ।

एवञ्च – राजन्यविशां प्रातिस्विकगोत्राभावात् प्रवराभावस्तथापि पुरोहितगोत्रप्रवरौ वेदितव्यौ ।

तथा—यजमानस्यार्षेयान् गोत्रप्रवरान् प्रवृणीतेत्युक्त्वा पौरोहित्यान्-राजन्यविशां प्रवृणीतेत्याश्वलायन इति मिताक्षरा । अतएवासमानार्षगोत्रजामिति ब्राह्मणादिवर्णत्रयविषयमिति सम्बन्धविवेकः । तर्हि शूद्रस्य-श्राद्धादावधिकारश्रुतेः कथं गोत्रोच्चारणमिति चेत् ।

"गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि ।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति" ॥ इति,—

गोभिलीयदर्शनादाकाङ्क्षितत्वेन,—

"शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम्।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टस्य भोजनम्"॥

इति मनुवचने चकारसमुच्चितगोत्रेऽपि वैश्यधर्मातिदेशात् पूर्वपुरुष-पुरोहितगोत्रभागित्वं प्रतीयते। तर्हि न समानगोत्रां समानप्रवरां भार्य्यां-विन्देतेत्यनेन शूद्रस्यापि सगोत्रा कथं न निषिध्यते इति चेदत्रोपदिष्टाति-दिष्टगोत्रस्यैव निषेधो न त्वतिदिष्टशूद्रगोत्रादेः। अन्यथातिदेशे क्षत्रियवैश्य-मात्रोपादानं व्यर्थं स्यादिति न्यायमूलम्। प्रागुक्तमनुशातातपवचने द्विजाति-ग्रहणं सगोत्रावर्जने शूद्रव्यावृत्त्यर्थं सपिण्डसमानोदकता शूद्रेऽप्यविशिष्टा।

अन्यथा,—

"पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतः क्रमात्।
सपिण्डता निवर्त्तेत सर्ववर्णेष्वयं विधिः"॥

इति हरिनाथोपाध्यायधृतनारदवचने चातुर्वर्ण्यसाधारणं वैवाहिक-मापिण्ड्यविवेचनं व्यर्थं स्यात्। बौधायनः,—

"सगोत्रां चेदमत्या उपयच्छेत् मातृवदेनां बिभृयादि"ति। सुमन्तुः,—

"पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत् परित्यज्य चैनां बिभृयात्। इति आचारमाधवीय-मदनपारिजातयोः।

आपस्तम्ब ;—

"समानगोत्रप्रवरां समुद्वाह्योपगम्य च।
तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते"॥

समानप्रवरत्वं संज्ञासंख्ययोरन्यूनानतिरिक्तत्वेन भिन्नगोत्रेऽपि समान-प्रवरत्वम्। यथा, वात्स्यसावर्णिगोत्रयोरौर्व्वच्यवनभार्गवजामदग्न्याप्नुवत्प्रवराः। एकगोत्रेऽपि प्रवरान्यत्वम्।

यथा, घृतकौशिकगोत्रस्य कुशिककौशिकघृतकौशिकाः प्रवराः । कौशिक-कुशिकबन्धुलाश्चेति प्रवराः । अतो गोत्रप्रवरयोः पृथक्निषेध इति सगोत्रा-समानप्रवराग्रहणमविवाह्यस्त्रीमात्रोपलक्षणमिति प्रायश्चित्तविवेकः । इति । तथाचात्र वाजपेयिविचारानुगतकालमारे यथाह गदाधरः,—

विशेषं मनुराह,—

"असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" ॥

दारकर्मणि ( दारत्वजनके विवाहे ) मैथुने ( मिथुनवाच्यस्त्रीपुंससाध्ये-आधानकर्मणि ) न केवलं स्त्रीसाध्यकपाकादिकर्मणि अपि तु उभयसाध्येऽपि-सा प्रशस्तेत्यर्थः । "मिथुनसाध्यधर्मपुत्रोत्पत्तौ" इति कल्पतरुकाराः ।

व्यासो-विशेषान्तरमाह,—

"सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि ।
जन्मनाम्नोरविज्ञानादुद्वहेदविशङ्कितः" ॥

तदसम्भवे याज्ञवल्क्यः,—

"पञ्चमात्-सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा" ।

मातृतो मातृसन्ताने मातामहादिपिण्डेन सपिण्डामपि सप्तमादूर्द्ध्वं उद्वहे-दित्यर्थः ।

तत्राप्यसम्भवे वशिष्ठः,—

"पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा" । इति ।

एतदर्वाङ्निषेधार्थं न पुनस्तत्प्राप्त्यर्थं ॥ इति — विज्ञानेश्वराः ।

कल्पतरौ तु "असमानजातीयकन्याविषयमेतदिति ।" समानवर्ण-मातामहकुलविषयमेतदिति मदनपालः । विमातृसपिण्डेऽपि निषेधमाह-सुमन्तुः । पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलाः तद्दुहितरश्च भगिन्यः-तदपत्याः भागिनेयाः स्युः । ताः संकरकारिण्यस्तत्कन्यां नोद्वहेदिति । सर्वमिदं सम्भवपरं । अत्यन्तासम्भवे तु सुमन्तुः "त्रीनतीत्य मातृतः पञ्चातीता-

पितृतः।" पैठीनसिरपि "त्रीन् मातृतः पञ्च पितृत इति वा" अत्र समानजातीये पञ्च, असमानजातीये त्रीणिति व्यवस्थितो विकल्पः" इति कल्पतरौयद्यप्युक्तं तथापि अस्मद्देशे वृद्धैरत्यन्तासम्भवपरमित्येव लिखितम्। वृद्धानां तु पितृबन्धुमातृबन्धुलक्षणं यथा—आदिपुरुषस्य सगोत्रजत्वेऽपि पितृसन्तानो भवति, अन्यगोत्रजत्वे मातृसन्तानो भवति इति। यत्तु "पितृष्वसुः स्वसुः पुत्राः" इत्यादिकात्यायनोक्तिमुदाहृत्य तिथितत्त्वकारैः पितृबन्ध्वादिलक्षणमुक्तं, तदशौचे क्रियाकर्तुरधिकारे च अस्मद्देशनिबन्धकारैर्लिखितत्वात् न तल्लक्षणमाद्रियते, तत्र आत्मबन्धोरपि उपात्तत्वात्।

काचिदस्मद्देशविरुद्धाऽपि दाक्षिणात्यसंग्रहकारिका,—

"चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमीमपि।
पाराशर्य्यमते षष्ठीं पञ्चमो न तु पञ्चमीं॥
पञ्चमः पञ्चमीं कन्यां नोद्वहेदिति यद्वचः।
पितृपक्षे निषेधोऽयं मातृपक्षे न दूषणम्॥
कूटस्थगणनायान्तु यस्य पङ्क्तौ वरस्य तु।
जनको विद्यमानश्चेत् स पक्षः पितृपक्षकः॥
जननी विद्यमाना चेत् स पक्षो मातृपक्षकः"। इति।

विवाहयेदित्यनुवृत्तौ याज्ञवल्क्यः,—"असमानार्षगोत्रजां "इति ऋषेरिदं आर्षं प्रवर इत्यर्थः। गोत्रं वंशपरंपराप्रसिद्धम्।

आपस्तम्बः,—

"समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च।
तस्यामुत्पाद्य पिण्डादं ब्राह्मण्यादेव हीयते"॥

एवं प्रवरेऽप्येऽपि,—

"परिणीय सगोत्रां च समानप्रवरां तथा।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत्"॥

इति पार्थक्येन परिगणनात् त्यागस्योपभोगस्य, न तस्याः।

"समानप्रवरां कन्यां गोत्रजामथवापिवा ।
विवाहयति यो मूढ़स्तस्य वच्यामि निष्कृतिम् ॥
उत्सृज्य तां ततो भार्य्यां मातृवत्-परिपालयेत्" ।

इति शातातपोक्तेः ।

समानप्रवरस्वरूपमाह ।

"एक एव ऋषिर्यावत्प्रवरेष्वनिवर्त्तते ।
तावत्-समानगोत्रत्वमृते भृग्वङ्गिरोगणात्" ॥

समानगोत्रत्वं समानप्रवरत्वमित्यर्थः ।

भृग्वङ्गिरोगणेषु विशेषमाह संग्रहकारः,—

"पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत्" ॥

तथाच पञ्चार्षेयाणां ऋषित्रयानुवृत्तौ मिथो न विवाहः । त्र्यार्षेयाणां ऋषिद्वयानुवृत्तौ न विवाहः । शेषेष्वेकानुवृत्तौ न विवाह इत्यर्थः ।

"जमदग्निर्भरद्वाजो विश्वामित्रोऽत्रिगौतमौ ।
वशिष्ठः कश्यपोऽगस्त्य एषां येऽप्यनुयायिनः ॥
येषां तुल्यर्षिभूयस्त्वं नोद्वहन्ति मिथस्तु ते ॥

एषामष्टानामेकस्यापि येषु प्रवरेष्वनुवर्त्तनं तेषां मिथो न विवाहः स्फुट एव ।

कश्यपः,—

"अनेकेभ्योऽपि दत्तायामनूढायां च यत्र वै ।
वरागमश्च सर्वेषां लभेतादिवरस्तु तां ॥
पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः ।
तथा गच्छेयुरूढायां दत्तं पूर्ववरो हरेत्" ॥

अनेकेभ्यो धनग्रहणपूर्वकं दातुं यत्र बहूनां वराणां आगमनं, तत्रादिवरः- तां कन्यां लभेत, अन्ये तु पूर्वदत्तमूल्यं लभेरन्नित्यर्थ—इति ।

विद्याकरवाजपेयिकृतनित्याचारपद्धतौ गदाधरापेक्षया लक्ष्यते यो विशेषः-प्रकाश्यते सोऽधः।

यथा नित्याचारपद्धतौ, विद्याकरः,—

यत्तु,-"पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा"॥ इति।

यच्च,-त्रीनतीत्य मातृतः पञ्चातीत्य पितृत इति,-तदत्यन्तासम्भवपरं।

कल्पतरौ असमानजातीयकन्याविषयमित्युक्तं।

"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवरां चैव गत्वा चान्द्रायणं चरेत्"॥ इति।

मातृगोत्रजापि निषिद्धा। तत्र,—

"सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्म्मणि।
जन्मनाम्नोरविज्ञानादुद्वहेदविशङ्कितः"॥

तथा पितुरेवमिदं। गोत्रभेदेऽपि प्रवरैक्यं भवतीति पृथक् प्रवरैक्यनिषेधः। तत्र,—

"जमदग्निर्भरद्वाजोविश्वामित्रोऽत्रिगौतमौ।
वशिष्ठः कश्यपोऽगस्त्य एषां येष्वनुवर्त्तनम्॥
येषां तुल्यर्षिभूयस्त्वं नोद्वहन्ति मिथस्ततः"।

एषामष्टानामेकस्यापि येषु प्रवरेष्वनुवर्त्तनं साम्यं, येषां प्रवराणां त्र्यार्षेयाणां-द्वयोः पञ्चार्षेयाणामैक्यं तत्राविवाहः स्फुट एव। इति।

तथाच चतुर्विंशतिसंग्रहेऽस्मिन् विषये, तथाच नारदः,—

"मातृतः पञ्चमादूर्द्ध्वं पितृतः सप्तमात्तथा।
गृहस्थ उद्वहेत्-कन्यामन्यथा गुरुतल्पगः"॥ इति।

यत्तु विष्णुपुराणे,—

"पञ्चमीं मातृपक्षात्तु पितृपक्षात्तु सप्तमीम्।
गृहस्थ-उद्वहेत्-कन्यां न्यायेन विधिना नृपेति"॥

तत्र सप्तमीं पञ्चमीमतीत्येत्यध्याहार्य्यं।

अन्यथा, -

"पञ्चमात्सप्तमादूर्द्धं मातृतः पितृतस्तथा"।

इति याज्ञवल्क्यवचनविरोधात्।

"सप्तमे पञ्चमे चैव येषां वैवाहिका क्रिया।
क्रियापरा अपि हि ते सर्वेत्राशुद्धतां गताः"॥

इति मरीचिवचनविरोधाच्च,—

यत्तु पैठीनसिनोक्तं,-"पञ्चमीं मातृतः परिहरेत् सप्तमीं पितृतः, त्रीन्-मातृतः पञ्च पितृतो वेति"। तत्राद्यः पक्षस्तावदविरुद्ध एव। त्रीन् मातृत-इत्यादि द्वितीयपक्षस्तु अर्वाक्निषेधपर इति विज्ञानेश्वरः। माधवस्त्वाह-अनुकल्पोऽयमिति। युक्तश्चैतत्, चतुर्विंशतिमतस्वरसात्।

तथा मूलं,—

"समावर्त्य सवर्णां तु लक्षण्यां स्त्रियमुद्वहेत्।
कुले महति सम्भूतां लक्षणैश्च समन्विताम्॥
ब्राह्मेण तु विवाहेन शीलरूपसमन्विताम्।
पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा॥
दशभिः पुरुषैः ख्यातं श्रोत्रियाणां महाकुलात्।
उद्वहेत्सप्तमादूर्द्ध्वं तदभावे तु सप्तमीं॥
पञ्चमीं तदभावे तु पितृपक्षेऽप्ययम्विधिः।
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च॥
एवमुद्वाहयेत्-कन्यां न दोषः शाकटायनः।
तृतीयाम्बा चतुर्थीम्बा पक्षयोरुभयोरपि॥
विवाहयेन्मनुः प्राह पाराशर्य्योऽङ्गिरा यमः।
असपिण्डा च या मातुरसगोत्रा च या पितुः॥

सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने।
यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत्॥
नित्यं संव्यवहार्य्यः स्याद्वेदाच्चैतत्-प्रदृश्यते"॥

इति स्मृतिचन्द्रिकायां प्रयोगपारिजाते च।

षट्त्रिंशन्मते,—

"तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा।
विवाहयेन्मनुः प्राह पाराशर्य्योऽङ्गिरा यमः"॥ इति।

अत्र हि तदभावेत्युक्त्वा अनुकल्पत्वं स्फुटीकृतम्। असपिण्डा चेति श्लोके-पितुरसगोत्रा चेति चकारेणाऽसपिण्डेऽत्यनुकृष्यते। सा प्रशस्तेत्यनेन च पूर्वोक्तानामनुकल्पत्वमेव स्फुटीक्रियते। यस्त्वित्यादिश्लोकेन तु तृतीयादिविवाहो-देशाचारकुलाचाराभ्यां व्यवस्थित इति प्रतिपाद्यते। वेदाच्चैतदिति वाक्यशेष-स्यायमर्थः। उक्तव्यवस्था तृतीयादीनां परिणेयता च वेदे प्रसिद्धेति। तथाच,-व्यवस्थापरा श्रुतिः,—"तेन स्वाध्वन्ते वत नरु नो अधिवोचत, मानः पथः-पित्र्यान्मानवादधिदूरं नैष्ट परावत!।" इति पित्र्यात् पितुरागता पथो दूरं-नोऽस्मान् मा नैष्ट मा नयेति वेदान् प्रति प्रार्थना। वेदाच्चेति चकारेण-स्मृतिस्थां व्यवस्थां समुच्चिनोति।

तथाच मनुः,-

"येनास्य पितरो याता" इत्यादि।

शातातपोऽपि,—

"मातृष्वसृ-सुतां केचित्पितृष्वसृ-सुतां तथा।
विवहन्ति क्वचिद्देशे सङ्कोच्यापि सपिण्डताम्"॥ इति।

बृहस्पतिश्च,—

"उदृह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।
मत्स्यादाश्च नराः पूर्वं व्यभिचाररताः स्त्रियः॥

उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वला: ।

सजातास्यापि गृह्णन्ति भ्रातृभार्य्यां सभर्त्तृकाम् ॥

सर्वदेशेष्वनाचारो रथ्याताम्बूलचर्वणम्" । इति ।

तस्मात्कलौ पितृत: सप्तमात् मातृत: पञ्चमाच्चोर्ध्वं विवाह: प्रशस्त इति-सिद्धम् । इति ।

विषयेऽस्मिन् कमलाकरभट्टविवेचनं यथा निर्णयसिन्धौ—

यथा मनु: —

"असपिण्डा च या मातुरसगोत्रा च या पितु: ।

सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" ॥

दत्तिमसमातुर्गृहीता असपिण्डा सगोत्रा तत्कुलनिवृत्तये चकारान्मातु-रसगोत्रा । दत्तस्य पितुर्जनककुले पितुरसगोत्रापि सपिण्डत्वान्निषिद्धेत्यन्य-श्चकार: । असपिण्डां सापिण्ड्यरहिताम् । तच्चैकशरीरावयवान्वयेन-भवति । एकस्य पितुर्मातुर्वा शरीरस्यावयवा: पुत्रपौत्रादिषु साक्षात्परम्परया-वा शुक्रशोणितादिरूपेणानुस्यूता: । यद्यपि पत्न्या: पत्न्या सह भ्रातृपत्नीनां च-परस्परं नैतत्सम्भवति । तथापि आधारत्वेनैकशरीरावयवान्वयोऽस्त्येव । "अस्थिभिरस्थीनि" इति मन्त्रलिङ्गात् एकस्य हि पितृशरीरस्यावयवा:-पुत्रद्वारा तास्वाहिता इति मदनरत्नपारिजातविज्ञानेश्वरादय: । वाचस्पति-शुद्धिविवेकशूलपाण्यादिगौड़मैथिलादयोऽप्येवं । श्रुतावपि,-"एतत् षट्कौशिकं-त्रीणि पितृतस्त्रीणि मातृतोऽस्थिस्नायुमज्जान: पितृतस्त्वङ्मांसरुधिराणि-मातृत इति । "प्रजामनुप्रजायसे" च । चन्द्रिकापरार्कमेधातिथिमाधवादयस्तु-एकपिण्डदानक्रियान्वयित्वं सापिण्ड्यं ।—

"लेपभाजश्चतुर्थाद्या: पित्राद्या: पिण्डभागिन: ।

पिण्डद: सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्"॥—इति—

मात्स्योक्ते: । न च पितृव्यादिष्वेतन्नास्तीति वाच्यम ।

तत्कर्तृकश्राद्धे दैवतैक्येन तत्सत्वात् । देवदत्तकर्तृकश्राद्धे सहाधिकारित्वेन तदन्वयात् ।

"एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके" । इति स्मृतेश्च ।

श्रुतीनाञ्च वैराग्यार्थत्वात्तस्य सापिण्ड्यनिमित्तत्वे मानाभावात् । न च मातुलादिष्वेतन्नास्तीति वाच्यम् । मातामहरूपदेवतैक्यात् । ननु गुरुशिष्यादेरपि श्राद्धदेवतात्वात्सपिण्डत्वं स्यात् । किं बहुना, "सर्वाभावे तु नृपतिः कारयेत्तस्य रिक्थतः" । इति मार्कण्डेयपुराणाद्राज्ञोऽपि श्राद्धकर्तृत्वात्सापिण्ड्यप्रसङ्गः, सत्यं,

"पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा" । इति—

याज्ञवल्क्यवचनेन मातृपितृसम्बन्ध एव तत्सत्वात् । ऊर्द्ध्वं सापिण्ड्यं निवर्त्तत इति शेषः । ननु पञ्चमत्वाद्यत्र नियम्यते, न मातृत इत्यादिवाक्यभेदात् । मातृकुले पञ्चमत्वस्य पितृकुले सप्तमत्वस्य च बोधनेतुल्यत्वात् । पौरुषेयत्वाददोष इति चेत् तुल्यमन्यत्रापि । अन्यकर्तृके राज्ञस्तत्पितॄणां वा देवतात्वाभावाच्च ।

किञ्च अवयवान्वयपक्षे यथा योगरूढ्या परिहारस्तथेहापि । तेनैकस्य पित्रादयः षट् सपिण्डा भवन्ति । अत्र केचिदुभयतः सापिण्ड्यनिवृत्तौ विवोढाव्योनान्यथेत्याहुः, शुद्धिचिन्तामणि-वाचस्पतिहरदत्तादयस्तु सगोत्रत्ववत्सापिण्ड्यस्य सप्रतियोगिकत्वेन संयोगवदुभयनिरूप्यत्वात् । एकतो निवृत्तावन्यतोनिवृत्तावश्यकत्वान्मूलपुरुषमारभ्याष्टमो वरो मूलपुरुषमारभ्य द्वितीयातृतीयादिकां कन्यामुद्वहेदित्याहुः । शिष्टास्तु न वधूवरयोः स्वतः सापिण्ड्यम् । किन्तु कूटस्थसन्ततित्वात्तत्सापिण्ड्येनैव, अतोऽष्टमवरं प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात्तत्सन्ततिस्थत्वाद्वरस्तां प्रति सपिण्ड एवेत्यविवाहः । सापिण्ड्यासापिण्ड्ययोः प्रतियोगिभेदेनाविरोधादित्याहुः, इदमेव च युक्तम् । अग्रेऽप्येवं सापिण्ड्यं ज्ञेयम् । यत्र तु मध्ये विच्छिन्नमपि सापिण्ड्यं सगङ्गकप्रतिवत्पुनरनुवर्त्तते । यथा कूटस्थात्पञ्चम्योः कन्ययोः-पुत्रौ तत्र निवृत्तिः । तदपत्ययोस्त्वनुवृत्तिस्तत्रापि न सापिण्ड्यासापिण्ड्ययो-

दोष: सम्बन्धिभेदात्। तेन तत्र न विवाह:। अत्र कूटस्थमारभ्य-गणना कार्य्या।

तदुक्तम्,—

"बध्वा वरस्य वा तात: कूटस्थाद्यदि सप्तम:।
पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्त्तते"॥ इति।

कूटस्थो मूलपुरुष:।

विश्वरूपनिबन्धे —

"एवमुक्तप्रकारेण पितृबन्धुषु सप्तमात्।
ऊर्द्ध्वमेव विवाह्यत्वं पञ्चमान्मातृबन्धुत:॥
सन्तानो भिद्यते यस्मात्-पूर्व्वजादुभयत्र च।
तमादाय गणेद्धीमान् वरं यावच्च कन्यकाम्"॥

स्मृतितत्त्वे नारद:,—

"आसप्तमात्पञ्चमाच्च बन्धुभ्य: पितृमातृत:।
अविवाह्या सगोत्रा च समानप्रवरा तथा"॥

अत्र बन्धुभ्य—इति पञ्चमीनिर्द्देशात्पितु: पितृष्वसृपुत्रात् सप्तमीं, मातु:-पितृष्वसृपुत्राच्च पञ्चमीमपि त्यजेत्, एवमन्यबन्धुषु ज्ञेयं। तत्रापि त्रिगोत्रात्यये-ऽर्व्वागपि विवाहं कुर्य्यात्। वक्ष्यमाणवचनात्। त्रिगोत्रगणना च मातामहगोत्रा-पेक्षया न तु स्वापेक्षया अन्यथा पितु: पितामहदुहितु: दौहित्रीपुत्री परिणेया-स्यात्। बध्वा: मातामहापेक्षया तु गोत्रान्तर्गतेन विवाहप्रसङ्ग—इति। सम्बन्धतत्त्वादयो गौड़ग्रन्था:। सम्बन्धविवेके शूलपाणिरप्याह।

पञ्चमात्सप्तमाच्चार्व्वागपि त्रिगोत्रान्तरिता विवाह्या।

"असम्बन्धा भवेन्मातु: पिण्डेनैवोदकेन वा।
सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या"॥ इति।

इत्यमनूक्तेः ।

"सन्निकर्षेऽपि कर्त्तव्यं त्रिगोत्रात्परतो यदि",

इति देवलोक्तेश्चेति ।

एतच्च दाक्षिणात्या न मन्यन्ते ।

यत्तु वशिष्ठः,—

"पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा" ।

इति च विष्णुपुराणं ।

"पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ।

गृहस्थ उद्वहेत्-कन्यां न्यायेन विधिना नृप !" ॥ इति ।

तत्पञ्चमीं सप्तमीमतीत्येति व्याख्येयं ।

"पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ॥

क्रियापरा अपि हि ते पतिताः शूद्रतां गताः" ।

इत्यपरार्के—मरीचिवचनात् ।

हारलतायां शङ्खलिखितौ,—

"सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।

पिण्डश्चोदकदानञ्च अशौचं च तदानुगम्" ॥

गोत्रं सन्तानं अशौचं तानभिव्याप्य गच्छतीत्यर्थः ।

शुद्धिविवेके शुद्धिचिन्तामणौ च ब्राह्मे,—

"सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी ।

सपिण्डता ततः पश्चात्-समानोदकधर्मता ॥

ततः कालवशात्तत्र विस्मृतौ नामगोत्रतः

"समानोदकसंज्ञा तु तावन्मात्रापि नश्यति ।

अविभक्तधनास्त्वेते सपिण्डाः परिकीर्त्तिताः" ॥

तेन विवाहे अशौचे धनग्रहणे च त्रिधा सापिण्ड्यं सिद्धम्।

यत्तु "पञ्चमीं मातृतः परिहरेत् सप्तमीं पितृतस्त्रीन्मातृतः पञ्च पितृतो वा"।

इति पैठीनसिस्मृतौ त्रीनित्यनुकल्पः। इति माधवोक्तेः।

"पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा।
दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात्॥
उद्वहेत्-सप्तमादूर्द्ध्वं तदभावे तु सप्तमीं।
पञ्चमीं तदभावेऽपि पितृपक्षेऽप्ययं विधिः॥
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च।
एवमुद्वाहयेत्-कन्यां न दोषः शाकटायनः॥
तृतीयां वा चतुर्थीं वाप्यनयोरुभयोरपि।
विवाहयेन्मनुः प्राह पराशर्य्योऽङ्गिरा यमः॥
यस्तु देशानुसारेण कुलमार्गेण चोद्वहेत्।
नित्यं स व्यवहार्य्यः स्याद्वेदाच्चैतत्-प्रदृश्यते"॥

इति चतुर्विंशतिमतात्।

"चतुर्थीमुद्वहेत्-कन्यां चतुर्थः पञ्चमोऽपि वा"।

इति पराशरोक्तेश्चानुकल्पत्वेनापदि पञ्चम्यादिपरिणयनं कार्य्यमिति प्रतीयते। अत्र हि तदभावे इति स्पष्टमेवानुकल्पत्वमुक्तम्। तत्र यथा श्रुतं ज्ञेयम्। पूर्वोक्तमरीचिवचनविरोधात्। वस्तुनि विकल्पासम्भवात्।

"पञ्चमात् सप्तमाद्धीमान् यः कन्यामुद्वहेद्-द्विजः।
गुरुतल्पी स विज्ञेयः सगोत्राञ्चैवमुद्वहन्"॥

इति विष्णूक्तेः। पराशरस्य मूलाभावाच्च। तस्मान्मदनपारिजाताद्युक्त-दिशा दत्तकसापत्नसम्बन्धाद्यनुप्रवेशे ब्राह्मणादीनां क्षत्रियादिसपिण्डविषये वा-पूर्वोक्तानि नेयानि न त्वनुकल्प इति भ्रमितव्यम्।

हृद्दश्यातिरपि,--

"उद्ह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।

मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः।

उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः"॥

इत्यनाचारत्वमाह। अतएव हेमाद्रौ माध्ये,–

कर्णाटिकादीनां तत्कारिणां श्राद्धे निषेधः।

वोपदेवेनापि लिखितं श्राद्धं,—

"यत्र मातुलजोद्वाही यत्र वै वृषलीपतिः।

श्राद्धं न गच्छेत्तद्विप्राः कृतं यच्च निरामिषम्"।

इति तस्मान्मातृतः पञ्च पितृतः सप्त त्यक्त्वोद्वहेदिति सिद्धम्। इति,—

विज्ञायते विषयेऽस्मिन्नयमेवाभिप्रायो निबन्धकर्तृणां निरुक्तविचारतो यत्,— विवाहनिषेधे सगोत्रायाः समानप्रवरायाश्चैतेषां न लक्ष्यते पार्थक्यम्-केवलं परिदृश्यते वक्ष्यमाणविषया मतभेदश्चैषाम्। कन्यायाः सपिण्डत्व-विवेचने यथा भारतीयदाक्षिणात्यप्रदेशे। "त्रीनतीत्य मातृत इत्यादि-वचनजातस्य कतिपयस्याभिप्रेयार्थानुसारेण मातुलकन्योपयमव्यवहारस्य-प्रदीयते परिचयस्तत्प्रदेशीयसंग्रहकारैः। किन्तु भारतीयप्राच्यादिप्रदेश-त्रयाभ्यन्तरे सकलानामेतेषां वाक्यानां परिहृत्य परस्परविरोधं "त्रीनतीत्य-मातृतः" इत्यादिकियत्परिमितवाक्यमनुलोमजातिविषयकमिति स्थिरीकृतं-तत्तत्प्रदेशीयनिबन्धकर्तृभिः कैश्चित्। तयोऽनुलोमजैस्त्याज्या इति प्रमाणा-श्रयणात्। अन्ये तु वचनव्रातस्यैतस्य प्रदत्त्यवकाशमत्यन्तासम्भवविषये,-तादृशासम्भवस्य सत्यपि सर्वत्रासत्त्वे सम्भवपरत्वात् कुत्र कुत्रापि। तथाप्ये-तन्मतद्वयान्तराले कैश्चिदनुलोमजातिमन्तरा द्विजातित्रये मातृपक्षतः पञ्च-पुरुषात्मकं तथा पितृपक्षतः सप्तपुरुषावधिकं सापिण्ड्यम्। तथान्यैस्तु-ब्राह्मणादिसकलजातिषु केवलमत्यन्तासम्भवपक्षमपहायोभयत्र पूर्ववत्सापिण्ड्य-निर्णीयोपयमार्हत्वं कन्याया राद्धान्तितम्।

अपरे च प्रामाणिकानां सर्वेषामार्षवाक्यानामेकवाक्यतास्थापनार्थं मातृपक्षतः तन्मातामहादारभ्य गणनयैषां प्रतिपादयन्त्येकवाक्यतामेषाम्। मुख्यार्थासम्भव-लक्षणाख्यवृत्तेः सर्वत्राश्रयणीयत्वात् कथमेकवाक्यतेत्याशङ्कायांस्वयं; स्वमाता त्रीनतीत्येत्यादिवाक्यस्थत्रिशब्देन तन्मातामहादिपुरुषत्रयग्रहणमेवं पञ्चपुरुषसंख्यकं सापिण्ड्यं मातृपक्षे, तथा स्वं, स्वपिता पञ्चातीत्यपितृतः इत्यादिवाक्यस्थपञ्चशब्दद्वारेण तत्पितामहादिपुरुषपञ्चकादानमेवंसप्तपुरुषावधिकं सापिण्ड्यं च तैः सिद्धान्तितं पितृपक्षे। तत्परं विवाहयोग्यत्वञ्च कन्यायाः। किन्त्वत्र परामृश्यतेऽस्माभिरेतत्। यथा विभिन्नप्रादेशिकाचारव्यवहारजालमवलोक्यैव महर्षयो भिन्नभिन्नाचारव्यवहारमूलकानि उल्लिलिखुः प्रमाणानि पार्थक्येनादितः। विभिन्नप्रादेशिकाचारव्यवहारावेदकानां भिन्नभिन्नप्रमाणानामेकार्थतामनुष्ठातुमेतादृक्क्लिष्टकल्पमानुसरणं नो युक्तिसहमित्यवबुध्यतेऽस्माभिः। यद्यपि सर्वेषां प्रमाणानामेतेषां सकलप्रदेशीयहिन्दुमात्रस्य भवेन्महर्षिकृतत्वान्माननीयत्वं तथापि"त्रीनतीत्यमातृतः" इत्यादिवचनस्य कतिपयस्यैकवाक्यतास्थापने विशेषक्लेशमन्तराऽस्य वचनव्रातस्यात्यन्तासम्भवविषयत्वमवलम्बितव्यम्। क्वचित्क्वचित् सुलभत्वादत्यन्तासम्भवस्य न त्वनुलोमजातिविषयकत्वम्। तद्विषये प्रमाणान्तरस्य विद्यमानत्वात्। सत्येव सिद्धान्ते न संघटेतकोऽप्यपराधः।

अपिच—मातुलकन्योपयमनमतीव समीचीनं दाक्षिणात्यशिष्टव्यवहृतत्वादिति नोच्यतेऽस्माभिः। किन्तु भारतीयसकलनिबन्धकर्त्त्रनुमोदिततयामातृपक्षतः पञ्चपुरुषात्मिकया तथा पितृपक्षतः सप्तपुरुषावधिकयासापिण्ड्यव्यवस्थया तदधिकदशपुरुषं सत्योक्तितया भवेदुत्तमफलोपधायकःसापिण्ड्यनिर्णयः। न भवेत् क्वापि विप्रतिपत्तिः केषामप्यत्रसन्देहाभावात्।

कैश्चिदपि धर्मशास्त्रकारैस्तथा प्रतिपादितत्वादस्येत्यस्माकं मतम्। तथाविज्ञानमूलकं सगोत्रादिविवाहनिषेधनमेवेति शारीरिकविज्ञानबोधकचरकसुश्रुतादिवैद्यकग्रन्थैरुद्घोष्यते सततमुच्चैःस्वरेण।

यथा, चरकसंहिताया द्वितीयाध्याये शारीरस्थानीयप्रमाणानि ।

अथातोऽतुल्यगोत्रीयं शारीरं व्याख्यास्यामः । इत्याह भगवानात्रेयः ।

"अतुल्यगोत्रस्य रजःक्षयान्ते रहो विसृष्टं मिथुनीकृतस्य ।
किं स्याच्चतुष्पात्प्रभवञ्च षड्भ्यो-यत्-स्त्रीषु गर्भत्वमुपैति पुंसः ॥
शुक्लं तदस्य प्रवदन्ति धीरा यद्धीयते गर्भसमुद्भवाय ।
वाय्वग्निभूम्यब्गुणपादवत्तत्-षड्भ्यो रसेभ्यः प्रभवञ्च तस्य" ॥

यथाह चक्रपाणिदत्तनामैतस्य टीकाकारः । "पूर्वाध्याये शरीरस्यादिसर्ग" आध्यात्मिकनैष्ठिकमोक्षरूपचिकित्सायुक्त उक्तः । संप्रति गर्भादिसर्गमभिधातुमतुल्यगोत्रीयोऽभिधीयते । अतुल्यगोत्रस्येति स्त्रिय-अतुल्यगोत्रस्य-पुंसः तुल्यगोत्रीयके हि मैथुने दोषो भवति । विज्ञानशास्त्रेषु निषिद्धत्वात् । रजःक्षयान्ते इति रजःप्रवृत्त्यन्ते अन्ते-इति पदेन रजःप्रवृत्तित्वं निषेधयति । रहो विसृष्टमिति विजने विसृष्टम् । शुक्रविसृष्टिश्च विजन एव प्रतिबन्धकलज्जाऽभावात् सम्यग्भवतीति । रह इत्यनेन दर्शयति । विपरीतसुरतादींश्च निषेधयति । चतुष्पात् षट्प्रभवत्वे उत्तरग्रन्थे व्यक्तेः ; अयञ्च शिष्यप्रश्नतयानिवेशितो ग्रन्थः । अत्रशिष्यार्थाचार्य्यसम्मतिमात्रार्थो ज्ञेयः । तेन यः-शिष्यश्चतुष्पदां विशेषं जानाति, स कथं शुक्रं शब्दाभिधेयं वेत्तीति न वाच्यम् । प्रश्नस्योत्तरं शुक्रमित्यादि, धीयत आरोप्यत इत्यर्थः । वाय्वादिपादवतिवक्तव्ये यद्गुणपदमधिकं करोति, तेन प्रशस्तगुणवतामेव वाय्वादीनां विशुद्धशुक्रारम्भकत्वमिति दर्शयति । वाय्वादिशुक्रारम्भकेषु पादव्यपदेशेन सर्वेषांतुल्यशुक्रारम्भकत्वं दर्शयति । आकाशन्तु यद्यपि शुक्रे पाञ्चभौतिकेऽस्तितथापि न पुरुषशरीरान्निर्गत्य गर्भाशयं गच्छति । किन्तु भूतचतुष्टयमेवक्रियावत् याति, आकाशन्तु व्यापकमेव । तत्रागतेन शुक्रेण सम्बन्धं भवति ;-तेन आकाशस्य गमनाभावादिह गर्भाशयगमनाभिधानप्रस्तावे शुक्रगतत्वे-नाभिधानं । अन्यत्रापि च भूतानां गमनप्रस्तावे आकाशं परित्यक्तमेवयथा ; "भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात्" । इति शुक्रंच षड्रसाहारोत्पन्नमेव विशुद्धं भवतीति कृत्वोक्तं । षड्भ्यो रसेभ्य इत्यादि ।

यत्तु "मधुरस्य शुक्रजनकत्वमम्लादीनां च शुक्रविघातकत्वमुच्यते तदल्प-र्थोपयोगादिति ज्ञेयम्"। नाभविष्यच्चेद्विज्ञानसम्मतं सगोत्रादिविवेचनं तत्कथम-गच्छाच्छारीरिकविज्ञानशास्त्रमेतद्विषयं अतो नूनमेतद्विज्ञानमूलकमिति-राद्धान्तः। गतमेतच्छारीरिकतद्विज्ञानशास्त्रीयप्रमाणविषयकविवरणम्। सम्प्रति लोके दृष्टफलकेन कृषिविज्ञानेन कथमेवोपलक्षणविधया समर्थितव्य-मेतत्। तद्दृश्यतां तावत्। कस्मिन्नपि केदारे विनापि गोमयादिसारं निक्षिप्य-ते बीजजालं चेत् प्रतिवर्षं, तदा तत्-क्षेत्रस्य फलोत्पादिका शक्तिः परिक्षीयते-क्रमशो दैनन्दिनम्। तत्केदारस्य सारादिमत्तरा सन्ततबीजवपनेन निः-सारत्वात्। अतस्तत्केदारस्य सारवत्तासहकारेण वर्द्धयितुं तच्छक्तिं सबल-भूम्यन्तराम्मृत्तिकां तथा गोमयादिसारं च संयोजयन्त्यत्र कृषीवलाः। रीत्या-नया सारहीनस्य केदारस्य प्रचुरफलोपधायिका शक्तिश्चक्षुर्गोचरा भवति सर्वेषां-सर्वत्र। तथा विनाशोन्मुखस्य चूतादितरुजातस्यातीवोत्कृष्टफलोत्पादकस्य-बहुसम्वत्सरावस्थायित्वाशया क्रियेत चेत्संयोजनं तत्तद्वृक्षान्तरीयसबलशाखया,-तदा तदवलम्बनेन तत्तन्निःसारस्कन्धजातं वर्द्धितं सबलञ्चसत् पूर्वानुरूपं समुत्-पादयति प्रचुरफलमनिशं प्रत्यक्षसिद्धम्। तथैव साकं निःसाररक्तेन ससार-वीर्य्यस्य बलशून्यवीर्य्येण समं सबलशोणितस्य च सति संयोगे तद्रक्तमिश्रित-वीर्य्यं तद्वीर्य्यसम्मीलितशोणितं च सबलं सुशीलं वंशवर्द्धकं सुबुद्धिमदपत्यं-जनयतीति वैज्ञानिकप्रसिद्धिः।

तथा चैतत्समर्थयति चरकसंहितायां भगवानात्रेयः,—शारीरस्थानीय-षष्ठाध्याये "बलवृद्धिकरास्त्विमे भावा भवन्ति" तद्यथा बलवत्पुरुषदेशे-जन्म बलवत्पुरुषे काले च, सुखश्च कालयोगो बीजक्षेत्रगुणसंपच्चाहारसंपच्च-शरीरसंपच्च सात्म्यसम्पच्च सत्त्वसम्पच्च, स्वभावसंसिद्धिश्च यौवनञ्च कर्म हर्षश्चेति।

तथा तट्टीकाकारः। "वृद्धिप्रस्तावाच्च बलवृद्धिकरान् भावानाह।

बलेत्यादि—देशमहिम्ना बलवन्तः पुरुषा यस्मिन् हेमन्ते शिशिरे वा-काले जायमानस्य बलं जनयति सुखश्च कालयोग इति साधारणकालयोगः-बीजस्य शुक्रस्य तथा क्षेत्रार्त्तवगर्भाशयरूपस्य गुणानां प्रशस्तधर्माणां सम्पत्-बीजक्षेत्रगुणसम्पत्, अत्र बीजक्षेत्रयोर्निर्दोषतापि सम्पत् स्यात्। तेन निर्दो-

षातिरिक्तस्य सारत्वादिवीजचेत्रगुणप्राप्त्यर्थम् गुणग्रहणं श्रेयं", वचनं हि- "शारीरं ह्यपि सत्त्वमनुविधीयते"।

स्वभावसंसिद्धिर्बलजनककर्मसंसिद्धिः। कर्म व्यायामादिकमित्यर्थः। व्यायामादिकर्माभ्यासान्निजं बलं भवति।

अतएव सगोत्रायाः सपिण्डायाः सप्रवरायाश्च कन्याया निषेधितो यो- विवाहो धर्मशास्त्रकारैः, सोऽतीव सुसङ्गतः।

नात्र सन्देहो विरोधादर्शनात्। न च भारतेऽस्मिन्नाविर्भूतस्य भगवतः- श्रीकृष्णदेवस्य तथा तदंशीयस्यार्जुनादेश्च मातुलादिकन्योपयमानुष्ठानस्य- निरुक्तापत्यजनकत्वपरिदर्शनात् कथमेतदाचरणं दोषाधायकमिति प्रतिपादितं- धर्मशास्त्रकारैरिति वाच्यम्। तेजीयस्त्वात्तेषामैश्वरिकशक्तिशालित्वाच्च कश्चो- कुर्वन्ति धर्मशास्त्राणि। विवेचनमेतद्यथा वीरमित्रोदये।

तथाच गौतमः—

"दृष्टो धर्मव्यतिक्रमः" "साहसं महतामिति"। न च तैः कृतं इत्यस्मदा- दिभिरपि कर्त्तव्यम्। तत्रापि हेतुमाह स एव। अवरदौर्बल्यादिति अवरेषा- मस्मदादीनां दुर्बलत्वात्।

तथाच श्रूयते,—

"तेषां तेजोविशेषेण प्रत्यवायो न विद्यते।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः"॥ इति।

"अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितं।
नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत्"॥ इति।

भागवतेऽपि,—

"तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा"।

इत्यलं बाहुल्येन। इति सगोत्रादिनिर्णयः।

अथेदानीमावश्यकत्वं विविच्यते स्त्रीशिक्षायाः। असगोत्राद्यसपिण्डास्त-

विशेषणत्रयस्य कन्यायाः समाप्ते सत्यपि विवेचने संप्रत्युत्कृष्टायाभिरूपाय-वराय सदृशाय, चेति ।

तथा,—

"त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती ।
ऊर्द्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम्" ॥

इति मानवीयवचनद्वये "सदृशाय सदृशं इति वरीयविशेषणद्वितयस्याव-लोकनेन तथा "गृहस्थसदृशीं भार्य्यां विन्देतानन्यपूर्व्विकाम्" ।

इति गौतमीयवचनस्थसदृशीमिति कन्याविशेषणपदस्य परिदर्शनेन च-कस्यापि सादृश्यविशेषस्य पृथगुल्लेखादर्शनात् सूचितमुभयोः परस्परसादृश्यं-सर्व्वांशतः । तथा सति वेदानधीत्यादिमानवीयवचनबलात् सत्यपि वरस्य-सिद्धे शास्त्राध्ययने सुतरां कन्याया विद्याध्येतृत्वं सुसिद्धमेव तत्सादृश्येन । तच्च शास्त्रसम्मतमेव ।

प्रमाणं यथा महानिर्व्वाणतन्त्रे,—

"कन्याप्येवं पालनीया शिक्षणीयातिप्रयत्नतः ।
देया वराय विदुषे धनधान्यसमन्विता" ॥ इति ।

तथा प्रमाणानि यथा हेमाद्रावपि,—

"कुमारीं शिक्षयेद्विद्यां धर्म्मनीतौ निवेशयेत् ।
द्वयोः कल्याणदा प्रोक्ता या विद्यामधिगच्छति ॥
ततो वराय विदुषे देया कन्या मनीषिभिः ।
एष सनातनः पन्था ऋषिभिः परिगीयते ॥
अज्ञातपतिमर्य्यादामज्ञातपतिसेवनाम् ।
नोद्वाहयेत्-पिता कन्यामज्ञातधर्म्मशासनाम्" ॥ इत्यादि—

प्रमाणव्रातपर्य्यवेक्षणात् स्त्रीणां विद्याध्ययनं पूर्व्वतः प्रचलितं भारते निर्व्विवादम् । न च शास्त्रतः शिक्षिताङ्गनानां नामपरिदर्शनाभावात्-

कन्याप्येवं शिक्षणीयेत्यादिमहर्षिवचनजालस्य केवलमाज्ञापादकत्वमिति-वाच्यम्। गार्ग्यात्रेयीविश्ववाराप्रभृतीनामधीतवेदान्तादिशास्त्राणां नारीणां-शास्त्रेषु नामपरिदर्शनात् तथा ऋग्वेदसंहितायां विश्ववारादिसङ्कलितमन्त्र-जातस्य चक्षुर्विषयत्वाच्च।

ननु विद्याशिक्षामन्तरा समाजसंगठनवैषयिकाध्यात्मिकज्ञानोपार्जनचरित-संशोधनपरिवारपोषणादिकार्य्याणामसम्भवात्तत्तदनुष्ठानस्य पुरुषाधीनतया-पुरुषकर्त्तृकविद्याध्ययनस्यावश्यकत्वात् कथं स्त्रीणामापादितं विद्याध्ययनं-पूज्यपादैर्महर्षिभिः साग्रहं निष्प्रयोजनत्वादिति चेन्न, साक्षाद्वा परम्परया-तत्तदनुष्ठानस्योभयायत्तत्वेन शिक्षाकरणस्य स्त्रियोऽप्यावश्यकत्वात्। तयोः-शिक्षितत्वे सदनावस्थानस्य सुखोत्पादकत्वात्।

तथाच,—

"सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्"॥

इति मानवीयवचनस्य जागरूकत्वाच्च। सम्प्रति निरुक्तोऽपि विषयोऽयं-निगूढ़भावतया विवियतेऽधः साधारणाववोधाय।

यथा समाजगठनस्य स्त्रीपुरुषोभयमूलकत्वेन समाजोन्नत्यवनत्योः सुतरां-स्त्रीपुरुषोन्नत्यवनतिसापेक्षत्वं सुसङ्गतमेव। समाजगठनं चात्रादितः परिवारस्य-तथानन्तरं क्रमशः स्वजातीयमानवादिलोकसमाजस्य च सुसंघटनबोधक-मित्यवगन्तव्यम्।

जातिद्वयस्यास्य विधातृकर्त्तृकसंसृष्टत्वं विभिन्नभावप्राधान्येन। न ताव-देकस्यान्यापेक्षयाऽल्पप्रयोजनकत्वम्। एकस्याभावेनापरस्यावयवहीनतया-ऽसंपूर्णत्वमेव। समाजस्यातः साधयितुमुन्नतिं सर्वाङ्गीनोऽस्ति चेदभिलाष-स्तदोभयजातीयशिक्षाविधानं वर्द्धयितुं भवन्तु बद्धपरिकराः सर्वे। पुरा-कालीनोन्नतजातेस्तथाधुनातनसभ्यजातेश्च सत्यां गतौ पर्य्यालोचितायां ज्ञायते-स्फुटत एतदेव। यथा,—

यद्यज्जातयन्तराले स्त्रीजातेर्याद्दगेधते सम्मानार्हत्वमधिकारित्वञ्च।

तत्सज्जातिर्भवित्ताद्दृशोन्नतिरुच्चसोपानाधिरोहणशालित्वम् । समर्थितमेतत्परम-महर्षिणा मनुना ।

यथा,—

"पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥
यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥
शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् ।
न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥
तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च" ॥ इति ।

तथा,—

"स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम् ।
तस्यां त्वरोचमानायां सर्वमेव न रोचते" ॥ इत्यादि—

प्रमाणसन्दोहैर्विज्ञापितं स्त्रियाः सम्मानार्हत्वम् ।

तथा,—

"चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च" ॥

इत्येतत्प्रमाणेन प्रकटितं राजादीनामिव सम्मानास्पदत्वं स्त्रीसाधारणस्य । स्त्रीणामतः सम्मानने ऽधिकारप्रदाने च विधेयः प्रयत्नो गृहस्थैः सर्वैरिति-सिद्धान्तः । शिक्षाभावेन मानवस्याश्वपशुतुल्यतया शिक्षैव ज्ञानोत्कर्षैक-मात्रोपायः ।

शिक्षा त्वावश्यकी सकलमानवजातेः । किन्तु तेषामवस्थाया विभिन्न-

त्वेन न सम्भवेत् सर्वेषां शिक्षासाम्यं येषामस्ति सङ्गतिः सुयोगश्च, ते सर्वेऽप्युच्च-श्रेणीयकाव्यदर्शनविज्ञानज्योतिःशास्त्रालोचनया सफलीकुर्वन्तु स्वस्वजीवनं-कृतार्थयन्तु स्वीयस्वीयसमाजञ्च । किन्तु भाग्येनैतत्सम्भवेज्जगति सर्वेषाम् । पृथिव्यां प्रायशोऽधिकांशा लोका दग्धोदरज्वालया परिवारप्रतिपालनचिन्तया-चास्थिराः । कथमेतैः सदार्पणीयं निजनिजजीवनं ज्ञानविज्ञानचर्चायै । अत एकदैव शिक्षा तैरेव नानुष्ठेयेति कथ्यतेऽस्माभिः । मनुष्याणामवश्यज्ञातव्य-विषयाः सन्ति कियत्परिमिताः । यद्येते मनुष्याणां सकलानां स्वस्वजातीय-विद्यासु भवेयुः शिक्षणीयास्तदुपरि रक्षणीया दृष्टिः सर्वैः सर्वतोभावेन । प्रत्येकव्यक्तीनामावश्यकं साधारणज्ञानं भूगोलेतिहासगणितविज्ञानादिशास्त्रेषु । परन्तु धर्मनीतिविषयकशास्त्राध्ययनं सुरुचिसम्पन्नकाव्योपन्यासादिपुस्तक-पठनञ्च नानुष्ठेयं चेत्; हृदयं भवेन्नोन्नतम् । रुचिर्न भवेन्मार्जिता न स्वा-स्थिकशिती भावः । सुतरामेतत् शास्त्रव्राताध्ययनमत्यावश्यकम् । असम्भव-मेतद्भवेज्जनसाधारणस्येत्यस्माभिर्न क्रियते विश्वासः । यत्नाग्रहाभ्यां समयस्य-नियमितविभागेन च भवेत् स्वायत्तमेतज्जनसाधारणस्य । तथाऽमरणात्क्रं-म्युन्नतिपथेऽग्रसराः सर्वे । अतः पुरास्मद्भारतवर्षे प्रचलितासीन्नारी-शिक्षा । प्रमाणानि सन्ति भूरि भूर्य्यस्मिन् विषये धर्मशास्त्रेषु । यथा, कानिचित् प्रदर्शितानि पूर्वतः प्रमाणान्यत्र, तदन्यानि प्रदर्शितव्यानि परतः । अतो नोद्धृतान्यत्र । तथापि भयानकप्रतिकूलताचरणेन स्त्रीशिक्षाया-घोरानिष्टमापादयन्ति केचनैकदेशदर्शिनः । तदनिष्टपरिदर्शनं नोट्टंकितं-ग्रन्थबाहुल्यभिया । स्थले कस्मिन् शिक्षाविमर्दो नाघटत नो घटिष्यतेऽविवेकता-वशत इति नोच्यतेऽस्माभिः । संसारेऽस्मिन्नेतादृक्कोऽस्ति विषयः, यस्याप-व्यवहारो नानुष्ठीयते मनुष्येण । ततः किं संसारस्य तावतीयपदार्था भवेयु-र्निन्दनीयाः परित्याज्याश्च ।

मानवाः कतिपयभीषणकाण्डमभिनयन्ति धर्मनाम्ना । तदर्थं किं-प्रकृतोऽवज्ञेयो धर्मः । लब्ध्वा शिक्षां कतिपये लोका धर्मनीत्योः कृत्वा-शिरसि पदाघातं कलङ्कमानयन्ति शिक्षानाम्नि । ततः किं मूलमेतस्य-समस्तस्य, कथनमेतत् किं युक्तिसङ्गतम् ?

सम्प्रति प्रचलितविद्यालयस्य शिक्षा स्वभावतोऽसम्पूर्णा। पुनरतीवासम्पूर्णा तत्र स्त्रीशिक्षा। अवस्थायामेतादृश्यां दोषप्रवेशनमत्यन्तसम्भवपरम्। किन्तु पृच्छ्यतेऽस्माभिरेतत्।

स्थलेऽधिकांशेनैतस्य किं कारणं पुरुषाणामविवेकतौदासिन्यञ्च ?—

यद्भवतु, शिक्षितरमणीमात्रं निन्दनीयमित्येतन्न वक्तव्यं कदापि। पक्षान्तरेशिक्षाविहीननारीवृन्दस्य किं दृश्यते गङ्गाम्भोवत्स्वच्छता पवित्रता च। सत्यवस्थाविरोधे संग्राममनुष्ठाय लब्धुं जयं शक्नुयान्मनुष्यः। कालस्य प्रतिकूलतामाचर्य्य भवेन्नूनं विड़म्बितो मनुष्यः। निर्द्दिष्टपथमेतस्य परिहायाथवा सीमामुल्लङ्घ्य न भवेदस्माकं निस्तारः। एतद्द्वितयनिरूपणमतीवदुरूहव्यापारः। तदभावाद्वारंवारमधःपतितो लाञ्छितश्च मनुष्यसमाजः। कृपया परमेश्वरस्य बहुकालव्यापिनोऽन्धकारावस्थानस्यानन्तरं नवीनलोकं प्रत्यानीता भारतवासिनः।

काल—एवैतत्परिवर्त्तनसङ्घटनकारकः।

अन्यच्च—बहुकालानन्तरमालोकमविधे समुपस्थिततया येऽतीवविह्वला उच्छृङ्खलाश्च सन्त इतस्ततो धावन्ति ते भवेयुर्नूनं कण्टकविद्धचरणाः।

तथाऽचिरेण विहाय शक्तिं परित्यज्योन्नत्याशां चोत्तिष्ठेयुः समाजतो वहिर्भागतः। स्वभावतः परिवर्त्तनमुन्नतिसोपानात्मकम्। किन्तु प्रत्येकपरिवर्त्तनावसरे सहसाऽवितर्कतया पदक्षेपमकुर्वतः प्रतिपदमापद्भवेदुपस्थिता। समाजोन्नतिपक्षे स्त्रीशिक्षैकान्तप्रयोजनीया। यतः पारिवारिकसुखस्वाच्छन्द्यमपि तदुपरि न्यस्तं विशेषपरिमाणतः।

स्त्रीशिक्षाभावात् प्रथमतः समाजस्यार्द्धाङ्गं भवत्यकर्मण्यम्। परन्तुशिक्षाभावेन रमणीवृन्दं मातृधर्म्ममुपयुक्ततया परिपालयितुमक्षमं न भवेच्चेत्तत्कापि जातिर्न शक्नुयाल्लब्धुं प्रकृतमहत्त्वम्। विख्यातेनैकेन पण्डितेनोक्तमेतत्। यज्जात्यभ्यन्तरे पालितो मातृधर्मः सुचारुरूपेण सा जातिःधीरा वीरा ज्ञानिनी सच्चरित्रा च। भुवनविख्यातेन फ्रान्सदेशवासिना नेपोलियनाभिधेयेनोक्तं महावीरेण।

यथा—फ्रान्सदेशस्य प्रधानाभावो मातात्मकः। सत्यामपि तदभावस्यापूर्णतायां न सम्भवेदुन्नतिस्तज्जातेः।

स्वभावतो जननीतुल्यः शिक्षको न विद्यते कोऽपि जगति ?

परिवारसमं प्रेम्णः पवित्रतायाश्च नान्यत्कुत्रापि द्वितीयस्थानम्। सत्यामपि-विद्यमानायां विद्यालये बहुविधशिक्षायां सदनमस्माकं चरित्रगठनस्य प्रकृत-स्थानम्। अतसङ्घर्षणात्वमप्यवस्थायां मानवस्य पारिवारिकशिक्षां सम्पूर्ण-भावतो न शक्नुयाल्लोपयितुम्।

सम्प्रतास्मदीयदेशे पारिवारिकशिक्षाया अत्यन्ताभावः। तत्कारणं-मातुरभाव एव, सत्यपि शिक्षिते जननीव्राते शिशोः प्राथमिकशिक्षा प्रति-गृहं प्रचलिता भवेदनायासेन। कथं भवेत् सन्तानपरिपालनम्। कथं-वा तच्छरीरमनोविकशनं चेतरादिविषये नोत्पद्येत चेत्सम्यक्ज्ञानं, न कापि-शक्नुयात् परं कर्त्तुं मनुष्यम्। तदनन्तरं परिवारान्तरालेऽस्ति बहुविधं-दायित्वं गृहिण्याः।

समुचितशिक्षाभावात् कथमुत्पद्येत तद्दायित्वज्ञानं कथं वा भवेदेतत्-सुसम्पन्नम्। पुरुषनिवहस्य व्याप्य बहुसमयं वहिर्विषये लिप्ततयोभयविषय-संरक्षणमतीव कष्टकरं, चिन्तायामेतस्यां व्यतिव्यस्ता बहवो गृहस्थाः। गृहिण्या भवेच्चेत्सुगृहिणीत्वं ; तदा सदनात्मकसंसारस्य परिचालनमर्थादेः-सद्व्यवहारो-दासीदासयोः सम्यक्चालनं, नानाविधपदार्थानां गुणदोषज्ञान-मन्येन साकं न्यायानुगतव्यवहारश्चेत्यादि भवेत्सत्वं सुसम्पन्नम्। गृहिण्या-स्तस्मिन्नेव सर्वस्मिन् विषये सत्यां सुनिपुणतायां कुतो भवेद्भावना पुरुषस्य-तद्विषये। सर्वमेतच्छिक्षासापेक्षमेवेति निश्चितोक्तिः।

स्थलेऽस्मिन् शिक्षाशब्देनैव पुस्तकगतशिक्षेति नोच्यतेऽस्माभिः। पुस्तक-पठनेनैव भवेत् ज्ञानविवर्द्धनमस्माकं सत्यम। किन्तु स्वतन्त्रा व्यावहारिक-शिक्षा। साहित्यशिक्षा स्वभाविकी जीवनस्य। पुस्तकपठनेनैव भवेत्-केवलं साहाय्यं तत्शिक्षायाः।

अन्यच्च, नारी पुरुषस्यार्द्धाङ्गमिति प्रसिद्धिः। परम्परं परस्परस्य-जीवनपथसङ्गी सहायश्च। मिलित्वोभयं भोक्ष्यति सांसारिकसुखदुःख-जालम्।

अतो यद्यपि परस्परस्य हृद्भावस्य तथा चिन्तायाश्च कर्त्तुं विनिमयं न-

विद्येत पन्थाः । जनोऽन्यजनस्यैको ग्रहीतुं भावं भवेदसमर्थश्च । तथाऽद्दाङ्ग-पतेर्भूत्वाऽकर्म्मण्यम् ;

तदाऽस्मिन् संसारे कुतास्ते सुखशान्त्यभिलाषः । इत्यादि नानाविध-कारणवशतः स्त्रीशिक्षा समाजोन्नतेः पारिवारिकसुखशान्तिजालस्य-चैकान्तप्रयोजनीया । किन्तु साधारणस्य तथा नानाजातीयवालिकानि-चयस्य चैतादृकशिक्षानुष्ठानं देशान्तरेषु प्रचलति प्रायशो विद्यालयनिकरे । भारते तु भारतीयहिन्दुरमणीकर्त्तृकवेदादिशास्त्राध्ययने सत्यप्यभ्यनुज्ञाते-विद्यालयेऽध्ययनमेकस्मिन् तथा पुरुषान्तरस्य शिक्षकतावलम्बनमेतासां-नाभ्यनुज्ञातं पूर्वाचार्य्यैः । विवेचनमेतद्दृढ़ीकृतं निम्नस्थवाचनिकप्रमाणेन । यथा चतुर्विंशतिसंग्रहे यत्तु हारीतेनोक्तम्,—

"द्विविधाः स्त्रियः ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुप-नयनं, अग्नीन्धनं वेदाध्ययनं स्वगृहे भैक्षचर्य्येति" । सद्योवधूनामुपस्थिते-विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्य्य इति ।

तदेतत्कल्पान्तरविषये ।

तथाच यमः,—

"पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनञ्च वेदानां सावित्रीवाचनं तथा ॥
पिता पितृव्यो भ्राता वा नैनामध्यापयेत्-परः ।
स्वगृहे चैव कन्याया भैक्षचर्य्या विधीयते ।
वर्जयेदजिनं चीरं जटाधारणमेव च" ॥ इत्यादि—

प्रमाणव्रातवलादिष्टविषयस्यायौक्तिकत्वं नाववुध्यतेऽस्माभिः । कथमेत-दितुच्यते । स्त्रीणामुपरि न्यस्तसकलगृहंपरिचालनभारतयाऽनः सुगुण-निकरस्योत्तमचरित्रस्य चाधारत्वमासां वाञ्छनीयं सर्वतो भावेन । तदर्थं-शिक्षाकरणं विधेयमवश्यं तत्पक्षे, यतश्चरित्रोन्नतिः सकलोन्नत्यपेक्षया-श्रेष्ठतमा । तथा चरित्रसौन्दर्य्यं तु सर्वसौन्दर्य्यापेक्षया श्रेष्ठतमम् ।

अपरञ्च—चरित्रञ्च प्रकृतजीवनम्; कृत्वापि सर्वविधसुखसमृद्धिं तथा-विद्यालाभञ्च केवलं चरित्राभावेनासारं मनुष्यजीवनम्। चरित्रोत्कर्षसाधने-प्रधानसहायोऽत्युत्रतादर्शः। सम्मुखे संस्थाप्य तदादर्शं न भवेच्चेद्-यत्नवान्-चरित्रं सङ्गठितं, न भविष्यति चरित्रोन्नतिस्तदा प्रकृतितः। बाल्यावस्थातो-गुणः स्वभावश्च संसर्गतो लभतेऽवनतिमुन्नतिञ्च।

प्रमाणयति तथा शास्त्रमपि। "संसर्गजा दोषगुणा भवन्ति", इति-तदवस्थायां संसर्गतः समुद्भूतो गुणो-दोषश्च तथा चरित्रं न विपरिवर्त्तते-कदापि।

"यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्"। इति,—

प्रमाणसामर्थ्यात्, अतः स्वमदनाध्ययनस्य नारीणां न्यायानुगतत्वात् युक्ति-युक्तत्वाच्च विधेयमेतत्सर्वात्मना, स्त्रीणामेतदाद्यर्थं दातुं स्वाधीनतां सततं-विमुखाः सर्वे धर्मशास्त्रकर्त्तारः।

तथा याज्ञवल्क्यः।

"रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके।
अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित् स्त्रियाः" ॥

तथाच मनुः,—

"बालया वा युवत्या वा वृद्धया वापि योषिता।
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित्कर्म गृहेष्वपि" ॥

अपिशब्दोपादानादत्र का कथाऽन्यत्रेति सिद्धान्तः।

तथा स एव,—

"पिता भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः।
एषां हि विरहेण स्त्री गर्ह्ये कुर्य्यादुभे कुले" ॥

रत्नवत् स्त्रीरत्नस्याप्यवनं सर्वतोऽनुष्ठेयमित्युक्तं धर्मशास्त्रकारैः।

यथाह मनुः,—

"पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्रो रक्षति वार्द्धक्ये न स्त्री स्वातन्त्र्यमर्हति" ॥

तथा,—स्वामिनमन्तरा स्त्रीकर्त्तृकबहिःपर्य्यटनादिकस्य दोषाधायकत्वं-प्रतिपादितं पूज्यपादैर्महर्षिभिः।

यथाह स एव,—

"पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्।
स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट्" ॥

तथाच,—तट्टीकाकारः कुल्लूकभट्टश्च "पानमिति मद्यपानं, असत्पुरुष-संसर्गः, भर्त्रा सह विरहः।

इतस्ततश्च भ्रमणं, अकालस्वापः, परगृहनिवासः इत्येतानि षट् स्त्रिया-व्यभिचाराख्यदोषजनकानि तस्मादेतेभ्य एता रक्षणीयाः"।

एतत्त्वसंगतमिति न भाव्यं। वीजस्य यत्र कुत्रापि सित्यपि निक्षिप्तत्वे-तज्जातीयक्षेत्रोत्पन्नत्वेन तज्जातीयो भवति तदुद्भूतः सन्तानः, तेन न भवेत्-पुरुषजातेर्विकृतिः क्षेत्रमतः सर्वतो रक्षणीयमिति धर्मशास्त्रकर्त्तॄणामाकूतं,-अन्यथा चेत् क्षेत्रं दूषितं तदा सांकर्य्यदूषित एव समाजः, तेन सुदूरपराहतैव-जगदुन्नतिः, द्रढयन्त्येतद्युक्तिं गीतोक्तप्रमाणानि।

तथा,—

"अधर्माभिभवात्कृष्ण! प्रदुष्यन्ति कुलस्त्रियः।
स्त्रीषु दुष्टासु वार्ष्णेय! जायते वर्णसंकरः ॥
संकरो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥

उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्दन ! ।
नरके नियतं वासो-भवतीत्यनुशुश्रुम" ॥ इत्यादि ।

अन्यच्च,—न तावदस्माभिरुच्यते चेत् कलुषितं सर्वं किन्तु विशेषत एव,-अतो-मात्रादीनामपि रहसि पुत्रेण सहावस्थानं निषिद्धं मनुनापि ।

यथा,—

"मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति" ॥

इत्यतः का कथान्येषामित्यपिशब्दार्थः ॥

पुनश्च यद्यपि विषयान्तरेषु साकं पुरुषविशेषैर्महर्षिभिरनुज्ञातस्त्रीकर्तृक-सम्भाषणस्याधस्तात्प्रकटितप्रमाणवृन्दैनेवोद्भासिततया न तावदेतासां स्वातन्त्र्योत्-पाटनं मूलतो परिदृश्यते भारतेऽस्मिन् ।

यथा प्रमाणान्याह मनुः—

"चतुर्णामपि वर्णानां दारा रक्ष्यतमाः सदा ।
भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा ।
सम्भाषणं सह स्त्रीभिः कुर्य्युरप्रतिवारिताः" ॥ इति ।

तथाच कुल्लूकभट्टः,—"चतुर्णामपि ब्राह्मणादीनां वर्णानां धनपुत्रादीनां-मध्यादतिशयेन सर्वदा रक्षणीयास्तेन प्रमङ्गनिवृत्त्यर्थं उत्कृष्टसंग्रहणादपि सर्व-वर्णभार्य्या रक्षणीयाः । भिक्षुका इति भिक्षाजीविनः स्तुतिपाठकाः यज्ञार्थं-कृतदीक्षकाः सूपकारादयश्च भिक्षादिस्वकार्य्यार्थं गृहिस्त्रीभिः सह सम्भाष-मनिवारिताः कुर्य्युः । एवं चैषां संग्रहणाभावः ताभिः साहं संलाप-मन्तरेण तेषां कार्य्यसिद्धेरभावात्" । तथापि :—

"पुंश्चल्याच्चलचित्तत्वान्नैःस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्त्तृष्वेता विकुर्वते ॥

एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजं।
परमं यत्नमातिष्ठेत्-पुरुषो रक्षणं प्रति'॥

इति मानवीयवचनवलात्।

तथा, "पुंश्चल्यादिति; पुंसो दर्शने सम्भोगाद्यभिलाषशीलत्वाच्चित्तस्थैर्य्याभावात् स्वभावतः स्नेहरहितत्वाच्च एता यत्नेनापि लोके रक्षिताः सत्यो व्यभिचाराश्रयणेन भर्त्तृषु विक्रियां गच्छन्ति। तथा एवमिति; एवं श्लोकद्वयोक्तमासां स्वभावं हिरण्यगर्भसृष्टिकालजनितं ज्ञात्वा रक्षणार्थं प्रकृष्टं यत्नं-पुरुषः कुर्य्यात्"। इत्यादितत्श्लोकविवृतेश्च परिदर्शनाच्च व्यभिचाराद्याशङ्कया स्वस्त्रिया सार्द्धं सम्भाषितुं स्वस्वामिना निषिद्धा अपि भिक्षुकादयस्तया-सह संलापमाचरन्तो भवेयुर्दण्ड्या इति निम्नलिखितवाचनिकप्रमाणेनोद्दिङ्गितः-स्वाभिप्रायः पूज्यपादैर्महर्षिभिः।

प्रमाणमाह यथा मनुः।

"न सम्भाषं परस्त्रीभिः प्रतिषिद्धः समाचरेत्।
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति"॥ इति।

"न सम्भाषमिति स्वामिना निषिद्धः स्त्रीभिः सम्भाषणं न कुर्य्यात् प्रतिषिद्धः सम्भाषणमाचरन् राज्ञः षोडशमाषात्मकसुवर्णं दण्डयोग्यो भवति"। इति कुल्लूकभट्टः। अतः पत्यादिविरहविशिष्टेषु वहिरटनादिसकलकार्य्येषु-न स्वातन्त्र्यमस्तीति धर्मशास्त्रीयाभिप्रायः। अतएव वयमत्र कतिपय-माधारणोपायं विनिर्दिश्यापहरिष्यामो भारतीयहिन्दुरमणीशिक्षाविषयं-निरुक्तप्रमाणदृष्टितः।

समयमनुलंघ्य न कथयिष्यामो विशेषम्। यवनीयराजत्वावसरे भारतीय-स्त्रीपुरुषसाधारणेष्वैतिहासिकप्रमाणप्रमाणितोपद्रुत्यनुष्ठानस्य प्रावल्येन पूर्वतः स्त्रीशिक्षाविरहस्य तथावरोधप्रथायाश्चासां सत्यामपि प्रवृत्ताविदानीं सुराज-शासनावसरे तदुभयप्रचलनपरिकर्त्तनं न भवेद्दोषाधायकम्। विशेषतो-विपदि तद्विधानं भारतीयहिन्दुसमजाभ्यन्तरेऽतीवगुणोत्पादकम्। यतः-संप्रति दुर्भिक्षादिबहुविधोपद्रवस्य सन्ततोपस्थितेरवत्यमानवानां क्रमशोऽर्थाद्य-

भाविनाभावनीयनानाविधक्लेशपरिदर्शनात् स्वस्वजातीयहितसाधकशिक्षादि-शुभानुष्ठानेऽक्षमतया स्वस्वतनयादीन् कर्त्तुं सुशिक्षितानपारगा हिन्दवः-बाल्यावस्थातः, शिक्षाविरहात्प्रायशो भवन्ति बालिशाः स्वस्वसन्ताना:। अतः-प्रचलितायामधुना स्त्रीशिक्षायां बाल्यकालान्मातृतः शिक्षाबीजे प्रथमतः सन्निक्षिप्ते सन्तानमनसि क्रमशो ज्ञानपिपासा वृद्धिमवाप्स्यति प्रायेण द्रव्याभावेऽपि। ततस्तेषां विशेषज्ञानोपार्जनमधिकक्लेशमन्तरा पित्रादिभिः सुसंपाद्यमेवानायेसेन। स्त्रीशिक्षा विधेयाऽतोऽवश्यमेव। तथापि पुराकालीनस्त्रीशिक्षानुष्ठानस्य युगान्तरीयसमयोपयोगितयाधुनातन-नव्यशिक्षोपकारकत्वाभावात्तदनुष्ठानं नानुकूलमिदानींतनसमयस्य। स्वजातीय-तादृशशिक्षयित्रभावेनाध्ययनं नोपपन्नं बालिकानां सदने। तदर्थं विद्यालयाध्ययनं प्रतीयते सुसमीचीनं तत्पक्षे। तादृशविद्यालयस्तु न साधारणः। किन्तु करणीयः-पृथगेव स स्वजातीयबालिकाध्ययनाय शिक्षकास्तु नियोजितव्यास्तत्र पित्रादिसमाना: परमोदारचरिता उदासीनाश्च। तदा स्वेतरजातीयबालिका-संसर्गाभावाच्चित्तविकृतेरसम्भवतया चरित्रं सुसंघटनीयमेव। तेन भवेत्-सुरक्षितमेव शास्त्राकृतं साकल्येन। न भवेद्विमतिः केषामप्यतेत्यस्माकंधीः। तद्विद्याशिक्षाग्रहणं तु द्वादशवर्षाभ्यन्तरेव, तदनन्तरं विशेषवुभुत्सु-नामासां तत्शिक्षाभारो भवेन्नास्तः पित्रादिष्वात्मीयेषु। स्वस्वगृहेऽत्र-स्वस्वपारिवारिकबालिकायुवत्यो नियमिततया नानाविषयिणीं शिक्षां प्रदातुं-भवेयुश्चेत्प्रयत्नवन्तः प्रत्येकगृहस्थास्तदा स्वस्य समाजस्य च भवेत् साधितः-प्रभूतोपकारः। इत्यलमतिपल्लवेन। इति समाप्तिः स्त्रीशिक्षाविवृतेः। सदृशीमिति कन्याविशेषणस्य व्याख्यानावसरे स्त्रीशिक्षाया आवश्यकताप्रतिपादनद्वारा प्रसङ्गतः सत्यपि बहुदूरागमने "फलमुखगौरवस्यादोषत्वादि"ति-न्यायेन न दोषाधायकत्वं तस्येति विभाव्यम्।

स्त्रीपुरुषसाधारणानां बाह्यिकलक्षणानां सत्यपि पुरतः समुल्लेखनं-सम्प्रति प्रसङ्गसङ्गत्याभ्यन्तरिकलक्षणानि प्रकाश्यन्तेऽनन्तरतः।

तथाच मिताक्षरायां ज्ञानेश्वरः ;—

"आभ्यन्तराणि अष्टौ पिण्डान् कृत्वेत्याद्याश्वलायनोक्तविधिना ज्ञातव्यानि।

पूर्वस्यां रात्रौ गोष्ठवल्मीककितवस्थानक्षेत्रेरिणक्षेत्रचतुष्पथश्मशानेभ्यो मृत्तिकां-गृहीत्वा पिण्डाष्टकं कर्त्तव्यं। तत्रानुक्रमेण प्रथमे पिण्डे स्पृष्टे धान्यवती भवेत्। द्वितीये स्पृष्टे पशुमती भवेत्। तृतीयेऽग्निहोत्रशुश्रूषणपरा भवति। चतुर्थे-विवेकिनी चतुरा सर्वजनार्जनपरा भवति। पञ्चमे रोगिणी, षष्ठे वन्ध्या,-सप्तमे व्यभिचारिणी, अष्टमे विधवा भवेदित्याश्वलायनस्मरणात्, इति"।

तथाच नित्याचारपद्धतौ विद्याकरः,—

"अष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं यज्ञे ऋतं सत्यं प्रतिष्ठितम्। यदियं-कुमार्य्यभिजाता तदिदमिह प्रतिपद्यताम्। यत् सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयात्। एषामेकं गृहाण इति।

उर्व्वरापिण्डे स्पृष्टे धान्यवती भवति। गोष्टपिण्डे स्पृष्टे पशुमती, वेदि-पिण्डे स्पृष्टे अग्निहोत्रशुश्रूषणपरा, लौकिकस्थानपिण्डे स्पृष्टे विवेकिनी,-सर्वजनार्जनपरा, उदकपिण्डे स्पृष्टे रोगिणी, क्षेत्रे वन्ध्या, चतुष्पथे व्यभि-चारिणी, श्मशाने विधवेति। तथाच वीरमित्रोदये;—

"आभ्यन्तराणि तु लक्षणानि आश्वलायनगृह्ये उक्तानि। दुर्व्विज्ञेयानि-लक्षणान्यष्टौ पिण्डान् कृत्वा पिण्डानभिमन्त्रयते ऋतमग्रे प्रथमं यज्ञे ऋतं-सत्यं प्रतिष्ठितं; यदीयं कुमार्य्यभिजाता तदीयमिह प्रतिपद्यतां, यत्-सत्यं तद्दृश्यतां। इति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति,-क्षेत्राच्चेदुभयतः शस्यादगृह्णीयादन्नवत्यस्याः प्रजा भविष्यति इति विद्याद्गोष्ठा-च्चेत् पशुमती, वेदिपुरीषाद्ब्रह्मवर्च्चस्विन्यविदासिनो-ह्रदात्सर्व्वलक्षणसम्पन्ना,-देवनात्कितवी, चतुष्पथात् द्विप्रव्राजिनी, ईरिणादधन्या, श्मशानात्-पतिघ्नीति।

अस्यार्थः;—उभयतः शस्याद् यस्मिन् क्षेत्रे प्रतिसम्वत्सरं द्विवारं शस्यं-निष्पद्यते तदुभयतः शस्यम्। तदुक्तम्,—

"शस्यं क्षेत्रे तु यत्र द्विर्निष्पन्नं प्रतिवत्सरम्।
तद्द्विरुभयतः शस्यशब्देनेति प्रचक्षते"॥ इति।

तस्मात्तत्क्षेत्रात् गोष्ठं गोस्थानम्। वेदिगताः पांशवो वेदिपुरीषमिति-

हरदत्तः। अपवृत्ते कर्मणि या वेदिः तद्वेदिपुरीषमिति नारायणः। अविदासिनः दसु उपक्षये इति धातुः अविदासिनः अशोष्याह्रदादित्यर्थः।

कितवा यत्र दीव्यन्ति तद्देवनं द्यूतस्थानम्। चतुर्णां पथां समाहारः चतुष्पथम्। ईरिणमूषरप्रदेशः यत्र धान्यं न प्ररोहति। अधना धनरहिताः श्मशानं-प्रसिद्धम्। एतेभ्यः स्थानेभ्यो मृदः पृथगानीय तत्तत्स्थाननामानि पृथक्-पृथक्पत्रखण्डेषु लिखित्वा तानि खण्डानि यथाक्रमं मृत्तिकास्वन्तर्धायैक रूपतया पिण्डान् कृत्वा परिशुद्धे पात्रे विनिक्षिप्य गन्धपुष्पैरभ्यर्च्य ऋतमग्र-इतऽनेन मन्त्रेणाभिमन्त्र्य वरः स्वाभिमतां देवतां ध्यात्वा एषामेकं गृहाणेति-कुमारीं ब्रूयात्। सा च यदि क्षेत्राद्धृतं पिण्डं गृह्णीयादस्याः प्रजा-अन्नवती भविष्यतीति विद्यात् इति सर्वत्र नेयम्। वृत्तस्वाध्यायकृतं यशो-ब्रह्मवर्चसन्तद्वती। तदुक्तं,—

"वृत्ताध्ययनसम्पत्तिः ब्रह्मवर्चसमुच्यते"। इति।

द्वौ प्रव्रजतीति द्विप्रव्राजिनी। स्पष्टमवशिष्टम्।

शौनकोऽपि,—

"अथाष्टपिण्डग्रहणविधानेन विचक्षणः।
लक्षणानि परीक्षेत ततः कन्यां यथातथम्॥
क्षेत्रादुभयतः शस्याद्गोष्ठाद्वेदितलादपि।
अशोष्याच्च ह्रदाद्द्यूतस्थानादथ चतुष्पथात्॥
ईरिणाच्च श्मशानाच्च गृहीत्वाष्टौ मृदः पृथक्।
ताभिर्गृही विधायाष्टौ पिण्डानन्योन्यतः समान्॥
तिलपत्रैकदेशेषु मृदां संज्ञाः पृथक् पृथक्।
लिखित्वा ताश्च पिण्डानामन्तर्धाय यथाक्रमम्॥
शुद्धपात्रे विधायैतान् गन्धाद्यैरर्चयेदथ।
ऋतमग्रे प्रथमं यज्ञ इत्याद्यां वैदिकीमृचम्॥

दृश्यतामिति पर्य्यन्तमुक्का पिण्डाभिमन्त्रणम् ।
कृत्वाग्रपाणिना ध्यायन् स्वाभीष्टां देवतां वरः ॥
एषामेकं गृहाणेति कुमारीं प्रत्युदीरयेत् ।
तं पिण्डमेकं गृह्णीयात्सापि स्वाभिमतं ततः ॥
गृहीतपिण्डमध्यस्थलेखवाचनपूर्वकम् ।
गृह्योक्तं तत्फलं बुध्वा ततः कुर्य्याद्यथारुचि ॥
पिण्डेष्वेषु प्रथमतश्चत्वारः शुभसूचकाः ।
कन्यायाश्च ततोऽप्यन्ये चत्वारोऽशुभसूचकाः ॥
चेत्क्षेत्रमृद्ग्रहणे तस्या बह्वन्ना सन्ततिर्भवेत् ।
इति विद्यात्तथा गोष्ठमृद्ग्रहे तु गवादिभिः ॥
पशुभिः सुसमृद्धा स्यात्-सन्ततिः स्वयमेव वा ।
ब्रह्मवर्चससम्पन्ना वेदिमृद्ग्रहणे भवेत् ॥
सर्वसम्पत्समृद्धा स्यादशोष्याह्रा ह्रदाद्ग्रहे ।
द्विरूढ़ा द्विरमण्येषा व्यभिचाररता भवेत् ॥
दारिद्र्योत्पादिनी भर्त्तुर्भवेदीरिणमृद्ग्रहे ।
श्मशानमृद्ग्रहे भर्त्तुर्मृतिहेतुर्भवेदियम्" ॥

तथाश्वलायनोऽपि,—

"पितृमातृभ्रातृमतीं सर्वलक्षणलक्षिताम् ।
उद्वहेदष्टपिण्डाद्यैः कन्यां सम्यक्परीक्षिताम्" ॥

इति मन्वादिभिस्तथा सर्वदेशीयनिबन्धकारैश्च वरकन्ययोर्लक्षणपरीक्षणस्यादृततया करणीयमेवावश्यमेतत् विज्ञानमूलकत्वात् । सति सुलक्षणत्वे-परस्परचित्ताह्लादजनकत्वाच्च । न च सर्वांशतो निरुक्तप्रमाणप्रतीक्ष्य-बाह्यिकाभ्यन्तरिकशुभलक्षणान्वितां कन्यामन्तरा न विवहेत् सामान्यदोष-विशिष्टां कन्यामिति वाच्यं कन्याया दोषशून्यत्वस्यैकान्ततो जगत्यसम्भवात् ।

यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिरित्यापस्तम्बीयवचनेन मनोनयनानन्द-दायिन्याः कन्यायाः स्फुटमभ्यनुज्ञातोपयमत्वाच्च ।

पूर्वतोऽशुभलक्षणगर्भकशुभलक्षणस्य सत्यपि कथने विशेषतो यद्दोषाणां-विद्यमानतया कन्याया विवाहानर्हत्वमापादितं मन्वादिभिस्तेऽधस्तात्-प्रकाश्यन्तेऽत्र ।

एतल्लक्षणविलक्षणचिह्नसमुपेतकन्यकानां वर्ज्यत्वमाह मनुः,—

"नोद्वहेत्-कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम् ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्" । इति ।

तथाच कुल्लूकभट्टः :—

कन्यास्वरूपाश्रयप्रतिषेधमाह । नोद्वहेदिति कपिलकेशां षड्ङ्गुल्यादिकां-नित्यबाधितां अविद्यमानलोमां प्रचुरलोमां बहुपुरुषभाषिणीं कपिलाक्षीं-कन्यां नोपयच्छेत् । नेति ऋक्षं नक्षत्रं तन्नामिकां आर्द्रारेवतीत्यादिनामिकां-तरुनदीम्लेच्छपर्वतपक्षिमर्पदासभयानकनामिकां कन्यां नोद्वहेदिति, तथा चतु-र्विंशतिमतसंग्रहे—कपिला रक्तगण्डलवर्णा पिङ्गला अग्निवर्णा अन्त्यनाम्नी-म्लेच्छनाम्नीति माधवः । प्रेष्यनाम्नी दासीतरादिनाम्नी, भीषणनामिका-चामुण्डेत्यादिरिति नारायणः ।

तथाच यमोऽपि,—

"ह्रस्वां दीर्घां कृशां स्थूलां पिङ्गाक्षीं गौरपाण्डुराम् ।
न पूज्या न च सेव्यास्ता नाशमृत्युकराः स्त्रियः ॥
वेदनाम्नीं नदीनाम्नीं शैलगन्धर्वनामिकाम् ।
ऋक्षवृक्षलतानाम्नीं दारार्थं परिवर्जयेत्" ॥ इति ।

तथाच विष्णुपुराणेऽपि ।

"न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ।
नापि दीर्घस्वरां काकुवाक्यां काकस्वरां न च ॥

नानिमेषेक्षणां तद्वत्‌ क्षीणाङ्गीं नोद्वहेद्‌बुधः ।
यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ ॥
गण्डयोः कूपकौ यस्या भवतस्तां च नोद्वहेत्‌ ।
नातिकृष्णच्छविं पाण्डुं न रुजामरुणेक्षणां ॥
अपीनहस्तपादाञ्च न कन्यामुद्वहेद्‌बुधः ।
न वामनां नातिदीर्घां नोद्वहेत्‌-संहतभ्रुवम्‌ ॥
न चातिच्छिद्रदशनां न करालमुखीं तथा" । इति ।

आपस्तम्बोऽपि,—

"नक्षत्रनामा नदीनामा वृक्षनामा च गर्हिता ।
सर्वाश्च रेफलाकारोपान्त्यवर्णा विवर्जयेत्‌" ॥

कन्यानामधिकाङ्गीत्यादिकतिपयविशेषणानाममानुषिकतया चित्तकालुष्याधायकत्वात्‌ ।

तथा समस्तरोगिसंसर्गेण रोगशून्यस्याऽपि लोकस्य रोगोत्पत्तेर्विज्ञानसम्मतत्वेन रोगिण्यादि-कतिसंख्यकविशेषणान्वितानां सनातनसम्पर्कतोऽगदोत्पादकतया, तथासामपि पिङ्गलेत्यादिकियत्परिमितविशेषणानां नयनानन्दाजनकत्वेन तथैतासामपि चामुण्डेत्यादिभयजनकविशेषणानां श्रुतिकटुतोत्पादकत्वेन चैतादृग्विशेषणविशिष्टानां कन्यानां यद्वर्ज्यत्वमापादितं परिणये मन्वादिभिस्तदतीव सुसङ्गतमेवातोऽत्र न परिलक्षिष्यते मतान्तरमितरनुमीयतेऽस्माभिः ।

अथोद्वाहस्य कुलपरीक्षापूर्वकत्वात्‌ कुलपरीक्षा तावन्निरूप्यते ।

यथा वीरमित्रोदये आश्वलायनः,—

"कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्ता"दिति । अत्राग्रइति वचनम्‌, समस्तेषु वधूवरगुणेषु कुलस्य प्राधान्यं बोधयितुम्‌ ।

तथाच विष्णुः,—

"ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः।
कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम्" ॥ इति।

ये मातृतः पञ्चभिः पुरुषैः पितृतश्च पञ्चभिः पुरुषैः प्रसिद्धाः विद्याचारादि-सम्पन्नाः एते इत्यादिना। यद्यप्येतत्श्राद्धविमते कन्यां प्रयच्छेदितिवाक्यशेषाद्वरकुलविषयमिति प्रतीयते, तथाप्यपेक्षातौल्येन सामर्थ्यात् कन्याकुलविषयमपीति गम्यते।

तथाच याज्ञवल्क्यः,—

लक्षण्यां स्त्रियमुद्वहेदित्युपक्रम्य "दशपुरुषविख्यातात् श्रोत्रियाणां महाकुला"दित्याह।

मनुरपि,—

"उत्तमैरुत्तमो नित्यसम्बन्धानाचरेत्सदा।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्" ॥ इति।

उत्तमानाह स एव,—

"विशुद्धाः कर्मभिश्चैव श्रुतिस्मृतिनिदर्शितैः।
अविप्लुतब्रह्मचर्य्या महाकुलसमन्विताः ॥
महाकुले ये सम्बद्धा महत्त्वे च व्यवस्थिताः।
सन्तुष्टाः सज्जनहिताः साधवः समदर्शिनः ॥
लोभरागद्वेषामर्षमानमोहादिवर्जिताः।
अक्रोधनाः सुप्रसादाः कार्य्याः सम्बन्धिनः सदा" ॥ इति।

अधमानाह स एव,—

"ये स्तेनाः पिशुनाः क्लीवा ये च नास्तिकवृत्तयः।
विकर्मस्था च जीवन्तो विकृताकृतयस्तथा ॥

प्रवृद्धवैराः शूरैर्ये राजकिल्बिषिणस्तथा।
पतिघ्नश्च सुवासिन्यस्तांश्च यत्नेन वर्जयेत्" ॥ इति।

याज्ञवल्क्यः—

स्फीतादपि न सञ्चारिरोगदोषसमन्वितात् ॥" इति।

तथा मनुरपि,—

"महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः।
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत् ॥
हीनक्रियं निष्पुरुषं निश्छन्दोरोमशार्शसम्।
क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च" ॥ इति।

हीनक्रियं यागादिक्रियारहितं, निष्पुरुषं स्त्रीमात्रशेषम्। निश्छन्दो-वेदाध्ययनवर्जितम्। शेषं प्रसिद्धम्।

तथा यमोऽपि,—

"चतुर्दशकुलानीमान्यविवाह्यानि निर्दिशेत्।
अनार्षेयं ब्राह्मणानामृत्विजां चैव वर्जयेत् ॥
अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत्।
हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च ॥
श्वित्रिकुष्ठिकुलादीनां कुर्य्याद्धि परिवर्जनम्।
सदा कामकुलं वर्ज्यमागमानां च यत्कुलम्।
अपस्मारिकुलं यच्च यच्च पाण्डुकुलं भवेत् ॥" इति।

अनार्षेयं अवरणीयार्षेयं चतुरार्षेयादि न चतुरो वृणीते नपञ्चातिवृणीते-इति श्रुतेः।

इदं चेत्थमेव व्याख्येयं अन्यथा गोत्राणां ऋष्यपत्यत्वेनानार्षेयत्वासम्भवात्। प्रवररहितगोत्रासम्भवाच्च। अनार्षेयमविज्ञातप्रवरमिति चन्द्रिकाकारः।

ब्राह्मणोपादानं क्षत्रियादीनां स्वभावतोऽनार्षेयत्वेऽप्यपरिहारार्थम्। अविच्छिन्न-कुलपरम्परावृत्तानाम्। अत्युन्नमतिदीर्घपुरुषम्।

अतिवर्णं वर्णमतिक्रान्तं अतिगौरातिकृष्णादि सदाकामाः कामप्रधाना-स्तेषां कुलम्। आगमानां श्रौतस्मार्त्तकर्मपरित्यागेन केवलागमविहित-कर्मानुष्ठातॄणाम्; वामागमवर्त्तिनां वा। हीनक्रियादिकुलपरिहारे प्रयो-जनमाह हारीतः,—

"कुलानुरूपाः प्रजाः सम्भवन्तीति"।

तथा व्यासोऽपि,—

"मातुलान् भजते पुत्रः कन्यका भजते पितॄन्।
यथाशीला भवेन्माता तथाशीला भवेन्नृप!" ॥ इति।

तथा मनुरपि,—

"पितुर्वा भजते शीलं मातुर्वोभयमेव वा।
न कथं च न दुर्योनिः प्रकृतिं स्वां नियच्छति" ॥

तथा विष्णुरपि,—

"अश्वं पिता परीक्षेत माता कन्यां परीक्षयेत्।
तृणाद्भूमिं परीक्षेत आचारेण कुलं तथा" ॥ इति।

कुलापकर्षणनिमित्तान्याह मनुः,—

"कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च" ॥
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणा।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः" ॥

तथा कुलोत्कर्षनिमित्तमाह स एव,—

"मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ।
कुलसंख्यां च गच्छन्ति वर्षन्ति च महद्यश:" ॥ इति ।

"मित्रप्रमाणाभ्यन्तरीत्तकुलान्यकुलतां यान्तीत्यस्येयं विवृति: ।
यथा, कुलानि वंशा: अकुलतां प्रकृष्टश्रोत्रियादिकुलापेक्षयाऽतीव न्यूनत्वं- यान्ति प्राप्नुवन्ति, न तु क्षत्रियादिकुलान्तरत्वं, नत्वेतत्स्वकपोलकल्पितं,- मन्वादिभि: पूर्व्वपरयोरधस्तनप्रमाणसन्दोहेनाभिधेयस्यास्य प्रकटितत्वात् ।

यथा प्रमाणान्याह मनु:,—

"अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिवर्द्धते ॥
एवं यद्यप्यनिष्टेषु वर्त्तन्ते सर्वकर्मसु ।
सर्वथा ब्राह्मणा: पूज्या: परमं दैवतं हि तत्" ॥

तथाच कुल्लूकभट्ट:,—

एवं तर्हि विद्वांसं ब्राह्मणं सेवेतेत्याह ।

अविद्वानिति—यथाऽऽहितोऽनाहितो वा अग्निर्महती देवता । एवं- मूर्खो विद्वांश्च ब्राह्मण: प्रकृष्टा देवतेति ।

श्मशानेष्वित्यादि—यथाग्निर्महातेजा: श्मशाने शवदाहकार्य्येऽपि नैव दुष्टो- भवति । किन्तु पुनरपि यज्ञेषु हूयमानोऽभिवर्द्धते । एवमिति । एवं- कुत्सितकर्मस्वपि सर्वेषु यद्यपि ब्राह्मणा: प्रवर्त्तन्ते तथापि सर्वप्रकारेण पूज्या:- यस्मात्प्रकृष्टं दैवतम् ।

तथा पुन: स एव,—

"न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ।
पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नत:" ॥ इति ।

तथाचाह व्यासः,—

"कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च।
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते।
ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते"॥ इति।

तथाच विष्णुः,—

"दैवे कर्मणि ब्राह्मणं न परीक्षेत प्रयत्नात्पित्र्ये परीक्षेत"। इति।

पूर्वतो वाक्यान्तरजाले ब्राह्मणानां विकर्मस्थत्वेन वेदविवर्जितत्वेन-चाकुलीनत्वापादनावलोकनात्।

तथास्मिन् वाक्यजाते पित्र्यकर्मान्तरेण दैवकर्मणि विप्राणामपांक्तेयत्वादि-दोषदूषितानामप्यपरीक्षणीयत्वस्य तथा विकर्मस्थत्वादिदोषविशिष्टानामपि-ब्राह्मणानां पूज्यत्वस्य च परिदर्शनाच्च परस्परविरोधसम्भावनयाऽप्रमाणापत्त्या-समाश्रितं पूर्वाचार्य्यैर्निम्नलिखितप्रकारेणेति प्रतीयते।

यथा, स्तेनादिनिन्दितकर्मानुष्ठानेनापि ब्राह्मणा न ब्राह्मणत्वविहीनाः। किन्तु परिशुद्धकर्मतत्परश्रोत्रियापेक्षयाऽतीवन्यूनत्वमवाप्ता इति राद्धान्तः इति।

ननु मन्वादिभिः कूलस्य यद्यदनुष्ठानेन प्राधान्यम्।

यद्यदन्यथाचरणेन तद्विपरीतत्वं चापादितम्। तत्तु कल्पनासम्भूत-मिति चेन्न। कुष्ठादिरोगाक्रान्तकुलोत्पन्नस्यापत्यस्य तत्तद्रोगादिशालित्वरूप-फलस्य तथा शुचिमत्कुलसम्भूतस्य सद्गुणाधारात्मकफलस्य च दृष्टिविषयत्वेन-विज्ञानसम्मतत्वात्। अतो विशेषणजातमेतन्न निष्प्रयोजनकम्, किन्तु कुलस्य-यावतीयविशेषणस्य सत्यपि दृष्टफलकत्वे ग्रन्थबाहुल्यभियाऽत्र नोपात्तं विवरणं-प्रत्येकस्यास्य अतः फलमूलं सर्वेषां वैज्ञानिकम्।

न च भारतीयविभिन्नप्रादेशिकब्राह्मणादिजातीयानां तत्तत्प्रादेशिक-तत्तज्जातीयैः साकं विधेयः केवलं यौनादिसम्बन्ध इति वाच्यम्।

प्रोक्तप्रमाणवृन्देषु साकं तत्तत्प्रादेशिकतत्तज्जातीयैस्तत्तत्प्रादेशिकतत्त-ज्जातीयानामुपयमादिसम्बन्धस्योल्लेखादर्शनात् केवलं साद्धं भारतीयब्राह्मणादि-जातिभिन्नदेशीयब्राह्मणादिजातिजातस्यैव यौनादिसम्बन्धस्योल्लेखावलोकनाच्च।

अतोऽकुलीनतापादकदोषदूषितैर्भारतीयब्राह्मणादियावतीयतत्तज्जातीयैः सह-तद्देशीयब्राह्मणादियावतीयतत्तज्जातीयानां प्रतिग्रहादिसम्बन्धोऽनुष्ठेयो निर्विवादमिति शास्त्रीयसिद्धान्तः।

आपदि तु प्रोक्तदोषदूषितेष्वपि कुलेषु उपलक्षणविधया विवाहादिसम्बन्धस्य शास्त्राभ्यनुज्ञातत्वेनादोषत्वात् तथैव लोके व्यवहारदर्शनाच्च।

ननु सार्द्धं दूरदेशीयैस्तथा निकटस्थैश्च नानुष्ठेयो यौनसम्बन्ध इत्युक्तशास्त्रीयनिषेधस्य जागरूकत्वेन कथं विधातव्यः साकं दूरदेशीयैर्यौनसम्बन्ध इति-चेन्न। पुरा मार्गस्यातिदुर्गमतया दूरगमनासम्भवेन सत्यपि दूरदेशीययौनसम्बन्धनिषेधेऽधुनातनभारतीयचक्रवर्त्तिनः सुशासनप्रभावात् संप्रति सरणेः-सुगमत्वेन तदाचरणे दोषासम्भवादन्यथा दूरबान्धवानुष्ठाने नान्दीमुखश्राद्धविधायकोक्तकाले विवाहाङ्गं कुर्य्याद् नान्दीमुखं पिता देशान्तरे विवाहश्चेत्तत-गत्वा भवेदिदमिति धर्मशास्त्रीयवचनस्य नैरर्थक्यापत्तेः।

तथा निकटसम्बन्धाचरणनिषेधविषयके सत्यपि शास्त्रीयप्रमाणे तदनुष्ठानस्य चक्षुर्विषयत्वाच्च। विषयश्चैतस्य पूर्वतो विवृतत्वाद्विरतिरत्रैवास्य। किन्तु देशान्तरस्य शास्त्रानुमोदितलक्षणं नोक्तं पूर्वतः। अतः साधारणावगतये-तावत्प्रकाश्यन्तेऽथस्तात्तदुद्भावकानि प्रमाणानि।

यथा रघुनन्दनोद्वाहतत्त्वे देशान्तरपरिभाषायाम्।

बृहन्मनुः,—

"वाचो यत्र विभिद्यन्ते गिरिर्वा व्यावधायकः।
महानद्यन्तरं यत्र तद्देशान्तरमुच्यते॥
देशनामनदीभेदान्निकटोऽपि भवेद्यदि।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा।
दशरात्रेण या वार्त्ता यत्र न श्रूयतेऽथवा"॥

तथाच बृहस्पतिः,—

"देशान्तरं वदन्त्येके षष्टियोजनमायतम्।
चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च"॥

श्रुतिद्वयवचनोक्तवागादियोजनादिभेदानां सामञ्जस्यार्थमेवं व्याख्यायते-त्रितयवैशिष्ट्ये त्रिंशद्योजनाभ्यन्तरे द्वितयवैशिष्ट्ये तदुपरि चत्वारिंशद्योजनाभ्यन्तरे एकवैशिष्ट्ये चत्वारिंशद्योजनोपरि षष्टियोजनाभ्यन्तरे वाणीगिरिमज्जानव्यन्तरितत्वभेदाभावेऽपि वैदेश्यमिति शुद्धिचिन्तामणिः।

निरुक्तवचनव्रातस्तोऽवगन्तव्यं तल्लक्षणं नानाविधं अतएव सगोत्रसपिण्डसमानप्रवरवरकन्याविषयकशास्त्रीयनिषेधस्थलमपहाय भारतीयदूरप्रदेशस्थस्वस्वजातीयैः साकं यौनसम्बन्धानुष्ठानं न दोषावहमिति परामर्शः। ननु स्वस्वप्रदेशस्थितैर्भारतखण्डविभिन्नप्रदेशीयब्राह्मणादिभिः सह यौनसम्बन्धाचरणानवलोकनात् कथं दूरदेशीयतत्तज्जातीयैः समं तत्सम्बन्धानुष्ठानं विधेयमितिचेन्न। तदनुष्ठाने धर्मशास्त्रीयप्रमाणस्य सत्यपि नयनागोचरत्वे बहुदिनावधि परस्परं तत्सम्बन्धाभावेन तादृशसंस्कारमूलकतद्विधानाभावस्य प्रचलितत्वात्। तथा तत्प्रचलनातिक्रमणस्यादोषाधायकत्वात् अतस्तदनुष्ठानंविधेयमिति प्रेक्षावतां राद्धान्तः। न च निरुक्तशुद्धिमत्कुलमन्तरा साकंप्रोक्तदोषदूषितकुलेन बन्धुता कदापि न विधेया सम्भावितपातित्येन ब्राह्मणादिवंशादिति वाच्यं शुद्धिमत्कुलापेक्षया न्यूनतां लभमानस्यापि प्रोक्तप्रमाणव्रातबलाद्ब्राह्मणादिकुलतः पातित्याभावात्।

अतः क्षययक्ष्मादि सांक्रामिकरोगविशिष्टकुलं परित्यज्य सत्यपि बन्धुत्वे नजात्यन्तरपरिणामित्वम्; किन्तु प्रसिद्धश्रोत्रियकुलापेक्षया न्यूनत्वमित्यवधेयम्। तथेदानीं दृश्यते लोकव्यवहारः सर्वत्र भारतस्य। यत्तु सम्प्रति भारतस्यास्यसर्वत्र सन्ति ये कुलीनाः ते सर्वे प्रधानश्रोत्रियादिपरिचालककुलीनत्वलक्षणविहीना अपि सृष्ट्यादितः कुलीनत्वात्मकतया श्रीजगदीशस्य सम्भूता इतियत्प्रकाशयन्ति तन्मन्दम्। तद्विषयकशास्त्रीयप्रमाणस्य नयनागोचरत्वात्।

ननु कथमासीदिदानीन्तनकुलीनत्वसृष्टिरत्रेति चेदुच्यते यथाधुनिककुलक्षणं; कुलमुत्कर्षविशेषोपलक्षितवंश इति सङ्केतितम्। तस्यापत्यार्थे कुलशब्दादीनप्रत्ययेन कुलीन इति पदसिद्धिरिति। अर्थात् कुलीनशब्देनोत्कर्षविशेषवद्वंशजातव्यक्तिरिति। तथाच लक्षणं उत्कर्षविशेषधर्मावच्छिन्नवंशजातत्वे सति तद्धर्मवत्त्वं कुलीनत्वमिति। उत्कर्षविशेषस्तु नवधा गुणाः।

तद्यथाच,—

"आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् ॥
निष्ठा वृत्तिस्तपोदानं नवधा कुललक्षण"मिति ॥

जागरूकं शास्त्रीयप्रमाणम् । अतएवोत्कर्षविशेषात्मक-नवधागुणविशिष्टत्वं-कुलीनत्वमिति निर्गलितार्थः । अनेनैकस्मिन् वंशे न रूढ़ं कुलीनत्वं किन्तु-तत्तज्जातीयानामन्तराले यद्यत्कुलमुत्कर्षविशेषधर्मवत्त्वावच्छिन्नं तथा तत्तत्कुल—सम्भूता यद्यद्व्यक्तिश्चोत्कर्षविशेषधर्मवत्त्वावच्छिन्ना, तत्तत्कुलं सर्वोत्कृष्टं-तत्तद्वंशजातव्यक्तिश्च कुलीनेत्यवगन्तव्यम् । ततश्च साकं भारतीयप्रदेशान्तर-वासिब्राह्मणादिजातीयैर्भरतखण्डविभिन्नप्रदेशस्थब्राह्मणादिजातीयानां सत्युपयमे सिद्धे सुतरामन्नाशनादिकरणं निजनिजजातीयैः सार्द्धं स्वस्वजातीयानां-सुसिद्धं निर्विवादमेव ।

नच "शाक्षावा वाजपेयिनः" इति धर्मशास्त्रीयप्रमाणसामर्थ्याद्वाजपेयिनामेव शाक्षात्वतया स्वस्वदेशीयैस्तथा प्रदेशान्तरीयैश्च ब्राह्मणैः सर्वैः सह सर्वेषां-कथमन्नपानादिकं विधेयमित्युक्तमितिवाच्यं "जीवितात्यय" मित्यादि मानवीय-वचनबलात् । तथा "आपन्नत" इति याज्ञवल्क्यप्रमाणसामर्थ्याच्चापदि-स्वस्वजात्यपेक्षया नीचजातीयान्नाशनस्यापि दोषाजनकतया कैमुतिकन्यायेन-ब्राह्मणान्नभक्षणस्य दोषोत्पादकत्वाभावात्; तथा षट्कर्मनिरतब्राह्मण-वृन्दस्यापि शाक्षात्वतया प्रमाणस्यास्य तन्मध्यतो वाजपेययज्ञकर्त्तुः प्रशंसा-परत्वाच्च । ननु जीवितात्ययमापन्न इत्यादि प्रमाणजातस्य जागरूकतया कथ-मदानीं नीचजातीयान्नभक्षणं नानुष्ठेयमिति चेन्न; पूर्वोक्तधर्मशास्त्रीयप्रमाण-जातेन कलियुगीयेदानीन्तनानेहसि ब्राह्मणादीनां ब्रह्मादितेजसः क्रामिक-ह्रासस्य प्रकाशिततया नीचजातीयान्नभक्षणस्यैतत्कालाविषयत्वात् ।

अतो यत्र कुत्राप्यवस्थितानां सन्ध्यादिस्वस्वजातीयनित्यकर्मानुष्ठानपरा-यणानां ब्राह्मणादिजातीयानां केवलं स्वस्वजातिकर्त्तृकान्नभक्षणमधुनातना-पदि न दोषाधायकमिति धर्मशास्त्रीयसिद्धान्तः ।

इत्यन्तर्जातीयविवाहादिविचारः ।

अथ वरस्य क्रमप्राप्तकन्यागृहगमनविधिर्यथा वीरमित्रोदये,—

"पुण्ये मुहूर्त्ते कुर्वीत विवाहं विधिवद्द्विजः।
तत्राभ्युदयिकं श्राद्धं कुर्य्यात् स्वस्ति च वाचयेत्॥
अपरेद्युः कृतस्नानो धृत्वा धौताम्बरद्वयम्।
भूषितो गन्धमाल्याद्यैर्वन्दिताभीष्टदेवतः॥
ब्राह्मणान् भोजयित्वा तैः कृतपुण्याहवाचनः।
कृतकौतुकबन्धश्च मित्रबान्धवसंयुतः॥
यानं यथार्थमारुह्य यातव्यञ्च वधूगृहम्।
तस्य द्वाराद्वहिः स्थित्वा प्राङ्मुखोऽभिमुखागतैः॥
प्रदीपपूर्णकुम्भादिपाणिभिः वनिताजनैः।
कृताभ्युद्गमनो गेहं प्रविशेत्-सह बन्धुभिः"॥

तथा ब्रह्मपुराणेऽपि,—

"पूर्वेद्युः स्वस्तिवचननान्दीश्राद्धसमन्वितः।
अपरेद्युः कृतस्नानोऽहतवस्त्रधरो वरः॥
भुक्ता निश्यह्नि पूर्वाह्ने उद्वहेन्निशि सर्वदा।
भूषणैः फलताम्बूलैर्गन्धपुष्पाक्षतादिभिः॥
शुक्लाम्बरधरैर्वाद्यैर्विप्राशीर्वचनैः सह।
गच्छेच्च कन्यकागेहं वरश्च स्त्रीपुरःसरः॥"

भुक्ता निशीति, निशि पूर्वेद्युः रात्रौ भुक्ता परेद्युः अह्नि दिवसे पूर्वाह्ने-अर्थात् दिवसस्य पूर्वभागे विवाहलग्ने तथा निशि रात्रौ सर्वदा रात्रेः यस्मिन्-कस्मिन्नपि विभागे विवाहलग्ने उद्वहेत् विवाहमनुतिष्ठेदित्यर्थः।

तथा शौनकोऽपि,—

"यस्मिन् काले विवाहः स्याद्रजन्यां यदि वा दिवा ।
तत्र होममुपक्रम्य प्राग्विवाहसमापनात् ॥
वधूर्वाग्नियमं कृत्वा वर्त्तेतावहिता सती ।
निवृत्ते तु विवाहे तां वधूं ध्रुवमरुन्धतीम् ॥
सप्तर्षीं श्चेचयेत् पश्चाद्दध्वा वत्‌समशक्तितः ।
बध्वर्थं जीव पत्न्यादिवाक्यञ्च व्याहरेद्वरः ॥"

निरुक्तवचनजाताभ्यन्तरीक्तदिवाविवाहरात्र्युपयमयोरन्तराले दिवाविवाहस्य-मुख्यत्वम् । पूर्वाह्नविहितनान्दीमुखश्राद्धस्य तथा कन्यादानस्य च दिवानुष्ठित-त्वात् । श्राद्धदानयोर्दिवानुष्ठानस्य शास्त्रप्रतिपादितप्राशस्त्याच्च । तथा-रात्रिविवाहस्य गौणत्वं, श्राद्धदानयोरात्र्यनुष्ठानस्य शास्त्रनिषिद्धत्वेऽपि प्रति-प्रसववाक्यव्रातेन रजन्यां विवाहादौ श्राद्धदानविधानस्य शास्त्राभ्यनुज्ञातत्वात् ।

यथात्र प्रतिप्रसववाक्यान्याह—शौनकः,—

"यस्मिन्नह्नि विवाहः स्यात्-सायमारभ्य तस्य तु ।
परिचर्य्यां विवाहाग्नेर्विदधीत स्वयं द्विजः ॥
यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति ।
उपक्रम्योत्तरस्याह्नः सायं परिचरेदमुम्" ॥ इति ।

तथा परिशिष्टान्तरेऽपि,—

"रात्रौ विवाह उत्पन्ने कथं कुर्वन्ति याज्ञिकाः ।
रात्रावतीतकालश्चेत् श्वः सायं तदुपक्रमः" ॥

तथा विवाहादौ रात्रौ दानादिकमाह,—

देवलः,—

"राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च" ॥ इति ।

तथा भविष्येऽपि,—

"रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः।
नैमित्तिकन्तु कुर्वीत स्नानं दानञ्च रात्रिषु॥
यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने।
दानान्येतानि शस्तानि निशि देवालये तथा"॥ इति।

अतएव यत्तु,—

"विवाहे तु दिवा भागे कन्या स्यात्पुत्रवर्जिता।
विवाहानलदग्धा सा नियतं स्वामिघातिनी"॥ इत्यादि।

विवाहनिषेधकज्योतिःसारसंग्रहवचनं, तत्तु युवतीविवाहपरमिति विज्ञेयम्। तद्विषये तत्समयस्य सुयोग्यत्वात्। इत्यलं प्रपञ्चेन।

इति समासं विवाहव्रातप्रकरणम्॥

---

## अथ क्रमप्राप्तविधवापत्यन्तरग्रहणनिषेधविचारः।

सा च द्विविधा। पुनर्भूः स्वैरिणी च। पुनर्भूरपि द्विविधा; क्षता-अक्षता चेति।

तत्र याज्ञवल्क्यः,—

"अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्"॥

अस्यार्थः—पुनः संस्कृता पुनर्भूः। सा च संस्कारद्वैविध्यात् द्विविधा। तत्र विहितविवाहसंस्कारमात्रसंस्कृता अनुपभुक्ता अक्षतेत्युच्यते, क्षता पुनर्विवाहात् प्रागेव निषिद्धपुरुषसम्बन्धदूषिता। या तु कौमारं पतिमुत्सृज्य स्वेच्छया पुरुषान्तरं श्रयति सा स्वैरिणी।

एतासां किञ्चिदवान्तरभेदेन सप्तविधत्वमाह कश्यपः,—

"सप्त पौनर्भवाः कन्याः वर्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ।
उदकस्पर्शिता या च या च पाणिगृहीतिका ॥
अग्निं परिगता या च पुनर्भूप्रसवा च या ।
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्" ॥ इति ।

बौधायनोऽपि,—

"वाचा दत्ता मनोदत्ताऽग्निपरिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा-प्रसूता चेति सप्तविधा पुनर्भूः । तां गृहीत्वा न प्रजां न धर्मं विन्देदिति" ।

नारदस्तु पुनर्भूत्रैविध्यं स्वैरिणीचातुर्विध्यं चाह,—

"वरपूर्व्वास्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी च चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणि ॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्त्तिता" ॥

उत्पन्नसाहसा उत्पन्नव्यभिचारा ।

"असत्सु च देवरेषु बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता ॥
स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात् समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं यायात्-सा द्वितीया प्रकीर्त्तिता ॥

मृते भर्त्तरि तु प्राप्तान् देवरादीनपास्य या ।
उपगच्छेत्-परं कामात्-सा तृतीया प्रकीर्त्तिता ॥
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या ।
तवाहमित्युपागमत्-सा चतुर्थी प्रकीर्त्तिता ॥"

एतासां सर्व्वासामविवाह्यत्वेऽप्यतिक्रान्तनिषेधेन परिगृहीता ऋणं द्वयोरेव-देयम् ।

तथाच स एव, —

"अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् ।
ऋणं तयोः पतिकृतं दद्यायस्तं उपाश्रुतः" ॥ इति ।

निरुक्तप्रमाणोक्तानां पुनर्भूवां स्वैरिणीनां चाभ्यन्तरे विधिनिषेधौ-कस्याः कीदृशावभ्यनुज्ञातौ महर्षिभिः पूज्यपादैरुल्लिखेतेऽधस्तादुयथाक्रमं-तावेव । यथा,—

कन्याया— अनन्यपूर्व्विका इति विशेषणान्तरोपादानेन व्यावर्त्त्यन्ते-निरुक्तवाग्दत्तादिसप्तपुनर्भुवः ।

विशेषणस्यास्य व्याख्यानं तु यथा "या दानेनोपभोगेन वा पुरुषान्तर-पूर्व्विका न भवति तां । अनेन वाग्दत्तादीनां सप्तानां पुनर्भुवामनुष्टितः-पुनर्विवाहो भारते पूर्व्वतः पूर्व्वाचार्य्यैस्तत्तत्कालोपयोगितयेति प्रतीयते-स्पष्टतः । अन्यथा तद्विशेषणोपादानस्यानावश्यकत्वात्, प्रवृत्तिमन्तरा निवृत्तेर-सम्भवाच्च । अतोऽत्र वाग्दत्तामनोदत्तयोर्निषेधः पूर्व्वस्य निर्द्दिष्टत्वे बोध्यमिति ।

अतएव नारदः —

"दत्त्वा न्यायेन यः कन्यां वराय न ददाति ताम् ।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चौरवत्" ॥ इति ।

तत्रैव दण्डं विधत्ते, दुष्टे तु पूर्व्ववरे वाग्दत्तापि वरान्तराय देया ।

तथाच पराशरः,—

"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते"॥

अस्यार्थः, वाग्दानानन्तरं पाणिग्रहणात् प्राक् पत्ता सम्भावितोत्पत्तिक-पतित्वे पूर्वस्मिन् वरे नष्टे सति लक्षणया दूरदेशगमनेनाऽपरिज्ञातवृत्तान्ते सति।

यथा, वरणानन्तरं देशान्तरगमने विशेषमाह कात्यायनः,—

"वरयित्वा तु यः कश्चित् प्रणश्येत्-पुरुषो यदि।
ऋत्वागमांस्त्रीनतीत्य कन्यान्यं वरयेद्वरम्"॥

तथा नारदोऽपि,—

"परिगृह्य तु यः कन्यां नरो देशान्तरं व्रजेत्।
त्रीन्तृतून् समतिक्रम्य कन्यान्यं वरयेद्वरम्॥
स्त्रीपुंसयोस्तु सम्बन्धाद्वरणं प्राग्विधीयते।
वरणाद्ग्रहणं पाणेः संस्कारोऽपि विचक्षणैः।
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्"॥ इति।

परिगृह्य वाचा दत्तां स्वीकृत्य त्रीन्तृनिति।

इदं च कन्याया अधार्य्यत्वे बोध्यम्।

शुल्कदानानन्तरं सति देशान्तरगमने कन्याया धार्य्यत्वे,—

"प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा।
धार्य्या सा वर्षमेकं तु देयान्यस्मै विधानतः"॥

इति नारदेनैव विशेषतो वर्ष प्रतीक्षाया अभिधानात्। स्त्रीपुंसयो-रित्यादेरयमर्थः। स्त्रीपुंसयोः संसर्गात्प्राक् त्रितयं क्रियते। वरणं,-पाणिग्रहणं, सप्तपदीक्रमश्चेति। तत्र वरणं नाम वरस्य सम्प्रदानत्वाय-दातृप्रार्थनम्। तदेव च वाग्दानम्। एवं स्थिते तयोः पाणिग्रहण-

सप्तपदोपक्रमणयो: पूर्वभावि यद्वरणं, तदनियतं अनियामकमित्यर्थ: तयो-रेकभार्य्यात्वोत्पादकत्वादिति भाव: ।

तथाच मनु:,—

"पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भि: सप्तमे पदे" ॥

दोषदर्शनादिति वाक्यशेषस्यायमर्थ: । वरणस्यानियामकत्वमपि पूर्व-वरस्य दोषे सत्येवेति । यदि त्वन्यस्मै दत्तायां पूर्ववरोऽप्यायाति तदाऽनूढ़ां तां-लभते । ऊढ़ायां तु स्वदत्तं द्रव्यमेव लभते न तु कन्याम् ।

विशेषमाहानेकेभ्यो वाग्दत्तायां कात्यायन एव,—

"अनेकेभ्योऽपि दत्तायामनूढायां तु तत्र वै ।
प्रत्यागतश्च सर्वेषां लभेतादिवर: सुताम् ॥
अथागच्छेयुरूढ़ायां दत्तं पूर्ववरो-हरेत् ॥" इति ।

तदेवं नष्टे इति व्याख्यातम् । एवं मृतेऽपि यथा । वाचा दत्तायामप्य-संस्कृतायां वरमरणे न कन्यात्वहानि: ।

तथाच वसिष्ठ:,—

"अद्भिर्वाचा च दत्तायां म्रियेतादौ वरो यदि ।
न च मन्त्रोपनीता स्यात् कन्यका पितुरेव सा" ॥

मन्त्रोपनयनं पाणिग्रहणादिकं विना वाचा दानमिवाद्भिरपि दानं न भार्य्यात्वोत्पादकमित्यर्थ: ।

अतएव यम:,—

"नोदकेन न वा वाचा कन्याया: पतिरुच्यते ।
पाणिग्रहणसंस्कारात्-पतित्वं सप्तमे पदे" ॥ इति ।

तथा प्रव्रजिते कृतसन्यासे क्लीबे चेति: । चकारादन्यजातीयादेर्ग्रहणम् ।

तथाच कात्यायनः,—

"स तु यद्यन्यजातीयः पतितः क्लीव एव वा।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा॥
ऊढ़ापि देया सान्यस्मै सहावरणभूषणा"॥ इति।

अत्रोढ़ापीत्यपिशब्दः कौमुतिकन्यायेन वाग्दत्ताया एवान्यस्मै दानमाचष्टे-न तूढ़ायाः। अन्यथा सगोत्रोढ़ाया अपि पुनर्विवाहो विरुध्यते।

तथाच, वाग्दत्तापि वरदोषे ज्ञाते गुणवतेऽन्यस्मै देयेत्यस्मिन् विषये।

यथाह्वतुर्वसिष्ठबौधायनावपि,—

"बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता।
अन्यस्मै विधिवत्-देया यथा कन्या तथैव सा"॥

तथाच याज्ञवल्क्यः—

"दत्तामपि हरेत्-पूर्व्वाच्छ्रेयांश्चेद्वर आव्रजेत्"।

वाक्यद्वयमेतच्च वाग्दत्ताविषयम्।

तथाच समर्थयत्येतद्गौतमः,—

"प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति"।

वरदोषास्तु प्रागुक्ताः।

तथाच शातातपोऽपि,—

"वरश्चेत्-कुलशीलाभ्यां न युजेयत कथञ्चन।
न मन्त्राः कारणं तत्र न च कन्यानृतं भवेत्॥
समाच्छिद्य तु तां कन्यां बलादक्षतयोनिकाम्।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत्॥
हीनस्य कुलशीलाभ्यां हरन् कन्यां न दोषभाक्"॥ इति।

तथाच बौधायनः—

"निसृष्टो वा हतो वापि यस्या भर्ता म्रियेत वा।
सा चेदक्षतयोनिः स्याद्-गतप्रत्यागतापि वा॥
पौनर्भवेन विधिना पुनः संस्कारमर्हति"। इति।

प्रमाणजातेनानेन वाग्दत्ता कन्या अक्षतयोनिका न युवती कन्येति-प्रतीयते ग्रन्थकर्तुरभिप्रायः।

तथाच शुल्कदानानन्तरं देशान्तरगमने विशेषमाह मनुः,—

"कन्याया दत्तशुल्काया म्रियेत यदि शुल्कदः।
देवराय प्रदातव्या यदि कन्यानुमन्यते"॥ इति।

केषां केषामपि प्रमाणानामुपयुक्तप्रमाणाभ्यन्तरतः परस्परविप्रतिपत्त्या-भासपरिदर्शनादुयत्त्वादिमतोद्भावनपूर्वकः कीदृक् तत्परिहारविवेकोऽनुष्ठीयते निबन्धकर्त्तृभिस्तदधस्तादुद्भाव्यतेऽत्र। यथा—

यत्तु,—

"विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा"।

इत्युपक्रम्य,—

"ऊढापि देया सान्यस्मै सप्रावरणभूषणा"

इति कात्यायनीयं सगोत्रायाः पुनर्विवाहस्मरणं, तद्युगान्तरीयविषयम्।

कलौ तु,—

"ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्"॥

इति ब्रह्मपुराणेन साक्षात् पुनर्विवाहनिषेधात्।

तस्मात् परिपालनं परिशेषेण कलिविषयमवतिष्ठते इत्याहुः।

अत्रेदं प्रतिभाति, ऊढायाः पुनरुद्वाहमित्ययं निषेधो न सगोत्रोढा-

पुनर्विवाहं विषयीकरोति। तस्या उद्वाहत्वाभावात्। विवाहो-नाम-संस्कारजनिका क्रिया। न च सगोत्रायां संस्कारा उत्पद्यन्ते। असगोत्रा-मित्यनेन तस्याः पर्युदस्तत्वात्। न च "ऊढ़ापि देया सान्यस्मै, "उत्सृज्य तां-तयोर्भार्य्यां" इत्यादि प्रयोगान्यथानुपपत्त्या तस्यामपि संस्कारसिद्धिः। तस्य प्रवृत्तिनिमित्तत्वादिति वाच्यम्। गौणीतयापि प्रयोगोपपत्तेः। संस्कारवत्-क्रियामात्रस्यापि प्रवृत्तिनिमित्तत्वे विवाहशब्दस्य नानार्थत्वापत्तेः।

तस्मात् सगोत्रायां संस्कारानुत्पत्त्या ऊढ़ात्वाभावात् न पुनर्विवाहनिषेधः-प्रवर्त्तते।

निषेधस्तु,—

"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चास्वापत्सु नारीणां पतिरन्यो विधीयते"॥

इत्यादुत्पन्नसंस्कारस्त्रीविषयत्वेनाप्युपपद्यत इति। तथाच सगोत्रोढ़ायां-पालनविवाहयोर्विकल्प एव सिध्यति।

ननु मास्तु ऊढ़ायाः पुनरुद्वाहमित्यस्य निषेधस्यायं विषयः। "दत्ता-पताया: कन्यायाः पुनर्द्दानं वरस्य च" इत्यस्य तु निषेधस्य विषयो-भविष्यत्येव। सगोत्रोढ़ायां पर्युदस्तत्वेन संस्कारानुत्पत्त्या विवाहाप्रसक्तावपि-दानपदार्थोत्पत्तौ बाधकाभावेनैतन्निषेधप्रवृत्तेरव्याहतत्वात्।

दानपूर्वकत्वाद्विवाहस्य दाननिषेधे विवाहस्यापि निषेधसिद्धेः।

न च दानेऽपि सगोत्रपर्य्युदासोऽस्ति। येन दानं न सिध्येत्। यद्यपि-न सगोत्राय दुहितरं प्रयच्छेदिति दानेऽपि सगोत्रपर्य्युदासोऽस्त्येव तथाप्यसाव-दृष्टार्थो न दानपदार्थोत्पत्तौ बाधकः तस्य लौकिकत्वात् अतएव वैधा-वैधदानभेदेन दत्तानपाकर्मदत्ताप्रदानिकमिति संज्ञाभेदोऽप्युपपन्नः। अदृष्ट-मात्रसंस्कार एव। स च भार्य्यात्वरूपः, तदर्थक एव दानेऽयं पर्य्युदासो-न दानमात्रे। अन्यथा दत्तपुत्रीकरणेऽपि सगोत्राय दुहितृदानं न स्यात्। तस्मात् सगोत्रेऽपि कन्यादाननिष्पत्त्या तस्याः पुनर्दानं कलौ निषिध्यते। तन्निषेधेनैव विवाहनिषेधोऽप्यर्थसिद्ध एव। दानपूर्व्वकत्वात् विवाहस्य।

यद्येवं तर्हि सगोत्रायां गन्धर्वादिविवाह: कुतो नेष्यते। तस्य दानपूर्व्वकत्वाभावादिति चेन्न। ऊढ़ाया: पुनर्गान्धर्वादिविवाहनिषेधेऽपि ब्राह्मादिविवाहस्यैव मया निषेधोपगमादिति प्राप्तेऽभिधीयते। दत्ताशब्दो विवाहपर एवावश्यं वाच्य:। दानमात्रपरत्वे वाग्दत्तायां वरदोषदर्शने वरान्तरायाऽपि पुनर्दानं न स्यात्।

न च तत्र शिष्टा: कलिदोषं मन्यन्ते। दानशब्दोऽप्येष लक्षणया-विवाहमेवाभिधत्ते ऊढ़ाया: पुनरुद्वाहमित्यनेनैकवाक्यतालाभात्। अन्यथा-श्रुत्यन्तरकल्पना स्यात्। ततश्च सगोत्रायां दानपदार्थानिष्पत्तावपि संस्कारा-निष्पत्त्या ऊढ़ात्वाभावात् कलिनिषेधाप्रवृत्त्या पुनर्विवाह: केन वारणीय इति।

यत्तु दत्ताघ्नतेति वाक्यं ब्राह्मादिचतुष्टयविषयम्। ब्राह्मादिचतुर्णां दान-पूर्व्वकत्वात् पुनर्दाननिषेधोपपत्ते: न गान्धर्वादिविषयं। तत्र दानाभावात्। ऊढ़ाया: पुनरिति वाक्यं तु गान्धर्वादिचतुष्टयविषयं। सामान्यवाक्यत्वादिति-व्यवस्थापनम्। तदप्येतेनैकमूलकल्पनालाघवेन निरस्तम्। एतेन—

"बालिकाक्षतयोनाश्च वरेणानेन संस्कृति:।

इत्यादीन्यपि वाक्यानि सगोत्रपरतया व्याख्यातानि।

कन्यकानां योऽयं पुनरुद्वाहो विहित: सोऽक्षतयोन्या एव ननु युवत्या-इति ध्येयम्।

"सा चेदक्षतयोनि: स्याद्गतप्रत्यागतापि वा।
पौनर्भवेन भर्त्रा सा पुन: संस्कारमर्हति" ॥ इति। मनुस्मरणात्।

अत्र सेति तच्छब्देन पूर्व्वप्रक्रान्ता पुनर्भूरुच्यते।

यद्यपि,—

"या पत्या वा परित्यक्ता विधवा स्वेच्छयाऽपि वा।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते"। इति।

पुनर्भूविशेष एव प्रक्रान्तो न पुनर्भूसामान्यम्।

तथापि—

अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः" । इति ।

स्मृत्यन्तरवाक्यैकवाक्यतया पुनर्भवमात्रजातस्य पौनर्भवत्वेन पुनर्भू-सामान्यस्यैव प्रक्रमोऽभिप्रेत इति ध्येयम्। तस्याश्चाक्षतयोनित्वलक्षण-गुणविशेषपुरस्कारेण पुनःसंस्कारो विधीयते।

"सा चेदक्षतयोनिः स्यात्-पुनः संस्कारमर्हति" । इति ।

नारदोऽपि,—

"उद्वाहितापि या कन्या न चेत् संप्राप्तमैथुना ।
पुनः संस्कारमर्हति यथा कन्या तथैव सा" ॥ इति ।

अतएव मनुः,—

"पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
न त्वन्यासु क्वचिन्नृणां लुप्तधर्म्मक्रिया हि ताः" ॥

इत्यक्षतयोनीनामेव कन्याशब्दाभिधेयानां मन्त्रसंस्कारमाह। "कन्या अग्निमयक्षतेति" मन्त्रलिङ्गात्।

एतेनापरार्कीयमपि गतप्रत्यागतायां क्षतात्वव्याख्यानं परास्तम्।

यच्च पुनर्भूर्या कौमारं भर्त्तारं उत्सृज्य मानैः सह चरित्वा पुनस्तस्यैव गृहमाविशति, सा पुनर्भूर्भवतीत्युपक्रम्य। नमस्कारवोधकं वशिष्ठवाक्यमत्रो-दाहृतम्।

तत्रापि चरित्वेत्यत्र नैकान्ततः सुरतमेव कर्मतयोपतिष्ठते। सप्तपदीनां-चरित्वेत्यस्यापि सम्भवात्, बहूनां अनुग्रहो न्याय्य इति न्यायेनानेकवाक्यानु-रोधाच्च।

वस्तुतस्तु धात्वर्थमर्य्यादयापि सप्तपदाचरणमेव मुख्यार्थो गम्यते न सुरत-मिति धेयम्।

पुनर्विवाहेऽक्षतयोन्याः सति निरुक्तवचनैः प्रतिपादितेऽपि सांप्रतिक-कालानुकूलत्वमस्ति न वेत्यस्य प्रमाणयुक्तिनिर्देशपूर्वकविवेचनं क्षतयोनि-

स्वैरिणीपत्यन्तराश्रयणविचारगर्भकनियोगविधेः परामर्शाभ्यन्तरे प्रदर्शनीयं-सुकरायेत्यत्र नोट्टङ्कितं पार्थक्येन।

सम्प्रत्यतः प्रारभ्यते क्षतयोनिस्वैरिणीपत्यन्तरग्रहणविवेकगर्भकनियोग-विधिविवेचनमादितः। तत्र प्रथमतोऽन्यार्थं अन्यदर्थपरिणयने प्रतिप्रसवः,

तत्र याज्ञवल्क्यः,—

"अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्" ॥

इति, यद्यप्यत्र गमनमात्रमेव श्रूयते। तथापि परिणयनपूर्वकमेव-तद्द्रष्टव्यम्।

"यस्या म्रियेत कन्याया वाचा सत्ये कृते सति।
तामनेन विधानेन निजो विन्देत देवरः ॥
यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।
मिथो भजेताप्रसवात् सकृत्-सकृदृतावृतौ" ॥

इति मनुस्मरणादयञ्च विवाहो वाचनिको मृतस्यैव भार्य्यात्वोत्पादकः-न वोढुः।

"अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्-सुतः"।

इति इदमस्मृतस्यैव परामर्शात्। स च वाग्दत्ताविषयो नोढाविषयः। "यस्या म्रियेत कन्यायाः" इति पूर्वोक्तमनुवचनात्।

तथा,—

"देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ।
प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये ॥
विधवायां नियुक्तस्तु घृताक्तो वाग्यता-निशि ।
एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन" ॥

इत्येवं नियोगमुपन्यस्य मनुः स्वयमेव निषेधति।

"नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ॥
न विवाहविधावुक्तं विधवाविदनं पुनः ।
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो-विगर्हितः ॥
मनुष्याणामपि प्रोक्तो वेणे राज्यं प्रशासति ।
वर्णानां संकरं चक्रे कामोपहतचेतनः ॥
ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं गर्हन्ते तं हि साधवः" ॥ इति ।

विधवायां नियुक्तस्त्वित्यत्र विधवाशब्दो वाग्दानानन्तरं विवाहात् प्राक्-मृतपतिकाविषयः । नोद्वाहिकेषु मन्त्रेष्विति हेतूपन्यासात् । नन्वेवमक्षत-योन्या एव संस्कारार्थविधाने,—

"या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती ।
वोढुः स गर्भो भवति सहोढ़ इति चोच्यते" ॥

इति मनुवचनं विरुध्येत, गर्भिण्याः संस्काराविधानादिति चेत् मैवं, सहोढ़स्य वोढुः पुत्रत्वान्यथानुपपत्त्या तादृशसंस्काराभ्युपगमात् ।

तस्मादक्षतयोनिश्चेद्-गतप्रत्यागता, तदा पूर्वभर्त्रा पुनः संस्कृत्य परि-ग्राह्येति । अन्ताहुः न संवाह्येति । कुतः पुनःसंस्कारस्य कलौ निषेधात् ।

यथा,—

"ऊढ़ायाः पुनरुद्वाहं जेष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्" ॥ इति ।

न च कलिनिषेधस्यापि युगान्तरीयधर्मस्यैव,—

"नष्टे मृते"-इत्यादि पराशरीयवाक्यमस्तु प्रतिपादकं कलाविति वाच्यं, "कलौ धर्माननुष्ठेयान् वक्ष्यामी"ति प्रतिज्ञाय तद्ग्रन्थप्रणयनाद्वाक्यस्यास्य-

तद्धर्मानुगतव्याख्यानस्य पूर्व्वप्रदर्शितत्वाच्चेति दिक्। तदपरे न चमके वरान्तर-कर्तृकस्यैव पुनर्विवाहस्य कलौ निषेधो न स्वकर्तृकस्य ।

"दत्तायाश्चैव कन्यायाः पुनर्दानं परस्य च" ॥

इति वृहन्नारदीयवाक्येनास्योपसंहारात् । अतएव,—

"बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः" ॥

इति धर्म्मज्ञसमये स्पष्टमेवाभ्यधायि । अन्यथा चिरप्रोषितजीवद्वार्त्ता-नाकर्णने कृतौर्द्ध्वदेहिकस्य पुनः प्रत्यागमनेऽपि स्त्रियाः पुनः संस्कारो-निषिध्येत ।

तस्मान्नास्य निषेधस्यायं विषय इति न पूर्व्वेण भर्त्रा तस्याः परिग्रहे-विरोध इति । तन्न साधु ।

स्वपरकर्तृकस्य द्विविधस्यापि पुनःसंस्कारस्य कलौ निषेधात् ।

यथा ब्रह्मपुराणे,—

"मृते भर्त्तरि या नारी त्यक्तवत्यथ तं स्वयं ।
यदि सा बालविधवा बलात्त्यक्ताऽथ वा क्वचित् ॥
तथा भूयस्तु संस्कार्य्या गृहीता येन केनचित् ।
तत्रक्ता भर्तृगृहं गच्छेद्-यदि दोषं विना पुनः ॥
संस्कर्त्तव्या च भर्त्रा सा प्रायश्चित्तादिभिः क्रमात् ।
स्त्रीणां पुनर्विवाहस्तु देवरात्पुत्रसन्ततिः ।
स्वातन्त्र्यं वा कलियुगे न कर्त्तव्यम् कदाचन" ॥ इति ।

अत्र यत्तच्छब्दोपादानादेकवाक्यत्वं, तच्चैवम् । या मृतभर्तृका या च-जीवन्तमेव भर्त्तारं स्वयं त्यक्त्वा सवर्णादन्यस्मात् पुरुषाद्गर्भं जनयेज्जनयितुं-प्रवर्त्तते, सा येन केनचित् गृहीता स्वीकृता भूयः संस्कार्य्या । तत्र मृत-भर्तृकायास्त्यक्तभर्तृकायाश्च विशेषप्राप्तावाह, यदि सा बालविधवा अक्षत-

योनिस्तथा त्यक्तभर्त्तृका भत्त्रापि वलान्निर्भत्स्य त्यक्ता भवति। तदैव संस्कार्य्या नान्यथा। अनेन वा,—

"या पत्या वा परित्यक्ता विधवा स्वेच्छायापि वा"॥

इति मनुवाक्येऽपि पत्या स्वेच्छया परित्यक्तेत्येवान्वयसिद्धिः। तेन चक्षतयोन्याः भर्त्तृपरित्यक्तायाश्च व्यावृत्तिः।

तत्र गर्भस्य कुण्डगोलकत्वपरिहारायाह,—

"भर्त्तुः पौनर्भवं सुतमिति"।

भर्त्तुर्द्वितीयस्य पत्युः पौनर्भवं पुनर्भ्वामुत्पादितं सुतं पुनःसंस्कृतायामुत्पन्नस्यैव पौनर्भवत्वात्। एवं पुनर्भूसंस्कारमुक्त्वा गतप्रत्यागता संस्कारमाह, त्यक्तेति,—

यदि सैव पुनर्भूः पौनर्भवं भर्त्तारं त्यक्त्वा दोषं पुष्टसंवन्धं विना पुनःभर्त्तुः पूर्वस्य पत्युः गृहं गच्छेत्।

तदा सा भर्त्त्रा पूर्वेण प्रायश्चित्तादिभिः संस्कार्य्येतिः पुनर्विवाह उक्तविषयः। स्वातन्त्र्यं विधवायाः पित्रादिपरिहारेण स्थितिरिति। अत्र तदा भूयस्तु संस्कार्य्येति परकर्त्तृकस्य भर्त्त्रा संस्कर्त्तव्या चेति स्वकर्त्तृकस्य च पुनःसंस्कारस्य प्रक्रमात् स्त्रीणां पुनर्विवाहस्त्विति सामान्यनिषेधो द्वावपि विषयीकरोति। विशेषविनिगमकाभावात्। यदि सन्निधिविनिगमकस्तदासुतरामस्मादभीष्टसिद्धिः। स्वकर्त्तृकस्यैव सन्निहितत्वात्। न च सामान्यस्यास्यवरेणान्येन संस्कृतिरिति विशेषेणोपसंहार इति वाच्यम्। सन्निधिलक्षणप्रकरणोपात्तविशेषद्वयान्वयेन विशेषरूपतयैवास्य नैराकांक्ष्यात्। ग्रन्थान्तरीयस्य विशेषस्य विलम्बोपस्थितिकतयाऽनन्वयात्। तस्मात् पुनर्भूर्गतप्रत्यागता चेत्तु गर्भेऽस्य संग्राह्ये। इति।

यत्तु,—

"सा चेदक्षतयोनिः स्यादिति"। मनुवचनम्

तद्युगान्तरविषयम् उक्तवचननिचयात्। अतएव तादृश्यामनुक्तस्त्यागोऽपि साम्प्रतविषये एव। यथा,—

"विधिवत्-प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम्।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम्" ॥ इति।

विगर्हितां पूर्वं प्रतिगृहीतामक्षतयोनिं वापीति मेधातिथिः। विप्रदुष्टामन्यगतभावामिति।

नारदोऽपि,—

"नादुष्टां दूषयेत्-कन्यां नादुष्टं दूषयेद्वरम्।
दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः" ॥ इति।

अदुष्टकन्यापरित्यागे दण्डमाह,—

"अदुष्टाञ्च त्यजन्-दण्ड्यो दूषयंस्तु मृषागतम्"। इति।
प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेद्वरः।
विनेयः सोऽथ दण्डेन कन्यां तामेव चोद्वहेत्" ॥

कात्यायनः,—

"वरदोषमनाख्याय पाणिं गृह्णाति यो नरः।
याचनं च प्रकुर्वीत तद्दत्तं नाप्नुयात्तु सः।
कन्यादोषेऽप्येवमेव दाता दण्ड्यो वरस्तथा" ॥

याज्ञवल्क्योऽपि,—

"अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम्" ॥ इति।

व्यवस्थानमेतद्भारतीयानां निबन्धकाराणामाशयानुगतमिति प्रदर्शितमत्र-सम्यक्तया।—

किन्त्वस्य बहुसंशयसङ्कुलत्वात् सहजेनैवावगन्तव्यं साधारणेनैतदिति-स्फुटतोऽत्र न प्रकाशितम्। अतोऽधस्तादत्र विव्रियते सन्देहनिरसनसहितमिदं वैशद्येन। यथा,—निरसनमेतज्जातिनिर्विशेषेण उत जातिभेदेनेत्याशङ्कायां द्विजातित्रयविषयकमेवेदमिति प्रतिभाति निरुक्तप्रमाणसन्दर्भपर्यालोचनतः।

अतएव शास्त्रतोऽविगीतशिष्टाचारतश्च ब्राह्मणादिजातित्रयाभ्यन्तरे-

ऽवलोक्यते निषेधो विधवोपयमनस्य सनियोगस्येति प्रेक्षावतां परमार्थः। विवेचनमेतस्यवलं करोति पूज्यचरणो मनुरेव प्राक्प्रदर्शितस्वोक्तप्रमाण-जातेनैव। तत्प्रमाणव्रताताभ्यन्तरतः कतिचित्प्रमाणानि प्रदर्श्यन्ते निम्नतः-प्रसङ्गसङ्गत्यर्थं। यथा,—

"नान्यस्मिन् विधवानारीत्यारभ्य कामोपहतचेतन" इत्यन्तप्रमाणान्युक्तानि-पुरतः।

तथाच, "एवं नियोगविधिमभिधाय दुषयितुमाह,—

नान्यस्मिन्निति—ब्राह्मणादिभिः विधवा-स्त्रीभर्त्तुरन्यस्मिन् देवरादौ न-नियोजनीया, यस्मात् स्त्रियमन्यस्मिन् नियुञ्जानास्ते स्त्रीणामेकपतित्वधर्म्म-मनादिसिद्धं नाशयेयुरिति तट्टीकाकारः।

तथाह स एव,—

"नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते क्वचित्।"

तथाच कुल्लूकभट्टः,—

"नोद्वाहिकेष्विति, अर्यमाणं नु देवमित्येवमादिषु विवाहप्रयोजनकेषु मन्त्रेषु-क्वचिदपि शाखायां न नियोगः कथ्यते। न च विवाहविधायकशास्त्रेऽनेन पुरुषेण सह पुनर्विवाह उक्तः"। इति

द्विजातिभिरिति बहुवचननिर्द्देशेन क्षत्रियवैश्ययोः संग्रहः, अतस्त-ट्टीकाकारेण ब्राह्मणादिभिरित्यस्य व्याख्यातम्।

न च प्रमाणैरेतैर्नियोगनिषेधस्योद्भाषिततया न पुनर्विवाहनिरसनं-विधवाया इति वाच्यं, तस्योपलक्षकत्वात्।

"विधवावेदनं पुनः"

इत्यादि-मानवीयवाचनिकप्रमाणेनैव विधवोपयमननिषेधस्य स्पष्टतः-प्रकाशितत्वाच्च।

विशदयति विषयमेतं स्पष्टतो मनुस्तद्व्याख्याकारश्च। यथा,—

"नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे।
न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते"॥ इति।

अत्राह कुल्लूकभट्टः—

"साध्वाचाराणां न क्वचित् शास्त्रे द्वितीयो-भर्त्तोपदिश्यते एवं पुनर्भूत्व-मपि प्रतिसिद्धं" इति ।

पुनश्च तां निषेधति स एव,—

"पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोकमभीप्सन्ती नाचरेत्किञ्चिदप्रियं ॥
कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु" ॥ इति ।

अपिच—पुनर्भवनधर्मो हि पुरुषान्तराश्रयणरूपः सधवानां विधवानां च-सम्भवति । तत्र सधवानां स्त्रीधर्म्मप्रकरणपूर्वोक्तमन्वादि-वचनैर्वक्ष्यमाणै-र्वचनैश्च पतिमात्रपरायणोक्त्या, पतित्यागपूर्वकं पुरुषान्तराश्रयणे च,—

"क्लीवं वा दुरवस्थं वा व्याधितं वृद्धमेव वा ।
सुस्थितं दुःस्थितं वापि पतिमेव न लङ्घयेदिति ॥
कन्यां विवाहसमये वाचयेयुरिति द्विजाः ।
भर्त्ता सहचरोऽभूयाज्जीविताऽजीवितापि वा ॥ इति ।
"या पतिं संपरित्यज्य पुरुषान्तरमाश्रयेत् ।
पशुधर्म्मवती सा हि त्याज्या वध्यापि वा भवेदिति" ॥

सत्याषाढोद्धृत-पारस्करीय-वचनव्रातेन,

तथा,—

"सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥

इति मानवीयवचनेन,

तथा,—

"स्वल्पेभ्योऽपि दुःसङ्गेभ्यो दौःशील्यसंपादकेभ्यो विशेषेण स्त्रियो-रक्षणीयाः—"

इति —कुल्लूकभट्ट-व्याख्यानेन प्रतिपादितपातित्यदैवपैत्र्यकर्मानर्हत्व-त्याज्यत्व-बध्यत्व कुलाधमत्व-कुलनाशित्व-विवाहपर्य्युदस्तत्वोक्त्या च पुनर्भवन-धर्मस्य स्त्रीधर्म्मप्रकरणानुपात्तस्य साधुगर्हितस्य शास्त्रप्रतिपादितवेश्यातस्कर-धर्मवत्सदनुष्टेयासद्धर्मत्वं प्रतीयते व्यक्तम्।

विधवानामपि स्त्रीधर्मब्रह्मचर्य्यस्य नित्यानुष्टेयत्वप्रतिपादनेन—इन्द्रिय-निग्रह-कर्त्तव्यतोपदेशेन पतिमरणानन्तरं परपुरुषनाम्नोऽपि ग्रहणनिषेधेन च-सधवानामिव विधवानामपि पुरुषान्तराश्रयणे पातित्यदैवपैत्रवर्ज्यत्वकुल-विनाशित्व-सदनाचरणीयत्वाद्युक्तेः पुनर्भवनधर्मो वेश्याधर्म इव साधुभि-र्निरसनीय इति च प्रतीयते। न च पुनर्भवनकर्मणः शास्त्रप्रतिपादितत्वात्-कथमसद्धर्मत्वं साधुभिरनुष्टेयत्वं चेति वाच्यं, वेदबोधितेष्टसाधनताकस्यैव-कर्मणो धर्मत्वात्। अतएव श्रेयःसाधनं धर्म इत्युक्तं मन्वादिभि मीमांसकैश्च"। यदि वेदबोधितत्वमात्रेणैव कर्मणो धर्मत्वमिष्टं तदाभिचारतस्करवेश्याधर्माणा-मपि वेदबोधितत्वाद्धर्मत्वं स्यात्। इष्टापत्तौ श्रेयःसाधनं धर्मः वेदबोधितेष्ट-साधनताको धर्म इतराद्यभियुक्त-मुन्याद्युक्त-धर्मलक्षणं व्याहन्येत। प्रकृते तु-पुनर्भवनकर्मणो बहुतरानिष्टमात्रसाधकत्वान्नोक्तलक्षणधर्मत्वमित्यादरणीयं विद्वद्भिः।

न च पूर्वतरैः कैश्चित्साधुभिराचरितत्वेन सदाचारानुमितवेदमूलकत्वं-तस्य कथं व्याहन्येतेति वाच्यं, नानावचनविरोधात्। सदाचरणस्यापि श्रुत्यनुमापकत्वाभावाच्च। अतएव मीमांसाकृता तदप्रत्वेनैवेति श्रुतिविरोधात्-विश्वामित्रादीनां स्वपचान्नभक्षणादिवत् न श्रुत्यनुमापकत्वमिति ध्येय-मित्युक्तम्। अतएव दत्तायाः सधवाया विधवायाश्च पुनरधिवेदनेन वर्ज्यत्वाभि-धानात् पर्य्युदस्तत्वं, निन्दाश्रवणात् दुरदृष्टाभिगमनेन च प्रसज्यप्रतिषेधत्वञ्च। अपिच।

"सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः।

तथा,

"इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्।"

इति याज्ञवल्क्यटीकाकारापराकाशयपोक्तप्रमाणजातं जागरूकं तत्र।

"पौनर्भव-इति स्वार्थेऽण्प्रत्यय इतिटीकाकारः।

पौनर्भवनधर्म्मस्यापि वर्ज्या इत्यनेन पर्य्युदस्तत्वलाभान्न भार्य्यात्व-निष्पादकत्वं, तेन पुनरुद्वाहिताऽपि पुनर्भूः न पत्नी; किन्तु अवरुद्धा स्त्री-विशेषः। अतएव न सा दैवे नापि पैत्रे इत्युक्तं, कुलाधमत्वकुलदाहकत्व-निन्दाश्रवणाच्च प्रसज्यप्रतिषेधत्वेन प्रत्युताधर्मप्रयोजकत्वमेव। इत्यव-गन्तव्यम्। अतएव स्मृतिचन्द्रिकायामपि स्वैरिणीवदाचरणनिषेधार्थमाह,—

"पानाशनदिवास्वप्न इत्याद्युक्तम्"।

तेन चान्यपूर्वायाः पुनर्भवनादि-धर्म्माचरणं प्रतिषिद्धमित्यवधेयम्। एवं-सर्वप्रकारेण अन्यपूर्वापर्य्युदासे प्राप्ते विशेषमाहेति मिताचरोक्तेषु पुनर्भूस्त्रियाः-पुरुषसम्बन्धदूषितत्व-संस्कारदूषितत्वलाभेन पुनर्भवनधर्मस्य दुष्टधर्मत्वमेव-न तु साधुधर्मत्वमिति व्यक्तम्"।

अतएव,—

"कुलटा स्वैरिणी चान्याः परपूर्व्वाः स्त्रियस्तथा।
पतितास्ता हि विज्ञेयास्तत्तदाचरणं तासु र्जदिति"॥

विवेकटीकाकारधृतपारस्करवचनेनापि पुनर्भूस्त्रीणां पातित्यमुक्त्वा-तद्धर्माचरणं निषिद्धम्।

किंच,—"सकृदेव कर्त्तव्यं कन्यादानमित्याह मनुः।

यथा,—

"सकृदंशो निपतति सकृत्कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत्"॥

तथाच सति लक्षिते वरदोषे वरान्तरग्रहणस्यापि महर्षिभिरभ्यनुज्ञात-तया सत्यवतः स्वाम्यात्मकत्वेन पूर्व्वतो मनसा वृततया नारदवाक्यतस्तस्या-ल्पायुष्ट्वमवगत्य पित्रा बहुशो निवारितापि सावित्री न तत्याज तमिति-प्रकटयन्ति निम्नतो वनपर्व्वीयप्रमाणानि यथा,—

राजोवाच,—

"एहि सावित्रि ! गच्छ त्वमन्यं वरय शोभने ! ।
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः" ॥

सावित्र्युवाच,—

"सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्-सकृत् ॥
दीर्घायुरथ वाल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद्वृतो मया भर्त्ता न द्वितीयो वृणोम्यहम् ॥
मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः" ॥ इति ।

तथा प्रमाणानि यथा शिवपुराणीय-ज्ञानकाण्डे—

मेना,—

"यदि दास्यसि पुत्रीं त्वं त्यक्ष्याम्येतत्कलेवरम्" ।

पार्वत्युवाच,—

"मातस्ते विपरीता वै बुद्धिस्त्वां समुपागता ।
देहि दानं शिवायैव ह्याश्रमं सार्थकं कुरु ॥
यदि न दास्यसि तथा न वृणेऽन्यं तथोत्तमम् ।
मनसा वचसा देवि ! कर्मणा वा हरः स्वयम् ॥
वृतो वृतो वृतश्चैव यदीच्छसि तथा कुरु इति" ।

तथाच देवीभागवते,—

पितोवाच,—

"यदि सुदर्शनं वत्से हठात्त्वं वै वरिष्यसि ।
युधाजित्त्वाञ्च माञ्चैव हनिष्यति बलान्वितः ॥

सुदर्शनश्च तेजस्वी बलमत्तः प्रतापवान्।
द्वितीयस्ते पतिः पश्चात्-भविता विकले सति" ॥

पुत्वुरवाच,—

"सत्यमुक्तं नृपश्रेष्ठ! जानामि च व्रतं मम।
नानंग्र वृणोमि भूपालं सुदर्शनमृते क्वचित् ॥
मया सुदर्शनः पूर्व्वं धृतश्चेतसि नान्यथा।
कारणं पुण्यपापानां मन एव महीपते।
मनसा विधृतं त्यक्का कथमन्यं वृणे पितः" ॥ इति।

तथाच स्कन्दपुराणान्तर्गत-सनत्कुमारसंहितायां,—

यथा रत्नावली,—

"न चाहं वरयिष्यामि पतिमन्यं कथञ्चन।
दशार्णाधिपतिः श्रुत्वा श्रूयतां तत्र कारणम् ॥
सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति वै द्विजाः।
सकृत्कन्या प्रदीयेत त्रीण्येतानि सकृत्-सकृत् ॥" इति।

प्रमाणानि प्रचुराण्येतत्तुल्यानि बहुषु धर्म्मशास्त्रीयग्रन्थेषु विद्यमानान्यपि-ग्रन्थबाहुल्यभिया नोद्धृतान्यत्र।

मन्वादिवचनैरपि कन्यायाः सकृद्दानाभिधानेन विवाहितायाः पुनरधिवेदननिषेधात् नर्भवनधर्मो वेश्याधर्म इव-साधुभिरपोषणीयः। अतएव-स्मार्त्तभट्टाचार्य्यैरुक्तम्।

कन्यायाः सकृद्दानन्तु पाणिग्रहणसंस्कारयुक्त-कन्याविषयकमिति तस्मान्नेदं-वाग्दत्ताविषयम्। वाग्दानेन कन्यानिष्ठपितृस्वत्वानपगमाद्दानान्तरस्यापि-सम्भवात्।

"अग्निभ्योऽपि दत्तायामनूढ़ायान्तु यत्र वै"। इति।

कात्यायनवचनस्य तत्प्रतिपादकत्वाच्च।

सति पर्य्यालोचिततनिरुक्तप्रमाणव्राते कीदृक्शास्त्रसङ्गतं विधवावेदनं-तदनायासेनैव बोध्यं बुद्धिमद्व्यक्तिमात्रेणैव । सम्प्रति मन्वाद्यनुमोदिता कीदृशी-कन्या विवाहार्हा, तद्बोधकप्रमाणान्यादितः प्रोक्ततयात्र नोत्तोलितान्येव ।

अपिच, विषयेऽस्मिन् वेदीयप्रमाणमप्युद्धियतेऽधस्तात् ।

"यदेकस्मिन्-यूपे द्वे रशने परिव्ययति । तस्मादेको द्वे जाये विन्देत । यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्देत" ।

तथा, पूर्व्वपतिलङ्घनमधर्म्माधायकमिति प्रकटीकृतमादिपर्व्वान्तर्भूत-वकवधपर्व्वणि ।

यथा,—

"न चाप्यधर्मः कल्याण ! बहुपत्नीकता नृणां ।
स्त्रीणामधर्मः सुमहान् भर्त्तुः पूर्व्वस्य लङ्घने ॥"

तथा,—

"एकस्य बह्व्यो विहिताः पत्न्यश्च कुरुनन्दन ! ।
नैकस्या बहवः पुंसः श्रूयन्ते पतयः क्वचित् ॥" इति ।

निरुक्तप्रमाणद्वन्दवलान्निश्चीयते विधवाविवाहनिषेधो द्विजातित्रयविषयको नान्यजातिविषयक इति ।

तथा,—दृश्यतेऽस्मद्देशीयशिष्टाचारोऽपि ।

तथापि,—

"कन्यायां दत्तशुल्कायामित्यादिप्रोक्तमन्वादिधर्मशास्त्रीयवचनानां वाग्-दत्तादिकन्याविषयकत्वेन सामान्यतः सति दत्तावकाशत्वेऽपि विशेषतो दत्ताव-काशत्वाभावात् । परस्परं स्मृतिविरोधसंघटनसम्भावनयाऽत्रानुष्ठीयते-समालोचनं तत्तद्वाक्यानां स्फुटतोऽवकाशप्रदानपूर्वकम् । तथा,—

प्रथमतः "कन्यायां दत्तशुल्कायामित्यादिवाक्यानां सम्पूर्णतो लिखित-तयाऽपि सूच्यन्तेऽधस्तात् संक्षेपतस्तत्तद्वचनान्यावश्यकतयात्र । यथा,

"कन्यायां दत्तशुल्कायामित्यादि" मनुः,—

तथाच "अद्भिर्वाचे"त्यादि, तथा,—"यावच्चेति" वशिष्ठ, स्तथाच-"यापत्या वा परित्यक्तेत्यादि"। तथा, सा चेदक्षतयोनिरित्यादि"। मनुः,

तथाच "स तु यद्यन्यजातीय" इत्यादि। कात्यायनः। तथाच,—"वरश्चेत् कुलशीलाभ्यामित्यादि"। शातातपः,

तथाच, "उद्वाहितापि सा कन्ये"त्यादि। नारदः।

तथाच "निसृष्टो वा हृतो वापी"त्यादि", बौधायनः। तथाच,-"पाणिग्रहे मृते बाले"त्यादि" वशिष्टः। एतद्भिन्नास्वन्यान्यस्मृतिषु तथाच-ऋग्वेदेऽपि दृश्यन्ते प्रमाणान्यप्येतादृशानि।

ननु "कन्यायां दत्तशुल्कायां"मित्यारभ्य "पाणिग्रहे मृते बाल—इत्यन्त-वचनजातानामेतत् समयोपयोगितया वाग्दत्ताकन्याविषयकत्वेन प्रदत्ता-वकाशत्वं कैश्चिन्निबन्धकर्त्तृभिर्यत्, तत्तु समीचीनमिति चेन्न, विविधदशापन्न-कन्यकानामन्तत: कतिपयप्रमाणानां सति वाग्दत्ताविषयकत्वेऽपि "पाणिग्रहे-मृते बाल" इत्यादि वाक्यान्तराणां संस्कृताऽक्षतयोनिकाविषयत्वात्। विभिन्न-विषयावेदकप्रमाणानामेकविषयात्मकप्रतिपादकत्वेन क्लिष्टकल्पनाध्यवसायस्य-स्फुटत: समुद्भासितत्वाच्च।

यदेतद्विषयकमन्यान्यविवेचनं,तत्तद्वच्चप्रमाणान्यान्यविवेकावसरे विशदितव्यं-स्थाने स्थाने। न च निरुक्तप्रमाणदृष्टितो विधवोपयमनं नाशास्त्रीयमितिवाच्यं,-वेणराजत्वावसरे तत्पूर्वतश्च तत्तत्समयानुकूलतया नियोगादिविधे:-प्रचलितत्वेन सति प्रतिपादिते तद्विधानेऽपि तदाचरणस्य सम्भावित-बहुदोषत्वेन तथा स्वरुचेरविषयतया च नियोगादेर्मनुना स्वयमेव निषिद्धत्वात्, मनूक्तप्रमाणव्रातदृष्टितस्तद्भाष्यकर्त्तुर्मेधातिथेर्भाष्यतश्चाभिप्रायस्यास्य स्फुटत:-प्रतीयमानत्वात्, तदनुष्ठानस्य स्वैनैवाध्यस्तपशुधर्मत्वाच्च।

तथा समर्थयन्त्येतमभिप्रायं वेदोऽपि, अन्यथा विवाहस्यान्ते विवाहविधौ-च द्वितीयोपयमस्याभविष्यन्नामोल्लेखः।

अपिच,—विधे: प्रतिपादनमेतस्यावश्यकमिति कुर्य्युश्चेन्मनसि संहिता-कर्त्तारस्तदा नाकरिष्यन्निषेधविधेरवतारणमेव।

यत्तु तत्र पुरुषस्य द्वितीयविवाहोल्लेखादर्शनान्नारी पुनर्विवाहोल्लेखाभावो-

न दोषाधायक इति यदुत्थापयन्त्यापत्तिं तन्मन्दं, पुरुषस्य दानग्रहीतृतया-मन्त्रे तन्नामोल्लेखस्यानावश्यकत्वात्,—

कन्याया दानयोग्यद्रव्यत्वेन विवाहीयमन्त्रे देयद्रव्यनामोल्लेखस्य-विधेयत्वाच्च।

अन्यच्च—साधारणतो देयपदार्थजातस्य ग्रहीत्रधिकरणीयतया कन्या-ग्रहीतुर्गृहीतपत्न्यामधिकारस्य विद्यमानत्वेन। तथा,—

"स्वस्वत्वध्वंसपूर्व्वकपरस्वत्वोपादान"मित्यस्य दानपदार्थत्वेन।

"सकृदंशोनिपतत्यादिमानवीयवचनबलेन च प्रदत्तकन्यायाः पुनर्भवनस्य-न भवेत् कदापि सम्भवपरत्वम्।

अतो यः कुलसाङ्कर्य्योपादकः पुनर्विवाहः स तु धर्म्मपथमतिक्रामता वेण-नृपतिना प्रचलितो,—न त्वस्य पशुधर्मात्मकत्वेन शिष्टादृत इति प्रतीयते-शास्त्रतः।

अपरंच,—पत्नीवियोगादिहेतुकद्वितीयपरिणयने हेतूनाहुर्य्याज्ञवल्क्यादयः।

यथाह याज्ञवल्क्यः—

"सुरापी व्याधिता धूर्त्ता बन्ध्यार्थघ्न्यप्रियम्वदा।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी च या"॥

अधिवेदनं भार्य्यान्तरपरिग्रहः।

तथा चाह मनुरपि,—

"मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत्।
व्याधिता वाऽधिवेत्तव्या हिंसार्थघ्नी च सर्व्वदा"॥ इति।

मद्यपाऽत्र द्विजातिस्त्री बोद्धव्येति प्राञ्चः।

तथा स्मृतिभास्करेऽपि,—

"व्याधिता स्त्रीप्रजा बन्ध्या उन्मत्ता विगतार्त्तवा।
अदुष्टा लभते त्यागं तीर्थतो न तु धर्मतः"॥

तीर्थतो योनितः। "एतन्निमित्ताभावे नाधिवेत्तव्या।" इत्यापस्तम्बः,—

तथाच गादाधरीयकालसारे, यथा स्मृतकारिका,—

"नोद्वाहे दारसत्वे त्वधिकृतिरितराश्रमादिभुक्तौ मते नो" इत्यादि।

तथा,—

"अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते त्वसौ॥
जपे होमे तथा दाने स्वाध्याये वा रतः सदा।
नासौ फलं समाप्नोति कुर्वाणोऽप्याश्रमच्युतः"॥

इति दक्षवचनं।

तथा,

"व्रतेषु लोपको यश्च आश्रमाद्विच्युतश्च यः।
संदंशयातनामध्ये पततस्ता-वुभावपि"॥ इति—

विष्णुपुराणीयवचनम्।

तथा—विशेषयति भविष्यपुराणं,—

"चत्वारिंशद्वत्सराणां साष्टानाञ्च परं यदि।
स्त्रिया वियुज्यते यश्च स तु रण्डाश्रमी मतः॥
अष्टचत्वारिंशदब्दं वयो यावन्न पूर्य्यते।
पुत्रभार्य्यावियुक्तस्य नास्ति यज्ञाधिकारिता" इति॥

तथाच मात्स्ये;—

"सपिण्डीकरणादूर्द्ध्वं प्रेतः पार्वणभाक् भवेत्।
इष्टापूर्त्तेष्टियोग्यश्च गृहस्थश्च ततो भवेत्"॥ इति।

"पूर्त्तं प्रतिग्रहादि, इष्टं यागादि, गृहस्थो भवेदित्यनेन पुत्रः स्वविवाहं-कुर्य्यात्। गृहस्थपदस्य संगृहीतदारे मुख्यार्थत्वात्। तथाच वचनवला-द्भार्य्यायां विवाहान्तरकरणाभावः"।

इत्यादि-प्रमाणव्रातसामर्थ्यतः पुरुषस्य प्रकाशितमहर्ष्यनुज्ञातपुन-र्विवाहत्वात्। तथाच, कात्यायनः—

"मृतायामपि भार्य्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिनाऽपि तत्कर्म यावज्जीवं समापयेत् ॥
रामोऽपि कृत्वा सौवर्णां सीतां पत्नीं यशस्विनीम् ।
ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरच्युतः" ॥ इति ।

तथा,—

"अपत्नीकः प्रवासी च यस्य भार्य्या रजस्वला ।
सिद्धान्नेन न कुर्वीत आमन्तस्य विधीयते" ॥

इत्युशनसो वाक्यं । तथा,—

"नैकयापि विना कार्य्यमाधानं भार्य्यया द्विजैः ।
अकृतं तद्विजानीयात् सर्वा नान्या रभन्ति चेत्" ॥ इति

कात्यायनीयवचनं । तथा,—

"सत्यामन्यां सवर्णायां धर्म्मकार्य्यं न कारयेत् ।
सवर्णासु विधौ धर्म्मे ज्येष्ठया न विनेतरा" ॥

इति योगीश्वरवाक्यं । तथाच,—

"सदारोऽन्यान् पुनर्दारानुद्वोढुं कारणान्तरात् ।
यदीच्छेदग्निमाकुर्वन् क्व होमस्य विधीयते ।
स्वाग्नावेव भवेद्धोमो लौकिके न कदाचन" ॥

इति कात्यायनीयवाक्यञ्च ।

इत्यादिप्रमाणसंन्दोहबलात्पत्नीमन्तरा स्वकर्तृकयज्ञाधानादि-कर्मानुष्ठानासम्भवाच्च पुरुषस्य द्वितीयोपयमो धर्मशास्त्रानुमोदित इति सुस्थिरः-सिद्धान्तः ।

अपिच, स्त्रियः सपतिकत्वे ।

"नास्ति स्त्रीणां पृथक् यज्ञो न व्रतं नाप्युपोषणम् ।
पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते" ॥ इति ।

तथा, कामं भर्त्त्रनुज्ञया व्रतोपवासनियमेज्यादीनामभ्यासः स्त्रीधर्म्म इति-मनुयाज्ञवल्क्यीयवाक्यद्वयोक्त-कर्म्माणि भर्त्त्रनुज्ञामन्तरा अनुष्ठातुमक्षमतयाऽपि सति-वैधव्ये स्वातन्त्र्येण।

तथा, "मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वेति" विष्णुः—

अत्र ब्रह्मचर्य्यं प्रधानमक्षयफलत्वात्। तथा "विधवानान्तु नारीणां-ब्रह्मचर्य्यं सदैव हि" इति बृहद्धर्म्मपुराणं, तथा, भर्त्तुः पितुः स्वजनस्य वा-गृहमाश्रिता संयतजिह्वाहस्तपादेन्द्रिया स्वाचारवती दिवारात्रं भर्त्तारमनु-शोचती व्रतोपवासैः क्षमात्मा आयुषोऽन्ते पतिलोकं जयती" त्यापस्तम्बीय-वचनम्।

तथाच,—

"कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः।
न तु नामापि गृह्णीयात्-पत्यौ प्रेते परस्य तु" ॥

इति नारदीयवचनं।

तथाच, ब्राह्मे—

"असगोत्रः सगोत्रो वा स्त्री दद्याद् यदि वा पुमान्।
प्रथमेऽहनि यो दद्यात्-स दशाहं समापयेत् ॥" इति।

तथाच मार्कण्डेये,—

"सर्वाभावे स्त्रियः कुर्युः स्वभर्त्तॄणाम्"। इति—

निरुक्तप्रमाणपर्य्यालोचनतस्तदनुमतिमन्तरेण वरं प्रतीयते श्रौतस्मार्त्त-कर्म्मानुष्ठानाहत्वं, न तु पत्नीविहीनपुरुषवत्तत्कर्म्मायोग्यत्वम्।

तथा, मनूक्तनियोगनिषेधकपद्यव्याख्यानावसरे तन्नियोगादिनिषेधः कलि-युगविषय इति—

यदुक्तं कुल्लूकभट्टेन तदुपरिष्टात् प्रकाश्यते मनुवचनमहितम्।

"ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम्।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः" ॥ इति।

तत इति,—वेणकालात्प्रभृति यो मृतभर्तृकादिस्त्रियं शास्त्रार्थज्ञानाद-पत्यनिमित्तं देवरादौ नियोजयति तं साधवो नियतं गर्हन्ते अयं च स्त्रीणां-नियोगनिषेधः कलियुगविषयः । तदाह बृहस्पतिः—

"उक्तो नियोगो मुनिना निषिद्धः स्वयमेव तु ।
युगक्रमादशक्योऽयं कर्त्तुमन्यैर्विधानतः ॥
तपोज्ञानसमायुक्ताः कृते त्रेतायुगे नराः ।
द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता ॥
अनेकधा कृता पुत्रा ऋषिभिश्च पुरातनैः ।
न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदंतनैः" ॥

अतो यद्गोविन्दराजेन युगविषयव्यवस्थामज्ञात्वा सर्व्वदैव सन्तानाभावे-नियोगादनियोगपक्षः श्रेयानिति स्वमनीषया कल्पितं तन्मुनिव्याख्या-विरोधान्नाद्रियामहे ।

"नापराधोऽस्मि विदुषां क्वाहं सर्वविदः कुधीः ॥" इति ।

कुल्लूकभट्टः ।

· स्वकृतपाराशरीयसंहिताभाष्यान्तरीणे स्थाने स्थाने नियोगादिनिषेधोऽयं-कलियुगीय इत्युट्टङ्कितं माधवाचार्य्येणापि ।

इष्टं चैतच्छास्त्रतो व्यवहारतश्च । अतः स्त्रियः पुनर्भवनमतीवगर्हणीय-मेव। न च कालान्तरनिषिद्धानुष्ठानस्य कर्मणो विपत्तावाचरणस्य पूज्यपाद-महर्ष्यभ्यनुज्ञाततया कलिनिषिद्धस्यापि निरुक्तनियोगादिकर्मव्रातविधानस्य-तद्युगीयापदि दोषाजनकत्वमिति वाच्यं, इदानीन्तनतदीयापदि जनसंख्या-वर्द्धनस्यातीवाधिक्येन तत्परिपोषणभारस्यातयन्तदुर्वहतयाऽत्र नियोगाद्यनु-ष्ठानस्य तदधिकलोकसंख्याबृंहसम्भावनया समुपस्थितविपत्त्यन्तरत्वात् ।

निषिद्धस्याप्यापद्दुद्धारोपयोगिकार्य्यजातस्य महर्ष्यभ्यनुज्ञातत्वाच्च । सम्प्रति-पूज्यपादैर्महर्षिभिस्तथा व्याख्याकर्त्तृभिर्विधवाविवाहप्रतिपादकवचनानां सार्द्धं-मनुवचनेन परिहर्त्तुं विरोधं प्रदत्तो यत्र यत्रावकाशस्तेषामुद्धाव्यतेऽत्र-

तत्तत्पर्य्यालोचनम् । यतो मनुमतविपरीतमतं भारतेऽस्मिन् न प्रशस्तमिति वृद्धगौतमादिमहर्षिभिः प्रतिपादितं पूर्व्वतः—

यथाह वृद्धगौतमः,—

"भारतं मानवो धर्म्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः" ॥ इति ।

तथाच वृहस्पतिः—

"वेदार्थोपनिबद्धत्वात् प्राधान्यं हि मनोः स्मृतम् ।
मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते" ॥ इति ।

तथा च्छान्दोग्यब्राह्मणेऽपि,—

"मनुर्वै यत्तु किञ्चिदवदत्तद्भेषजं" इत्यादि ।

मन्वादिधर्म्मशास्त्राणां नाभविष्यच्चेदेतादृशाभिप्रायः ; तदा पुनर्भुवां तदपत्यानां परपूर्व्वापतीनाञ्च निन्दाविदकवचनानि कथमुदलेखिष्यन्महर्षयस्ते स्वस्वग्रन्थेषु । लिख्यन्तेऽग्रे तन्नन्दाविदकवचनानि, यथा उशनाः,—

"श्रुतिविक्रयिणो यत्र परपूर्व्वाः समुद्रगाः ।
असमानान् याजयन्ति पतितास्ते प्रकीर्त्तिताः ॥
पौनर्भवः कुसीदी च तथा नक्षत्रदोषकः ।
बहुनात्र किमुक्तेन विहितान् ये न कुर्वते ।
निन्दितान्याचरन्त्येते वर्ज्याः श्राद्धे प्रयत्नतः' ॥ इति ।

तथाऽङ्गिराः—

"अन्यदत्ता तु या कन्या पुनरन्यस्य दीयते ।
तस्याश्चान्नं न भोक्तव्यं पुनर्भूः सा प्रगीयते" ॥ इति ।

तथा वृद्धपराशरः,—

"अन्यदत्ता तु या कन्या पुनरन्याय दीयते ।
तस्या अपि न भोक्तव्यं पुनर्भूः सा प्रकीर्त्तिता" ॥

"यः स्वैरिणीनाञ्च पुनर्भुवाञ्च यः कामचारी द्विजयोषिताञ्च ।
सुरेताधाः पाकमना यदृच्छाद्विप्रः स चन्द्रव्रतकृच्छुचिः स्यात्" ॥
इति ।

तथाच, याज्ञवल्क्यः—

"रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥
मातृपितृपरित्यागी कुण्डाशी वृषलात्मजः ।
परपूर्व्वापतिस्तेन कर्म्मदुष्टाश्च निन्दिताः" ॥

तथाच मनुः—

"औरभ्रिको माहिषिकः परपूर्व्वापतिस्तथा ।
प्रेतनिर्हारकश्चैव वर्जनीयाः प्रयत्नतः ॥
एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान् ।
द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत्" ॥

इत्यादि बहूनि ग्रन्थान्तरीयवचनानि विद्यमानान्यपि ग्रन्थविस्तरभिया-मोत्तोलितान्यत्र ।

मन्वादि-धर्मशास्त्रीयाशयमनुसृत्येदानीं कलिवर्ज्यविधिं प्रतिपादयता-मध्यन्तरे कतिपयशास्त्राणामेकैकशास्त्रीयवचनव्रातस्यैतद्दावस्थान्तरतः संक्षेपेण-कुत्र कुत्र सत्यपि सूचितत्वे "खले कपोतिकान्यायेन" तत्समस्तशास्त्रीय-वचनान्युद्धारयन्तोऽत्रैकत्रीकृत्य निबध्नतः ।

यथाह क्रतुः—

"ऊढायाः पुनरुद्वाहो दत्ता कन्या प्रदीयते ।
न यज्ञे गोवधः कार्य्यः कलौ न च कमण्डलुः ।
विधवायां प्रजोत्पत्तिर्देवरस्य नियोजनम् ।
बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः ॥

दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥
निवर्त्तितानि सर्व्वाणि व्यवस्थापूर्व्वकं बुधैः" ॥ इति ।

तथा आदित्यपुराणे,—

"ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्" ॥ इति ।

तथा बृहन्नारदीयपुराणे,—

"दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य तु" ।

तथा,—

"समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्" । इत्यादि ।

तथा हेमाद्रौ देवलः,—

"समुद्रयातुः स्वीकारः कमण्डलुविधारणम् ।
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च" ॥
"दीर्घकालं ब्रह्मचर्य्यं वर्जयीत कलौ युगे ।
एतान् यस्तु त्यजेद्धर्मान् स द्विजो दोषभाक् भवेत् ।
तस्य वै निष्कृतिर्नास्ति तप्तकृच्छ्रेण तैरपि ॥" इति ।

तथाच स्मृत्यर्थसारे वायवीयसंहितायाश्चासीदुल्लिखितमेतन्निर्वचनम् ।

निरुक्तप्रमाणव्रातपरिशीलनतः प्रतिभाति विधवाविवाहानुष्ठानं कलीतर-युगविषयकमिति । अतः कलौ विधवावेदननिषेधो व्यक्तमुक्तः क्रत्वादिभिः । यच्चाच,—

"समयश्चापि साधूनामि"त्याद्युक्तेर्न तस्य वेदमूलकत्वमिति केचिदुक्तं-तदुक्तानशयमतिविलसितम् ।

यदयं वचनार्थः, महात्मभिर्बुधैर्वेदोक्तयुगधर्मस्य व्यवस्थापूर्व्वकं निवर्त्तितानि-

निवारितानि अर्थान्निषिद्धानीत्यर्थवशेन वेदमूलकत्वस्य स्फुटं प्रतीयमानत्वात्।

न च बुधैर्निवर्त्तितानीत्यभिधानान्न वेदैर्निवर्त्तितानीत्युपलभ्यते इतिवाच्यम्।

"गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि॥" इति।

"विवाहशुद्धिं प्रवदन्ति सर्व्वे" इत्यादि वचनप्रतिपादितस्यापि कर्म्मणोभवदुक्तियुक्त्या न वेदमूलकत्वं स्यात्।

प्रमेयस्य वेदमूलकत्वाभावे प्रमाणस्यापि तदभावादुक्तपुराणवचनानामप्रामाण्यं स्यात्। वेदमूलकत्वेनैव तेषां प्रामाण्यस्य कर्मब्रह्ममीमांसयोर्जैमिनिसूत्रेणाभिधानात्।

तस्य हि वेदमूलकत्वाभावे पुराणस्मृतेर्वेदानुमापकत्वाभावात् स्मृत्यधिकरणविरुद्धसिद्धान्तप्रसङ्गो दुष्परिहरश्च स्यादिति लोकगुप्त्यर्थमित्यनेनाप्येतदभिहितं; यदन्यस्मिन् युगे भूरिपुण्यवता तेजस्विना केनापि किञ्चिदनिष्टाचरणं कृतमपि न लोकक्षयकरं तेषां पुण्यबलादेव पापनिवृत्तिसम्भवति कलौ तु स्वल्पपुण्यवता कृतं किञ्चिदनिष्टानुष्ठानमपि लोकक्षयकरमतो लोकरक्षार्थं निवर्त्तितानीति।

एवञ्च कलौ मुनिसंगृहीतवेदोक्तविधवावेदननिषेधे।

"अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु"।

इति मिताक्षराधृतवचनात्, सदाचारमपि प्रमाणयति समयश्चापीति। प्रवर्त्तित-निवर्त्तितकर्मसु साधूनां समयश्चापि वेदवत्प्रमाणं भवेत्स्यादित्यर्थः।

तथाचात्र वेदसदाचारौ द्वावेव प्रमाणमित्यवगन्तव्यं, अन्यथा चकारापिकारयो र्वैयर्थ्यमापद्यते।

होलाधिकरणन्यायेनाप्यत्र सदाचारानुमितवेदमूलकत्वमित्यपि व्यक्तं स्मार्त्तकर्मणां स्मृतिलिङ्गानुमितवेदमूलकत्ववदिति।

तर्हि के शिष्टा इत्याकाङ्क्षायां तल्लक्षणमाह बोधायनः;—

"शिष्टाः खलु विगतमत्सरा निरहङ्कारा न कुम्भोध्याम्ना अलोलुपाः साक्षाद्वेदार्थज्ञा दम्भदर्पमोहक्रोधादिवर्जिता" इति।

शिष्टानामाचरणं सदाचारः। तदाह हारीतः,—

"साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः।
तेषामाचरणं यत्तु स सदाचार उच्यते" ॥ इति।

अतः प्रतीयते बहुदोषोत्पत्तिसम्भावनया कलौ शास्त्रतो महर्षिभिस्तथा-तदीयापदि व्यवहारतोऽविगीताचारैः शिष्टैश्च निषिद्धं तदनुष्ठानं द्विजातित्रयं भारतेऽस्मिन्निति।

ननु कलिधर्मप्रकाशकेन महर्षिणा पराशरेण सामान्यतो—

"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" ॥ इति।

तदीयवचनेन कलावेव विधवाविदनानुष्ठानस्याभ्यनुज्ञाततया कथमत्र-शास्त्रतो विधवोपयमनं निषिद्धं तज्जातित्रये महर्षिसन्दोहेनेत्याशङ्कितव्यं-कैश्चिदिति चेन्नैवं, पूर्वपक्षस्यास्य दुर्बलताविदकत्वात् सहमन्वादिधर्मशास्त्र-निवहेन प्रतिपादयितुमेकवाक्यतामितदेशप्रचलितस्मृतिदर्पणादिनिबन्धकृद्विशे-षतः शूद्रस्त्रीविषये वाक्यस्यास्य दत्तावकाशत्वादन्यथा मनुमतविरोधितया-तत्संहिताया भारतेऽलब्धप्रतिष्ठत्वाच्च। अतएव मनुप्रतिपादितद्विजाति-पदावलोकनेन ब्राह्मणादिजातित्रयस्य निषिद्धनियोगाद्यनुष्ठानतया शूद्रस्त्री-विषयकत्वविवेचनमस्य नायौक्तिकमिति परमार्थः।

अपिच,—न तावद्वाक्यमिदं पराशरीयमस्खलम्।

वृहमनुवृहद्याज्ञवल्क्य-नारदादिकृतग्रन्थेषु तथाग्निपुराणे च वाक्यस्यास्य-दृष्टिगोचरत्वात्। अतस्तत्तद्ग्रन्थीयप्रमाणानामनेषां प्रायशस्तुल्यतया ग्रन्थ-बाहुल्यभिया च तत्सम्भ्यतः प्रकाश्यन्तेऽधस्ताद्ग्रन्थद्वयोक्तवचनानि। यथा,—

नारदः—

"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" ॥

अष्टौ वर्षाण्यपेक्षेत ब्राह्मणी प्रोषितं पतिम् ।
अप्रसूता च चत्वारि परतोऽन्यं समाश्रयेत् ॥
"क्षत्रिया षट् समास्तिष्ठेदप्रसूता समात्रयम् ।
वैश्या प्रसूता चत्वारि द्वे वर्षे त्वितरा वसेत् ॥
न शूद्रायाः स्मृतः काल एष प्रोषितयोषिताम् ।
जीवति श्रूयमाणे तु स्यादेव द्विगुणो विधिः" ॥ इत्यादि।

तथाचाग्निपुराणे, –

"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" ॥
मृते तु देवरे देया तदभावे यथेच्छया । इत्यादि ।

निरुक्तवचनजालपर्य्यालोचनतोऽवबुध्यते सुस्पष्टमेतत्, स्वामिनि सति-प्रोषिते द्विजातिस्त्रियः प्रोक्तप्रमाणनिर्द्दिष्टस्वीयस्वीयसमयापेक्षणानन्तरमाश्रयेयुः-स्वाम्यन्तरं नतु विवहेयुरिति ।

केवलं शूद्रजातीयाः स्त्रियः नियमितकालापेक्षणस्य शास्त्रेऽनुक्ततया सति-प्रोषिते स्वामिनि कालमनपेक्ष्य स्वाम्यन्तराश्रयणस्याप्यनुज्ञातत्वात् ।

तथा, प्रदेशेऽस्मिन् मृते सति पत्यौ देवरावलम्बनस्य तदभावे पुरुषान्तरा-श्रयणस्य तथा पत्यौ सत्यपि जीवति परस्परमनोमालिन्यवशात् स्वाम्यन्तर-ग्रहणस्य च व्यवहारतस्तज्जातौ दृष्टिविषयत्वात्तथा ग्रन्थान्तरोक्तवचनान्यनुल्लिख्य केवलं वाक्यस्यैतस्य स्वसंहितायामुद्भावितत्वाच्च पाराशरीयवाक्यमिदम् शूद्रस्त्री-विषयकमेवेति निष्कर्षः । सत्येवमवकाशप्रदानेऽस्य न लक्ष्यते विरोधो मन्वादि-धर्मशास्त्रनिकरैण ।

तथा साकं नारदादिवचनव्रातेनावलोक्यतेऽस्यैकवाक्यत्वम् ।

वाक्यमिदं तद्विधानामधस्तनजातीनामुपलक्षकं । शिष्टाचारतोऽस्मिन्नुत्कले-प्रधानशूद्रजातीयपादातिक-प्रभृति-निम्नतम-समस्तजातीनां विधवोपयमनं-भवति प्रचलितमिदानीं निर्विवादम् । श्राद्धादिपितृकर्मणि तु निरुक्त-

जातीयपुनर्भुवामयोग्यत्वमभिलक्ष्यते शास्त्रीयनिषेधतः। शास्त्रीयानुमति-दृष्टिबलात् देवब्राह्मणादिसेवाकार्य्येषु भवन्त्यर्हाः स्त्रियस्ताः।

न च स्त्रीपुरुषाणां पुनर्विवाहाचरणे पातित्यावेदकप्रमाणानां जागरूकतया कथमुभयेषां देवब्राह्मणादिसेवार्हत्वमितिवाच्यम्, तत्प्रतिपादकप्रमाणानामर्थवादात्मकत्वेन तदनुष्ठानस्य निन्दावेदकत्वात्; द्वितीयपतिपत्न्योर्यथायथपतिपत्नीशब्दवाच्यत्वाभावात्, सेनापति-नृपति-शब्दवदत्र द्वितीयपतिशब्दस्य पालकार्थपरत्वात्तथा द्वितीयपत्नीशब्दस्य सैरिन्ध्री-शब्दवत्सेवकोरूपार्थपरत्वाच्च।

नैवार्थोऽयं स्वकपोल-कल्पितः। मनुसंहिताभाष्यकर्त्तुर्विद्वत्प्रवरस्य मेधातिथेरयमभिप्रायः। मतमेतं प्रतिपादयितुमाशयस्यैतस्य तद्भाष्यतः कतिचित् पंक्तयः प्रकाश्यन्तेऽत्राधस्तात्। यथा—

पञ्चमाध्यायोक्तसप्तपञ्चाशदधिकशततमपरिमितवचनीयभाष्ये मेधातिथिः;—

"अतो मृतपतिकाया अनपत्याया असति भर्त्तृधनादौ दायिके च कर्त्तनादिना च केनचिदुपायेन जीवन्त्या जीवितस्यातिप्रियत्वात् तदुपेक्षणस्याशास्त्रीयत्वात् प्रतिषिद्धत्वादापदि सर्व्वाभिचाराणां विश्वामित्रजाघनीमित्यादिनानुज्ञातत्वाद्व्यभिचारोपजीवितापापाप्ताविदमुच्यते। काममस्यावस्थायां शरीरं क्षपयेत्। क्षयं नयेत् पुष्पमूलफलैर्यथोपपादं वृत्तिं विदधीत। न तु नामापि गृह्णीयात् पतिमें त्वमस्येत्यन्यस्य।

यत्तु,—

"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते"॥ इति।

तत्र पालनात् पतिमन्यमाश्रयेत् सैरिन्ध्रीकर्म्मादिना आत्मवृत्त्यर्थं, नवमे च निपुणं निर्णेष्यते।

प्रोषितभर्त्तृकायाश्च स विधिः। कामशब्दप्रयोगोऽरुचिसंसूचनार्थम्। देहक्षपणमकार्य्यमिदं, त्वन्यदकार्य्यतरं, यदन्येन पुरुषेण सम्प्रयोगः"। अतो-ब्राह्मणादि-वर्णत्रितये विधवावेदनं शास्त्रविरुद्धं, न तु शूद्राया इति प्रेक्षावतां राज्ञाः शास्त्रतो व्यवहारतश्च।

उपसंहारे तु निरुक्तप्रमाणानां नैरपेक्षेण पर्य्यालोचनतो यदेतत् प्रतिभाति-ब्राह्मणादिजातित्रितयाभ्यन्तरे विधवोपयमनानुष्ठानप्रचलनं नासीत् केषामपि-त्रिकालविदां पूज्यपादानां महर्षीणामभिप्राय इति । वरं तावत्तदुपरि-प्रकटय्यारुचिं लोकप्रवृत्त्यभावदृष्टित: स्थाने स्थाने स्वस्वग्रन्थाभ्यन्तरीणे तन्निन्दा-बोधकानि वचनानि तथा तन्निषेधावेदकप्रमाणानि च लिलिखुस्ते ।

पराशरसंहिता कलिधर्मप्रकाशिकेत्युच्चै:स्वरेणोत्थापयन्ति यद्विवादं-कतिपये विद्वांस:, किन्तु तत्संहितायाः कस्मिन्नपि स्थाने भ्रमतोऽपि तत्-प्रशंसासूचकमेकमात्रमपि वचनं न भवति दृष्टिगोचरम् ।

युगान्तरीयधर्मोल्लेखावसरे विपदि पूर्वतो वक्ष्यमाणकार्य्यद्वयस्य प्रचलित-त्वाभावात्तत्प्रचलने सत्यामपि अनिच्छायामगतिकत्वेन केचनानुमोदन्ते-व्यभिचारं तथान्ये विधवावेदनं चापद्धृत्यात्मकत्वेन मेधातिथिर्न तत्प्रकटीकृतं-विशदतया नवमाध्यायोक्त-मानवीयवचनानां स्वकृतभाष्ये।

"यदा प्रवसेत्तदा भार्य्याया वृत्तिं विधाय प्रवसेदिति कृत्स्नं विधिं-विधायेत्येवमर्थो द्रष्टव्य: । प्रवसन् भार्य्याया वृत्तिं विदधीतेति तथा कुर्य्याद्-यथा स्याद् यावत्प्रवासं वृत्तिर्भवतीति शरीरस्थितिहेतु-भोजनाच्छादनगृह्योप-करणादि तां विधाय प्रवसेत् स्वदेशाद्देशान्तरं गच्छेत् ।

तथा, वक्ष्यति प्रोषितो धर्मकार्य्यार्थमित्यादिना ।

अन्तरेणैतानि निमित्तानि भार्य्यां हित्वा प्रवासो निषिध्यते अवृत्तिकर्षिता-हि दृष्टदोषप्रदर्शनमर्थवाद: अवृत्त्या दारिद्र्येण कर्षिता पीड़िता प्रदुष्येत्-पुरुषान्तरसम्पर्कादिना स्थितिमत्यपि स्थिति: कुलाचारस्तत्सम्पन्ना क्षुधावसरे-दीना दोषमाप्नुयादन्यं भर्त्तारमाश्रित्य जीवतीति भाव्येत एतत् सम्भावनायां-लिङ्नियमो-यथा,—निहते भर्त्तरि परिग्रहप्रयाणादिनिषेध-एवं प्रोषितेऽपि-चास्थिता आश्रिता गृहीतवती । अकृत्वा तु वृत्तिं प्रोषिते शिल्पैर-जीवन्ती गर्हितैर्जीवेतेति कर्त्तनजालिकाकरणादिना । गर्हितानि वस्तूनि-बीजनादीनि, एष एव विधवादीनां निजश्रमजन्यो वृत्त्युपाय: ।

यदुक्तं, "कार्य्यवान् प्रवसेदिति, तानि कार्य्याणि दर्शयति तद्विशेषेण-प्रतीक्षाकालभेद:, परतस्त्वर्दिततया कर्त्तव्यमिति चोक्तम् । तत्र केचिदाहु:-

प्रकरणादगर्हितैर्जीवेदिति। तदयुक्तं; प्रागस्मात्कालादगर्हितैरितीयं किं-न्नियतां न ह्यस्या आत्मत्याग इष्यते पुंस इव प्रतिषिद्धत्वात्। तस्मात्-प्रागप्यस्मात् प्रतीक्षणविधेरगर्हितैः शिल्पैरजीवन्ती गर्हितैर्जीवेत्। अन्ये-व्यभिचारमिच्छन्ति। तथाच स्मृतान्तरे,—

"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते"॥

अन्येऽप्याहुः,—

नास्याङ्गानि ब्रह्मचर्य्यमपनेतुं शक्यते। स्त्रीधर्मेषु हि तदस्याविहितम्। "न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य त्वि"ति मृते भर्त्तरि नास्ति व्यभिचारः-किमङ्ग प्रोषिते। पतिशब्दो हि पालनक्रियानिमित्तको ग्रामपतिः सेनायाः-पतिरिति। अतश्चास्मादवाधनेषा भर्तृपरतन्त्रा स्यात्। अपित्वात्मनो जीव-नार्थं मैरन्ध्रीकरणादिकर्मवदन्यामाश्रयेत्। तत्र यदा षण्मासभृत्या-मब्दसरभृत्या वा कस्मिंश्चिदाश्रिते भर्त्ता यद्यागच्छेत्, तदानीन्तां चेद्दशोकर्त्तुं-शक्नुयात्। त्यज त्वं भार्य्यामिति यावद्भवति कालो न पूर्व्वः प्राक् पत्युरेव सा। अन्येऽप्यर्थमिममाहुः। पूर्व्वं तु पुनर्भूवृत्तिमिच्छन्ति, या पत्या वा परित्यक्ता-भवति यस्याः किल पतिरियन्तं कालं निश्चितवृत्तिको नागच्छति, सा तत-त्यक्तैव भवति। ततश्च यदि सा पुनर्भूधर्मेणान्येनोढ़ा भवेत् तदा भर्त्ता-ऽभ्यागतो न किञ्चिद्ब्रूयात्। पुनर्भवस्येयं भार्य्येति। तदयुक्तं, न निष्क्रय-निसर्गाभ्यामिति तस्य श्लोकस्यार्थवत्त्वं दर्शयिष्यामः। धर्म्मश्चतत् कार्य्यञ्च-धर्मकार्य्यं सोऽर्थः प्रयोजनं प्रवासस्येति धर्मकार्य्यार्थम्। कुतो न गृहस्थस्य-धर्मार्थो दीर्घकालः प्रवासः, अवश्यं ह्यग्नयस्तेन परिचरणीयाः, पाञ्चयाज्ञिक-मनुष्ठेयम्"। इत्येतद्भाष्यपर्य्यालोचनतोऽवगम्यते प्रोषिते सति भर्त्तरि-स्वजीविकां निर्व्वाहयितुं येन केनापि गर्हितानुष्ठानेन यतिष्यन्ते प्रोषित-भर्तृका इत्यभ्यनुज्ञां प्रददुः पूर्व्वतः कतिपये धर्मशास्त्रकाराः, नान्यस्यां-विपदि। किन्त्वेतत्सर्व्वं रनादृततया निर्व्वासितं भारतीयद्विजातिभिस्तयतः। वरं चैकपतिव्रतं प्रशंसितं मुक्तकण्ठेन वैदिकप्रमाणैर्धर्मशास्त्रकारैश्च।

एकपतिव्रतं अर्थात् पातिव्रत्यं स्त्रियो विधिः, पालनीयोऽतः स एव-ताभिरवश्यम् ।

ब्राह्मणादिजातित्रितयान्तर्भूतानां नारीणां सधवाविधवात्मकानां पति-परायणत्वरूपैकपरमधर्मों नित्यो मन्वादिभिर्विहितः । पतित्यागे च प्रति-पादितमपि पातित्यं । विधवानान्तु तासामन्वारोहणब्रह्मचर्य्यमात्ररूपो-द्विविधो नित्यानित्यफलकतया तारतम्येन व्यवस्थितः ।

प्रमाणान्युक्ततया पूर्व्वतोऽत्र नोद्धृतानि । अपिच हिन्दुधर्मावलम्बिभिः-सर्वैरेवावगन्तव्यमेतद्यदनायासेन मङ्गलकामनया संसारस्य सादरमेकपतित्व-व्रतमादृतं वैदिकसमयतो नाभविष्यच्चेत्, तद्विषयकप्रमाणानामुल्लेखो ना-भविष्यत्प्राचुर्य्येण, एवमावर्त्तमानकालतोऽपि शिष्टा नावलम्बिष्यन्ते नियम-मिमञ्च । विषयस्यास्य सत्यताया न भवेद्धेतुर्दूरगमनमन्वेष्टुमुदाहरणम् । यदा भारतीयादिमवासिनः पराभूय स्थापयामासुरावासमार्य्या भारते, तदाऽत्यल्पसंख्यकतयाऽर्य्याणां संख्यायाः पुनस्त-एवाक्रमणसम्भावनया-सम्वर्द्धयितुं स्वसंख्यामारेभिरे विधवोपयमनमित्यनुमीयतेऽस्माभिः । अन्यथा-द्वादशपुत्रव्यवस्थानुष्ठानस्याशास्त्रीयत्वापत्तेर्जागरूकत्वात् । समयस्यास्य-कस्मिन्नपि शास्त्रे नामतः सत्यप्यनुल्लिखितत्वे विषयेऽस्मिन् वेणराजसमयोल्लेखस्य-शास्त्रे परिदृष्टतया तस्यैव तदात्मकत्वमनुमेयम्, तदानीं पृथिव्याः शुभस्थापन-चिकीर्षया तदनुष्ठानं पूर्व्वाचार्य्यैरभ्यनुज्ञातं जातिनिर्व्विशेषम् । किञ्चिदानी-मपेक्षणीयलोकसंख्यापेक्षया तद्वृद्धेराधिक्यात्प्रतिदशमाब्दं लोकसंख्याकरण-प्रकाशकपुस्तकेषु साधारणतः पुरुषसंख्यापेक्षया नारीसंख्याप्राचुर्य्य-परिदर्शनात् ।

तथा क्षेत्रदोषवशाज्जातेः साङ्कर्य्यसम्भवाच्च मन्वादिभिः सनियोगक्षत-योनिविधवोपयमनस्य ब्राह्मणादिजातित्रितयतः सत्यपि निष्कासितत्वे-तन्निषेधानन्तरमक्षतयोनिकादेः संस्कारार्हत्वं प्रतिपादितम् । सत्यपि-तदनुष्ठाने पैतृकश्राद्धादिकार्य्ये पुनर्भूपुनर्भवयोस्तेनैव प्रतिपादिताऽनर्हत्वेऽपि-साङ्कर्य्यदोषोत्पत्तेरसम्भवात् ।

ततः प्रचलिताक्षतयोनिकाविवाहावलोकनेन क्षतयोनिकाविधवोपय-

मनस्याग्रहशालिभिः केश्चित् प्रदत्तप्रसारत्वेनानुभूतगुरुतरसाङ्कर्य्याच्च तत्पर-वर्त्तिनो महर्षयस्तन्निवारयितुमासन् खड्गहस्ता इत्यनुमीयते स्फुटतरस्तच्छास्त्रात्मप्रमाणत्रातैः । उक्तेऽस्मिन्नास्त्येवैतदनुष्ठानमिति स्वीकर्त्तुं न केऽपि भवेयुर्विमुखाः ।

यद्यस्मिन् विद्येत चेदृगुणराशिस्तदा केऽप्येतद्गुणसन्दोहतो नाभविष्यन् पराङ्मुखाः । अवश्यमेव केऽपि तत्पथानुगामिनः सारग्राहिणोऽभविष्यन्-दृष्टिगोचराः । किन्तु न तथा,--

सत्यां सारवत्तायामस्याऽस्यस्मिन् देशे तदनुष्ठानेऽपि भारतीयान्य-प्रदेशेष्वपि प्रचलितमवश्यमभविष्यत्सदाचाराणाम् । अतः सुस्पष्टतो यदवगम्यते,-नैतदनुष्ठानेन किमपि संसारीयहितमासीत्साधितम् । वरं वर्द्धितमासीत्-साङ्कर्य्यम् ।

अतएव धर्मशास्त्रेषु लौकिकेषु च तन्निषेधविधिर्नादृतो भवति दृष्टिविषयः ।

शास्त्रीयनिषेधे सत्यपि विद्यमाने शिष्टपरिगृहीतमभविष्यच्चेत्तदनुष्ठानम्,-तदा प्रमाणात्मकतयैतत्परिग्रहीतुमभविष्यन् बाध्याः सर्व्वे । विवेचनमेतत्सारदीयस्मृतिभाष्यकारोद्धृतवचनेन भवति प्रमाणितम् ।

यथा,—

"देशे देशे य आचारः पारम्पर्य्यक्रमागतः ॥
स शास्त्रार्थबलान्नैव लङ्घनीयः कदाचन" ॥

वचनबलादस्मात्सत्यपि शास्त्रीयनिषेधे यद्यभविष्यद्देशप्रचलितमेतत्,-तर्ह्यवश्यमेव तद्ग्रहीतुमभविष्यन् यत्नपराः सर्व्वे । किन्तु कलावस्य-शास्त्रनिषिद्धत्वात्तथा लोकेऽप्यप्रवर्त्तितत्वात्, शिष्टाचारविरुद्धत्वाच्च तदनुष्ठानं कथं भवेदनुमोदनीयं सर्व्वद्विजातिवर्गाभ्यन्तरे ।

शूद्रजातीयानां वेदाधिकाराभावादेतज्जातीयविषये शिथिलयामासुर्धर्म-शास्त्रकर्त्तारो नियमानिति भवति परिदृष्टम् । जातिष्वेतासु विधवावेदनस्य-निषिद्धत्वं प्रदर्शितं पूर्व्वतः ।

एतत्कारणजालवशतोऽवबुध्यते पराशरेण विपदि शूद्रादिजातिविषये-विधवोपयमनपरिचायकं वचनं नियमितमिति । सत्येवं विवेचने कैरपि साकं धर्मशास्त्रे नावलोक्यते विरोधः ।

प्रचलितमासीदेतदस्मद्देशे । स्वमतसमर्थनार्थमुद्भावितमेतद्विवेचनं काल्पनिकं वा प्रकृतमिति भवेद्विवेचनीयं चेद्बहुदर्शिपण्डितमण्डलीभिस्तद्भवेत् सहजबोध्यमेतत् । न भवन्ति धर्मशास्त्राणि वेदान्तन्यायादिशास्त्रसमानि ।

स्वस्वमतपरिपोषणार्थं न्यायवेदान्तादिशास्त्रोक्तपदव्रातानां वादिप्रतिवादिभिः प्रतिपादिते सति भिन्नार्थत्वे न भवेत् कापि क्षतिः कस्मिन्नपि धर्मविषये । किन्तु स्वस्वमतस्थापनार्थैव स्वीयस्वीयबुद्धिबलात् स्वकपोलकल्पितधर्मशास्त्रीयव्याख्यानं न लभते तद्व्याख्याव्याधारणं वरं तेन भवेद्धर्महानिरित्येतद्विषये भवन्ति भूरिभूरिप्रमाणानि चार्षाणि ।

यथाह मनुः—

"योऽवमन्येत ते तूभे हेतुशास्त्राश्रयाद् द्विजाः ! ।
स साधुभिर्बहिष्कार्य्यो नास्तिको वेदनिन्दकः" ॥ इति ।

अतएव पूर्व्वाचार्य्या धर्मशास्त्रव्याख्यानावसरे व्याख्येयधर्मशास्त्रस्य गूढमाशयं स्फुटं व्यञ्जयितुमन्येषां महर्षीणां स्वस्वकृतग्रन्थविसरतस्तदर्थबोधकप्रमाणान्युदाहरणात्मकतया प्रदर्श्य स्वाभाविकमर्थं विशदयन्ति यत्नपूर्व्वकम् । एवमेव प्रदृश्यते बहुभाष्येषु तथा व्याख्यासु च पूर्वतः प्रदर्शितकुल्लूकभट्टव्याख्यानं प्रति कृते दृष्टिपातेऽवगन्तव्यं सत्यत्वमेतत् कथनस्य । वैदिककालादारभ्येदानीन्तनसमयपर्य्यन्तमन्तरा बहवो बौद्धादिमतप्रवर्त्तकाचार्य्या मूलं प्रति धर्मस्यास्य कुर्वन्ति स्म कुठाराघातं साक्षात्सम्बन्धेन प्रच्छन्नभावेन वा क्रमशः । किन्त्वस्य मूलभित्तिरेतादृक्नियमनिबद्धा नासीन्नियमिता यत् । अस्तित्वमस्य कदापि नाभवल्लुप्तप्रायम् । न सम्भवेद्वा लोपोऽस्य ।

शास्त्रप्रदर्शितनियमनिचयं तथा पूर्व्वाचार्य्यनिबद्धप्रकाशितमदर्थञ्च दृढ़ं-संगृह्य चेतसा प्रचलितवन्तः संसारवर्त्मनि भारतीयाचार्य्याः। संप्रत्यात्म-परिचयं प्रदातुं भारतायतो भवन्ति समर्थाः। नियमानामेतेषां काठिन्यात् सर्व्वांशतोऽनवलम्बितत्वे सत्यपि वयं युगेऽस्मिन् परिगृह्णीमस्तन्मध्यता-ऽनेकांशम्। इतिहासं प्रति निक्षिप्य दृष्टिमवलोकयिष्यति यद्भारतेऽस्मिन् सङ्कटे कतिपयधर्म्माणामाविर्भावतिराभावो। नियमशैथिल्यमेषां प्रधान कारणमेव।

प्रतीयतेऽतः शास्त्रीयनियमलङ्घनं न शास्त्रसङ्गतम्, नापि युक्तिसङ्गतं-चेति। संप्रत्यनुष्ठीयतां शास्त्रानुसृतं युक्त्यवतरणं। स्थलेऽस्मिन्नेवं भवेदुत्थापितः प्रश्नः। यथा विधवोपयमनं शास्त्रविरुद्धम्, तथा भ्रूणहननं किं न शास्त्रविरुद्धम्? भूरिभूरिभ्रूणहत्याचरणेन भारतीयार्य्यधर्मस्य बहुपरिमाणं कलङ्कितत्वया आर्य्यधर्मावलम्बिनोऽन्यान्यधर्मावलम्बापेक्षया शतपरिमाणेन सुदूरपराहताः, हृदयवद्वांक्तिमात्रमनायासेनैव तत्पारयेत्कर्त्तुं हृदयङ्गमम्। भ्रूणहत्यापरिवर्त्तननातः शास्त्रीयमेतदित्युद्घोष्य सर्वत्र प्रचालिते सति विधवा-वेदने भवेत् सुरक्षितो भारतीयार्य्यधर्म्मः। तर्हि कर्त्तुमेतदनुष्ठानं कथ-मेवम वयं पश्चात्पदाः। युक्तिच्छलेन स्वीकृतमेतदस्माभिः। किन्तु-श्रीमन्तो भ्रूणहत्याबाधता यत् विधवावेदनविधानं प्रतिपादयन्ति, तद्विधानं-सत्यपि प्रचलिते, तदपेक्षया हृदयविदारकं गुरुतरदृश्यमवलोकितव्यं समये-समये। अनेकेषां तावदासीच्चक्षुर्विषयमेतद्बहुवारं परित्यज्य सद्याजातशिशुं-मात्कमुपपतिना पलायन्तेऽनायासेन काश्चित् स्त्रियः स्थानान्तरम्।

यद्यप्येतासां पक्षे भवेत् पुनर्भवनप्रथाप्रवर्त्तनं, तदा भवेदुच्छन्ना देशः समाजश्च।

एवमनेकाः स्त्रियो दुग्धपोष्यं शिशुसन्तानं विहाय स्थानान्तरं ग्रहीतुं-पत्यन्तरं न भवेयुः कुण्ठिताः। तदैव शिशुसन्तानानां तेषां प्रतिपालनार्थ-मवलम्बितः को भवेदुपायः। मातृरभावे शिशोरवश्यं सम्भवेत् प्राणवियोगः। गर्भतो वहिर्गमनावसरे भ्रूणस्य जीवनं मरणं वा न तावद्भवेत् स्थिरीकरणम्। किन्तु विधवोपयमनेन जीवितशिशोस्तस्याभावेन भवस्यानवर्त्तीनाशस्वरूपम्।

किमेतदल्पतरदुःखविषयकम् ? एतदपेक्षया कोऽस्त्यधिकतरयातना-विषयः। सति समाजे विधवापरिणयप्रचलनेऽनेके तादृशगुरुतमदोषा-भवेयुरुपस्थिताः।

पत्यन्तरग्रहणरीतिरस्ति यस्मिन् देशे, सुसभ्ये देशे तस्मिन्नास्ति जारज-भ्रूणहननयोरभावः।

भूरिभूय्युदाहरणमेवं पश्यामो वयं सर्वदा। मति प्रचलिते विधवा-वेदने देशतो जारजभ्रूणहत्यात्मको गर्हितदोषो भवेत्तिरोहित-इत्याशयै-दातुं स्थानं क्षणकालं मतिर्न विधेया।

प्रदेशेऽस्मिन् जातौ यस्यां भवति प्रचलितोऽधुना विधवापरिणयः, तस्य-ज्जातिं प्रत्यनुष्ठितायां पृच्छायां सत्यां विनायासेनावगम्यते यत्; किमिव ते-सुखेन यापयन्ति कालं सार्द्धं तत्सजातीयस्त्रीभिः। शुभादृष्टवशतो द्वितीयो-वैको विद्यते कुत्र स्त्रीजनः सुशीलसम्पन्नः। किन्तु विषयेऽस्मिन्ननेकास्ताः-कलुषितचरित्राः, नास्त्यत्र सन्देहोऽणुमात्रम्। गतोऽयं धर्म्मविप्लवः। संप्रति विधवाविवाहद्वारा कियत्परिमाणो भवेदुपस्थितः शास्त्रसमाजयो-र्विप्लवः निरीक्ष्यतां याथार्थ्येन सः। पुरुषान्तरगतविधवायाः विवाहीय-पिण्डदानादिविषये कापि व्यवस्था नावलोकिता शास्त्रेऽतो न शास्त्रसिद्धो-विधवापरिणयः। मनसि विभाव्यतामेतत्, यदा पूर्वपतिं सजातसन्तानं-विसृज्य गृहीतपत्यन्तरायाः कस्या अपि विधवाया द्वितीयपतेर्वीजतः समुद्भूतः-पुत्रोऽन्यस्तदा स्त्रियोऽस्याः मातृ मरणे किमात्मकं गोत्रमुल्लिख्य महागुरु-निपातनजन्यं श्राद्धादिकं कथं भवेदनुष्ठितमिति। समयेऽस्मिन् भवेत्सङ्कटो-भयानकः। पुत्रस्यावश्यकर्त्तव्यकर्मान्तर्भूतमशौचपालनं पिण्डोदकादिदानञ्च। न चेत्, पुत्रो भवेत्प्रत्यवायत्यागी। विषयेऽस्मिन् कस्या अपि व्यवस्थायाः शास्त्र-कृद्भिरप्यननुष्ठिततया कामपि सरणिमवलम्ब्य मुक्तो भवेत्प्रत्यवायात्। न-कापि दृश्यते गतिरस्य। इतः समाप्तोऽयं शास्त्रविप्लवः। द्वितीयतः सति प्रचलिते विधवावेदने—

"सुतो तस्करता स्थिते" तिवत्ब्रह्मचर्य्यकथनं कथामात्रे पर्य्य-वसितमेव।

कार्यतो न किंचिन्मात्रं स्यात्येव । स्वभावतो नीचगामिनी पानीय-मनसो । विशेषतोऽतिशयचञ्चलानि नारीणां मनांसि । एतादृग्-निष्कण्टके सत्युपलब्धे सुगममार्गे कष्टकरे ब्रह्मचर्यवर्त्मनि न भवेयुः का-अप्यग्रसराः ।

एतत्परिणामफलं भवेद् यदि तद्रूपं, स्त्रियः क्रमशो भवेयुर्व्यभिचारिण्यः । भवेच्चान्ते भारतीयार्यगृहगाम्विस्तु वम् । म्लेच्छादिजातीयस्त्रीणामिव सामान्य-कारणतः स्त्रीकर्तृकपतित्यागः सङ्घटिष्यते प्रतिदिनम् । कस्तु विलासिता-चारितार्थ्यं सत्यामिच्छायां पश्चापत्कालाभ्यन्तरे कमप्यापत्कालात्मकं प्रदर्श्य हेतुवादं विधातुं पतिपुत्रस्वजनविसर्जनं न कदापि पराङ्मुखो भवेद्विलासिनीगणः । किं वक्तव्यमत्र विशेषेण, प्रतिपदं विचारालयमाश्रये-देतद्विषमयफलनिवारणार्थं । समाजविप्लवोऽयमेव ।

तृतीयतः—विधवाविवाहीयविषये के के साम्यवादिनो नव्यशिक्षाकुशला-प्रदर्शयन्ति युक्तिजालं वक्ष्यमाणरीत्या ।

यथा,—पश्यति साम्येन सकलप्राणिनः श्रीजगदीश्वरः । तद्दृष्टितः-स्त्रीपुरुषयोस्तुल्यतया प्रदाय समचमतां ताभ्यामक्रियत सृष्टि स्तेषाम् । वैज्ञानिकपर्यालोचनया त्ववबुध्यते तुल्योपादानेन सङ्घटितो-भयजातिरिति ।

सुखदुःखकामक्रोधेच्छाद्वेषहर्षादिचित्तवृत्तिजातं स्त्रीपुरुषसाधारण्येन-परिलक्ष्यते समानम् । अतएव स्त्रीपुरुषात्मकोभयजातिः सकलविषय-समानाधिकारिणीत्यवश्यं स्वीकरणीयम् । व्यवस्थायामेवं स्त्रियां सत्यां मृतायां-वा जीवितायामपि यद्यपि कुर्यात्पत्न्यन्तरं यदृच्छया पुरुषः, तदा मृते सति-पत्यौ स्त्रियो न कुर्युः पत्यन्तराश्रयणमिति न केनापि प्रकारेणेश्वराभिप्रेतम् । विधवाविवाहानुष्ठानस्यातो युक्तिसङ्गततयाऽवश्यं विधातव्यं तत्प्रचलनम् । आपत्तिरेतादृशो नासङ्गतेत्यवबुध्यते स्थूलदृष्टितः । किन्तु सूक्ष्मदृष्ट्याभ्यन्तरे विचिन्ते सति प्रवेशे यः परिलक्षिष्यते प्रभेदोऽनेकांशतः,—

प्रदीयते तद्विवरणमधस्तात् । यथा,—द्वेषेच्छाप्रभृतिकतिपयसामान्य चित्तवृत्तीनां तथा रक्तमांसादिकतिपयसाधारणशारीरिकोपादानानाञ्च-

स्वसादृश्येन यद्यपि स्त्रीपुरुषद्वयं समानाधिकारीत्येवं रूपः क्रियते सिद्धान्तस्तदा तादृक्सादृश्यं न दृश्यते कुत्रापि ।

दृश्यतां तावत्, सार्द्धं कीटपतङ्गपशुपक्षिप्रभृतिभिर्मनुष्यस्य न परिलक्ष्यते-विशेषतोऽसद्भावः । एतादृग्सिद्धान्तानुसारेण लब्धं तुल्याधिकारित्वम्—शक्नुयात् प्राणिमात्रम् । परस्परन्तु कस्यापि न भविष्यत्येव किमपीतर विशेषविवेचनम् । स्त्रीपुंसां शारीरिकमानसिकबलाबलस्य तरतमभाव-विषये सूक्ष्मदर्शिनो महर्षयः कथयन्ति कीदृगायुर्वेदशास्त्रे,—

प्रदर्श्यते तत् स्थानेऽस्मिन् ।

यथाह चरकः—शरीरस्थाननिरूपणावसरे,—

"स्नानात्प्रभृति युग्मेषु - अहःसु सम्बसेतां पुत्रकामौ, तौ चायुग्मेषु—दुहितृकामौ" ।

तथाच,—

"अयुग्मदिवसे कन्या युग्मे पुत्रः प्रजायते ।
रक्ताधिक्ये भवेन्नारी शुक्राधिक्ये भवेत् पुमान् ।
शुक्रशोणितयोः साम्ये भवेदेव नपुंसकः" ॥ इति स्मृतिः ।

तथा चरके तु,—

"तत्र शुक्रबाहुल्यात् पुमान्, आर्त्तवबाहुल्यात् स्त्री साम्यादुभयोर्नपुंसकमिति" ।

निरुक्तप्रमाणव्रातेन स्त्रीपुरुषयोः शारीरिकसूत्रपातविषये समयनिदानयोः-प्रदर्शितः प्रभेद इत्यवधेयम् । प्रकृतिगतविभिन्नतां पश्यन्तु विद्वांसः मानुग्रहं-तन्मान्तरीणां विषयेऽस्मिन्,—

यथा,—

"पित्तात्मिकाः स्त्रियो ज्ञेयाः सौम्यास्तु पुरुषा मताः" ॥ इति ।

पूर्वतः कथितं रक्ताधिक्येन भवति नारीजातं ; तथा शुक्राधिक्येन पुरुषजातं चेति ।

तथाऽग्नेयप्रभृतयः कतिपये गुणाः रक्ते पित्ते च विद्यन्ते समभावेन । सुतरां पूर्वोक्तलक्षमारवचनविवेचनानुसारतः स्त्रीसमूहः स्वभावतः पित्त-प्रकृतिकः, पुरुषनिवहस्तु श्लेष्मप्रकृतिविशिष्टश्चेति प्रतिभाति सुस्पष्टतः । पित्तप्रकृतिश्लेष्मप्रकृत्योः कियती विभिन्नताऽस्ति प्रदर्शिता शास्त्रे, दृश्यता-मिदानीमेषा ।

यथा,—

"पीतः शिथिलाङ्गस्ताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलो दुर्भगो-वली पलितखालित्ययुष्टो बहुभुक् उष्णद्वेषी क्षिप्रकोपप्रसादो मध्यमबलो-मध्यमायुश्च भवति ।

"सुप्तः सन् कनकपलाशकर्णिकारान्,
संपश्येदपि च हुताशविद्युदुल्काः ।
भुजङ्गोलूकगन्धर्व्वयक्षमार्जारवानरैः ।
व्याघ्रर्क्षनकुलानूकैः पैत्तिकास्तु नराः स्मृताः" ॥

तथा,—

"सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बल-वांश्चिरग्राही दृढवैरश्च भवति ।

"शुक्लाक्षः स्थिरकुटिलातिनीलकेशा-
लक्ष्मीवान् जलदमृदङ्गगम्भीरघोषः ।
रक्तान्तनेत्रः सुविभक्तगात्रस्निग्धच्छविः सत्त्वगुणोपपन्नः ।
क्लेशक्षमो मानयिता गुरूणां ज्ञेयो विलासप्रकृतिर्मनुष्यः" ॥
"ब्रह्मरुद्रेन्द्रवरुणैः सिंहाश्वगजगोवृषैः ।
तार्क्ष्यहंससमानूकाः श्लेष्मप्रकृतयो नराः" ॥ इति सुश्रुतः ।

न तावत्सर्वपुरुषाः समानस्वभावाः । तेषामसन्तो नानाविधपार्थक्यं परिलक्ष्यते सर्वदा ।

यथा,—

को वा वातप्रकृतिकः, पित्तप्रकृतिको वा कः, को वा श्लेष्मप्रकृतिकः, मिश्रप्रकृतिको वा कः। तथैवं प्रकृतिभेदेन पुरुषजातेरेकस्या नानारूपं शारीरिकमानसिकगुणवैषम्यं दृष्टं सततम्।

तथा स्त्रीजात्यभ्यन्तरेऽपि तावत् प्रकृतिभेदेन बहुविधदैहिक मानसिकगुण भिन्नता परिदृश्यते ह्यनिशम्।

व्यक्तिगतगुणानुसारेणोभयजात्यन्तराले परिलक्षिते सत्यप्युत्तमानुत्तमत्वे-जातीयसम्बन्धाधीननारीजातिमध्ये पित्तप्रकृतिकच्छाया तथा पुरुषजात्यभ्यन्तरे सौम्यप्रकृतिकच्छाया च तिष्ठति स्थास्यति चावश्यम्। अतएव-स्त्रीपुरुषयोरुत्पादकमूलनिदानस्य गुण एव। सुतरामेतदेवाव्यर्थमैशिकनियमस्य-फलमिति परमर्षीणां पूज्यपादानां मतेनासीत् सुनिश्चितम्। तथा, विमानस्थानीयचिकित्साप्रसङ्गे चरकेन यदुक्तं, प्रमाणात्मकतया-तदेवोद्ध्रियतेऽत्र।

"सहसा ह्यतिबलमौषधमपरीक्षकप्रयुक्तमल्पबलमातुरमभिघातयेत्। एतचैव कारणमवेक्षमाणो हीनबलमातुरमविषादकरैर्मृदुसुकुमारप्रायैरुत्तरोत्तरगुरुभिरविभ्रमैरनात्ययिकैश्चोपक्रमैश्चौषधैः। विशेषतश्च नारीश्च। ताः-ह्यनवस्थितमृदुविवृतविक्लवहृदयाः प्रायः सुकुमारा नार्य्योऽबलाः परसंस्तभ्याश्च"।

भो विद्वांसः दृष्टमेतद्युष्माभिः स्त्रीपुरुषयोः शरीरतो मानसतश्च-प्रभेदः कियानस्तीति। यतो महतः प्रकृतिभेदस्य विद्यमानतया स्त्रीपुंसोः-कार्य्यकलापतोऽतीवपार्थक्यमवलोक्यन्ते सर्वैः, अतएव केवलयुक्तिमार्गानुसरणं-कर्त्तुमनुष्ठिते सत्यप्यभिलाषे स्त्रीजातिः केनापि प्रकारेण न भवेत् पुरुषजाति-समधिकारिणी। अपि चैतद्विषये शास्त्रीयमनुसन्धानं कर्त्तुं विशेषभावेन नास्ति प्रयोजनं। स्त्रीपुरुषयोरन्तराले प्रकृत्याकृतिचरित्रगतातिशयप्रभेदो-विद्यते सन्ततं, तत्केऽपि न प्रत्यक्षीकुर्वन्ति ?।

निश्चलमेकतत्त्वो विभाव्य ब्रुवन्तु निर्भरं।

स्त्री पुरुषयोः शारीरिक मानसिक-कार्य्यकलाप विषये सत्यप्येतादृशप्रभेदे जागरूके परस्परं संसारक्षेत्रे दातुं तुल्याधिकारित्वं कथमतीवव्यग्रा भवन्ति-

श्रीमन्त:। कथं वा केनापि युक्तिबलेन दक्षिणाङ्ग-वामावयवाभ्यां न-प्रादद‍न् समानाधिकारं भवन्त:। कथं वा वामहस्तं चिरकाल मपवित्रं शौचादिकार्य्यनिवहे नियुज्य प्रकाशयन्ति दक्षिणहस्तस्यादर-मियन्तं। स्थलेऽस्मिन् भवन्त: कथं पराभवन्ति साम्यात्मकभावं। हस्तद्वयं-प्रति प्रदाय समानाधिकारं स्वाच्छन्द्येनाशनशौचादिक्रियां सम्पादयितुं-कथं वा न भवन्ति भवन्तोऽग्रसरा:। स्वीयशरीराभ्यन्तर एतादृङ्नियम-संस्थापनं तथाऽङ्गोपाङ्गान्तरस्य ममतादिकं चोदाहरणात्मकतया भवति-चाक्षुषमनवरतम्। स्त्रीपुरुषाभ्यन्तरेऽतो नार्य्येवावश्यं पुरुषाधीना स्त्री-समाजान्तराले पुरुषा: स्त्रीणां शासनकर्त्तार:। यद्यपि संसारे शान्ति:-सुशृङ्खलता च भवेदभिलषणीया, तदावश्यमेव स्वीकरणीयमेतत्, संसारक्षेत्रे-स्त्रियो विचरितुमवलम्बेरन्नवश्यं पुरुषसंस्थापितनियमं।

यथा--

घटेत विशृङ्खलता नृपतिविरहिते राज्ये, नाविकविहीना नौका यथा-विपदापन्ना, तथा पुरुषपरिचालनविरहित: स्त्रीप्रधानसंसारो भवेद्विशृङ्खलो-विपत्सङ्कुलश्च, नास्त्यत्र सन्देहविषय:। अन्यच्च; के केऽपि कथयन्ति यदत्रत्य स्मृतिशास्त्रं भारतीयाधिकरणालये प्रचलितं दानीतनसङ्गणीयनीतिशास्त्रं च। तन्मध्यतो येषां सत्यप्यनुपयोगित्वे यथा तेषां समयानुक्रमेण भवति-परिवर्त्तनं परिवर्द्धनं च, तथा विधवाविवाहादय: कतिपये समाज-संस्कारकविषया: साम्प्रतिककालोपयोगित्वात् प्राचीनधर्मशास्त्रेषु सामान्यत:-सत्यपि तदादरोल्लेखे सर्व्वादृततदुल्लेखाभावाच्चाधुनातननिबन्धग्रन्थेषु तद्विवर्द्ध-नायोचितं भवति स्थानदानम्। शास्त्रेष्वस्मदीयेष्वेतस्योदाहरणं न विरलम्। दृश्यतां मनूल्लेखनम्। यथा वेणराजत्वावसरे प्रचलितदेवरनियोगादिकार्य्य-व्राते संसाराहितकारितया समयान्तरे सत्यपि परिहृते शास्त्रे तत्तत्कार्य्यजात-मलभत स्थानम्।

एवमपि महाभारतीयादिपर्वपाठादवगम्यते भारतेऽस्मिन्नासीत् पूर्व्वत:-स्त्रीरूढाधीनतेति। यथा, यदा पितृहस्तात्कस्य तत्पुत्र-श्वेतकेतोस्तत्-पत्न्याश्चासीदेकत्रावस्थानम्। तदाऽगम्यैको ब्राह्मण: पितापुत्रसमक्षतो-

ऽवज्ञयाऽत्र मातुर्हस्तं जगामान्यत्र कर्त्तुं भ्रमणम् । भूत्वा रोषान्वितः पुत्रः-पितरं पप्रच्छ बहुविधप्रश्नमस्मिन् विषये । स्वाधीनतासीत् स्त्रीणां पूर्व्वतः-प्रचलिताऽतो न दोषाधायकमेतदनुष्ठानमितुत्तरयति स्म जनकः ।

किन्त्वत्र पुत्रो भूत्वाऽसन्तुष्टः साधारणदृष्टितः कार्य्यमेतदतीव दृष्यं चक्षुः-शूलं चेति विविच्यैकदैव भारततो विदूरितवान् स्त्रीस्वाधीनतात्मकनियमम् ।

एतादृशो बहुविधनियमा—अप्यासन् परिवर्त्तिता इत्यवलोक्यते शास्त्रे । ग्रन्थबाहुल्यभिया तदुल्लेखनं न कृतमत्र । सत्येवं परिवर्त्तने कथमत्र तदुद्भावनं भवेदुचितम् ।

"तुष्यतु दुर्जनन्यायेन" स्वीकृतं भवन्मतम् । तथापीदानीं नायमवसरो-धर्मशास्त्रीयपरिवर्त्तनस्य । समयोऽयं धर्म्मविप्लवस्य । चक्रवर्त्तिनोऽधुना-भिन्नधर्म्मावलम्बिनः । भारतीयाणामिदानीन्तनानां वैदेशिकशिक्षाप्रभावतः-प्रायशो भवन्ति विकृतहृदया वैतण्डिकयुक्तिपूर्णान्तःकरणाश्च ।

यद्भवतु, यद्यपि संसारस्याभविष्यन्मङ्गलं साधितं, तदा स्वीकरणीयं-तत्परिवर्त्तनमवश्यम् ।

किन्तु निरुक्तविषमयफलमन्तरा नान्यो भवेत् कश्चिदुपकारः । यदार्य्याः स्वाधिकारभुक्तं कृतवन्तो भारतं, तदा लोकसंख्यां विवर्द्धयितुं विगर्हितपाशव-वृत्तिमवलम्बितवन्तस्ते ।

अवशेषे विषमयफलावलोकनात्तदनुष्ठानं विहाय तद्विरमयितुं कठोर-नियमावली कृतलिपिबन्धनेत्यनुमीयते वेदादिशास्त्रपर्य्यालोचनतः । पूर्वतो-विशेषभावेन सत्यपि प्रदर्शितत्वेऽस्य विवेचनस्यैतत्प्रसङ्गोपयोगितया दिङ्मात्रं-प्रदर्शितं तदत्र । सम्प्रति भारतेऽस्मिन् लोकसंख्यावृद्धेरपरिमिततया नाना-विधभयङ्कररोगजातेन लोकनिवहे सत्यपि पतिते मृत्युमुखे प्रायशो भारतीय-प्रत्येकस्थानेषु संलगति दुर्भिक्षं सर्वदा, तदा प्रचलिते सति विधवावेदने भवेत्-कीदृक् श्रेयःसाधनं तदधिकलोकसंख्यावर्द्धनेन, तत्कर्त्तव्यं हृदयङ्गमं सहृदयव्यक्तिमात्रेणैव ।

सर्वे भारतीयाः पुरा पृथिव्यभ्यन्तरे कृतवन्तो यत् प्रथमस्थानाधिकारं, तत् किं विधवाविवाहप्रचलनद्वारेण ?" तत्र, केवलं नारीणां पातिव्रत्यम्-

तथा पुरुषाणां ब्रह्मचर्य्यं, कष्टसहिष्णुत्वम् तथा जितेन्द्रियत्वं गुरुभक्त्यादिकञ्च । प्रतिपाल्यैतत् सर्वं धर्म्मशास्त्रादेशानुसारेण सर्वोत्तमस्थानाधिकारमधिरूढ़ास्ते । तथा स्त्रिया ब्रह्मचर्य्यञ्च । स्वीकरोत्येतद्विजयिजातिरप्युच्चैःस्वरेण । समाजोन्नतिं कर्त्तुं भवेयुश्चेदभिलाषिणः, तदा प्रथमतश्चरित्रसंशोधनं पुंसां करणीयमेव । शास्त्रसम्मतमेतदेव । निजमसंशोध्य क्रियेतचेत्परं प्रति दृष्टिपातः, तदा न सम्भवेत्सुफलम् । संसारेऽस्मिन् यद्व्यभिचारादिकं घटते प्रतिदिनम् तदस्माकं भवति चरित्रदोषतः । नान्यद्भवति किञ्चित् । वयं तर्हि प्रथमतो भवेमावश्यं स्वयं परिशुद्धस्वभावाः, यद्यपि स्थापितव्यं स्त्रीभिः पातिव्रत्यं, तथा विधवाभिरवलम्बितव्यश्चेद्यतिधर्म्मः । तदा निरुक्तदोषाः भवेयुर्दूरीभूताः संपूर्णतः । प्रचलिततयैतस्य-पूर्वतो जातिरियमधिरुरोहात्युन्नतिसोपानम् ।

नास्त्यत्र सन्देहो लेशमात्रम् ।

सम्प्रत्यस्माकं समाजो यथा भवति विशृङ्खलः, तद्दृष्टितो विधोपयमनं-सद्वर्जनाधिकरिष्यति लोकमनांसि । यत— आपातमात्रसुखमभिलक्ष्य प्रधावति जनमनः । तथासतीदानीं पुराकालीनब्रह्मचर्य्यनियमादिकम्-यथा समाजान्तराले न सम्भवेल्लब्धुं स्थानं, तथा विधवोपयमात्मकपाशवधर्म्मोऽपि सर्वसाधारणीयसम्मत्या न सम्भवेत् समाजं कर्त्तुं कलङ्कितम् । यद्भविष्यति, तत्सम्पादयिष्यति कालोऽवश्यम् । तद्विषये कर्त्तुं करचेपं नास्तिकस्यापि सामर्थ्यम् । ततो व्यवस्थापकपण्डितानां कतिपयानां भारतीयानां-शास्त्रशिष्टाचारविरुद्धस्य कार्य्यव्रातस्य प्रचलनेऽतीवाग्रहशालित्वं न भवतुरचितम् । तस्मादतो निवृत्तिमाचरितुं यतन्तां श्रीमन्त इत्यनुरोधोऽस्माकम् ।

विषयेऽस्मिन् भारतीयप्रमाणान्युद्ध्रियन्तेऽत्र ।

यथा, —

**"यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः ।**

**न ससिद्धिमवाप्नोति न सुखं न परां गतिम् ॥**

तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यौ व्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि" ॥ इति ।

निरुक्तप्रमाणद्वयतः स्फुटं प्रतीयते यत्, स्वेच्छापूर्वकं सत्यनुष्ठिते कर्म्मणि-न लभ्यते सुखं सिद्धिश्च । अतः शास्त्रप्रतिपादितकर्म्मणां लङ्घनं कदापि-न विधेयमिति परमार्थः ।

अतएव पूर्वप्रचलिते विधवावेदनादिकर्म्मणि शास्त्रेषु मतुप्रभृतिलिखितेऽपि-परिणामफलस्य विषमयत्वेन तन्निवारयितुं बभूवुर्बद्धपरिकरा सर्वशास्त्रकर्त्तारः, न कर्त्तव्यमेतदनुष्ठानावलम्बनमिति राद्धान्तः । किन्तु पुंसां ब्रह्मचर्य्याऽवलम्बनस्य, तथा स्त्रीणां कठोरपातिव्रत्याश्रयणस्य च प्रचलनावसरे तत्कालोपयोगितन्निषेधस्य श्रेयःसाधकतया तदानीन्तनलोकमनस्यभवज्जागरूका तदनुरक्तिः । स्वाभाविकमेतदेव । यतः परिवर्त्तनशीलोऽयं संसारः क्षणभङ्गुरश्च-दैनन्दिनम् । सकलदार्शनिकगणोऽपि स्वीकरोत्येतन्मुक्तकण्ठेन । तथा वैज्ञानिकनिवहोऽपि प्रत्यक्षीकरोत्येतत् प्रतिदिनम् । सुतरां तदवस्थितप्राणिनामप्यवश्यं भावि स्वात्मनःपरिवर्त्तनम् ।

नास्ति संशयोऽत्र नूनम् । ततः पूर्व्वतो यस्यासीत् प्रचलनं, तत्परं तत्-कालगतिमूलकरुच्यनुसारेण भवेत् परिवर्त्तनं तस्य ।

तथा, पुनः पूर्व्वरीत्यागमनम् । रीतैरवमोतप्रोतभावेन जगति-जागतिकपरिवर्त्तनं प्राणिस्वभावपरिवर्त्तनञ्च सततम् । धर्मशास्त्रीयव्याख्या-ग्रन्थानां स्थाने स्थानेऽपि "कलियुगनिषिद्धमेतत्" तथा, "युगान्तरीय-विषयमिद" मित्यादिकस्योल्लेखदर्शनात् समर्थयन्ति शास्त्रे व्याख्यानकर्त्तारो-विवेचनमिदमित्यनुमीयतेऽस्माभिः । समयेऽस्मिन् कतिपयव्यक्त्यभ्यन्तरे सत्यपि-ब्रह्मचर्य्याद्यनुष्ठाने साधारण्येन ब्रह्मचर्य्यपातिव्रत्याद्यनुष्ठानं नास्तीति शक्नुमनूनं वक्तुम् ।

तदा विधवोपयमनादिकर्मैतत्समयोपयोगि न वेति सततां कृतायां-जिज्ञासायां प्रदीयतेऽधस्तात् तदुत्तरम् ।

एतत् प्रचलनस्य पूर्वप्रदर्शितसंसाराश्रितसाधकतया पूर्वप्रदत्तविवेचनस्य-

बाल्यविवाहीयैतत्कालोपयोगिगौणकालावलम्बनात्मकपरिवर्त्तनस्य तथा समयेऽस्मिन् कन्यायाः सञ्जाते सतार्त्तवे प्रायश्चित्ताचरणपूर्वकस्यैतत्कालोपकारकयुवतीविवाहप्रचलनस्य च श्रेयस्करतन्निवारणोपाय-स्वरूपत्वमिति मन्यामहे वयम् ।

तदन्यथाकरणे सति वीर्य्ये दूषिते न कापि विप्रतिपत्तिः, सति चेत्ते कलुषिते सम्भवेद्गुरुतरदोष इत्यात्मकस्यादितः प्रदत्तस्य विवेचनस्यास्य प्राबल्यात्, तथा सांसारिकामङ्गलाधायकतया शास्त्रविरुद्धतया च क्षतविधवोपयमनपन्थाश्रयणं न विधेयं प्रथमतः ।

किन्तु विधवावेदनादिकार्य्यप्रचलनस्य गुरुतरदोषसङ्गसङ्कुलतया सतिनिषिद्धेऽपि तस्मिन् तथा पुनर्भूपुनर्भवनिन्दावेदकप्रमाणव्राते सतरपि सन्निवेशिते च स्वग्रन्थे पुनः प्रदत्तोऽक्षतयोनिका विधवापुनर्भवनप्रसरः पूज्यचरणेन महर्षिणा मनुना ।

अष्टाद्यात्मकवयस्कायाः कन्याया जागतिकविषयस्य मूलतो ज्ञानाभावादापातमात्रसुखमयकार्य्यव्राततो निरपराधिनीनां बालिकानां कृते सति प्रवञ्चनपापस्य सम्भूतत्वात् । तथा अज्ञानपूर्वकैविशेषकार्य्यानुष्ठाने शास्त्रीयप्रायश्चित्ताचरणादर्शनाच्चैतदनुष्ठानमङ्गीकृतम् तेनेति प्रतिभाति गूढं निदानं । कतिभिः संहिताकर्त्तृभिस्तत्तत्समयानुपयोगितया सर्वतोभावेनोभयविधविधवावेदने सतरपि निषिद्धे कतिपये संहिताकर्त्तारः स्वस्वसमयोपकारकतया मनुवद्ददुः प्रसारमक्षतयोनिकाविधवोयमनादिकार्य्याणाम् ।

यथा, "निसृष्टा वा हृतो वापो"ति बौधायनीयवाक्यम्" ।

तथा "पाणिग्राहे" इति वशिष्ठवचनं तथोक्तान्यान्यवचनञ्च कक्षीकरोति मनुवचनं स्फुटतः ।

अतएवाक्षतयोनिविधवोपयमने सत्यधर्मतमेऽपि यतिधर्मादिकमवलम्बितुमक्षमा या का मृतपतिका अक्षतयोनिकाः, शास्त्रनिषिद्धहृदयविदारकगुरुतमदोषोत्पादकभ्रूणंसभ्रूणहत्यापेक्षया तासां शास्त्रोक्तपुनःसंस्कारपूर्वकपत्यन्तराश्रयणं नापराधाधायकमिति परामर्शः ।

पार्थक्येन धर्मशास्त्रनिवहे द्वितीयोपयमविधिकस्यास्वादर्शनात् प्रथम-

विवाहोक्तविधिना कार्य्योऽस्या संस्कार इति सिद्धम्। न च केन गोत्रेण-विवाहोऽस्या विधेय इति वाच्यम्।

"पितुरेव सा" इत्यादिवचनजातेनाक्षतयोन्यास्तादृश्याः प्रतिपादित-पितृगोत्रवत्त्वात्साक्षात्सम्बन्धेन तथा कुशोपलक्षणविधया च। नचोप-संहारोक्तदोषजालं प्रायशः सम्भवेदेतदनुष्ठाने। किन्त्वेतत्कार्य्यानुष्ठातृ-जनानां पातित्यापादकवचननिवहस्यार्थवादात्मकतया त एव न पतिताः,-किन्तूक्तश्रोत्रियादिकुलतो भ्रष्टा न तु ब्राह्मणादिजातितो वहिर्भूता-इति प्रेक्षावतां सुसिद्धान्तः। तथापि सकलदेशापेक्षयैकपतिव्रतत्वात्मकं-नारीणां भारतेऽस्मिन् विशेषत्व-मासीद्ब्राह्मणादिजातित्रये जागरूकं बहु-समयपूर्वतः। यद्यप्यक्षतयोनिकापत्यन्तरग्रहणं, भवेदादृतं, तदा शास्त्र-प्रतिपादिततद्विशेषत्वं सुदूरपराहतमेव। अतएव तत्पत्यन्तरग्रहणापेक्षया-बाल्यादिविवाहे सति निरुक्तगौणकालावलम्बने तद्विशेषत्वं स्थास्यत्ये-वाक्षुण्णमिति चूड़ान्तः।

इति विधवापत्यन्तराश्रयणविवेचनसमाप्तिः।

अथ क्रमप्राप्तव्ययसंकोचविचारः।

पितृश्राद्धाद्यन्यान्यकार्य्यकलापेषु तथा विवाहोपनयनाद्युत्सवेषु च स्वशक्त्य-पेक्षया अधिकव्ययमाचरतां भारतीयार्य्याणामनेकेषां प्राप्तदुरवस्थत्वावलोक-नादिदानींतनापदि तादृगवस्थापन्नस्यातीवक्लेशभागित्वदर्शनाच्चैतदापदुद्धरणो-पायो व्ययसंकोच इति विभाव्योद्भाव्यते तद्विवेचनं तदुत्सवान्यतमोपय-मनविवेचनानन्तरं प्रसङ्गसङ्गतये। यथा—व्ययसंकोचः—व्ययस्य धनादि-क्षयस्य संकोचः संक्षेपः अर्थात् धनादिविषयकव्ययसंक्षेपीकरणम्।

न चैतदनुष्ठानस्याशास्त्रीयत्वाच्छोल्लेख्यं तदनुष्ठानविवेचनमिति वाच्यं,-स्वशक्त्यनुसारेणानापद्यपि व्ययसंकोचाचरणस्य धर्म्मशास्त्रकारैरभ्यनुज्ञाततया-तथापदि स्ववृत्त्युपार्जितद्रव्यजातेन स्वकुटुम्बपरिपालनाशक्तत्वे स्वापेक्षया-निकृष्टतमजातीयवृत्त्यन्तरावलम्बनस्य शास्त्रकारानुमोदितत्वाच्च सुतरामापदि तदनुष्ठानस्य तत्समयोपयोगित्वेनानुमितशास्त्रसिद्धत्वात्।

प्रमाणयत्येतद्विवेचनं निम्नलिखित शास्त्रीयप्रमाणजालम्। यथाह—

मनुः—

"द्वौ दैवे पितृकार्य्ये त्रीनेकैकमुभयत्र वा।
भोजयेत्-सुसमृद्धोऽपि न प्रसज्जेत विस्तरे॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम्"॥ इति।

तथाचोशनाः,—

"द्वौ दैवौ प्राङ्मुखौ पित्र्ये त्रयश्चोदङ्मुखास्तथा।
एकैकं वा भवेत्तत्र एवं मातामहेष्वपि॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम्।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम्॥
अथवा भोजयेदेकं ब्राह्मणं वेदपारगम्।
श्रुतिशीलादिसम्पन्नमलक्षणविवर्जितम्" ॥ इति।

तथाच शङ्खः—

"द्वौ दैवे प्राङ्मुखौ त्रींश्च पित्र्ये चोदङ्मुखांस्तथा।
भोजयेद्विविधविप्रानेकैकमुत यत्र वा॥
भोजयेदथवाप्येकं ब्राह्मणं पंक्तिपावनम्"। इति।

तथाच वशिष्ठः,—

"द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा।
भोजयेत्-सुसमृद्धोऽपि न प्रसज्जेत विस्तरे॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः।
पञ्चैतान् विस्तरो हन्ति तस्मात्तं परिवर्जयेत्॥

अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् ॥
श्रुतिशीलोपसम्पन्नं सर्वालक्षणवर्जितम्" । इति ।

ननु निरुक्तप्रमाणव्रातस्य पितृश्राद्धीयब्राह्मणभोजनसङ्कोचविषयकतया-न तद्भिन्नोत्सवादिकार्य्यजातप्रतिपादकत्वमितिचेन्न, तद्वचनवृन्दस्योपलक्षणविधया तदितरोत्सवादिकार्य्यसम्बन्धीयव्ययसङ्कोचप्रतिपादकत्वात् । तथैव-सर्व्वत्र शास्त्रीयरीतिरेवं परिदृष्टत्वात् ।

तथा, निम्नलिखितकात्यायनवचनस्य पितृश्राद्धातिरिक्तोत्सवादिकार्य्य-कलापीयव्ययसङ्कोचविषयकत्वात् । तथा यज्ञपार्श्वोद्धृतवचनजातेन कर्म-विशेषे निर्दिष्टब्राह्मणसंख्याकत्वाच्च ।

यथाह कात्यायनः,—

"ब्राह्मणान् भोजयेत्-पश्चादभिरूपान् स्वशक्तितः ।
यजमानस्ततोऽश्नीयादिति कात्यायनोऽब्रवीत्" ॥ इति ।

तथाच यज्ञपार्श्वे,—

"गर्भाधानादिसंस्कारे ब्राह्मणान् भोजयेद्दश ।
आवसथ्ये त्रयोविंश अग्न्याधेये शतात्परम्" ॥ इत्यादि ।

न च केवलं ब्राह्मणभोजनव्ययसङ्कोचप्रतिपादकस्य निरुक्तवचनजातस्य-न भवेत्तद्भोजनव्ययसङ्कोचमन्तराऽन्येषामुत्सवादिकार्य्यनिवहानां व्ययसङ्को-चापादकत्वमिति वाच्यं, विषयान्तरोक्तनियमस्य—

"सूत्रान्तरादनुवर्त्तनीयं सर्व्वत्रेति न्यायेन", तथा, "देहलीदीपक-न्यायेन" चानुक्तनियमानां तदितरविषयाणामापादकत्वात् । सत्यप्येवं-विभिन्नविषयकव्ययसङ्कोचप्रतिपादकवचनान्तरविमर्शस्य दृष्टिविषयत्वाच्च । प्रदर्श्यन्ते तद्वचनान्यधस्तान्निरुक्तविवेचनदृढ़ीकरणाय ।

यथाह यमः,—

"देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा धर्मं समाचरेत्" ॥

इति धर्ममिति पदस्यात्र कार्य्यमित्यर्थात्मकत्वं बोध्यम्।

न तु स्वकपोलकल्पितोयमर्थः। एतदर्थस्य मनुवाक्यव्याख्यातृकुल्लुकभट्ट-सम्मतत्वात्।

समर्थ्यतेऽयमर्थः सवचनव्याख्यानप्रदर्शनेन। यथाह मनुः,—

"कुरुते धर्मसिद्ध्यर्थमि"त्यादि।

तथाच—"कुल्लूकभट्टः धर्मसिद्ध्यर्थं कार्य्यसिद्ध्यर्थमिति"।

तथाच—स एव—

"कार्य्यं सोऽवेक्ष्य शक्तिञ्च देशकालौ च तत्त्वतः।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः"॥ इति।

तथाच स एव—

"तं देशकालं शक्तिञ्च विद्यां चावेक्ष्य तत्त्वतः।
यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्त्तिषु"॥ इति।

ननु सत्यपि प्रचुरविभवे महोत्सवादिकार्य्येषु धनविहीनजनव्ययसङ्कोच-तुलनया विधेयो व्ययसंकोच इति चेन्न, निम्नस्थप्रमाणप्रकाशितपञ्चधाविभाग-विशिष्टस्य स्वस्वविभवस्य भागैकव्ययस्य निर्द्दिष्टतया तथोक्तसकलवाक्येषु प्रदत्तय-थाशक्त्यादिपदस्य चक्षुर्विषयतया तथा वक्ष्यमाणवचनबलेन च स्वस्वविभवानु-सारेणानुष्ठितव्ययस्य शास्त्रानुमोदितत्वात्।

तथा—भागवते बलिं प्रति शुक्रवाक्यं,—

यथा,—

"न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते।
दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः॥
धर्माय यशसेऽर्थाय कामाय स्वजनाय च।
पञ्चधा विभजन् वित्तमिहामुत्र च मोदते"॥ इति।

तथाच याज्ञवल्क्यः,—

"स्वकुटुम्बाविरोधेन देयं दारसुतादृते ।
नान्वये सति सर्व्वस्वं यच्चान्यस्मै प्रतिश्रुतम्" ॥ इति ।

इतः पूर्वमुक्तप्रमाणान्येतद्विवेचनसमर्थकान्यपि ग्रन्थविस्तरभिया नोल्लो-
खितानि पुनरत्र । तथाच—

मनुः—

"वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।
वेशवाग्बुद्धिसारूप्यमाचरन् विचरेदिह" ॥ इति ।

तथा स एव,—

"न सीदेत्-स्नातको विप्रः क्षुधाशक्तः कथञ्चन ।
न जीर्णमलवद्वासा भवेच्च विभवे सति" ॥ इति ।

न च तर्हि निरुक्तोत्सवादिकार्य्यजातेतरेषु कामजक्रोधजव्यसनेषु विधेयं-
किं व्ययबाहुल्यमिति वाच्यं, तदासक्तलोकनिवहस्य शास्त्रकारैर्विगर्हिततया-
सुतरां तदा तद्विषयकव्ययसंकोचानुष्ठानस्य युक्तिसिद्धत्वात्तथा शास्त्रसम्मत-
त्वाच्च ।

युक्तिमेतां क्रोडीकुर्वन्ति निम्नलिखित वचनानि ।

यथाह मनुः,—

"दश कामसमुत्थानि तथाऽष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥
कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्म्माभ्यां क्रोधजेष्वात्मनैव तु ॥
ब्राह्मणादीनामुपलक्षकम् ।
मृगयाक्षो दिवास्वप्नः—परिवादः स्त्रियो मदः ।
तौर्य्यत्रिकं वृथाट्या च - कामजो दशको गणः ॥

"पैशून्यं साहसं द्रोह ईर्षासूयार्थदूषणम्।
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥
पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम्।
एतत्कष्टतमं विद्याच्चतुष्के कामजे गणे॥
दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे।
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा॥
"व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते।
व्यसन्यधोऽधो व्रजति स्वर्य्यात्यव्यसनी मृतः" ॥ इति।

निरुक्तप्रमाणद्वन्द्वपर्यालोचनतोऽवबुध्यते विधेयः सकलविषयकव्ययसङ्कोचो-विपदि तथा सम्भाव्यविपच्छङ्कयाऽनापदि चेति विदुषां सुसिद्धान्तः।

इति व्ययसंकोचविवेचनसमापनम्।

---

## अथ क्रमप्राप्तभक्ष्याभक्ष्यविचारः।

पूर्वतो धर्मशास्त्रेषु भक्ष्याभक्ष्यद्रव्यजातस्य सत्यपि सम्यक्विवेचितत्वे-सहेतुकतद्विवेचनस्य नावलोक्यते लेशः। तथा; पुरा सार्कं देशान्तरै-र्भारतस्य सम्पर्काभावात् तत्तत्स्थानीयकतिपयनूतनद्रव्याणां भक्ष्याभक्ष्यत्व-निर्धारणस्य कस्मिन्नपि भारतीयधर्मशास्त्रे न दृश्यते समुल्लेखः साक्षात्-सम्बन्धेन। तथेदानीं भारतीय-हिन्दुचक्रवर्त्तिनोऽविद्यमानतया वैदिकधर्म-भित्तिभङ्गभीतिश्चेतस्यजागरूकत्वात्तथा दुर्भिक्षादि-नानाविधविपत्सु निप-तितत्वाच्च केचन भारतीया रसनेन्द्रियलालसया केचन दारिद्र्यदोषाभिभूत-तया चान्विता स्वाधीनतामविधाय भक्ष्याभक्ष्यद्रव्यविवेचनञ्च दुष्टमप्यापातमधुरं-स्वदेशीयं वैदेशिकञ्च भक्षयन्ति द्रव्यजातं सर्वत्र सुलभम्। यतः सन्तो-विविधरोगाक्रान्ताः पतन्ति मृत्युमुखे प्रायशो बहवः। तथाप्येतु भारतेतर-

देशजालमुपगम्य, सत्यपि सुयोगे धर्म्मशास्त्रविनिन्दितमांसादीनामशनेन-प्रायशो गुरुतरव्याधिनिवहेनाभिभूतास्त्यजन्ति प्राणान् सततम् ।

ननु द्रव्याणां सर्वेषां प्राणिजातप्राणधारणसाधारणोपयोगित्वेऽप्येतेषा-मभ्यन्तरे कस्याप्यभक्ष्यत्वं कस्य वा भक्ष्यत्वमिति विवेचनस्य निष्प्रयोजन-कत्वमिति चेन्न । गदात्मकविपत्तेः शरीरस्यावनाय मन्वादिभिस्तादृक्-विवेकस्य पूर्व्वतः प्रतिपादितत्वात् । कक्षीकरोति विवेचनमेतद् यथा—मनुः,—

"एवं यथोक्तं विप्राणां स्वधर्ममनुतिष्ठताम् ।
कथं मृत्युः प्रभवति वेदशास्त्रविदां प्रभो ! ॥
स तानुवाच धर्म्मात्मा महर्षीन् मानवो भृगुः ।
श्रूयतां येन दोषेण मृत्युर्विप्राञ्जिघांसति" ॥ इति ।

द्विजातीनां सर्व्वेषामुपलक्षकमत्र विप्रानितिपदम् । मृत्युरत्राकालिक-मृत्युर्बोद्धव्यः ।

शास्त्रज्ञानराहित्येन हिताहितद्रव्याशनविवेचनपूर्व्वकप्रचलनासम्भवान् मृत्यु-र्भवेदवश्यमित्यनभ्यासेन वेदानामिति निर्द्देशः ।

नियमनमन्तराऽयथाप्रचलनस्यास्वास्थ्याधायकत्वादृभवेत्प्राणात्ययोऽवश्यमित्या-चारस्य च वर्ज्जनादित्युल्लेखः ।

विनाऽपि परिश्रममलसादेः पाकासम्भवात् तथा जीवनयात्राप्रचलनोप-योगिद्रव्योपार्ज्जनाभावाच्च सम्भवेज्जीवनविसर्ज्जनमित्यालस्यादितिपदोपादानम् ।

अकाशनीयाशनस्यादन्नदोषादितिपदस्य विवृतिः ।

तथा स्वास्थ्यमन्तरा दीर्घायुष्कासम्भवाज्जगतो नानाविधहितजातानुष्ठानं तथा स्वस्य पारलौकिकशुभसम्पादकेश्वरोपासनादिमङ्गलाचरणञ्च न भवे-ल्लोकानां ; अतः स्वास्थ्यद्वारेण यथा सम्भवेद्दीर्घजीवनं ; तदर्थमनुष्ठितं नियम-जातं पूज्यपादैर्महर्षिभिरिति निष्कर्षार्थः, स्थूलतः नातो निष्प्रयोजनक-मेतदित्यभिप्रायः ।

अतएवैतन्नियमोपयोगितया सम्यक्विवेचनमत्र यन्मे ऽस्मिन् वैद्यमतमप्य-स्मिति विभाव्य प्रकाश्यते तदन्नैव । यथा,—

भक्ष्याणि चाभक्ष्याणि च भक्ष्याभक्ष्याणि; तेषां समाहारः भक्ष्याभक्ष्यं तस्य-विचारः, द्रव्याणां खाद्याखाद्यविवेक इत्यर्थः। ननु—कानि भक्ष्यद्रव्याणि-कानि च द्रव्याण्यखाद्यानीत्याशङ्कायामुच्यतेऽधस्ताद्धर्मशास्त्रमतं यथायथम्। किन्तु क्रममनुसृत्य भक्ष्यद्रव्यस्यादितः सत्यप्युचिते विवेचनानुष्ठाने धर्मशास्त्र-कारैः प्रथमतोऽभक्ष्यद्रव्यजातस्य कृतविवेचनत्वात् तदनुक्रममपहाय विवि-च्यन्तेऽत्राभक्ष्याणि शास्त्रीयमर्य्यादयाऽऽदितो दिङ्मात्रेण।

यथाह मनुरभक्ष्यसाधारण्येन ;—

"लशुनं गृञ्जनञ्चैव पलाण्डुं कवकानि च।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च॥
लोहितान् वृक्षनिर्य्यासान् व्रश्चनप्रभवांस्तथा।
शेलुं गव्यं च पेयूषं प्रयत्नेन विवर्ज्जयेत्॥
अनुपाकृतमांसानि देवान्नानि हवींषि च।
अनिर्द्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा॥
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः।
आरण्यानाञ्च सर्व्वेषां मृगाणां महिषं विना॥
स्त्रीक्षीरञ्चैव वर्ज्याणि सर्वशुक्तानि चैव हि।
दधिभक्ष्यञ्च शुक्तेषु सर्व्वञ्च दधिसम्भवम्॥
यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः।
क्रव्यादान् शकुनीन् सर्व्वांस्तथा ग्रामनिवासिनः॥
अनिर्द्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्ज्जयेत्।
कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम्॥
सारसं रज्जुवालञ्च दात्यूहं शुकसारिके।
प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्॥

निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेव च ।
बकाश्चैव बलाकञ्च काकोलं खञ्जरीटकम् ॥
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्व्वशः ।
यो यस्य मांसमश्नाति स तन्मांसाद उच्यते ॥
मत्स्यादः सर्व्वमांसादस्तस्मान्मत्स्यान् विवर्जयेत्" ॥इति॥

प्रमाणानामेतेषां सुबोधनार्थमुपस्थाप्यतेऽत्र कुल्लूकभट्टविवृतिः,—

"वेदाभ्यासादेरुक्तत्वादनुक्तमन्नदोषमाह लशुनमिति ।

लशुनगृञ्जनपलाण्ड्वाख्यानि त्रीणि स्थूलकन्दशाकानि अर्थात् लशुनरक्त-मूलकपलाण्ड्वभिधानि ; तवकं छत्राकं अमेध्यप्रभवाणि विष्ठादिजातानि-तण्डुलीयादीनि विड्जातानीति याज्ञवल्क्यवचनात् एतानि द्विजातीनाम-भक्ष्याणि । द्विजातिग्रहणं शूद्रपर्य्युदासार्थम् । लोहितानीति ;—

लोहितवर्णान् वृक्षनिर्य्यासान् वृक्षान्निर्गतरसान् कठिनतां यातान् । व्रश्चनं छेदनं तत्प्रभवान् अलोहितानपि । तथाच ; तैत्तिरीयश्रुतिः,—

"अथोद खलु य एव लोहितो यो वा व्रश्चनान्निर्य्येषति तस्य नास्य काम-मन्यस्येति" । शेलुं बहुवारकफलं, गोभवं पेयूषं नवप्रसूताया गोः क्षीरमग्नि-संयोगात् कठिनं भवति एतान् यत्नतस्त्यजेत् । अनिर्दशाया गोः क्षीरमित्यने-नैव पेयूषस्यापि निषेधसिद्धावधिकदोषत्वात् प्रायश्चित्तगौरवज्ञापनार्थं पृथक्-निर्देशः । अत एव यत्नत इत्युक्तम् । वृथाकृसरेति । देवताद्युद्देशेन-आत्मार्थं यत्पच्यते तत्र कृसरस्तिलैन सह सिद्ध ओदनः ।

तथाच छन्दोगपरिशिष्टम् ।

"तिलतण्डुलसम्पक्वः कृसरः सोऽभिधीयते" । इति ।

संयवो घृतक्षीरगुडगोधूमचूर्णसिद्धः तत्करिकेति प्रसिद्धः । क्षीरतण्डुल-मिश्रः पायसः । अपूपः पिष्टकः । एतान् वृथापक्वान् विवर्ज्जयेत् । पशुयागादौ मन्त्रवत्त्वेन पशोः अर्म्भमुपाकरणं तद्रहितः पशुरनुपाकृतः-तस्य मांसानि देवान्नानि नैवेद्यार्थमन्नानि प्राङ्निवेदनात् हवींषि च पुरोडा-

ग्रादीनि होमान्याक्वर्ज्जयेत्। अनुपाकृतमांसानि इत्येतत् विशेषनिषेध-दर्शनात् अनर्चितं वृथामांसं इति सामान्यनिषेधो गोबलीवर्दन्यायेनानुपाकृत-मांसेतरश्राद्धाद्यनुद्देश्यमांसभक्षणे पर्य्यवस्यति। अनिर्दशाया इति प्रसूताया-अनिर्दशाया गोर्दुग्धम्। गोरिति पेयक्षीरपशूपलक्षणार्थम्। तेनाजामहि-ष्योरपि दशाहमध्ये प्रतिषेधः।

तथाच, यमः,—

"अनिर्द्दशाहं गोः क्षीरमाजं माहिषमेव च"। इति।

तथोष्ट्रभवम्। अश्वाद्येकखुरसम्बन्धि मेषभवम्। सन्धीनी या ऋतुमती-वृषमिच्छति तस्याः क्षीरम्। तथाच हारीतः,—

"सन्धीनी वृषस्यन्ती, तस्याः पयो न पिबेत् ऋतुमत् तद्भवति"। विवत्सायाः मृतवत्सायाः असन्निहितवत्सायाश्च क्षीरं वर्ज्जयेत्। धेन्वधिकरण-न्यायेन वत्सग्रहणादेव गवि लब्धायां पुनर्गोग्रहणं गोरेव न तु अजामहिष्योरिति ज्ञापनार्थम्। आरण्यानां चेति मृगशब्दोऽत्र महिषपर्य्युदासात्पशुमात्रपरः। माहिषं क्षीरं वर्ज्जयित्वा सर्व्वेषामरण्यप्रभवपशूनां हस्त्यादीनां क्षीरं स्त्रीक्षीरं-च सर्व्वाणि शुक्तानि वर्ज्जनीयानि स्वभावतो मधुरादिरसानि यानि कालवशेन-उदकादीना चाम्लीभवन्ति तानि शुक्तशब्दवाच्यानि शुक्तं पर्य्युषितं चैवेति-चतुर्थे कृतेऽपि शुक्तप्रतिषेधे दध्यादिप्रतिप्रसवार्थं पुनरिहोच्यते।

दधिभक्ष्यं चेति शुक्तेषु। मध्ये दधिभक्ष्यं दधिसम्भवं च सर्व्वं तक्रादि-यानि तु पुष्पमूलफलैरुदकेन सन्धीयन्ते तानि च भक्षणीयानि। शुभैरिति-विशेषणोपादानात् मोहादिविकारकारिभिः कृतसन्धानस्य प्रतिषेधः॥

तथाच बृहस्पतिः,—

"कन्दमूलफलैः पुष्पैः शस्तैर्युक्तं तु वस्तु यत्।
अविकारि भवेद्भक्ष्यमभक्ष्यं तद्विकारकृत्"॥

क्रव्यादानिति आमं मांसं ये भक्षयन्ति ते क्रव्यादास्तान् सर्वान् गृध्रादीन्-पक्षिणो वर्ज्जयेत्। तथा ग्रामनिवासिनश्च पक्षिणः पारावतादीन्। तथा श्रुतौ-केचिदेकशफा भक्ष्यत्वेन निर्द्दिष्टाः। तथाचोष्ट्रं वाडवमालभेत तस्य च मांस-

मश्नीयादिति। केचिच्च निर्दिष्टा रासभादय: तेषां मांसं वर्ज्जयेत्। येऽपि-यज्ञाङ्गत्वेन विहितास्तेषामपि यज्ञ एव मांसभक्षणं न सर्वदा। टिट्टिभाख्यञ्च-पक्षिणं वर्ज्जयेत्। कलविङ्कमिति। कलविङ्कं चटकं तस्य तस्य ग्रामारण्योभय-वासित्वात् न ग्रामवासिन एव निषेध:, इत्यारण्यस्याप्यभक्ष्यतार्थं जातिशब्देन निषेध: प्लवाख्यं पक्षिणं तथा हंसचक्रवाकग्रामकुक्कुटसारसरज्जुवालदात्यूहशुक-सारसाख्यान् पक्षिणो वर्ज्जयेत्। वक्ष्यमाणजालपादनिषेधेणैव हंसचक्रवाक-योरपि निषेधसिद्धौ पृथङ्निषेधोऽन्येषामापदि जालपादानां विकल्पार्थ:। स च व्यवस्थितो विज्ञेय:,—आपदि भक्ष्या न त्वनापदि। इच्छाविकल्पस्य-रागत एव प्राप्ते:। ग्रामकुक्कुटे तु ग्रामग्रहणमारण्यकुक्कुटाभ्यनुज्ञानार्थम्। न त्वेतद्व्यतिरिक्तग्रामवासिविकल्पार्थं स्वपदानुगतप्रयोजनसम्भवे सति वाक्या-न्तरगत-विशेषावधारण-परत्वस्यान्याय्यत्वात्। प्रत्युदानिति,—प्रतुद्य चञ्चा-ये भक्षयन्ति तान् दार्वाघाटादीन् जालपादानिति, जालाकारपादान्-शरारिप्रभृतीन् कोयष्ट्याख्यं पक्षिणं न च विष्किरान् नखैर्विकीर्य्य ये भक्षयन्ति-तानभ्यनुज्ञातारण्यकुक्कुटादिव्यतिरिक्तान् श्येनादीन् तथा निमज्ज्य ये-मत्स्यान् खादन्ति तान् मद्गुरप्रभृतीन् सूनामारणस्थानं तत्र स्थितं यन्मांसं-भक्ष्यमपि वल्लूरं शुष्कं मांसं एतानि वर्ज्जयेत्। वकं चैवेति वकवलाका द्रोण-काकखञ्जनान् तथा मत्स्यादीन् पक्षिव्यतिरिक्तानपि नक्रादीन् विड्वराहांश्च-विड्ढिति विशेषणमारण्यशूकराभ्यनुज्ञानार्थं मत्स्यांश्च सर्वान् वर्ज्जयेत्। मत्स्यभक्षणनिन्दामाह;—यो यस्येति यो यदीयं मांसं खादति स तन्मांसाद-एव परं व्यपदिश्यते यथा मार्ज्जारो मूषिकाद:। मत्स्याद: सर्वमांस-भक्षकत्वेन व्यपदेष्टुं योग्य: तस्मान्मत्स्यान् न खादेत् इत्यादि"।

तथाच याज्ञवल्क्य:,—

"अनर्चितं वृथामांसं केशकीटसमन्वितम्।
शुक्तं पर्य्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम्॥
उदक्या स्पृष्टसंघुष्टं पर्य्यायान्नं च वर्ज्जयेत्।
गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामत:॥

सन्धिन्यनिर्द्दशावत्सागोपयः परिवर्ज्जयेत् ।
औष्ट्रमेकशफं स्त्रैणमारण्यकमथाविकम् ॥
देवतार्थं हविः शिग्रुं लोहितान् व्रश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि कवकानि च ॥
क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान् ।
सारसैकशफान् हंसान् सर्व्वांश्च ग्रामवासिनः ॥
कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ।
वृथाकृसरसंयावपायसाऽपूपशष्कुलीः ॥
कलविङ्कं सकाकोलं कुररं रज्जुदालकम् ।
जालपादान् खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥
चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।
मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥
पलाण्डुं विड्वराहञ्च छत्राकं ग्रामकुक्कुटम् ।
लशुनं गृञ्जनञ्चैव जग्ध्वा चान्द्रायणं चरेत्" ॥ इत्यादि ।

तथाचाह संवर्त्तः,—

"गौड़ी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा ।
यथैवैका यथा सर्व्वा न पातव्या द्विजैः सदा" ॥

मन्वादिभिरभक्ष्यद्रव्यजाते सति स्थूलतः प्रदर्शितेऽपि गादाधरीयाचारसारे-द्रव्याणां एतेषां विभागशो विवेचिततया तद्विभागः प्रदर्श्यतेऽत्र यथाक्रमं सुख-बोधार्थम् । यथा गादाधरीयाचारसारे,—

विश्वामित्रः—

जातिक्रियास्वभावदुष्टताऽसत्संसर्गदुष्टं सुहृल्लेख्यं च न भक्षयेत् । एत-दुपलक्षणं अभक्ष्याणामष्टविधत्वात् ।

तथाच,—

"जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम् ।
संसर्गैरसदुष्टं च सुहृल्लेख्यं स्वभावतः" ॥

इति भविष्यपुराणे सुहृल्लेख्यमिति भावदुष्टमुच्यते । चिकित्सा तु हृदये-त्यादि वक्ष्यमाणनिरुक्तेः वाग्दुष्टमपि सुहृल्लेख्यमिति वच्यते । तत्रादौ-जातिदुष्टानि भविष्ये,—

"लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।
वार्त्ताकुं नालिकालावुमुपेयाज्जातिदूषितम्" ॥

गृञ्जनं लशुनसदृशः कन्दविशेषः उत्तरापथे प्रसिद्ध इति लक्ष्मीधरः; गृञ्जने गजरसस्तथेति निरुक्तपाठात् पश्चिमप्रसिद्धः पलाण्डुविशेष इत्यन्ये न तु-शक्राशनम् ।

तत्र पर्य्यायाभावात्; तत्तु मादकत्वादभक्ष्यमिति केचित्; गृञ्जनपलाण्डू-लशुनप्रभेदौ इति केचित् । कवकं चैत्यवृक्षस्थितं पिण्डोपमं कुमुदकलिका-कृति छत्राकसदृशं शुक्लं शिथिलावयवम् ।

तथाच ब्राह्मे,—

"मधुकैटभवृत्राणां त्रिशीर्षस्यासुरस्य च ।
विष्णुना हन्यमानानां यन्मेदः पतितं भुवि ॥
पिण्डोपमं तु खुखुण्डं कवकं चैत्यसम्भवम् ।
छत्राकं छत्रसदृशं दैत्यदेहसमुद्भवम्" ॥

अत्र वार्त्ताकुपदेन श्वेतवार्त्ताकुः ।

"खुखुण्डं श्वेतवार्त्ताकुं कुम्भाण्डं च न भक्षयेत्" ।

इति देवलवचनात् । तथा, वार्त्ताकुकुम्भीत्यादि यमवचनेऽपि बोध्यम् । यत्र वार्त्ताकुशब्दोऽस्ति तत्त्याज्यं हरिमिच्छतेत्यादावपि बोध्यम् । समाचारोऽप्येवमेव । नालिका कलम्बिका; कुम्भाण्डो दाडिमसदृशः फल

विशेषः ; कुष्माण्डनिषेधे चणकफलं निषिद्धमिति स्मृतिरत्नमालायां-व्याख्यातम् ।

अभक्ष्यप्रकरणे यच्चान्यत्परिचक्षते इत्यापस्तम्बवचनात् । विशेषतोऽनिषिद्धमपि शिष्टविगीतं न भक्ष्यं ; तथा चणकफलमभक्ष्यमिति निबन्धकृतः ।

यमः,—

"भूमिजं वृक्षजञ्चापि छत्राकं भक्षयन्ति ये ।
ब्रह्मघ्नांस्तान् विजानीयाद्ब्रह्मवादिषु गर्हितान्" ॥

इति द्वयोरपि छत्राकयोर्निषेधः ।

ब्राह्मे,—

"राजमाषाः स्थूलमुद्गास्तथा वत्सकवासकौ ।
मसूराः शतपुष्पाश्च कुसुम्भं श्रीनिकेतनम् ॥
शस्यान्येतान्यभक्ष्याणि न च देयानि कस्यचित्" ।

तथा,—

"भुक्त्वा तु क्षारलवणं त्रिरात्रं तु व्रतं चरेत्" ।

राजमाषाः पश्चिमदेशप्रसिद्धाः स्थूलमुद्गाः, वासकः प्रसिद्धः । शतपुष्पाः-सोंप इति प्रसिद्धः । क्षारलवणमुषरमृत्तिकाप्रभवलवणम् ।

भविष्ये,—

"अङ्गुल्या दन्तकाष्ठं च प्रत्यक्षलवणं च यत् ।
मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम्" ॥

प्रत्यक्षलवणं ; अन्नव्यञ्जनादिसंस्कारप्रवेशमन्तरेण साक्षादेव केवलभक्षमाणलवणं कुष्ठरोगजनकमिति सुश्रुतः । प्रचेताः,—सूर्य्योदयादर्शनेऽश्राद्धान्नमभोजनाच्छुद्धिः ; विज्ञानेश्वरधृता स्मृतिः ।

"कुष्माण्डकोविदुवृन्ताककोविदारांश्च वर्जयेत् ।
तथाऽकालप्ररूढ़ानि पुष्पाणि च फलानि च ॥
विकारवच्च यत्-किंचित्-तत्प्रयत्नेन वर्जयेत्" ।

इति, इक्ष्वाकौ वार्त्ताकिसदृशः फलविशेषो हरितः। पाके रक्त इति,—लक्ष्मीधरः। केतु केतुकम्।

मनुः,—

"अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च।
लोहितान् वृक्षनिर्य्यासान् व्रश्चनप्रभवांस्तथा।
शेलुं गव्यं च पेयूषं प्रयत्नेन विवर्जयेत्"।

अमेध्यप्रभवाणि विष्ठाजातानि तण्डुलीयकादीनि। यद्वा "बीजानि-गुदमार्गनिर्गतानि विष्ठामध्यगतानि यानि वृक्षं जनयन्ति तानि। तत्र-सेव विष्ठाक्रान्तभूमिजानामपि आम्रवृक्षादीनां फलपुष्पे ग्राह्ये।

तथा बौधायनः,—

"अमेध्येषु च ये जाता वृक्षाः पुष्पफलोपगाः।
तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च"॥

पुष्पफलोपगा इति विशेषणाद्बहुपुष्पफला आम्रादयो ग्राह्या न तु क्षुद्र-वार्त्ताक्यादय इति मेधातिथिः। तथा,—तक्षिधलतावृक्षादीनां पुष्पफले-ग्राह्ये; निर्य्यासा वृक्षनिर्गतकठिनरसास्ते चेल्लोहितवर्णास्तदा न भक्ष्याः यथा-नारिकेलवृक्षादिषु, तेन हिङ्गुकर्पूरादिषु न दोष इति लक्ष्मीधरः। व्रश्चनं-छेदनं तत्प्रभवास्तु निर्य्यासा लोहिता अभक्ष्याः पुनर्निर्देशात्। "अथो खलु-यो लोहितो यथा व्रश्चनान्निर्य्यसति तस्य नाशं काममन्यस्यति" तैत्तिरीय श्रुतेश्च।

शेलुः श्लेष्मातकः बहु आलु इति प्रसिद्धः। दुग्धप्रकरणे, हारीतः,—मासेन पेयूषं भवतीति। तथाच,—नवप्रसूताया गोः क्षीरं मासपर्य्यन्तं-अभक्ष्यं। अनिर्दशाया गोः क्षीरमिति मनुवचनं तु अतऽन्यापदविषयमिति-बोध्यम्। तथा यदग्निसंयोगात् कठिनं भवति तच्चेद्गव्यं तदाऽभक्ष्यम्।

आपस्तम्बः,—

"भक्षयेद्-यदि नीलं तु प्रमादाद्-ब्राह्मणः सकृत् ।
चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः" ॥

तथा,—कीलालोषधीनां च कोलालः सुरा । तदर्थस्थापिता भक्ष्या-भक्ष्योषधयोऽभक्ष्याः ।

गौतमः,—उद्धृतस्नेहविलयपिण्याकमथितप्रभृतीनि नाद्यात् ; विलयो-घृतम् । षट्त्रिंशन्मते ;—

"शणपुष्पं शाल्मलिं च करनिर्मथितं दधि ।
वर्हिर्वेदिपुरोडाशं जग्ध्वा नाद्यादहर्निशम्" ॥

उशनाः,—

"कुसुम्भं नालिकाशाकं वार्त्ताकुं पोतिकं तथा ।
भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः" ॥

पोतिकं पोइ इति प्रसिद्धम् । वार्त्ताकुः श्वेतवार्त्ताकुरक्त एव । आप-स्तम्बेन नवपल्लवस्य, पैठीनसिना स्मार्त्तकनाम्नो वृक्षस्य अभक्ष्यत्वमुक्तम् ।

यमः,—

"भूस्तृणं शिग्रुकं चैव खुखुण्डं कवकं तथा ।
एतेषां भक्षणं कृत्वा प्राजापत्यं समाचरेत्" ॥

भूस्तृणं गन्धतृणं ; अतएव शिग्रुभक्षणे मन्त्रद्विगानं ; शङ्खलिखिताभ्यां-करञ्जकुम्भीभक्षणं घनच्छत्राकभक्षणं च निषिद्धम् । कुम्भी विल्वफलसदृशं-फलमरण्ये प्रसिद्धम् । घनच्छत्राको मेघसमयोत्पन्नः कवकः ।

देवलः,—

"न वीजान्युपभुञ्जीत रोगोत्पत्तिभृते द्विजः ।
फलान्येषामनन्तानि वीजानां हि विनाशयेत्" ॥

वीजानि कुष्माण्डवीजानीति लक्ष्मीधरः । तस्याशयमाशयः यद्यपि-

मुद्गादीनि धान्यादीन्यप्यङ्कुरजननयोग्यानि तदा न भक्ष्याणि। कोमल-तदयोग्यानि चेत् भक्ष्याणि; मुद्गधान्यादीन्यपि अङ्कुरजननयोग्यानि तदर्थं पृथक्कृत्य रचितानि न भक्ष्याणीत्यन्ये।

ब्राह्मे;—

"पिप्पलीनिकरञ्जानि कुम्भीराणि वटानि च।
मातुलाङ्गानि प्लक्षाणि पनसोदुम्बराणि च॥
शिग्रुशोभाञ्जनं चैव कोविदाराणि चैव हि।
अथ तिक्तकपित्थानि शेलुश्लेष्मातकानि च
विभीतकानि च तथा न भक्ष्याणि फलानि तु॥
अलक्ष्मीरेषु वृक्षेषु वह्वा दुर्वासमा यतः।
वनवासव्रतं कुर्य्याद्दिनं तत्प्राशनाद्-द्विजः॥
लताभिर्वेष्टिता ये च गुल्मरोगहताश्च ये।
भूतप्रेतपिशाचैश्च पक्षिभिर्ये च संश्रिताः"॥

शिग्रुशोभाञ्जनयोरेव भेदः। तत्र पनसस्य भक्षणसमाचारात् विष्णुदेय-त्वाच्च पनसाम्रश्लेष्मातकोति हविष्यप्रकरणोक्तत्वाच्च पनसनिषेधो भूप्रोतफलक-दाक्षिणात्यप्रसिद्धपनसजातिपर एव इति निबन्धकृतः। मातुलङ्गोदुम्बर-प्लक्षफलानां विष्णुदेयत्वादभक्ष्यत्वेऽप्यलक्ष्मीकरत्वाद्-वर्ज्जनमुचितम्।

यथा, दधि सक्तुफलादीनां भक्ष्याणामपि रात्रावलक्ष्मीकरत्वाद्-वर्ज्जन-मुचितम्।

तथाच विष्णुः,—न दिवाधानाः, न रात्रौ तिलसम्बन्धः न दधिसक्तुको-विदारवटपिप्पलशाकम्।

देवलः,—

"दिवापि दधिधानासु रात्रौ च दधि-सक्तुषु।
श्लेष्मातके तथाऽलक्ष्मीर्नित्यमेव कृतालया"॥

ब्राह्मे,—

"अपि प्रयाणसमये गावो न प्राशयेद्दधि ।

मधुपर्कप्रदानं तु वर्जयित्वा तु कामतः" ॥ इति ।

अथ दुग्धानि ; मनुः,—

"अनिर्द्दशाया गोः क्षीरमौष्ट्रमैकशफन्तथा ।

आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥

आरण्यानां च सर्व्वेषां मृगाणां महिषीं विना ।

स्त्रीक्षीरं चैव वर्ज्याणि सर्व्वशुक्तानि चैव हि" ॥

अनिर्द्दशायाः प्रसवदिनादारभ्य दशदिनानपक्रान्तायाः । इदं चात्याः पद्—विषयमिति प्रागुक्तं । मासात्परं दोहनं सर्व्वगितरापुराक्तं । तत्रापि-विशेषमाह—हारीतः—

"द्वौ मासौ पालयेद्-वत्सं तृतीये-द्विस्तनं दुहेत् ।

चतुर्थे त्रिस्तनं दुह्यात् यथान्यायं यथाबलं" ॥

एकशफा अश्वादयः ; आविकं मेषक्षीरं ; सन्धिनी या ऋतुमती वृष-मिच्छति । विवत्सा वत्सरहिता, आरण्यमृगाः रुरुपृषतादयः ; गोश्च क्षीर-मनिर्द्दशायाः सूतके अजामहिष्याश्च स्यन्दिनीयमसूसन्धिनीनां च । स्यन्दिनी-वत्सं विना प्रसूता ; यमसूर्य्यमलापत्या ; अजामहिष्योः सूतकं दशदिन-पर्य्यन्तं । तथा च ;—

यमः,—

"अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।

दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकं ॥

क्षीरनिषेधं प्रकृत्य बोधायनः,—

विवत्सा अन्यवत्सेन दुग्धा ।

हारीतः,—न मृतवत्सायाः शोकाभिभूतत्वात् । न निर्णिक्ताया असत्वात् । निर्णिक्ताया निःशेषदुग्धायाः, वत्सं प्रत्यवशेषस्य असत्वादित्यर्थः ।

आपस्तम्बः, अपेयं तथोदकं पयः ।

निषेधप्रकरणे विष्णुः,—अमेध्यभुजश्चेति । तथाच विष्ठाभुजी गोः-क्षीरमपेयम् ।

"क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ।
सप्तरात्रं व्रतं कुर्य्याद्-यदेतत्परिकीर्त्तितम्" ॥

ब्राह्मे,—

"घृतान्नमण्डं घृतात्-फेनं पेयूषमथवापि गोः ।
सगुड़ं मरिचाक्तं च तथा पर्य्युषितं पयः ॥

सगुड़ं मरिचाक्तं च पर्य्युषितं पयोऽप्यभक्ष्यमित्यर्थः ।

भविष्ये,—

"कपिलायाः पिबेच्छूद्रो नरके स विपच्यते ।
हुतशेषं पिबन् विप्रो विप्रः स्यादन्यथा पशुः" ॥

विज्ञानेश्वरीये,—

"क्षत्रियस्यापि वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः ।
यः पिबेत्-कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यभाक्" ।

अथ मांसानि ।

तत्र पक्षिप्रभृतयः,—

मनुः,—

"क्रव्यादः शकुनीन् सर्व्वान् तथा ग्रामनिवासिनः ।
अनिर्द्दिष्टांश्चैकशफान् टिट्टिभञ्च विवर्जयेत् ॥
कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम् ।
सारसं रज्जुदालञ्च दात्यूहं शुकसारिके ॥
प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान् ।
निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेव च ॥

बकं चैव बलाकं च काकोलं खञ्जरीटकम्।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः" ॥

क्रव्यादो मांसाशिनो गृध्रादीन्, जालपादांश्च हंसादीन्; रज्जुदालं काष्ठकुट्टकः; दात्यूहो डाहुक इति प्रसिद्धः। प्रतुदा ये चञ्चा प्रतुद्य प्रतुद्य भक्षयन्ति। जालपादा चक्रादयः; नखविष्किराः; नखैर्विकीर्य ये भक्षयन्ति; निमज्य मत्स्यादा मद्गुरप्रभृतयः; सौनं सूनास्थानभवं मांसं;- वल्लूरं शुष्कमांसं, काकोलो द्रोणकाकः; मत्स्यादा नक्रादयः; सर्वशः- सर्वप्रकारेण।

देवलः,—

"बलाकहंसदात्यूहभृङ्गराजकचित्रकाः।
उलूककुररिश्येनगृध्रकुक्कुटवायसाः ॥
चकोरः कोकिलो रक्तकुल्विसश्याणमुद्गवौ।
काङ्कसारवशौभासः शतपत्रप्लवङ्गमाः।
पारावतकपोतौ च अभक्ष्याः पक्षिणः स्मृताः"।

भृङ्गराजो धूम्याटः, धमच्छाया इति प्रसिद्धः। चित्रकः चित्रकपोतः; कङ्को लोहितपक्षः। भक्ष्या इत्यनुवृत्तौ बौधायनः;—

पक्षिण स्तित्तिरिकपोतकपिञ्जललावर्त्तणमयूरवारणवर्ज्जा: पक्षविष्किराः।

शङ्खः,—

"तित्तिरं च मयूरं च लावकं च कपिञ्जलम्।
वार्ध्रीणं संवर्त्तकं चैव भक्ष्याणाह यमः सदा" ॥

एवमुक्तानामपि पक्षिणां ब्राह्मणा मांसं न भक्षयन्त्येव।

अथ मत्स्याः,—

वशिष्ठः;—मत्स्ये तु विवदन्ते; चाम्यज्ञूकरो च; च्छेयामसकूरयो- र्मृगीणामपि विवादासत्वात् भक्ष्याभक्ष्याचारः।

शाङ्खे,—

"प्रतीक्ष मार्गमाणश्च न मांसं शाश्वयेद्विजः;

पृष्ठमांसं गर्भमयं शुष्कमांसमथापि वा ॥

भूमेरन्तरितं कृत्वा मृद्भिश्चाच्छादितं च यत् ।

पक्वमांसमृजं यत्तु प्रयत्नात्तन्न भक्षयेत्" ॥

एतेन भौमोष्मपक्वद्रव्यमात्रमभक्ष्यमिति निबन्धकृतः ।

मांसे तु विशेषः ;—

भूम्यामन्तर्गतमिति पठित्वा भूम्यां गर्भे पक्वमिति व्याख्यानात् । गर्त्ते-धूमपक्वमपि कर्जपपक्वमुक्तं, आहिताग्नेरस्य पृथक् निषेधः प्रायश्चित्तविशेषार्थ इति कर्काचार्यः ।

मनुः,—

"न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान् ।

भक्ष्येष्वपि समुद्दिष्टान् सर्व्वान् पञ्चनखांस्तथा" ॥

एकचरा एकाकिनः प्रायेण स्वभावतोये चरन्ति सर्पादयः । अभक्ष्य-प्रकरणे आपस्तम्बः,—पञ्चनखानां गोधाकच्छपश्वाविच्छल्यकखड्गशशपूतिश-वर्ज्जम् । शल्यको भिक्ष इति प्रसिद्धः । पूतिशो हिमवति प्रसिद्ध इति-कपर्दिभाष्यम् ।

मनुः,—

"श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा ।

भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥

एकतोदत—एकदन्तान् ।

महाभारते,—

चामं गव्यञ्च यन्मांसं मायूरञ्च विवर्जयेत् ।

[illegible]—आमारण्यानां पशूनामश्नन्ति ; अथाऽन्नमेषमहिषवहरिणखड्गव-वराहमतरव्यवहुमवारण्यनिवासिनश्च वराहांस्तथा श्रावकाजकमेधाजीधानूकी-

अण्डजानामभक्ष्यत्वं मनुराह,—

"अण्डजाः पक्षिणः सर्वे नक्राः सर्पाः सकच्छपाः ।
यानि चैवं प्रकाराणि स्थलजान्यौदकानि च" ॥ इति ।

अथ प्रसङ्गपतितमांसभक्षणवर्जनविधिर्विचार्य्यतेऽधस्तात् ।

मनुः,—

"एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यविशेषतः ।
मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्ज्जने ॥
प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया ।
यथाविधि नियुक्तस्तु प्राणानामेव चात्यये ॥
प्राणस्यान्नमिदं सर्व्वं प्रजापतिरकल्पयत् ।
जङ्गमं स्थावरं चैव सर्व्वं प्राणस्य भोजनम् ॥
चराणामन्नमचरा दंष्ट्रिणां चाप्यदंष्ट्रिणः ।
अहस्ताश्च सहस्तानां शूराणाञ्चैव भीरवः ॥
नात्ता दुष्यत्यदन्नाद्यान् प्राणिनोऽहन्यहन्यपि ।
धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च ॥
यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः ।
अतोऽन्यथाप्रवृत्तिस्तु राक्षसो विधिरुच्यते ॥
क्रीत्वा स्वयम्वाऽप्युत्पाद्य परोपहृतमेव वा ।
देवान् पितॄंश्चार्चयित्वा खादन् मांसं न दुष्यति" ॥

एतदुक्तं द्विजातीनां इति पूर्व्वोक्तभक्ष्याभक्ष्ययोर्ब्राह्मणादिसर्व्वाधिकारकथनं-शूद्रव्युदासार्थम् ।

तेन लशुनादिभक्षणे न दोषः; तन्मध्यपतितमत्स्यकाकादिभक्षणन्तु-नखाधर्म्मविनाशाद्दोषावहं; अतो वक्ष्यमाणमांसवर्ज्जनविधानं चातुर्वर्ण्यसाधारणं; वर्ज्जनेऽत्र विधिः; सूर्यानीत्यपवर्गकल्पकः ।

प्रोक्षितं यज्ञार्थं मन्त्रैः संस्कृतं; संस्कृतान् पशून् मन्त्रैरित्यादि वाक्यशेषात् ब्राह्मणानां काम्ययेति; यदा ब्राह्मणाः किञ्चिदात्मेष्टं कामयन्ते त्वया मांसं भोक्तव्यमिति तदा तेषामिच्छया एकवारं भक्षयतो न दोषः; सकृत्ब्राह्मण-काम्ययेति यमोक्तेः;—

प्राणानामेव चात्यय इति; रोगेण अन्नाभावेन वा यदा मांसभक्षण-व्यतिरेकेण वा प्राणात्ययः समारभ्यते तदा मांसं भक्ष्यमित्यर्थः। एषामेव-पूर्वोक्तानामर्थवादाः प्राणस्यान्नमित्यादयः; भक्ष्यस्ता मत्स्यादयः जग्धि भक्षणं; स्वयमुत्पाद्येति क्षत्रियविषयः।

तथाच महाभारते;—

"क्षत्रियाणाञ्च यो दृष्टो विधिस्तमपि मे शृणु।
वीर्य्येणोपार्जितं मांसं यथाखादं न दुष्यति॥
आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः।
अगस्त्येन पुरा राजन् मृगया येन युज्यते॥
नात्मानमपरित्यज्य मृगया नाम विद्यते।
समतामुपसंगम्य भूतं हन्येत वा न वा"॥

क्रीत्वा स्वयमुत्पाद्येन च देवपितृपूजनपूर्वके मांसभक्षणे दोषाभावः-प्रदर्शितः। यत्तु मांसवर्जनात् फलश्रवणं तदप्येतत्प्रकारमांसवर्जन-भक्षणविषयं न नियुक्तादिविषयं तत्राकरणे दोषश्रुतेः।

यमः,—

"भक्षयेत् प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया।
दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत्"॥

नियमे मांसवर्जनव्रते कृते सति; एतच्च प्रोक्षितातिरिक्तैः सर्वैरेव-सम्बध्यते प्रोक्षिते तु न सम्बध्यते, प्रत्यक्षश्रुतिविरोधात्; एवमन्यत्रापि। मांसभक्षणाभ्यनुज्ञाने स्मृत्यन्तरोक्ते बलवत्प्रामाण्यविषये विज्ञाय नियमे तु-विवर्जयेदिति सम्बन्धनीयम्।

पैठीनसिः—

"श्राद्धे तु मांसमश्नीयात्तथा तिथिनिमित्तके ।

यो नाश्नाति—

यावन्ति पशुरोमाणि तावन्नरकमृच्छति" ॥

श्राद्धे निमन्त्रित इति शेषः ; अतिथिनिमित्तके अतिथ्यर्थं यदुपात्तं तदतिथीनां भक्ष्यमित्यर्थः ।

इत्यादिविधिनिषेधप्रतिपादकप्रचुरप्रमाणानि विद्यमानान्यपि ग्रन्थबाहुल्यभिया नोद्धृतान्येवात्र ।

अथ मद्यानि,—मनुहारीतयमाः,—

"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्मात्-ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥
गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥
यक्षरक्षःपिशाचानां मद्यं मांसं सुरासवम् ।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥
अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत् ।
अकार्य्यमन्यत्-कुर्य्याच्च ब्राह्मणो मदमोहितः ॥
यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् ।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च नियच्छति" ॥

एतेन जातीफलादेरप्यधिकभक्षणे मादकत्वान् मद्यप्रायश्चित्तम् । अश्वासनमहिफेनञ्च मादकत्वाद्विगीतमेव । यथा,—एका सुरा सर्व्वैर्न पेया, तथा त्रिविधा ब्राह्मणैर्न पेया ; तथा पैष्टी मुख्यसुरा ; तत्पाने महापातकत्वादकामतो द्वादशवार्षिकं ; गौड़ीमद्यपाने कृच्छ्रातिकृच्छ्रे व्रतप्रायश्चं पुनः संस्कारश्च-

मद्यत्वेनैव निषेधात्। त्रिविधा सुरेति तयोरपि ब्राह्मणं प्रति सुरापानसमानदोषत्वेन सुराशब्दस्य गौणत्वात्। गौणत्वञ्च गौडीमाध्वी—मद्यत्वेकादशमद्यगणतोऽन्तरं; "द्वादशन्तु सुरामद्यं सर्व्वेषामधमं स्मृत"मिति पौलस्त्येन पैष्ट्यामेव सुराशब्दप्रयोगात्।

वर्ज्यप्रकरणे; गौतमः,—

मद्यं नित्यं ब्राह्मणः; तेनानुपनीतस्यापि अनूढायाः कन्याया अपि मद्यमात्रनिषेधः जातिपुरस्कारेण निषेधात्।

तथा च स्मृत्यन्तरे,—

सुरापाननिषेधस्तु जात्याश्रय इति स्थितिरिति।

वशिष्ठो दशमद्यान्याह,—

"माधूकमैक्षवं टाङ्कं कौलं खार्ज्जूरपानसम्।
मृद्वीकारसमाध्वीकमैरेयं नारिकेलजम्॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु।
राजन्यश्चैव वैश्यश्च स्पृष्ट्वा ह्येतैर्न दुष्यतः"॥

माधूकं मधूकपुष्पोद्भवं; इक्षुरसभवमैक्षवं; टङ्कः कपित्थसदृशः; काश्मीरदेशप्रसिद्धस्तद्भवं टाङ्कं; कौलं कोलफलजं; खार्ज्जूरं खर्ज्जूरवृक्षजं-तत्फलजञ्च एवं पानसं; मृद्वीका द्राक्षा तद्भवजं मृद्वीकारसं; माध्वीकं-मधुसन्धानजं; मैरेयं; धातकीपुष्पगुडधान्यमिश्रितमिति शब्दार्णवे वाचस्पतिः।

पौलस्त्यो द्वादशाह,—

"पानसं द्राक्षमाधूकं खार्ज्जूरं तालमैक्षवम्।
मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम्॥
समानानि विजानीयान्मद्यान्येकादशैव तु।
द्वादशं तु सुरामद्यं सर्व्वेषामधमं स्मृतम्"॥

सर्वेषां जात्यैव मद्यत्वादयमभक्ष्यत्वम्। न मांसभक्षणे दोषो न मद्ये इति अविशेषेणविषयम्।

"कामादपि हि राजन्यो वैश्यो वापि समाहितः।
पिबेतां मधु वा तत्र न दोषं किञ्चिदिच्छतः" ॥

इति यमवचनात्। किन्तु तयोः शूद्रस्यापि पैष्टी सुरा निषिद्धा एव। एवं "सौत्रामण्यां तथा मद्यं श्रुतौ भक्ष्यमुदाहृत"मिति बृहस्पतिवचनमपि क्षत्रियवैश्यविषयम्।

"मद्यमूत्रपुरीषाणां भक्षणे नास्ति काञ्चन"।
दोषस्तापच्चमाद्वर्षात् पूर्वं पित्रोः सुहृद्गुरोरिति।

कुमारवचनमपि न ब्राह्मणविषयम्। तद्विषयत्वे वा दोषाल्पत्वपरं; इति जातिदुष्टाभक्ष्याणि।

न च,—

"रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः।
भग्नसन्धानकृत्कण्ठ्यो गुरुः पित्तास्रवृद्धिदः" ॥

तथा,—

"पलाण्डुस्तद्गुणैर्ज्ञेयो रसो न सदृशो गुणैः।

तथा,—

"गोमांसं सुगुरुस्निग्धं पित्तश्लेष्मविवर्द्धनम्।
बृंहणं वातहृद्बल्यमपथ्यं पीनसप्रणुत्" ॥

इत्यायुर्व्वेदीयप्रमाणप्रातेन धर्म्मशास्त्रनिषिद्ध—सकलजातीय द्रव्याणामप्यवगतप्राणिहिताधायकगुणशालित्वात् निषिद्धद्रव्याणां शास्त्रप्रतिपादिताभक्ष्यत्वमसङ्गतमितिवाच्यम्। रोगविशेषेष्वायुर्व्वेदोक्त—तत्तद्रव्याणां पथ्यात्मकतया-तत्र तत्रांशेऽभ्यनुज्ञातत्वात्, तथा, सुमन्वादि—धर्म्मशास्त्रकारैर्व्याधितस्य-भिषक्क्रियायां तथा प्रायश्चित्तादावपि प्रतिपादित निर्द्दोषत्वाच्चैषाम्।

अतः सर्व्वदाहारीयद्रव्यात्मकत्वेन निषिद्धद्रव्यजातं वादनीयमित्याशयः। ननु नित्याहारीयद्रव्यजातं कीदृगिति चेदुच्यते नियतः, त्रिविधमाहारीय-द्रव्यं; यथा,—सात्त्विकं राजसं तामसञ्च, एतदनुकूलं गीतावचनञ्चास्ति।

यथा,—

"आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः"॥

प्रमाणमेतत्सात्त्विकाहारीयद्रव्यपरिचायकम्।

तथा,—

"कट्वम्ललवणात्युष्णतीक्ष्णरूक्षा विदाहिनः।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः॥"

राजसिकाहारीयद्रव्यावेदकमिदम्।

तथा,—

"यातयामं गतरसं पूति पर्य्युषितं च यत्।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्"॥

इदमेव तामसाहारीयद्रव्यबोधकम्।

अन्यच्च,—पार्थक्येनानिर्द्दिष्टे सत्यपि सात्त्विकद्रव्याणां नामोल्लेखे येषामायुःसत्त्वादिगुणविवर्द्धकत्वं तथा विद्यते रस्यत्वादिगुणशालित्वञ्च; सात्त्विकद्रव्याणीत्यूहनीयं तान्येव। तथैवमन्यानि राजसिकतामसिकद्रव्याण्यनुमेयानि-तत्तत्प्रमाणोक्तगुणविशिष्टत्वेन।

तथा,—अन्नदोषोऽपि त्रिविधः; यथा;—

अदृष्टहारकः उभयात्मकः दृष्टहारकश्च, अदृष्टहारकः स्मृत्युक्तः; उभयोक्तस्तु-बालवत्साविवत्सादुग्धादिदोषो दृष्टादृष्टहारकः दृष्टहारक आयुर्वेदोक्तः।

यथा—भावप्रकाशे,—

"गोमांसं सुगुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम्।
वृंहणं वातहृत्-बल्यमपथ्यं पीनसप्रणुत्"॥

इत्यादिप्रमाणप्राबल्येन गोमांसस्य सति वायुपीनसरोगविशेषनिवारकत्वेऽपि सुगुरुपाकत्वात् पित्तश्लेष्मविवर्द्धकत्वाच्च, गोमांसस्यैवापथ्यत्वमिति प्रतिपादितो दृष्टहारकदोषो ह्यायुर्वेदेन।

तथा,—

"लशुनं तु रसो न स्यादुग्रगन्धो महौषधम् ।
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥
पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जितः ।
तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः" ॥

इति लशुननामानि ।

"कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः ।
नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः ॥
वीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः ।
रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः ॥
भग्नसन्धानकृत्कण्ठ्यो गुरुः पित्तास्रवृद्धिदः ।
मद्यं मांसं तथाम्लञ्च हितं लशुनसेविनाम्" ॥
व्यायाममातपं रोषमतिनीरं पयो गुड़म् ।
रसोनमश्नन् पुरुषस्त्यजेदेतान् निरन्तरम्" ॥

तथा,—पलाण्डुलशुनाभिधेयद्रव्यद्वयस्य केवलं सत्यपि भग्नसन्धानकारित्वे-गुरुपाकत्वस्य दुर्गन्धजनकत्वरक्तपित्तवर्द्धकत्वादिदोषबहुलत्वात्तथातत्सेविनां-मद्यमांसाम्लप्रियत्वात्तथा व्यायामातपरोषातिनीरपयोगुड़ारुचित्वात्तथा-ग्रीष्मकटिबन्धावस्थितभरतखण्डनिवासिनामार्य्याणां स्वतो व्यायामातपाद्य-सहिष्णुतया सुतरां तत्सेवनेन कर्मानर्हत्वसम्भवात्तथा यवनेष्ट इति विशे-षणविशिष्टत्वेन प्रकाशितयवनप्रियत्वाच्च तत्तद्विधायकधर्मशास्त्रनिषेधः-सुसङ्गत एव ।

तथा,—

"शोभाञ्जनः शिग्रुतीक्ष्णगन्धका चोरमोचकाः" ।

इत्यादिनामचिह्नितः शोभाञ्जनः ।

"शिग्रुः कटुः कटुः पाके तीक्ष्णोष्णो मधुरो लघुः ।
दीपनो रेचनो रुक्षः क्षारस्तीक्ष्णो विदाहकृत् ।
संग्राही शुक्रलो हृद्यः पित्तरक्तप्रकोपनः" ॥ इत्यादि ।

रोगविशेषचिकित्सायां शोभाञ्जनस्य माधुर्य्यलघुपाकत्वरोचकत्वादिगुणशालित्वेनोपकारजनकत्वेऽपि सदैव तैक्ष्ण्यादिपित्तरक्तप्रकोपकबहुदोषयुक्ततया धर्मशास्त्रकारैस्तस्याभक्ष्यत्वं प्रतिपादितमेव ।

तथा, भावप्रकाशे यथा,—

"पटोलं पाचनं हृद्यं वृष्यं लघ्वग्निदीपनम् ।
स्निग्धोष्णं हन्ति कासास्रज्वरदोषत्रयक्रमीन्" ॥ इति ।

तथा च सुश्रुते ;—

"पटोलादिर्गणः पित्तकफारोचकनाशनः" । इति ।

पटोलस्य पाचकत्वादिगुणयुक्ततया कासादिक्षयस्तरोगनिवारकत्वेमतऽपि प्रायशः निम्नलिखितप्रमाणोक्तमत्स्यद्वयगुणतुल्यतया पटोलं मामिषफलमिति प्रतिपादयन्ति धर्मशास्त्रकाराः । मामिषद्रव्यस्य सात्विकगुणविरोधितया तथा त्रिगुणनैवेद्यायोग्यत्वेन च ब्राह्मणैः फलमेतत्कार्त्तिकादिव्रतेषु नाद्यमिति निर्द्धारितं मन्वादिभिः ।

यथा—मत्स्यविषयकप्रमाणद्वयं भावप्रकाशे ;—

"ईल्लिशो मधुरस्निग्धो रोचको वह्निवर्द्धनः ।
पित्तहृत् कफकृत् किञ्चिल्लघुर्वृष्योऽनिलापहः" ॥ इति ।

तथा,—

"महासफरसंज्ञस्तु तिक्तः पित्तकफापहः ।
शिशिरो मधुरो रुच्यो वातसाधारणः स्मृतः" ॥ इति ।

तथा,—मद्यस्य नामानि गुणाश्च यथा भावप्रकाशे,—

"मद्य' तु सीधुर्मैरेयमिरा च मदिरा सुरा ।
कादम्बरी वारुणी च हालापि बलवल्लभा ॥
पेयं यन्मादकं लोकैस्तन्मद्यमभिधीयते ।
यथारिष्टं सुरासीधुरसवाद्यमनेकधा ॥
मद्यं सर्व्वं भवेदुष्णं पित्तकृद् वातनाशनम् ।
वातपित्तकरः सद्यः स्नेहनो रोचनो हरेत् ॥

स्थानमितरत्र:।

"मद्यं नवमभिष्यन्दि त्रिदोषजनकं सरम् ।
अहृद्यं बृंहणं दाहि दुर्गन्धं विशदं गुरु ॥
सात्विके गीतहासादि राजसे साहसादिकम् ।
तामसे निन्द्यकर्माणि निद्रां च मदिरा चरेत्" ॥

सुस्रतेलवालुकगदशीरकधान्यकेलाश्च—

"यश्चर्षयन् सदसि वाचमभिव्यनक्ति ।
स्वाभाविकं मुखजमुज्झति पूतिगन्धम् ॥
गन्धं च मद्यलशुनादिभवं च नूनं" ।

इत्यादि, सर्वविधमद्यस्य स्थूलतो दुष्टतया तथा सात्विकादिगुणविशिष्टस्य-समस्तलोकस्य ज्ञानहारकतया तथाऽहृद्यादिदोषजातसंश्लिष्टतया च तत्पानं-सर्व्वतोभावेन निवारितमायुर्व्वेदीयप्रमाणव्रातेन । अतएव एतत्पानेन नरक-गामित्वमापादितं धर्म्मशास्त्रकारैस्तत् सुसमीचीनमेवेति प्रतिभाति । एव-मन्येषां जातीयाभक्ष्यद्रव्याणां सतापि विज्ञानमूलकत्वे ग्रन्थबाहुल्यभिया तेषा-मविधाय विवरणं वैज्ञानिकविवेचनं प्रदर्शितं दिङ्मात्रम् । किन्तु तद्विज्ञान-मूलकत्वमूहनीयं बुद्धिमद्भिस्तत तत्रायुर्व्वेदीयप्रमाणपर्य्यालोचनेन ।

ननु भारतेतरसकलप्रदेशेषु द्रव्याणां सात्विकाद्याहारभेदेन व्यवस्था-

दर्शनाद्भारतेऽस्मिन् कथं निष्प्रयोजनकं सात्विकप्रभृतयाहारीयद्रव्याणां-प्रदर्शितं पार्थक्यमिति चेन्न ; देशान्तरे तूत्तममध्यमाधमवंशजत्वेन तत्तद्देश-वासिनां स्फुटतो जातिभेदस्य विद्यमानत्वेऽपि वर्णाश्रमभेदेन तत्र जातिभेद-गठनस्याचक्षुर्विषयतया तथा विभिन्नजात्युपरि पृथक् पृथक् कार्य्यानुष्ठानस्य-व्यवस्थादर्शनेन सात्विकाद्याहारीयद्रव्याणां विभिन्नव्यवस्थाविधानाभावात्।

तथा—भारतखण्डेऽस्मिन् वैज्ञानिकाध्यात्मिकव्यावहारिकशास्त्रनिचयनिर्मा-णस्य तदवबोधनादिकार्य्यजातस्य च सात्विकगुणायत्तत्वेन तथा युद्धोत्साहादि-कार्य्यनिवहस्य सत्वरजोगुणाधीनतया तथा वाणिज्यकृषिप्रभृतिसकलकार्य्यस्य-रजस्तमोगुणपरवशत्वेन तथा सेवादिनिखिलक्रियानुष्ठानस्य तमोगुणैकाधीन-त्वेन च तत्तद्गुणोपयोगिसात्विकाद्याहारीयद्रव्याणां वर्णाश्रमभेदव्यवस्थया-तत्तद्गुणविशिष्टब्राह्मणादिजातीयवर्णानां तत्तद्द्रव्यभक्षणस्य प्रसिद्धतया च-तद्विभागस्य सप्रयोजनकत्वात्।

अतः सात्विकाद्याहारीय-द्रव्यविभागानुष्ठानं नासङ्गतमेव। प्रसङ्गप्राप्त-सात्विकादिगुणजातस्य प्रकटनं यथा सुश्रुते, तत्प्रकाश्यतेऽधस्तात्।

यथाह,—

सुश्रुतः ;—"सात्विकास्तु आनृशंस्य संविभागरुचिता—तितिक्षा सत्य-धर्म आस्तिक्यं ज्ञानं बुद्धिर्मेधा स्मृतिर्धृतिरनभिषङ्गश्च।

राजसास्तु दुःखबहुलताटनशीलता धृतिरहङ्कार आनृतिकत्वमकारुण्यं-दम्भो मानो हर्षः कामः क्रोधश्च।

तामसास्तु विषादित्वं नास्तिक्यमधर्मशीलता बुद्धेर्निरोधोऽज्ञानं दुर्मेधस्त्व-मकर्मशीलता निद्रालुत्वञ्चेति।

अपरञ्च,—न च भारतेतरदेशसम्भूताहारीयद्रव्यजातासने भारतीय-ब्राह्मणादिजातीयवर्णानां दृश्यते यद्विमुखत्वं तत्तु नोचितमितिवाच्यम्। तत्तद्देशीयद्रव्याणां विड्वस्यादिसारसम्भूततयाऽऽयुर्व्वेदीयप्रमाणबलादनुमित-दोषजनकत्वेन धर्मशास्त्रनिर्दिष्टाभक्ष्यत्वात्।

अन्यच्च,—

"धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्"।

चरकीयप्रमाणसामर्थ्यात्तथा, "शरीरमाद्यं खलु धर्मसाधनमिति महाकविकालिदासकण्ठोक्तवचनावलोकनाच शरीरस्य मारोग्यवहुदिनावस्थायित्वं पारंपरिकसम्बन्धेन स्वस्य च चतुर्वर्गाधायकमिति विभाव्यादितः समुन्नावितो-योगमार्गैस्त्रिकालज्ञैः पूज्यपादैर्महर्षिभिरितरानुमितम्। यतो दृष्टदीर्घायुस्त्वात्मकफलकतया तन्मार्गावलम्बिनो बभूवुः सर्वे भारतवासिनः पूर्वतः ।

अतस्तन्मार्गस्य तथा सात्विकादिगुणविशिष्टलोकनिकरस्य चोपकारकाण्याहारीयद्रव्याणि सात्विकाद्याहारीयद्रव्यभेदेन विभक्तानि ; तथाऽन्यानि-दैवाहितोपधायकतया पापवन्मानसिकक्लेशात्मकनिरयजनकत्वेन निरूपितानि-पूर्व्वाचार्य्यैरिति परामर्शः ।

इति जातिदुष्टाभक्ष्यद्रव्याज्ञानस्य वैज्ञानिकसमालोचनम् ।

---

अथ क्रियादुष्टानि ।

भविष्ये,--

"न भक्षयेत् क्रियादुष्टं यद्दुष्टं पतितैः पृथक्" ॥

वशिष्ठः,—उच्छिष्टमगुरोरभोज्यं; स्वमुच्छिष्टमुच्छिष्टोपहितं वसनकीटोपहतं चात्र गुरुपदं पितृज्येष्ठभ्रातृपरम्। अन्यथा रोगसंक्रमणसम्भवात्। अग्रेऽप्येवमेव बोध्यम्। पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यं, धर्मविप्रतिपत्तावभोज्यमित्यापस्तम्बवचनात् ; पितृज्येष्ठभ्रातृभिन्नगुरोरप्युच्छिष्टमप्यभोज्यम् ; तयोरपि धर्मविप्रतिपत्तावधार्मिकत्वेन भोज्यं तथाऽधर्मसंक्रमसम्भवापत्तेः। "मातापित्रोरथोच्छिष्टं बालो भुञ्जन् सुखी भवेदि"ति ब्राह्मणवचनं अनुपनीतपरं ; तथैवाचारदर्शनात्।

स्वमुच्छिष्टं भुक्त्वा त्यक्तमन्नं तात्कालस्य ; उच्छिष्टोपहितं उच्छिष्टेन-कालान्तरेण मिश्रितं ; वसनोपहतं परिहितवसनस्पृष्टम्।

यमः,—

"शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः।
क्षत्रियस्य तु सप्ताहं ब्राह्मणस्य तथाह्निकम्" ॥

श्वोच्छिष्टाशने चान्द्रायणम् ।

आपस्तम्बः,—

"अन्त्यानां भुक्तशेषं तु भक्षयित्वा द्विजातयः ।
चान्द्रं कृच्छ्रं तदर्द्धं च ब्रह्मक्षत्रविशां विधिः" ॥

अङ्गिराः,—

"चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे ।
चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत् ।
षड्रात्रं च त्रिरात्रं च वर्णयोरनुपूर्वशः" ।

षट्त्रिंशन्मते,—

"दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहृतं च यत् ।
अभ्यङ्गस्य तथोच्छिष्टं भुक्त्वा नक्तेन शुध्यति" ॥

वृद्धशातातपः,—

"पीतशेषं तु यत्तोयं भोजने मुखनिःसृतम् ।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत्" ॥

सुमन्तुः,—

क्षुतवचोऽभिहितं श्वभिराघ्रातं प्रेक्षितं चान्नमभोज्यमन्यत्र हिरण्योदकैः-स्पृष्टात्, यस्यान्नस्य निकटे क्षुतं कृतं यस्य वा निकटे वचनमुच्चारितं-तत्क्षुतवचोऽभिहतं ; प्रेक्षितं श्वभिरेव ; एतेष्वभिघातेषु हिरण्यमिश्रजलमेकः-शोधकः ; तत्कृत्वा भोजने गायत्र्यष्टोत्तरशतजपः ।

मनुः,—

"मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन ।
केशकीटावपन्नं च पदा स्पृष्टं च कामतः ॥
पतत्रिणावलीढं च शुना संस्पृष्टमेव च" ।

याज्ञवल्क्यः,—

"उदक्या स्पृष्टसंघुष्टपर्य्यायान्नञ्च वर्ज्जयेत्" ।

संघुष्टं क्षुधार्थिनः के सन्ति मदगृहे भुज्यतामिति घोषेण न दत्तम् । पर्य्यायान्नं ब्राह्मणानां ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददादित्यादिरूपम् ।

"अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥
विड़ालकाकाखूच्छिष्टं जग्ध्वाऽश्वनकुलस्य च ।
केशकीटावपन्नञ्च पिबेद्ब्राह्मीं सुवर्चलाम्" ॥

काश्यपः,—"गर्द्दभोष्ट्राश्वोच्छिष्टभोजने त्रिरात्रम् ।"

विष्णुः,—गोरुच्छिष्टप्राशने दिनमेकं उपोषितः पञ्चगव्यं पिबेत् ।

उशनाः,—"विड़्वराहगृध्रश्येनकुक्कुटभासक्रवकमृगाणामुच्छिष्टप्राशने सप्तकृच्छ्रम् ।"

यमः,—काककुक्कुटसंस्पृष्टमभोज्यम् ।

आपस्तम्बः,—अप्रयतोपहृतमन्नम् प्रयतं तत्त्वभोज्यम् ।

अग्नावधिश्रयणादिना शुद्धं कृत्वा भोज्यं भवति । एतच्चाप्रयतत्वाद्-ब्राह्मणादिस्पृष्टविषयम् । तथा,—प्रयतेन शूद्रेण स्पृष्टमभोज्यम् । सर्वथा-ऽभोज्यमित्यर्थः । अनर्हद्भिः समानपंक्त्यां ; अभोज्यमित्यर्थः । भुञ्जानेषु-यदि कश्चिदुत्थायान्नं प्रयच्छेत् । एकपंक्तौ कश्चित्स्वान्नं यदि भृत्यादिभ्यो-दद्यादितरेषामन्नमभोज्यम् । तथा,—भुञ्जानेष्वर्द्धं भुक्तेषु कश्चिदाचमति तद-न्येषामन्नमभोज्यम् ।

तथा,—कुत्सयित्वा यदन्यद्दत्तं ; विषं भुंक्ष्वेत्यादिना इत्यर्थः । तथा,—मनुष्यैरवघ्रातं ; प्रयत्नादित्यर्थः ।

तथा,—मनुष्यैरवघ्रातं ; गर्द्दभादिभिरित्यर्थः ।

"न रजस्वलया दत्तं न पुंश्चल्या न क्रुद्धया ।

न मलवाससा नापरयाहारा यद्दत्तम् ; न द्विःपक्वं, मलवाससाऽमेध्य-

वञ्चया परस्वामिकमप्यन्नं रजस्वलादिभिर्दृष्टमन्नं न भोज्यमित्यर्थः, अपरद्वारं-अतिथिभोजनमुख्यद्वारं विना द्वारान्तरं, द्विः पक्वं सिद्धमेवान्नं, धान्यं स्विन्नं-तच्छोषणेन धान्यमेव जातं; तत्र स्विन्नता धान्ये गुणसम्पादनार्था। न त्वोदनार्था, तेन तण्डुलदशायामेवमन्नार्थं पाक-इति द्विःपक्वता।

एवं मरीचहरिद्रादावपि; अतएवावर्त्तितदुग्धस्य पुनः कालान्तरेण पाके-द्विःपक्वता। एवं तद्विकाराणां लड्डुकादिसाधकत्वाभावान्न लड्डुकादे-र्द्विःपक्वता।

गौतमः,—वृथान्नाचमनोत्थानव्यपेतानि उत्सृष्टमस्वामिकं; उत्थान-व्यपेतं यत्रार्द्धभुक्ते उत्थानं एवं यत्राचमनं तदूर्द्धमन्नमभोज्यम्।

आपस्तम्बः, — नापणीयमन्नमश्नीयात्तथाऽन्यरसानाममांसमधुलवणानि-परिहाय।

शङ्खलिखितौ,—"भीतरुदितक्रन्दितत्रस्तावधूतान्नानि वर्जयेत् स्तनच्छि-कितवान् अवधूतः साधूत्यक्तः।

पराशरः,—

"एकपंक्त्युपविष्टानां विप्राणां सहभोजने।
यद्येकोऽपि त्यजत्पात्रं शेषमन्नं न भोजयेत्"॥

क्रतुः,—

"यस्तु भुंक्ते द्विजः पंक्त्यामुच्छिष्टायां कदाचन।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति"॥

ब्राह्मे,—

शूद्रभुक्तावशिष्टं तु नाद्याद्भाण्डस्थितं त्वपि।
भिन्नभाण्डगतं तद्वन्मुखवातोपशामितम्।
उच्छ्वासपक्वमस्विष्टमवलीढमसंस्कृतम्"॥

आपस्तम्बः,—ऋत्विकः प्रत्युपविष्टाय चानश्नन् परिवेशयते तावन्तं कालं, उत्तमर्णो धनग्रहणार्थमनश्नन्नुपविशति तावत्कालं द्वयोरन्नमभोज्यम्।

भविष्ये,—

"उपक्षेपणधर्मेण शूद्रान्नं यः पचेन्नरः ।
अभोज्यं तद्भवेदन्नं स च शूद्रपुरोहितः" ॥

उपक्षेपणधर्मः शूद्रसम्बन्धे सत्येव ब्राह्मणसद्मनि पाकः शूद्रस्य कार्य्यार्थम् ।

ब्राह्मे,—

"का क्रियाऽस्मिन्निदं कस्य दीयते किमनेन वा ।
इत्युक्त्वा दीयते यच्च तन्मद्यं विस्मयान्वितम् ।
भक्ष्यं तु भक्ष्यवाक्येन दत्तं नाद्यं कथञ्चन" ।

न भुञ्ज्येतेत्यनुवृत्तौ मनुः,—

"उग्रान्नं सूतिकान्नं च पर्य्याचान्तमनिर्दशम्" ।

पर्य्याचान्तं यस्यान्नस्य सन्निधावाचमनं कृतम् ।

यमः,—प्रेतान्नं प्रेतमुद्दिश्य शुचिनापि दत्तम् । सूतिकामुद्दिश्य पक्वं सूतिकान्नम् ।

धौम्यः,—

"ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्" ॥

ब्रह्मौदनमाधानाङ्गभूतं चातुःप्राश्यम् । अत्र चत्वार ऋत्विजः प्राश्नन्तीति विधिः, "सोमेऽग्निसोमीयपर्य्यन्तं अग्निसोमीयसंस्थायां यजमानस्य गृहे भोक्तव्यमिति श्रुतेः," "क्रीतराजको भोज्यान्न" इत्याथर्वणश्रुतिरापद्विषया । क्रीतो राजा सोमो येनेति समासः ।

आपस्तम्बः,—यज्ञार्थे वा निर्दिष्टे भोक्तव्यम् । यज्ञार्थं वा यावद्द्रव्यं अपेक्षितं, तावद्द्रव्ये पृथक्कृतेऽवशिष्टदीक्षितान्नं भोज्यमित्यर्थः । एतदप्यापद्विषयमेव । कियतां तावत्क्रियादुष्टनामकोच्छिष्टाद्यभक्ष्याणां निरुक्तानामायुर्व्वेदानुगतवैज्ञानिकविवेचनं प्रदर्श्यतेऽधस्तात्संक्षेपतोऽत्र । यथा,—

मानवशरीरस्य सदैव रोगाकरतया तथोच्छिष्टादिभक्षणे,—

चक्षुरोगी ह्यपस्मारः क्षयकासी मसूरिका ।
दर्शनात्-स्पर्शनाद्घ्राणात्संक्रमन्ति नरान्नर" ॥

मित्याद्यायुर्व्वेदीयप्रमाणजातस्य चक्षुर्विषयत्वादुच्छिष्टाभक्ष्यभक्षणे रोग-संक्रमणसम्भावनया च तदभक्षणं यच्छास्त्रकारैः प्रतिपादितं, तन्नासङ्गतमेव । तथा विवेकमिममनुसरत्यायुर्व्वेदीयप्रमाणव्रातमप्यन्यत् ।

यथाह सुश्रुतः :—

"अचोक्षं दुष्टमुच्छिष्टं पाषाणतृणलोष्ट्रवत् ।
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्ज्जयेत्" ॥ इति ।

निरुक्तदोषोत्पत्त्याशङ्कया दुष्टमुच्छिष्टमित्यत्र दृष्टमिति विशेषणापादन-मनुष्ठितं सुश्रुतेनेत्यनुमितम् ।

अन्यच्च,—मत्तक्रुद्धातुरादिव्यक्तिप्रदत्तान्नादिकवस्तूनामभक्ष्यत्वं प्रतिपादितं-यद्धर्मशास्त्रकृद्भिस्तदभक्ष्यत्वं मत्तक्रुद्धादीनां तमोऽभिभूतत्वेन तत्प्रदत्तान्नादेः-सुव्यवस्थाभावादजीर्णादिदोषसम्भावनया समीचीनमेव । दृढयति विवेकमिम-मुपलक्षणविषया सौश्रुतीयप्रमाणजालम् ।

यथा,—

"ईर्षाभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीड़ितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति ॥
माधुर्य्यमन्नं गतमामसंज्ञं विदग्धमम्लं गतमम्लभावम् ।
किंचिद्विपक्वं भृशतोदशूलविष्टब्धमाध्मद्विरुद्धवातम्" ॥

किञ्चिद्विपक्वं इति पदोपादानेन विपक्वस्यापि व्याधिजनकत्वं स्फुटतः-प्रकाशितम् ।

अपरञ्च,—मूषिकश्वशृगालादिपशूनां तथा पिपीलिकादिकीटानां तथा-मक्षिकाप्रभृतिपतङ्गानां चाघ्रातान्नादिवस्तुजातस्य भक्षणीयत्वे वैमत्यमापादितं-यद्धर्मशास्त्रकर्त्तृभिः, तत्तु नानुपपन्नम् । तत्प्राणिनां दशनादिकतिपया-वयवानां विषाक्ततया तद्दशनाद्यवयवस्पृष्टान्नादिकं विषदूषितमेव । अतस्त-दुपाघ्रातान्नादिकं नादरणीयमेव ।

कच्चीकरोति विवेचनमेतत्सौश्रुतीयप्रमाणव्रातम् ।

"मूषिकाणां विषं प्रायः कुपत्यभेषु निर्हृतम् ।
तत्रापि एष विधिः कार्य्यो यस्य दूषी विषापहः ॥
स्थिराणां रुजतां वापि व्रणानां कर्णिकाभिषक् ।
पाटयित्वा यथादोषं व्रणवच्चापि शोधयेत् ।
शृगालश्वतरच्छवृकव्याघ्रादीनां यदानिलः" । इत्यादि ।

तथा स एव,—

"पिपीलिकाः स्थूलशीर्षा सम्वाहिका ब्राह्मणिकाङ्गुलिका कपिलिका-चित्रवर्णेति षट् । ताभिर्दष्टस्य दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः ।"
तथाच मक्षिकाः,—

तत्रैव,—कान्तारिका कृष्णा पिङ्गलिका मधूलिका काषायी स्थालिकेत्येवं षट् । ताभिर्दष्टस्य दाहशोफौ भवतः । स्थालिकाकाषायीभ्यामेतदेव ; पीड़काश्च सोपद्रवा भवन्ति ।

तथाच मशकास्तत्रैव,—

सामुद्रः परिमण्डलो हस्तिमशकः कृष्णः पर्वतीय इति पञ्च । तैर्दष्टस्य-तीव्रकण्डुर्दंशशोफश्च । पर्वतीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः । नखावकृष्टोऽत्रार्थं पीड़काः सदाहपाका भवन्ति । इत्यादि—प्रमाणैर्निरुक्तपशुकीटपतङ्गानां दशनविषस्य दंशनेन स्फुटतः प्रकाशनात् सुतरां तदुपाघ्रातात्रादिकं विषाक्तत्वेनैवातो न भक्ष्यमित्यर्थः । विषयेऽस्मिन्निरुक्तप्रमाणभिन्नायुर्व्वेदीयप्रमाणव्रातं सत्त्वपि सुश्रुताख्यायुर्व्वेदशास्त्रे ग्रन्थकलेवरवृद्धिसम्भावनया नोत्तोलितं तद्व्रातम् । क्रियादुष्टाभक्ष्याणां वैज्ञानिकसमालोचनायाः-सतत्त्वनुष्ठेयत्वे ग्रन्थकायवृद्धिसम्भवात्तत्तदविवेचनं परित्यक्तमेव । एतन्निवद्धग्रन्थाणामेव ज्ञातव्यनीयं विवेचनं प्रेक्षावद्भिः ।

नन्वेकजातीयपंक्त्युपविष्टानां विप्रादिवैश्यान्तमानवानामभ्यन्तरे पूर्व्वतोऽपश्चाय भोजनपात्रं समुत्थिते सत्रैकस्मिन् जने तत्रोपविष्टैर्जनैरन्यैः स्वस्वभोजनभाजनस्थान्नादिकं न खादितव्यमिति यदुक्तं धर्मशास्त्रकारैस्तत्त्वदृष्ट-

फलकत्वान्न समीचीनमिति चेन्न। भोजनावसरे प्रथमतः परिसमाप्य-भोजनं समुत्थिते तत्सम्मानवे तत्रोपविष्टतत्सम्मानवानां मनसि संजातलज्जौर्षादिदोषजाततया तदनन्तरभुक्तान्नादेः पाकासम्भवात्तदनुष्ठाननिषेधस्य-समुचितत्वात् ।

इति क्रियादुष्टाभक्ष्यवैधानिकसमालोचनम् ।

अथ कालदुष्टानि ।

भविष्ये,—

"कालदुष्टं तु विज्ञेयं ह्यस्तनं चिरसंस्थितम् ।
दधिभक्ष्यविकारांश्च मधुवर्ज्जं तदिष्यते" ॥

ह्यस्तनमेकरात्रान्तरितं अन्नादिकं तथा चिरसंस्थितं अनेकदिनान्तरितं-तथा भक्ष्यविकारा विकृतभक्ष्याणीत्यर्थः ; कालदुष्टानीत्यर्थः ; एवं पर्युषित-दोषरहितमपि दध्यादिकं विकृतरसगन्धं सन्न भक्ष्यमित्यर्थः। मधु-पुनर्न वर्जनीयमित्यर्थः ।

शङ्खः ;—"पर्युषितं भुक्त्वा त्रिरात्रं व्रती भवेत् ॥"

तथा च याज्ञवल्क्यः ;—

"अन्नं पर्य्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः" ॥

यमः,—

"अपूपाश्च करम्भाश्च धाना वटकसक्तवः ।
शाकं मांसं च पूपं च सूपं कृशरमेव च ॥
यवागुं पायसं चैव यच्चान्यत् स्नेहसंयुतम् ।
सर्वं पर्य्युषितं भोज्यं शुक्तं च परिवर्जयेत्"॥

अपूपगोधूमपिष्टकविशेषाः करम्भो दधिमिश्रसक्तुः धाना भृष्टयवा-

व्रीहयो वा ; वटकं स्वनाम्ना प्रसिद्धं ; सक्‌थवो भृष्टयवचूर्णानि धान्य-चूर्णानि च, उभयत्र प्रसिद्धेः ; पूपाः पुलिका इति प्रसिद्धाः, कृशरस्तिल-मुद्गाभ्यां सह सिद्ध ओदनः, पायसं परमान्नं मन्थस्य सक्‌थुविकारात् सक्‌थु-ग्रहणेन ग्रहणम् ।

चरके,—

"सक्‌थवो घृतसंमिश्राः शीतवारिपरिप्लुताः ।
नातिसान्द्रा न चात्यच्छा मन्थमित्यभिधीयते" ॥

एतान्येव पर्य्युषितत्वेन रसान्तरमापद्यन्ते यदि तदा न भक्षणीयुान्नं,-शुक्तं परिवर्जयेदिति दिनान्तरे प्रायेणान्यरसमापत्तेः शुक्तग्रहणं रसान्तरमात-त्वेऽप्यभक्ष्यत्वात् ।

शङ्खलिखितौ,—

"न पर्य्युषितमन्यत्र रागांशुक-षाड़वदधिगुड़गोधूमयवपिष्टकविकारेभ्यः-रागांशुका-मुद्गदाड़िममांसाढ्या अंशुकगालिताः प्रलेह्या-एव ।"

षाड़वाः स्वाद्वम्लकटुप्रायवस्त्वाढ्याः प्रलेह्या-एव ।

आपस्तम्बः,—पर्य्युषितं वर्ज्यमुक्ता, फाणितपृथकतण्डुलशाकौषधि-वनस्पतिफलमूलवर्जं, फाणितं पाकजन्य इक्षुरसविकारः, पृथकतण्डुला भृष्ट-निष्पादितार्चिपिटकाः चूड़ा इति प्रसिद्धाः ।

पर्य्युषितापवादे मनुः,—"हविः शेषं च सर्व्वतः", एतच्च रात्र्यन्तरित-हविःशेषादि ।

गौतमः,—पर्य्युषितं अभक्ष्यमांसमधुशाकादिवर्ज्जं, पर्य्युषितमभक्ष्यमित्यर्थः ।

न भक्षयेदित्यनुवृत्तौ हारीतः,—

न पर्य्युषितमन्यत्र गुड़पिष्टकगौरसर्षपनारिकेलस्नेहादिग्रहणम् ।

न भक्षयेदित्यनुवृत्तौ सुमन्तुः,—

"पर्युषितं पुनःसिद्धं भुक्त्वा तु त्रिदमाचरेत्, यत्पक्वं पुनः पच्यते; यत्पुनः-कदलीफलादि दिनान्तरे पुनः पच्यते ; तस्य द्वितीय एवदिने पाकनिर्वाहात्म-द्विःपक्वता ।

एवं यदामिक्षापिष्टकादिकं दिनान्तरे गुड़ादिना संस्क्रियते मांसादि-वा प्रथमदिने ऽसिद्धावस्थपाकं दिनान्तरे पच्यते तस्य द्वितीय एव दिने पाकस्य-संपूर्णत्वान्न द्विःपक्वता ; एतच्च यद्भक्ष्यत्वेनाभ्यनुज्ञातं पर्युषितं ; तदपि द्विः-पक्वमभक्ष्यमित्युक्तम्।

चातुर्मास्ये निषिद्धानि शिष्टाः पठन्ति ;—

"कलिङ्गानि पटोलानि वृन्ताकं सन्धितानि च।
निष्पावान् राजमाषांश्च सुप्ते देवे तु भक्षयन्॥
सप्तजन्मार्ज्जितं पुण्यं दह्यते नात्र संशयः"।

कलिङ्गानि चक्षणाफलानि। पश्चिमे कलिङ्गपदेन प्रसिद्धेः ; अभक्ष्यत्वे-ऽपि चातुर्मास्ये दोषभूयस्त्वम्।

चातुर्मास्ये—

"पटोलं मूलकं चैव वार्त्ताकुं च न भक्षयेत्।
यानि कानि च पापानि ब्रह्महत्यादिकानि च"॥

पुनः स्कान्दे:—

"अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे।
नभःकृष्णाष्टमीं प्राप्य भुञ्जते ये द्विजाधमाः॥

तथा

त्रैलोक्ये सम्भवं पापं भुञ्जन्त्येव न संशयः।
अष्टम्यां च चतुर्द्दश्यां दिवा भुक्त्वेन्दवं चरेत्॥
एकादश्यां दिवा रात्रौ नक्तं चैवान्यपर्वसु"।

अन्यपर्वाणि संक्रान्तिपौर्णमास्यमावास्याः। तत्र संक्रमे संक्रमोप-लक्षिताहोरात्रे रात्रिभोजननिषेध इति संप्रदायविदः ; एवं तैलाभ्यङ्ग-मांसवर्जनकामोपवासादेरपि संक्रान्त्युपलक्षिताहोरात्रं कालः ; अन्यत्र तु-तिथ्यवच्छिन्नरात्रिदिवसग्रहणं ; एवं पर्वसु मांसमपि कालदुष्टम्।

वामनपुराणे,—"जयासु मांसं" ; तृतीयाष्टमीत्रयोदश्यो जया । तथा ;- कुजे मांसं भौमवासरे च; तथा "मूले मृगे भद्रपदे च मांसं" ; एवमादिषु मांसभोजने स्नातकव्रतलोपादुपवासः । एवं ग्रहणात् पूर्वं-तत्काले ग्रस्तास्तमने च सूर्य्यचन्द्रदर्शनपर्य्यन्तं नाश्नीयात् ; एवममावास्यायां-परान्नं नाश्नीयात्" ; इत्यादि सर्वं कालदुष्टम् । ग्रन्थबाहुल्यभिया नोल्लि-खितम् तत्प्रमाणमत्र ।

विष्णुः,—"न रात्रौ तिलसम्बन्धः न दधिसक्तुकोविदारवटपिप्पलशाकम् । देवलः,—

"दिवा दधित्थधानासु रात्रौ च दधिसक्तुषु ।
श्लेष्मातके तथाऽलक्ष्मीर्नित्यमेव कृतालया" ॥

ब्राह्मे:,—

"अपि प्रयाणसमये रात्रौ च दधिसक्तुषु ।
मधुपर्कप्रदानं तु वर्जयित्वा तु कामतः" ॥

आपस्तम्बः,—"दास्या वा नक्तमाहृतं ; अभोज्यमित्यर्थः ।

अत न च रात्रौ प्रेष्याहृतमिति गौतमवचनमपि दासीपरम् । तथा-रात्रौ रथ्याहृतमपि न भोज्यम् । अनुक्तप्रायश्चित्तेषु प्राणायामशतम् । गायत्र्यष्टसहस्रम्वा" । इति कालदुष्टान्यभक्ष्याणि ।

प्रोक्ष्यतेऽत्र विवेको वैज्ञानिकः कालदुष्टाभक्ष्याणां दिङ्मात्रम् ।

यथा,—कालदुष्टाभक्ष्यत्वेन धर्मशास्त्राभिमतवस्तूनामधःस्थायूर्व्वेदीय-प्रमाणनिबद्धनिर्द्दिष्टापथ्यद्रव्यव्रातसमकक्षतयावश्यमेव सम्भवेद्रोगोत्पत्तिरित्या-शङ्कया धर्मशास्त्रकारैर्निषिद्धकालदुष्टाभक्ष्यद्रव्यजातमितानुमितमस्माभिः । द्रढयति विवेचनमेतदधःस्थायुर्वेदीयप्रमाणजालम् ।

यथा भावप्रकाशे:,—

"न रात्रौ दधि भुञ्जीत न च निर्लवणं दधि ।
नामुद्गसूपं नाक्षौद्रं न चाप्यघृतशर्करम्" ॥ इति ।

तथा,—

शुष्कमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट्॥
तरुणं नूतनं बालो विवस्वान् दधि नूतं च" ॥

तथा च सुश्रुतः,—

"अप्राप्तकाले भुञ्जानः शरीरे ह्यलघौ नरः।
तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति॥
अतीतकाले भुञ्जानो वायुनोपहतेऽनले।
कृच्छ्राद्विपच्यते भुक्तं द्वितीयं च न काङ्क्षति॥
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत्।
हेमन्ते निचितः श्लेष्मा शैत्याच्छीतं शरीरिणाम्॥
औष्ण्याद्वसन्ते कुपितः कुरुते च गदान् बहून्।
ततोऽम्लमधुरस्निग्धलवणानि गुरूणि च॥
वर्जयेद्वमनादीनि कर्माण्यपि च कारयेत्।
वर्जयेन्मधुरस्निग्धदिवास्वप्नगुरुद्रवान्" ॥

वसन्त इत्युक्तम्,—

"व्यायाममुष्णमायासं मैथुनं चातिशोषि च।
रसांश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्जयेत्"॥ इत्यादि।

साकं निरुक्तकालदुष्टाभक्ष्यद्रव्यैरायुर्वेदीयप्रमाणोक्ताश्रितवस्तूनां संपूर्णतः-सताऽपि समत्वाभावे बहुलांशेन दृष्टतुल्यतया न कापि विप्रतिपत्तिरिति-बोध्यम्।

अन्यच्च—चतुर्थ्यष्टम्येकादश्यादितिथिषु सूर्याचन्द्रमसोर्गतिवैलक्षण्याद्रस-वृद्धेर्दृष्टिविषयतया तत्र तत्र लशुनस्यायुर्वेदमसम्मतत्वाद्ग्रदशादिभक्षणं निषिद्ध-

महर्षिभिः पूज्यपादैस्तत्तु नाममीचीनमेव। अतो धर्मशास्त्रोक्तसकल-विषयजातं प्रायशो विज्ञानानुगतमेवेतावगन्तव्यम्।

अपरञ्च—भक्षितधर्मशास्त्रनिषिद्धकालदुष्टाभक्ष्यद्रव्याणां निरुक्तप्रमाण-जालादवगतरोगात्मकफलजनकतया कदापि न भक्ष्याणि तानीति प्रेक्षावतां-राद्धान्तः।

समूहनीयमन्येषां वैज्ञानिकविवेचनं बुद्धिमद्भिरिति कालदुष्टाभक्ष्य-वैज्ञानिकविवेकः।

अथाश्रयदुष्टानि ; यथा—

तानि यद्यपि भविष्ये विशिष्य नोक्तानि, तथापि जातिक्रियारसामिध्य-संसर्गभावस्वभावदोषरहितानि द्रव्यस्वामिदोषेण दुष्टानि तानि गृह्यन्ते।

आपस्तम्बः—त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन भोक्तव्यम्। प्रकृतया ब्राह्मणस्य भोक्तव्यं ; कारणादभोज्यम्। यत्राप्रायश्चित्तं कर्म-सेवते ; प्रकृतया भोज्यमितरस्य व्याख्या यत्राप्रायश्चित्तं कर्म प्रायश्चित्तव्यतिरिक्तं-नित्यनैमित्तिकं कर्म सेवते।

ब्राह्मे:—"राज्ञां पर्वणि वैश्यानामश्नीयान्मङ्गले गवामि"ति राजान्न-भोजनानुज्ञा पर्वविषया वैश्यस्य गोमङ्गलविषया।

पुनर्ब्राह्मे:—"गोभूमिरत्नलाभार्थं समुद्रस्य गृहे सदेति"-प्रीतिदायेन-गवादिलाभकामनया शूद्रस्यान्नं ग्राह्यम्।

पक्वमत्रामान्नम्।

मनुः,—

"नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः।
आददीताममेवास्मादवृत्तावेकरात्रकम्" ॥

अश्राद्धिनो नित्यश्राद्धमकुर्वतः अश्राद्धिन इत्युद्देश्यविशेषणत्वादविव-क्षितम्। श्राद्धिनोऽपि पक्वान्नमनापद्यग्राह्यमेव। अवृत्तावापदि।

यमहारीतजमदग्निपैठीनसयः,—

"ब्राह्मणान्नं क्षत्रियान्नं वैश्यान्नं शौद्रमेव च।
तां तां योनिमवाप्नोति भुक्तान्नं यस्य वै मृतः" ॥

शूद्रान्नं भुक्त्वा मरणे हारीतः,—

"स वै खरत्वमुष्ट्रत्वमवश्यत्वं चाधिगच्छति"।

वशिष्ठः,—

"शूद्रान्नपरिपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः।
जुह्वन् वापि जपन् वापि गतिं पूर्वां न गच्छति ॥
शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति।
यस्यान्नं तस्य ते पुत्रा न च स्वर्गार्हको भवेत्" ॥

अङ्गिराः,—

"षण्मासान् यो द्विजो भुंक्ते शूद्रस्यान्नं विगर्हितम्।
स च जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते" ॥

तस्मात् प्रशस्तशूद्रस्याप्यामान्नभोजनं मरणसन्निधाने वर्ज्यम्। एवं-षण्मासपर्य्यन्तं भोजनमपि।

हारीतः,—

"कन्दुपक्वं स्नेहपक्वं पायसं दधिसक्तवः।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्" ॥

कन्दुपदेनाग्निस्थानवाचिनाऽग्निर्लक्ष्यते। तेन बाह्यजलनिरपेक्षाग्नि-मात्रेण पक्वं लाजादि कन्दुपक्वमुच्यते; एवं बाह्यजलनैरपेक्षेण केवलघृतादि-पक्वं स्नेहपक्वमुच्यते। पायसं पयोविकारो न परमान्नम्।

तथाचाङ्गिराः,—

"गोरसञ्चैव सक्तूंश्च तैलं पिण्याकमेव च।
अपूपान् भक्षयेच्छूद्राद्यच्चान्यत् पयसा कृतम्"।

अपूपा गोधूमविकाराः ; एवं शास्त्रसत्वेऽपि गोधूमविकारस्य जल-निरपेक्षगोरसमात्रपक्कस्य कन्दुपक्कवच्छूद्रगृहादग्राह्यत्वोक्तावपि समाचार-विरोधादुवर्ज्जनं ; तद्भक्षणे विगानञ्च, एवं लवणबाह्यजलनिरपेक्षस्नेहपक्कमूल-कन्दादेरपि भक्षणे अस्मद्देशे विगानं स्नेहपक्कफलमूलकन्दादौ बाह्यजला-भावेऽपि पाककाले तन्निःसृतजलस्य सत्वात्, अन्येषां गोरसादीनां भक्षणं-निर्विगानमेव ।

एवं च—

"गोरसे कन्दुशालायां तैलयन्त्रेषु यन्त्रयोः ।
अमीमांसानि शौचानि स्त्रीषु राजकुलेषु च" ॥

इति शातातपवचनेऽशौचापवादेऽपि यथाचारं गृह्यते । मरीचादीनां-छिन्नानां अपि शूद्रस्पर्शेऽपि परिग्रहस्य समाचारैकमूलपाकदोषरहितत्वे-ऽप्यसत्वात् मरणकाले वर्जनम् । तस्मात् छिन्नतण्डुलादीनां मरणकाले-वर्जनम् ।

यथा:,—

"यतस्ततोऽप्यापः शुद्धिं यान्ति नदीं गताः ।
शूद्राद्विप्रगृहेऽप्यन्नं प्रविष्टञ्च तथा शुचि" ॥

इत्यङ्गिरोवचनं शूद्रात्प्रतिग्रहलब्धविषयम् ।

तथाच पराशरः,—

"तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजाति-करसंलग्नं सर्वं तन्न विरुध्यते" ॥

यमः—यथा,—

"यथा जलं निर्गमनेऽप्यपेयं नदीं गतं तत्पुनरेव पेयम् ।
तथान्नपानं विधिपूर्वमागतं द्विजातिहस्तान्तरितं विशुद्धम्" ॥

एतेन ब्राह्मणं भोजयामीति बुद्धा यदि शूद्र-आमान्नं ददाति, तद्-

यदि पक्का ब्राह्मणो भुंक्ते तदा शूद्रान्नभोजनं, तदेव मरणकाले वर्ज्यं, आमद्रव्यविधिना चेद्ददाति तद्यदि पक्का भुंक्ते तदा प्रतिग्रहदोष एव न तु-शूद्रान्नभोजित्वदोषः ।

प्रतिग्रहलब्धं भुक्त्वा मरणेऽपि न शूद्रजन्मलाभ इति लक्ष्मीधरस्वरसः ।

"यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः" ॥

तदन्नाशने तु,—"प्राणायामं त्रिरभ्यस्य घृतं प्राश्य विशुध्यतीति" च । तथा सूतकाद्यशौचान्नादि नाश्नीयात् ।

अङ्गिराः—

"अन्त्यावसायिनामन्नमश्नीयाद्यदि मानवः ।
यतिचान्द्रायणं कुर्य्याच्चान्द्रायणमथापि वा ॥
चण्डालस्तक्षवः क्षत्ता सूतवैदेहिकौ तथा ।
मागधीयोगवौ चैव सर्वेऽप्यन्त्यावसायिनः" ॥

विष्णुः,—

"चण्डालान्नं भुक्त्वा त्रिरात्रं मिद्धं भुक्त्वा पराकम्" ।

वशिष्ठे पुनरुपनयनमधिकम् ।

पैठीनसिः—परिवित्ति-परिविदानविद्धप्रजनानां रुधिरमन्नं अभोज्य-मित्यर्थः ।

बौधायनः—

"अवलिप्तस्य मूर्खस्य दुर्वृत्तस्य च दुर्मतेः ।
अन्नमश्रद्दधानस्य यो भुंक्ते ब्रह्महा तु सः" ॥

शङ्खलिखितौ,—

"परपाकनिवृत्तस्य परपाकरतस्य च ।
अपरस्य च भुक्त्वाऽन्नं द्विजश्चान्द्रायणं चरेत् ॥

गृही चाग्निं समारोप्य पञ्चयज्ञान्न कारयेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ॥
पञ्चयज्ञान् स्वयं कृत्वा परान्नमुपजीवति ।
सततं प्रातरुत्थाय परपाकरतस्तु सः ॥
गृहस्थधर्मवृत्तोऽसौ ददाति परिवर्जितः ।
ऋषिभिर्द्धर्मतत्वज्ञैरपरः परिकीर्त्तितः" ॥

याज्ञवल्क्यः,—

"परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।

तत्रापवादः,—

"गुर्व्वन्नं मातुलान्नञ्च श्वशुरान्नं तथैव च ।
पितुः पुत्रस्य चैकान्नं न परान्नमिति स्मृतम् ॥

यत्तु बौधायनः,—

"श्वशुरान्नं तु यो भुंक्ते स भुंक्ते पृथिवीमलम्" ।

तद्वर्ज्जितश्वशुरधनोपजीवनपरम् । "श्वशुरान्नस्य वृत्तिः स्यादविज्ञस्तेन्यं-करोति य" इति महाभारतवचनात् । एतेनासक्तिर्न कार्य्या ।

याज्ञवल्क्यः:—

"यतिश्चः ब्रह्मचारी च पक्वान्नं स्वामिनावुभौ ।
तयोरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्" ॥

भरद्वाजः,—

"पक्षे वा यदि वा मासे यस्य नाश्नन्ति देवताः ।
भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत्" ॥

आदित्यपुराणे ;—

"विष्णुं जामातरं मन्ये तस्य मन्युं न कारयेत् ।
अप्रजायां दुहितरि नाश्नीयात्तस्य वै गृहे ॥
ब्राह्मदेये विशेषेण दैवतोढे सदैव हि ।
गान्धर्वे राक्षसे चैव कुर्य्याच्चैव समागमम्" ॥

अत्र दैवब्राह्मविधिना दत्तायाः सुतायाः श्वशुरसम्बन्धेन भर्तृसम्बन्धेन-वा यद्गृहं तत्र तत्स्वामिकस्यान्नस्य भोजने महान् दोषः ; आर्षादिविवाहेऽपीयान् दोषः ; गान्धर्वराक्षसयोर्न दोषः ; दुहितरि सुतायां तद्गृहे भोजनेन दोषः ; प्रजापदस्यापत्यमात्रवाचकत्वेऽपि यजमानप्रजासंख्यत्र्यम्बकहविःकरम्भपात्रादौ पुत्रापत्यग्रहणादिहापि तद्ग्रहणं ; दुहितरि सत्यां जामातृनाशेऽपि पितुर्गृहे न भोजनं, तद्गृहे परकीयान्नभोजने न दोषः ।

आपस्तम्बः,—

"बलाद्दासीकृता ये च म्लेच्छचण्डालदस्युभिः ।
अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ॥
उच्छिष्टमार्जनञ्चैव तथोच्छिष्टस्य भोजनम् ।
खरोष्ट्रविड्वराहाणां आमिषस्य च भोजनम् ॥
तत्-स्त्रीणाञ्च तथा सङ्गस्ताभिश्च सह भोजनम् ।
मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् ॥
चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथवा भवेत् ।
चान्द्रायणं पराकञ्च चरेत्सम्वत्सरोषितः ॥
सम्वत्सरोषिते शूद्रे मासार्द्धं यावकं पिबेत् ।
मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति ॥
ऊर्द्धं सम्वत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः ।
सम्वत्सरैस्त्रिभिश्चैव तद्भावं सोऽधिगच्छति" ॥

अनुक्तप्रायश्चित्तनिराचारनिषिद्धाचारिग्टहान्नभोजने,
षट्त्रिंशन्मते,—

"निराचारस्य विप्रस्य निषिद्धाचरणस्य च ।
अन्नं भुक्ता द्विजः कुर्य्याद्दिनमेकमभोजनम्" ॥

इत्याश्रयभूताख्यप्रतिग्रहीतृदोषदुष्टानि ।

वैज्ञानिकविवेचनमत्राश्रयभूताख्यप्रतिग्रहीतृदोषदुष्टानाम्—

यद्यत्स्वभावकानां यद्यज्जातीयानां यद्यदन्नादिकं ; तत्तदन्नादिभुजां तत्तत्स्वभावं तत्तज्जातीयतां च जनयति, तत्तदस्माकमिति वैज्ञानिकदृष्ट्या धर्मशास्त्रकारैः शूद्रादीनामामान्नादेस्तथाविगर्हिताचारिश्वशुरादेरन्नादिकस्य च द्विजातित्रयकर्त्तृकाशनं यन्निषिद्धं ; तत्तु सुसमीचीनमेव । निरुक्तान्नादेरस्यचाश्चान्तर्गततया दोषाधायकत्वमित्यायुर्वेदे प्रदर्शितं दिङ्मात्रम् ।

अन्यच्च :—निरुक्ताश्रयदुष्टाभक्ष्यद्रव्याणामन्तरे केषामात्मनिर्भरतावलम्बनार्थं तथा केषां स्वस्वाधीनतापरिहारार्थं चाभक्ष्यत्वमापादितं पूर्वाचार्य्यैरित्यनुमेयं, ग्रन्थबाहुल्यभिया स्थूलतः प्रदर्शितमिदं साधारण्येन, किन्तु समूह्यो वैज्ञानिकविवेकः पण्डितवर्य्यैः प्रत्येकस्य । इत्याश्रयदुष्टाभक्ष्यवैज्ञानिकविवेकः ।

अथ संसर्गदुष्टानि ।

भविष्ये,—

"सुरालशुनसंसृष्टं पेयूषादिसमन्वितम् ।
संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत्" ॥

मद्यभाण्डस्थितगवोपहृतजलादि च संसर्गदुष्टं ।

पराशरः,—

"भाण्डस्थितमभोज्यानामपः पीत्वा पयो दधि ।
ब्रह्मकूर्चोपवासश्च याजंश कर्मास्य निष्कृतिः ।
शूद्रस्य नोपवासस्तु दिनेनैकेन शुध्यति" ॥

स्मृत्यन्तरे,—

"नारिकेलोदकं कांस्ये मधु ताम्रे च संस्थितम्।
गोरसं ताम्रपात्रस्थं मद्यतुल्यं घृतं विना॥

सम्वर्त्तः,—

"शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति"॥

विष्णुः,—

"मृद्वारिकुसुमाद्यैश्च फलकन्देन्दमूलकान्।
विण्मूत्रदूषितान् भुक्त्वा कृच्छ्रपादं समाचरेत्॥
सन्निकृष्टेऽर्द्धमेव स्यात् कृच्छ्रं स्यात्तद्विशोधनम्"।

अत्र सर्व्वत्र अमेध्यावयवस्य साक्षात् प्रत्यभिज्ञाने तद्भक्षणे प्रायश्चित्तं। अवयवप्रवेशशङ्कायामुक्तानि प्रायश्चित्तानि। इति संसर्गदुष्टान्नाभक्ष्याणि।

अस्यात्र किमिदं वैज्ञानिकं विवेचनमित्याशङ्कायामुच्यते;—निरुक्त-संसर्गदुष्टाभक्ष्यद्रव्याणामभ्यन्तरे केषामपि परस्परसंसर्गेण निम्नस्थायुर्वेदीय-प्रमाणानामुपलक्षणविधया दोषजनकताज्ञापकत्वाद्यदभक्ष्यत्वं निर्णीतमेषां;-तत्तु सुसङ्गतमेव।

प्रमाणं यथायुर्व्वेदे—

"कांस्यस्थं च हविर्दशाहमुषितं मद्यादिवरुण्प्रद"मित्यादि।

तथाच, सुश्रुते—अतः कर्मविरुद्धान् वक्ष्यामः;—

"कांस्यभाजने दशरात्रपर्युषितं सर्पिर्नाश्नीयादिति"।

तथा—

स्वास्थ्यविधानाय किमात्मकेन पात्रेण द्रव्यं किमात्मकं देयं तदाह-सुश्रुतः,—

"वक्ष्याम्यतः परं कृत्स्नमाहारस्यापि कल्पनाम्।
घृतं कार्ष्णायसे देयं पेया देया तु राजते॥

फलानि सर्वभक्ष्यांश्च प्रदद्याद्वैदलेषु च ।
परिशुष्कप्रदग्धानि सौवर्णेषु प्रकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव राजतेष्वपहारयेत् ।
खट्टराणि खड्डांश्चैव सर्वं शैलेषु दापयेत् ॥
दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः" । इति ।

घृतादिद्रव्यपरिवेशेन प्रोक्तपात्रान्यथाचरणेन रोगोत्पत्तिसम्भावनया सुतरामुल्लिखितसंसर्गदुष्टाभक्ष्यवस्तूनामशनं दोषाधायकमिति निर्गलितार्थः ।

अन्यच्च,—प्रदर्शितं वैज्ञानिकविवरणं दिङ्मात्रं; अतो विवेचितान्यसंसर्गदुष्टाभक्ष्यद्रव्याणां समूहं पण्डितप्रवरैर्विज्ञानमूलकत्वमिति संसर्गदुष्टाभक्ष्यविवेको विज्ञानमूलकः ।

अथ रसदुष्टानि ।

भविष्ये,—

"रसदुष्टं विकारादि रसस्येति प्रकीर्त्तितम् ।
पायसक्षीरपूपादि तस्मिन्नेव दिने यथा" ॥

दिनान्तरितस्य कालस्य दुष्टत्वात्तस्मिन् दिने यदि द्रव्यान्तरायोगेनाम्लं भवति । तदा रसदुष्ट-मुच्यते । आदिपदेन गुड़युक्तदुग्धदध्यादिकं पर्य्युषितप्रपानकादिकं च रसदुष्टं । इदं सर्वं दिनान्तरितमेव दुष्टमिति समाचारः,- एवं शुक्तादिकं रसदुष्टं ।

इति रसदुष्टान्यभक्ष्याणि ।

किं तावदस्ति रसदुष्टाभक्ष्यद्रव्येषु विज्ञानवीजमित्याकांक्षयां विव्रियतेऽत्र तदेव संक्षेपतः ।

रसदुष्टाभक्ष्याणामायुर्वेदीयप्रमाणैः प्रदर्शितदोषजनकत्वेन तदभक्ष्यभक्षणनिरसने विशेषतो-विज्ञानानुसन्धानस्य निष्प्रयोजनकतया विहितोविरामोऽत्र ।

प्रमाणयति विवेचनमेतदायुर्वेदीयप्रमाणजातं। यथा,—

"व्याधिमिन्द्रियदौर्बल्यं मरणं चाधिगच्छति।
विरुद्धरसवीर्य्याणि भुञ्जानो नात्मवान् नरः॥
रसौ विरुद्धौ स्वाद्वम्लौ कट्वम्लौ रसपाकतः।
अम्लतिक्तौ कषायाम्लौ रसवीर्य्यविपाकतः॥
रक्षेदन्नं विषान्नित्यं तत्परीक्षोच्यते यथा।
म्रियन्ते मक्षिकाः स्पर्शादन्नं पर्य्युषितोपमम्" ॥

इत्यादिवहूनि विद्यन्ते प्रमाणानि, किन्तु ग्रन्थबाहुल्यभीत्या परित्यक्तानि-तान्येव।

अतो निरुक्ताभक्ष्यद्रव्याणामायुर्वेदनिषिद्धतया कदापि न भक्षणीयतार्थः। अन्यद्रूह्यं। इति रसदुष्टाभक्ष्यद्रव्यविज्ञानविवेकः।

अथ सुहृल्लेख्यापरनामकानि भावदुष्टानि।

भविष्ये,—

"विचिकित्सा तु हृदये यस्मिन्नन्ने प्रजायते"।

"सुहृल्लेख्यं तु विज्ञेयमिति"। विचिकित्सा संशयः। सा च त्रिविधा,—अभक्ष्यद्रव्यसादृश्येन यत्राभक्ष्यभ्रान्तिर्भवति, आहार्य्यारोपो वा तत्र संशय-हेतुसादृश्यसत्वात्संशयो भवति; अनाश्यसंशितं गृह्यते, यथा;—भेकादि-सदृशफलमूलादि; यथा पुरीषादिसदृशम्।

द्वितीयप्रकारम् :—अभक्ष्यसंसर्गसंशयः; काकाद्युपघातसंशयो वा स्व-स्वामिदोषसंशयो वा।

तृतीयप्रकारम् :—भक्षितेऽपि द्रव्ये भक्ष्यं वा भुक्तमभक्ष्यं वा भुक्तं इति-संशयः।

पराशरः,—

"वाग्दुष्टं भावदुष्टञ्च भोजने भावदूषितं।
भुक्त्वा तु ब्राह्मणः पश्चात्त्रिरात्रेणैव शुध्यति" ॥

वाग्दुष्टमिति वचमापि संशयजनकत्वात् सुहृल्लेख्यत्वेन संग्रहीतं,—सुहृमपि-यद्द्रव्यं यदि कश्चिद्वदतीदमभक्ष्यमिति ; तदा वाग्दुष्टमुच्यते ; वाग्दुष्टपदेन-माहृश्यातिरिक्तभक्ष्यसंशयहेतुमात्रं गृह्यते ।

वशिष्ठः,—

"शङ्कास्थाने समुत्पन्ने अभोज्यं भक्ष्यशङ्किते ।
आहारशुद्धिं वक्ष्यामि तां मे निगदतः शृणु ॥
अक्षारलवणामृक्षां पिबेद्ब्राह्मीं सुवर्चलाम् ।
त्रिरात्रं शङ्खपुष्पीं वा ब्राह्मणः पयसा सह ॥
पलाशपद्मपत्राणि कुशान् पत्रमुदुम्बरम् ।
क्वाथयित्वा पिबेदम्भस्त्रिरात्रेणैव शुध्यति ॥
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं वा जपेन्नित्यं महापातकनाशिनीम् ॥
सम्वत्सरस्यैकमपि चरेत्-कृच्छ्रं समाहितः ।
अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः" ॥

इति भावदुष्टान्यभक्ष्याणि ।

विवेचनमत्र विशद्यते वैज्ञानिकं साधारण्येन । निरुक्तभक्ष्यद्रव्यजातस्य-मानसिकसन्देहादिव्यापारोपन्यस्ततया मनसि मनागपि विकारापन्ने यदन्नादि-भक्षणं ; तदपि न पचति साध्विति वदति सुस्पष्टतः सुश्रुताद्यायुर्वेदीयप्रमाण-व्रातम् । अतः सुसङ्गतोऽयं भावदुष्टाभक्ष्यभक्षणनिषेधः ।

यथाह सुश्रुतोऽत्र,—

"शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ।
उक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥
शब्दरूपरसस्पर्शगन्धाश्चापि जुगुप्सिताः ।
अशुच्यन्नं तथा भुक्तमतिहास्यञ्च वामयेत्" ॥ इति ।

प्रमाणजातमेतत्कक्षीकरोति गीतवाक्यमपि, यथा,—

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय! तदा तद्भावभावितः" ॥

इत्युपलक्षणमेतत्। अन्यमन्यत्। इति भावदुष्टाभक्ष्यवस्तुजातविज्ञान-विवेकः।

अथ स्वभावदुष्टानि।

भविष्ये,—पूर्ववाक्यस्य शेषः; पुरीषन्तु स्वभावतः; पुरीषपदं शारीर-मलोपलक्षणम्।

मनुः—

"अज्ञानात्-प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः" ॥

विष्णुः—मलानां प्राशने चान्द्रायणं;

"वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविन्नखाः।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः ॥
मानुषास्थि शवं विष्ठां रेतो मूत्रार्त्तवं वसा।
स्वेदाश्रुदूषिका श्लेष्मा मद्यं चामेध्यमुच्यते" ॥

इत्यादिषु चान्द्रायणं पुनः संस्कारश्च; श्वविड्वराहखरश्येनकुक्कुटश्याम-भासवककाककङ्कमृगाणां मूत्रपुरीषप्राशने तप्तकृच्छ्रं; स्वभावदुष्टेषु छर्द्दनं-छर्दनासम्भवे च त्रिरात्रं सप्तरात्रं वा उपोष्य निःपुरीषाभावः कार्य्यः।

इति स्वभावदुष्टान्यभक्ष्याणि।

न तावदस्ति विशेषविवरणमापेक्षत्वमेतेषां प्रत्यक्षतो दृष्टफलकत्वाद्-विज्ञानविषये; अतः प्रमाणात्मकत्वेन मतान्यप्यायुर्वेदीयवचनजाते नोक्तोन्नितानि-तान्येव ग्रन्थकलेवरवृद्धिदृष्ट्या।

इति विज्ञानविवेकः स्वभावदुष्टाभक्ष्याणाम्।

अथाष्टविधाभक्ष्याणि ।

सुमन्तुः ;—लशुनपलाग्डुकुम्भीनवश्राद्धसूतिकामधुमांसमूत्ररेतोऽमेध्यभक्षणेषूपि सम्पातानवनयेदुपवासश्च ; एतान्येव व्याधितस्य भिषक्क्रियायामनिषिद्धानि भवन्ति ; यानि चान्यान्येवं प्रकाराणीति ।

अत्र यद्यपि सर्वत्र आत्मानं गोपायेदिति विधिनाऽनन्यौषधव्याधिनिवृत्त्यर्थं-विहितस्याप्यभक्ष्यस्याप्यौषधस्याग्नीषोमीयहिंसावन्निषेधविषयत्वायोगात् पृथग्-वचनमनर्थकं ।

तथापि,—

"कर्मणा येन केनापि मृदुना दारुणेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥
धर्मश्च प्रथमं तावत्-प्रायश्चित्तात्मको भवेत् ।
ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति" ॥

इति न्यायेन सर्वत्र आत्मानं गोपायेदित्यस्य न्यायप्राप्तानुवदात् ।

येषां व्याधिनाशप्राणात्ययादौ विशेषानुज्ञा नास्ति तेषामल्पदोषत्वं ;-यत्र विशेषानुज्ञा तत्र दोषलेशस्याभावान्न प्रायश्चित्तं; तत्रापि महापातक-हेतुसुरापानादेः प्राणात्ययादावपि त्याज्यतैव । न च यानि चान्यान्येवं-प्रकाराणीति सुमन्तुवचनात् सुरापानस्यापि व्याधितस्य भिषक्क्रियायां-निर्द्दोषता किं न स्यादिति वाच्यं ; एवंप्रकारशब्देन महापातकहेतुव्यति-रिक्ताभक्ष्याणामेवोक्तत्वात् , अन्यथा तद्वैयर्थ्यापत्तेः । इत्यष्टविधान्याभक्ष्याणि ।

अपिच :—निरुक्तविवेचनया सुरापानस्य भिषक्-क्रियायां निषिद्धत्वेऽपि-धर्मशास्त्रीयवचनान्तरैस्तथायुर्वेदीयप्रमाणैश्चाभ्यनुज्ञातत्वेन प्राणात्ययसम्भवा-दविगीतमेव, किञ्च द्रव्याणामभक्ष्याणां पार्थक्ये सत्यपि विवेचित-ऽस्तु तेषां दोषतारतम्यविवेकाय पुनः स्थूलतः समावेशोऽनुष्ठितः सर्वेषामेक-त्रैताशयः ।

अन्यच्च :—साकं स्वास्थ्यविज्ञानशास्त्रेणायुर्वेदीयप्रमाणव्रातस्य प्रदर्शित-तुल्यतया वेदादितन्त्रान्तप्रमाणनिवहस्यापि स्थालीपुलाकन्यायेन सृष्टादि

सकलविषयकविज्ञानशास्त्रेष्वास्ति सादृश्यमवश्यमेवेति धिया वेदादिशास्त्रोक्त-सकलविषयजालं नूनमवलम्बनीयमस्माभिर्निर्विवादं ।

अपरं च :—सुसमये तु प्रोक्ताष्टविधाभक्ष्यद्रव्याशने सति निषेधेऽप्यापदि-देशकालपात्रव्यवस्थया विलासितामन्तरा भारतीयार्य्यनिवहस्य विद्याध्यय-नादिहितजातसाधनाय सतरासुयोगे वारिधिपोतयात्रायां तथा विदेशावस्था-नानिच्छसि च प्राणात्ययसम्भावनामन्तरेण गोमांसादिप्रशस्ताभक्ष्यवस्तुजाल-भक्षणमपहायान्याभक्ष्यद्रव्याशनं न पातित्यापादकमिताम्मिन्नवसरे भारतीय-धर्मशास्त्रकारैरभिहितमेकमत्येन । किन्तु सति सम्पादिते स्वाभिलषित-कार्य्यनिकरेऽनन्तरं स्वकर्त्तृकस्वदेशप्रत्यावर्त्तनमनुष्ठितवति तस्मिन् बहुकाला-वस्थायिविपत्समयाभ्यन्तरे समुपस्थितस्वल्पसमयव्याप्यापदतिवाहनार्थमनन्तर-भाविप्रायश्चित्तविधिनाऽनुष्ठेयं तत्प्रायश्चित्तमेव । तत्प्रायश्चित्तविधिर्लक्ष्य:-प्रायश्चित्तप्रकरणे । विपत्कालानुष्ठानविवेचनं पूर्वतोऽस्य समुल्लिखितं-सप्रमाणम् । इति विवेचनमष्टविधाभक्ष्यद्रव्याणाम् ।

अथेदानीं प्रसङ्गत: प्राप्तभक्ष्यद्रव्यविवेचनमारभ्यतेऽधस्तात् ।

भक्षणीयद्रव्याणां सात्त्विकादिभेदेन त्रिविधत्वं प्रदर्शितमादित: । सम्प्रति तेषामन्ततोऽप्यवहरन्त: केषां भक्ष्यत्वं केषां वा समयविशेषभक्ष्यत्वं केषां-वा हविष्यार्हभक्ष्यत्वं; केषां वाऽमिषभक्ष्यद्रव्यत्वं निरूपितं शास्त्रकारै: तान्येव-यथाक्रमं प्रकाश्यन्तेऽत्र ।

यथा—क्रमप्राप्तप्रत्यक्षभक्षणीयद्रव्याणि लिख्यन्ते भोजनविध्यादिसहितानि-धर्मशास्त्रायुर्वेदप्रमाणव्रातप्रदर्शनद्वारेण ।

भक्ष्यद्रव्यजातस्य विवेचनपूर्वकाशने यथा प्रमाणन्याह चरक: ;—

"अजातानामनुत्पत्तौ जातानां विनिवृत्तये ।
रोगाणां यो विधिर्दृष्ट: सुखार्थी तं समाचरेत् ॥
सुखार्था: सर्वभूतानां मता: सर्वा: प्रवृत्तय: ।
हितमेवानुरुध्यन्ते प्रसमीक्ष्य परीक्षका: ॥

रजोमोहावृतात्मानः प्रियमेव तु लौकिकाः ।
श्रुतं बुद्धिः स्मृतिर्दार्ढ्यं धृतिर्हि तन्निषेवणम् ॥
वाग्विशुद्धिः शमो धैर्य्यमाश्रयन्ति परीक्षकम् ।
लौकिकं नाश्रयन्त्येते गुणा मोहतमःश्रितम् ॥
तन्मूला बहवश्चैव रोगाः शारीरमानसाः ।
न रागान्नाप्यविज्ञानादाहारमुपयोजयेत् ॥
परीक्ष्य हितमश्नीयाद्देहो ह्याहारसम्भवः ।
परिहार्य्याण्यपथ्यानि सदा परिहरन्नरः ॥
भवत्यनृणतां प्राप्तः साधूनामिह पण्डितः ।
आहारप्रभवं वस्तु रोगाश्चाहारसम्भवाः ।
हिताहितविशेषाश्च विशेषः सुखदुःखयोः" ॥ इत्यादि

यद्यद्द्रव्यं प्रत्यहभक्षणीयं ; तत्तद्विवृतं यथा भावप्रकाशे,—

"भुञ्जीत मधुरप्रायं स्निग्धं कामहितं मतम्" । इति ।

तथाचाह चरकः,—

"एवं वादिनं च भगवन्तमात्रेयमग्निवेश उवाच ;—

भगवन्नेतदेवमुपदिष्टं भूयिष्ठकल्पाः सर्वभिषजो विज्ञास्यन्ति ।

तमुवाच भगवानात्रेयः,—

येषां विदितमाहारतत्त्वमग्निवेश ! गुणतो द्रव्यतः कर्मतः सर्वावयवतो-मात्रादयो भावास्त एतदेवमुपदिष्टं विज्ञातुमुत्सहेरन् ; यथा तु खल्वेतदुपदिष्टं-भूयिष्ठकल्पा सर्वभिषजो विज्ञास्यन्ति तथैतदुपदेक्ष्यामः । मात्रादीन् भावानु-दाहरमस्तेषां हि बहुविधविकल्पा भवन्ति । आहारविधिविशेषांस्तु खलु लक्षण-तश्चावयवतश्चानुव्याख्यास्यामः । आहारत्वमाहारस्यैकविधमर्थाभेदात् । स-पुनर्द्वियोनिः स्थावरजङ्गमात्मकत्वात् ।

द्विविध: प्रभवो हिताहितोदर्कविशेषात्। चतुर्विधोपयोग: पानाशन-भक्ष्यलेह्योपयोगात्। षड़ास्वादो रसभेदत: षड़्विधत्वात्।

विंशतिगुणो-गुरुलघुशीतोष्णस्निग्धरुक्षमन्दतीक्ष्णस्थिरास्थिरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवानुगमात्। अपरिसंख्येयविकल्पो द्रव्यसंयोगि करणबाहुल्यात्तस्य ये ये विकारावयवा-भूयिष्ठमुपयुज्यन्ते।

भूयिष्ठकल्पानाञ्च मनुष्याणां प्रकृत्यैवं हिततमांश्च तांस्तान् यथावदनुव्याख्यास्याम:।

तद्यथा,—लोहितशालय: शूकधान्यानां पथ्यतमत्वे श्रेष्ठतमा भवन्ति। मुद्गा: शमीधान्यानां। आन्तरीक्षमुदकानां। सैन्धवं लवणानां, जीवन्तीशाकं शाकानां। मांसमत्स्याशिनां पक्षे ऐणेयं, रोहितो मत्स्यानां, सर्पि:-सर्पिषां, गोक्षीरं क्षीराणां; तिलतैलं स्थावरस्नेहानां, शृङ्गवेरं कन्दानां,-मृद्विका फलानां, शर्करेक्षुविकाराणां, इति प्रकृत्यैव हिततमानामाहारविकाराणां प्राधान्यतो द्रव्याणि व्याख्यातानि भवन्ति। अतो भूय: कर्मौषधानां च प्राधान्यत: सानुबन्धानि द्रव्याण्यनुव्याख्यास्याम:। तद्यथा,—"अन्नं वृत्तिकराणां, श्रेष्ठमुदकमाश्वासकराणां, क्षीरं जीवनीयानां, लवणमन्नद्रव्यरुचिकराणां, अम्लं हृद्यानाम्"। इति।

यथा,—रघुनन्दनोद्धृतछन्दोगपरिशिष्टादिप्रमाणजातं भोज्यविध्यादिसहितभोजनीयद्रव्यविषये,—"मुनिभिर्द्धिरशनमुक्तं विप्राणां मर्त्त्यवासिनां नित्यम्। अहनि च तमस्विन्यां सार्द्धप्रहरयामान्त:।

अहनि अचिरोदितास्तमितसूर्य्यान्तरदिनमात्रे।

तत्राऽप्यायुर्वेदीये विशेष:,—

"याममध्ये न भोक्तव्यं त्रियामं तु न लङ्घयेत्।
याममध्ये रसस्तिष्ठेत्त्रियामे तु रसक्षय:॥

प्रागुक्तदक्षवचनात्तत्रापि पञ्चमयामार्द्धं मुख्यकाल:।

तथाच विष्णु:,—

"प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही।

अन्नं प्रशस्तं पथ्यञ्च प्रोक्षितं प्रोक्षणोदकैः ॥
न कुत्सिताहृतं नैव जुगुप्सावदसंस्कृतम्” ।

तथा,—विभिन्नर्त्तुमध्ये भिन्नभिन्नद्रव्याशनशयनादिकं प्रतिपादयन्त्या-युर्वेदीयप्रमाणानि रघुनन्दनोद्धृतानि,—

यथा,—

“मासैर्द्विसंख्यैर्मार्गाद्यैः क्रमात्-षड्ऋतवः स्मृताः ।
हेमन्ते कुपितावाययोः स्वाद्वम्ललवणान्रसान् ॥
गोधूमपिष्टमांसेक्षुक्षीरोत्थविकृतिं भजेत् ।
नवमन्नं रसान् तैलं शौचे तप्तोदकं नरः ॥
शक्त्यार्ककिरणान् स्वेदं पादत्राणञ्च सर्वदा ।
उष्णस्वभावैर्लघुभिः प्राकृतः शयनं भजेत् ॥
अयमेव विधिः कार्य्यः शिशिरेऽपि विशेषतः ।
वसन्ते कुपितः श्लेष्मा ह्यग्निमान्द्यं करोत्यतः ॥
तीक्ष्णं वमननस्यादिकवलग्रहमञ्जनम् ।
व्यायामोद्वर्त्तनं धूमं शौचे तप्तोदकं भजेत् ॥
पुराणयवगोधूमक्षौद्रजाङ्गलमांसभुक् ।
गुरूष्णस्निग्धमधुरं दिवास्वप्नञ्च वर्ज्जयेत् ॥
स्वादु शीतं द्रवं स्निग्धमनुपानं सशर्करम् ।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥
मध्याह्ने शीतले स्वपन्निशि वातहिमाश्रिते ।
लवणाम्लकटूष्णानि व्यायामं चात्र वर्जयेत् ॥
वर्षास्वग्निबले क्षीणे कुप्यन्ते पवनादयः ।
अग्नेः सम्बन्धकं द्रव्यं जीर्णधान्यं रसान् लघु ॥

जाङ्गलं पिशितं मुद्गान् दिव्यं कौपं जलं शुचि।
वृत्ताम्लवणं स्नेहं सशुष्कं क्षौद्रमेव च॥
नदीजलौदनल्वङ्कः स्वप्रायासातपांस्त्यजेत्।
शरदि कुपिते पित्ते विरेकं रक्तमोचणम्॥
स्वादुतिक्तकषायेक्षुशालिमुद्गसरोजलम्।
तुषारक्षारसौहित्य दधितैलरसातपान्॥
अम्लतीक्ष्णदिवास्वप्नप्राचीवातान् विवर्जयेत्।
नित्यं सर्वरसास्वादः स्वस्वाधिक्यमृतावृतौ॥
ऋतूनां शेषस्तूप्राहे सेवितव्यः पराक्रमः।
तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येन प्रवर्त्तते॥
अजातानां विकाराणामनुत्पत्तिकरं च यत्"।

इत्यादि प्रचुरप्रमाणानि सन्त्यपि ग्रन्थबाहुल्यभिया नोत्तोलितानि।
तथाच गादाधरीयाचारसारे भोज्यक्रमः।

देवलः,—

"स्नात्वा प्रक्षाल्य पादौ च स्रगन्धालंकृतः शुचिः।
पञ्चयज्ञावशिष्टं तु यो भुंक्ते सोऽमृताशनः"॥

यथाह मनुः,—

"पूजयेदशनं नित्यमद्याच्चैनमकुत्सयन्।
दृष्ट्वा हृष्येत्-प्रसीदेच्च अभिनन्देच्च सर्वशः॥

पूजनं नमस्कारः; अकुत्सनमनिन्दा; हर्षः कायिकः; प्रसादो मानसः; अभिनन्दनं वचसा।

"अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः।
अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत्"॥ इत्यादि।

भवेत् सत्वरं जीर्णमन्नं मनःप्रसादजनकेन मिष्टान्नतत्तदनुष्ठानेनेत्याशयः ।

देवलः,—

"न भुञ्जीताघृतं नित्यं गृहस्थो भोजनं स्वकम् ।
पवित्रमथ हृद्यं च सर्पिराहुरघापहम्" ॥

"घृतहीनान्नभोजनं अरुचिकरं नायुष्करं चेत्यभिप्रायः ।
कामक्रोधलोभमोहानपहृत्य सर्वाङ्गुलिभिः—
शब्दमकुर्वन् प्राश्नीयान्न पिण्डशेषं पात्रामुत्सृजेत्" ।

तथा विष्णुपुराणे,—

"प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही ।
प्राङ्मुखोऽन्नानि भुञ्जीत पञ्चार्द्रो वाग्यतः शुचि" ॥

प्रशस्तरत्नानि गारुड़ादीनि ; पञ्चार्द्रः करचरणवदनार्द्रः ।
बौधायनः,—"संस्कृते शुचौ देशे ; संस्कृते वस्त्रादिना वेष्टिते इत्यर्थः" ।

तथा देवलः,—

"प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठाधिष्ठितः" ।
एतेन वस्त्रचर्माद्यासनान्तरनिवृत्तिः ॥

तथा ब्राह्मे,—

"चतुरस्रं त्रिकोणं वा वर्त्तुलं चार्द्धचन्द्रकम् ।
कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्" ॥ इति ।

तथाच ब्राह्मे,—

"सर्वाङ्गुलिभिश्चाश्नीयान्नावधूयेत्करं क्वचित् ।
कुर्य्यात्-क्षीरान्तमाहारं न तु पश्चात्-पिबेद्दधि ॥
जठरं पूरयेदर्द्धमन्नैर्भागं जलेन च ।
वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत्" ॥

विष्णुपुराणे,—

"अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकं ततः ॥
प्रागद्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः ।
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति ॥

तत्रैव द्रष्टव्यमेतद्विषयकविशेषविवरणम् ।

भोजननिषिद्ध—देशविषयकविवृतिस्तत्रैव ।

यथा—आपस्तम्बः—"न चार्वाग् भुञ्जीत तथा प्रासादे कृतभूमौ, प्रासादे· प्रासादोपरि ; कृतभूमौ पाषाणमय्यादौ ; मृत्क्षेपणकल्पितभूमौ वा" ।

तथा ब्राह्मे,—

"हस्त्यश्वरथयानोष्ट्रप्रासादस्थो न भक्षयेत् ।
श्मशानाभ्यन्तरगतो देवालयगतोऽपि वा ॥
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ।
नार्द्रवासा नार्द्रशिरा न वाऽयज्ञोपवीतवान् ॥
न प्रसारितपादस्तु पादारोपितपाणिमान् ।
न वा सक्थिकसंस्थश्च न च पर्य्यङ्किकास्थितः ॥
न वेष्टितशिराश्चापि नोत्सङ्गे कृतभोजनः ।
नैकवस्त्रो दुष्टमध्ये सोपानत्कः सपादुकः ॥
न चर्मोपरिसंस्थश्च चर्मवेष्टितपार्श्ववान्" ।

तथा विष्णुपुराणे,—

"न चासन्दीस्थिते पात्रे न चादेशे नरेश्वर !" ।

आसन्दी वेत्रादिनिर्मिता । अदेशे रथ्यादौ ।

विष्णुः—

"नाश्नीयाद्भार्य्यया सार्द्धं नाकाशे न तथोत्थितः।
बहूनां प्रेक्षमाणानां नैकस्मिन् बहवस्तथा॥
शून्यागारे वह्निगृहे देवागारे तथैव च"।

आकाशे अनावृतदेशे, एकस्मिन् प्रेक्षमाणे इत्यर्थः।

उशनाः,—

"खट्वारूढ़ो न भुञ्जीत न चोत्तानः कथञ्चन"।

तथा मनुः,—

"एकवस्त्रो न भुञ्जीत कवाटमपिधाय च।
भूमौ चानन्तरीकृत्य भिन्नपात्रे च नाशनम्"॥

भूमौ पात्राभावे केवलभूमौ आसनाभावे वा।

तथा :—

"नाहारमुपयुञ्जीत तिष्ठन् गच्छन् हसन्नपि।
स्वग्रामे ग्रामतो वापि सन्निकृष्टे मृते सति॥
न भुञ्जीताशनं धीमान्नाधर्म्यं शोककारणात्"।

स्वग्रामे स्वग्रामीणे, ग्रामतः सन्निकृष्टे सन्निकृष्टग्रामीणे, शोककारणात्-शोकेन मनसि कलुषिते सति न भवति जीर्णमन्नादिकमिति शोककारणपद-निर्द्देशस्य सार्थक्यम्।

तथाच याज्ञवल्क्यः,—

"न भार्य्यादर्शनेऽश्नीयान्नैनां वीक्षेत चाश्नतीम्"।

तथाच श्रुतिः,—"तस्माद्‌जायाया अन्ते नाश्नीयादवीर्य्यवान् अस्य पुत्रो-जायते।

"वीर्य्यवन्तमुदसा वा (मुदयासा) जनयन्ति यस्या अन्ते नाश्नातीति। तेन विष्णुस्मृतौ भार्य्यया सार्द्धं सन्निधावित्यर्थः। एवं "ब्राह्मण्या भार्य्यया सार्द्ध-

क्वचिद्भुञ्जीत चाध्वनीति" ब्राह्मवचनमपि सन्निधिपरं न त्वेकत्र भोजनपरम्। केवलं तत्र विवाहकालविषयेऽपवादमाह अङ्गिराः,—

"ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वापि कर्हिचित्।
न तत्र दोषं मन्यन्ते सर्वे एव मनीषिणः" ॥

विष्णुः—

"न गोब्राह्मणोपरोधेऽश्नीयान्न राजव्यसने"।

यमः—

"अश्नाति यो भृत्यजनस्य मध्ये मृष्टान्नमेको रसगृध्नुबुद्धिः।
दीनैः कटाक्षैरभिवीक्षमाणोऽव्यक्तं विषं हालहलं स भुंक्ते" ॥

न क्रुद्धो नान्यमना नाभिभाषमाणोऽश्नीयात्। न शिशूनभक्षयन्नातप्रदाय-प्रेक्षमाणेभ्योऽपीत्यर्थः।

ब्राह्मे,—

"अप्येकपंक्त्या नाश्नीयात्-संवृत्तः स्वजनैरपि।
भस्मस्तम्भजलद्वारमार्गैः पंक्तिश्च भेदयेत्" ॥

एवं रीतया कृते सत्यप्येवं शास्त्रादिष्टानुष्ठाने मनसो विकाराभावात्तदन्नं-न दोषधायकमित्यर्थः।

निषिद्धासनोपवेशनपूर्वकभोजनं तु दोषोत्पादकमिति प्रकटीकृतं तत्रैव।

देवलः,—

"न भिन्नासनगतो न शयनगतः"।

तथा च स्मृतिः,—

"लोहवद्धञ्च दग्धञ्च वर्ज्जयेदासनं बुधः"।

तथा,—

"अध्यास्य शयनं यानमासनं पादुके तथा।
पलाशस्य द्विजश्रेष्ठ! त्रिरात्रं तु व्रती भवेद्" ॥ इत्यादि।

निषिद्धपात्राधिकरणकात्रादिभोजनविषये कियत्परिमितप्रमाणजातस्याभक्ष्य-प्रकरणे प्रकटीकृततया नान्यत्प्रमाणव्रातं प्रयोजनाभावात् ग्रन्थातिप्राचुर्य्य-भयाच्च नोल्लोलितमत्र । चेद्-विशेषापेक्षणं द्रष्टव्यं तदा तज्जातं तत्रैव ।

निरुक्तकतिपयप्रमाणोक्तविषयाणां स्फुटतो दृष्टविज्ञानात्मकफलकतया-तथा शरीरविज्ञानरूपायुर्वेदीयनिम्नस्थप्रमाणजातपर्य्यालोचनेन च विधातव्यं-वैज्ञानिकालोचनमेतेषां कतिपयानां निगूढविज्ञानानां प्राज्ञैर्बुद्धिमद्भिः । ग्रन्थ-बाहुल्यभीतेर्नानुष्ठितं तदत्रैव ।

यथायुर्व्वेदप्रमाणजातमपि सहायीभवति निरुक्तप्रमाणव्रातस्य, तदधस्तात्-प्रकाश्यते । यथाह सुश्रुतः ;—

"अथाहारविधिं वत्स ! विस्तरेणाखिलं शृणु ।
आप्तान्वितमसङ्कीर्णं शुचिकार्य्यं महानसम् ॥
तत्राप्तैर्गुणसम्पन्नमन्नं भक्ष्यं सुसंस्कृतम् ।
शुचौ देशे सुसंगुप्तं समुपस्थापयेद् भिषक् ॥
विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः ।
सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् ॥
वक्ष्याम्यतः परं कृत्स्नामाहारस्योपकल्पनाम् ।
घृतं कार्ष्णायसे देयं पेया देया तु राजते ॥
फलानि सर्वभक्ष्यांश्च प्रदद्याद्वैदलेषु च ।
परिशुष्कप्रदग्धानि सौवर्णेषु प्रकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ।
खट्टाराणि खड़ांश्चैव सर्वान् शैलेषु दापयेत् ॥
दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः ।
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ॥

दद्याद्-वैदुर्य्यपात्रेषु रागषाड़वसट्टकान्।
पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे॥
सूपः सूपोदनं दद्यात्प्रदेशांश्च सुसंस्कृतान्।
फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च॥
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत्।
प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः॥
खड़ान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत्।
सर्वान् गुड़विकारांश्च रागषाड़वसट्टकान्॥
पुरस्तात्थापयेत्प्राज्ञो द्वयोरपि च मध्यतः।
एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम्॥
भोक्तारं विजने रम्ये निःसम्बाधे शुभे शुचौ।
सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत्॥
विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टैरसादिभिः।
मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम्॥
पूर्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ।
पश्चाच्छेषान्-रसान्-वैद्यो-भोजनेष्ववचारयेत्॥
आदौ फलानि भुञ्जीत दाड़िमादीनि बुद्धिमान्।
ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम्॥
घनं पूर्वं समश्नीयात्-केचिदाहुर्विपर्ययम्।
आदावन्ते च मध्ये च भोजनस्य तु शस्यते॥
निरत्ययं दोषहरं फलेष्वामलकं नृणाम्।
मृणालविसशालूककन्देक्षुप्रभृतीनि च॥

पूर्वं योजयानि भिषजो न तु भुंक्ते कथञ्चन।
सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः॥
काले सात्म्यं लघु स्निग्धं चिप्रमुष्णं द्रवोत्तरम्।
बुभुचितोऽन्नमश्नीयान्मात्रावद्विदितागमः॥
काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते।
लघु शीघ्रं व्रजेत्-पाकं स्निग्धोष्णं बलवह्निदम्॥
चिप्रं भुक्तं समं पाकं यातयदोषं द्रवोत्तरम्।
सुखं जीर्य्यति मात्रावद्धातुसाम्यं करोति च॥
अतोवायतयामास्तु चपा येष्वृतुषु स्मृताः।
तेषु तत्प्रत्यनीकाढ्य भुञ्जीत प्रातरेव तु॥
येषु चापि भवेयुश्च दिवसा भृशमायताः।
तेषु तत्कालविहित-मपराह्ने प्रशस्यते॥
रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः।
कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम्॥
नाप्राप्तातीतकालं वा हीनाधिकमथापि वा।
अप्राप्तकाले भुञ्जानः शरीरे ह्यलघौ नरः॥
तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति।
अतीतकाले भुञ्जानो वायुनोपहतेऽनले॥
कृच्छ्राद्विपच्यते भुक्तं द्वितीयञ्च न काङ्क्षति।
हीनमात्रमसन्तोषं करोति च बलचयम्॥
आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम्।
तस्मात्सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्जितम्॥

यथोक्तगुणसम्पन्नमुपसेवेत भोजनम्।
विभज्य कालदोषादीन् कालयोरुभयोरपि॥
अचोक्षं दुष्टमुच्छिष्टं पाषाणतृणलोष्ट्रवत्।
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत्॥
चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः।
अशान्तमुपदग्धञ्च तथा स्वादु न लभ्यते॥
यद्यत्-स्वादुतरं तत्र विदध्यादुत्तरोत्तरम्।
प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः॥
विशुद्धे रसने तस्मै रोचतेऽन्नमपूर्ब्बवत्।
स्वादुना तस्य रसनं प्रथमेनापि तर्पितः॥
न तथा स्वादयेदन्यत्तस्मात्प्रक्षाल्यमन्तरा।
सौमनस्यं बलं पुष्टि-मुत्साहं हर्षणं सुखम्॥
स्वादु संजनयत्यन्नमस्वादु च विपर्य्ययम्।
भुक्ता च यत्प्रार्थयते भूयस्तं स्वादुभोजनम्॥
अशितं चोदनं युक्त्या भुञ्जानस्यान्तरा पिबेत्।
दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः॥
कुर्य्यादनाहृतं तद्धि मुखस्यानिष्टगन्धताम्।
जीर्णेऽन्ने बर्द्धते वायुर्विदग्धे पित्तमेव तु॥
भुक्तमात्रे कफश्चापि तस्माद्भुक्ते हरेत् कफम्।
धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः॥
पूगकक्कोलकर्पूरलवङ्गसुमनःफलैः।
कटुतिक्तकषायैर्वा मुखवैशद्यकारकैः॥

ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ।
भुक्ता राजवदासीत यावदन्नक्रमोगतः ॥
ततः पदशतं गत्वा वामपार्श्वे तु संविशेत् ।
शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ॥
भुक्ता वानुपसेवेत तेनान्नं साधु तिष्ठति ।
शब्दरूपरसस्पर्शगन्धाश्चापि जुगुप्सिताः ॥
अशुच्यन्नं तथा भुक्तमतिहास्य च वामयेत् ।
शयनं चासनं वापि नेच्छेत् वापि द्रवोत्तरम् ॥
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ।
न चैकरससेवायां प्रसज्जेत कदाचन ॥
शाकाविरान्नभूयिष्ठमम्लञ्च न समाचरेत् ।
एकैकशः समस्तान् वा नाप्यश्नीयाद्रसान् सदा ॥
प्राग्भुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् ।
पूर्वभुक्ते विदग्धेऽन्ने भुञ्जनो हन्ति पावकम् ॥
मात्रागुरुं परिहरेदाहारं द्रव्यतश्च यः ।
पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः ॥
द्विगुणाश्च पिबेत्तोयं सुखं सम्यक् प्रजीर्य्यति ।
पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् ॥
गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते ।
द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ॥
द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते ।
विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥

पिण्डीकृत-मसंक्लिन्नं विदाहमुपगच्छति।
स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति॥
विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते।
शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत्॥
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः" ॥ इत्यादि।

तथा—साकमेतैरायुर्व्वेदीयप्रमाणैः पूर्व्वोक्तधर्मशास्त्रीयप्रमाणानां प्रायशः-प्रकाशितसादृश्याद्धर्मशास्त्रीयप्रमाणजातं न वैज्ञानिकभित्त्यवस्थितमित्यत्र न भ्रमितव्यमल्पज्ञैरिति विदुषां परामर्शः।

अन्यच्च—प्रचुरायुर्व्वेदीयप्रमाणानां सत्यप्युत्तोलनेन ग्रन्थबाहुल्ये धर्म-शास्त्रीयप्रमाणजालेन सार्द्धमायुर्व्वेदीयप्रमाणनिकरस्य लोकनिवहसन्देहनिर-सनार्थमेकाधारे सन्निवेशितत्वाभावात् स्वीकृतग्रन्थकलेवरवर्द्धनं सुसङ्गतमेव।

अपरं च—निरापद्यापदि च शारीरिकस्वास्थ्यसंरक्षणार्थं सति सुयोगे-निरुक्तनियमपरिपालनमनुष्ठेयमेव सर्वतोभावेन। अन्यथाऽगत्याजीवनरक्षणे-तदतिक्रमणं न दोषोत्पादकमित्याशयः।

इति प्रत्यक्षाशनीयद्रव्यादिविचारः।

अथ हविष्यद्रव्याणि।

हविष्यान्नं :—व्रतादौ भक्षणीयद्रव्यविशेषः।

यथा स्मृतिः,—

"हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः।
कलायकङ्गुनीवारा वास्तूकं हिलमोचिका॥
षष्टिका कालशाकञ्च मूलकं केवुकेतरत्।
लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी॥
पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी।

तिन्तिड़ी लवली धात्री फलान्यगुड़मैक्षवम् ॥
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते"। इति।

तथाऽगस्त्यसंहितायां,—

"नारिकेलफलञ्चैव कदलीं लवलीं तथा।
आम्रमामलकञ्चैव पनसञ्च हरीतकीम् ॥
व्रतान्तरप्रशस्तञ्च हविष्यं मन्यते बुधाः"। इति।

ग्रन्थान्तरे सत्स्वपि बहुषु प्रमाणेषु ग्रन्थकलेवराधिक्यात् प्रदर्शितं प्रमाणं कियदत्र दिङ्मात्रेण।

दिवसाभ्यन्तरे वारैकभोजनोपयोगिद्रव्याणां गुरुपाकत्वेऽपीन्द्रियदोषाजनकत्वेन तथाऽस्वास्थ्यानुत्पादकत्वेन च हविष्यार्हत्वमापादितं धर्मशास्त्रकारैरवधेयम्।

इति हविष्यान्नविचारः।

अथामिषद्रव्याणि।

यथा,—पद्मपुराणीयकार्त्तिकमाहात्म्ये,—

"प्राण्यङ्गमामिषं चूर्णं फले जम्बीरमामिषम्।
धान्ये मसूरिका प्रोक्ता त्वन्नं पर्य्युषितं तथा ॥
अजाविमहिषीदुग्धदधिसर्पींषि चामिषम्।
द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ॥
ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम्"। इति दिक्।

प्रायशो सत्त्वगुणशालित्वात्तेषां तन्नामकत्वम्। त्रिदशादोषद्वयोत्पादकत्वान्नापि हविष्यार्हत्वमेषामित्यतो निषेधितं तद्द्रव्यजातं मुनिभिरितिविवेचनीयम्।

इत्यामिषद्रव्यविचारः।

इति भक्ष्याभक्ष्यविवेकसमाप्तिः।

अथ क्रमप्राप्तस्पृश्यास्पृश्यविचार: ।

स्पर्शनार्थकस्पृश्धातो: क्यप्प्रत्ययान्तत्वेन स्पृश्य इतिपदं सिद्धं । स्पृश्यश्चा-स्पृश्यश्चस्पृश्यास्पृश्यौ तयोर्विचार: परस्परस्पृष्टास्पृष्टविवेक: ।

ननु स्पृष्टास्पृष्टिविवेचनादित: केषां जातीयानां तावत्स्पर्शनयोग्यत्वं-केषां वा अस्पर्शनार्हत्वमित्याकांक्षायामुच्यतेऽधस्तात्पण्डितसर्वस्वविवेकधिया ।

यथा,—

"सवर्णेभ्य: सवर्णासु जायन्ते हि सजातय: ।
अनिन्द्येषु विवाहेषु पुत्रा: सन्तानवर्द्धका:" ॥

अनिन्द्यविवाहविषये,—

"विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयो: ।
वैश्यस्य वर्णे एकस्मिन् षडेतेऽपसदा: स्मृता:" ॥

अथ ततोत्पन्नाननुलोमजान् विलोमजांश्च पुत्रान् मतन्तीनाह,—

"मूर्द्धावसिक्तो राजन्यविप्रयो: क्षत्रलक्षण: ।
पुत्रस्तद्व्यत्यये जात: सुत: सारथ्यवृत्तिक: ॥
वैश्याब्राह्मणयो: पुत्रो निषादो मत्स्यघातकृत् ।
ब्राह्मणीशूद्रयोर्जातश्चाण्डालो विड्विशोधक: ॥
वैश्याक्षत्रिययो: पुत्रो माहिष्यो वैश्यधर्मकृत् ।
वैपरीत्ये तयो: पुत्रो मागधस्तुतिपाठक: ॥
शूद्राक्षत्रिययोरुग्र: क्षत्ता तद्व्यत्यये सुत: ।
तयोर्वृत्तिश्च विज्ञेया विलौकोवधबन्धनम् ॥
शूद्राविशोस्तु करणो वित्तायव्ययलेखक:" ।

करणोऽयं शूद्रकरण इति प्रसिद्धि:, व्रात्यक्षत्रगुप्तकरणयोर्ग्रन्थान्तरेषु पृथक्-प्रमाणपरिदर्शनात् ।

"आयोगवस्छेदकर्म्मा तयोर्व्यत्ययसम्भव:" ।

मूर्द्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणा अनुलोमजाः। सूतवैदेह-चाण्डालमागधक्षत्तायोगवाश्च विलोमजाः। एषां विवाहु क्षत्रियादिस्त्रीषु उत्पत्तिविधिः। आसु पुनर्व्यभिचारजानां न मूर्द्धावसिक्तादिसंज्ञा, विवाहा-भावात्। किन्तु "मातृतो जातिकल्पनेति" मातृजातीयत्वं भवति।

स्पृष्टाद्ये शाखोपशाखन्यायेनोत्पन्नाः संकराः परिमातुमशक्याः। तथापि-व्यवहारार्थं प्रसिद्धाः केचनोच्यन्ते। गुड़कारमालाकाररथकारप्रास्तरिक-कर्मारा: शिष्टाः शूद्रतुल्या स्पृश्यजलाश्च। नात्र कर्मारः स्पृश्यजलो-विप्राणां लोहस्तेयादिसम्भवात्। किन्तु आचारतो व्यवहारतश्च परिशुद्ध-तयैषां स्पृष्टजलत्वमभ्यनुज्ञातं महर्षिभिः पूज्यपादैरित्यवधेयं। कर्मारे तद-सम्भवादस्पृश्यजलत्वं।

अथास्पृश्यजलाः—

वर्द्धकिप्रभेदौ रूपकारचित्रकारौ। स्वर्णकाररत्नकारपट्टकाराः। कांस्य-कारताम्रकारपैत्तलिकाः। लोहकारघण्टाकारशंखकाराः। तैलकारकुम्भ-कारौ, तन्तुवायतूलकारौ, ज्योतिषकुसुष्ठिकौ, गोलककैवर्त्तकौ चेति। केवलमेते-शूद्रवद्विवाहादिसंस्कारशौचादिविध्यधिकारिणः।

"शौचाशौचं प्रकुर्वीरन् शूद्रवद्वर्णसङ्कराः"। इति वचनात्।

एषां जलप्राशनाप्राशित्वं तत्तद्व्यवहारे बोध्यम्। एषां वृत्तयस्तु कर्मारस्य-लोहविकारघटना, कुसुष्ठेर्वाणिज्यं गोलकस्य बलीवर्दवाहनं, कैवर्त्तस्य मत्स्या-घातचिपीटकादिकरणं, अन्येषां गुड़कारादीनां स्वस्वपदव्युत्पत्त्या बोध्याः।

आचारव्यवहाराभ्यां लोकतः समीचितास्तुचित्वादेतेऽस्पृश्यजलात्वेन-परिगणिताः। किन्तु स्पृश्यजला अस्पृश्यजलाश्चापि व्रतपुजनभोजनादिकाल-मन्तरान्यस्मिन् समये सेवाद्यनुष्ठाने सर्वे स्पर्शनार्हा इति शास्त्रीयाशयः।

अथ विध्यनधिकारिणो म्लेच्छजातयो निरूप्यन्ते—रजकशौण्डिकचर्मार-कोरलकाण्डिकवरुडव्याधकिरातवैतसवैणपुक्कसचाण्डाला-यवनाश्च म्लेच्छाः, तत्र-यवनास्तु विरुद्धधर्माणः अविद्धकर्णा नीचाश्च। तत्र वचनं, "न नीचो-यवनात्पर"—इति। यत्संसर्गाद्ब्राह्मणादिचाण्डालान्ताः सर्वजातीया भ्रंश्यन्ते।

एषां तुन्नवायस्तु रजकस्य तप्तचारवारिभिर्वस्त्रशोधनम्। शौण्डिकस्य मद्यकरणं। चर्म्मारस्य तालपत्रविकारविक्रयः। कैरलस्य कुहकविद्या। कापिडकस्य ग्राम-केदाररचणं। वरुडस्य वृचारोहणमारामसेवा च। व्याधस्य पचिमृगादिहिंसा। किरातस्य चौर्य्यं वनमार्गेनिवासश्च। वैतसस्य वेत्रपात्रघटना। वैणस्य-वंशविकारः। पुक्कसस्य चर्मपादुकाखड्गपिधानपर्य्याणादिकरणम्। चाण्डालस्य-वाद्यवादनं मृतोत्सारणञ्च। एते सर्वेऽस्पृश्यजलाः। अस्पृश्याश्च—साकमेतैः-स्पर्शने सम्भाषणे च, "अधमैः सह संस्पर्शे प्रायश्चित्तं यथाविधि"। इति मत्स्यसूक्त-प्रमाणात्। तथा—"अस्पृश्यं संस्पृशेद्यस्तु स्नानं तेन विधीयते", इति संवर्त्त-संहितायुक्तप्रमाणजलपरिदर्शनाच्च। संहितास्वन्यासु तथा ब्रह्मवैवर्त्तबृहद्धर्म-पुराणादिषु विशेषेण सततामितविहृतौ दिङ्मात्रेण प्रदर्शितं सङ्करजातीयविवरणं-ग्रन्थीयकलेवरवृद्धिभयेन। न चैतादिप्रमाणजातबलात् स्पर्शास्पर्शदोषपरिहरणं-सदैवालम्बनीयमितिवाच्यम्। स्थलविशेषेषु धर्मशास्त्रकारैः प्रतिप्रसवस्याभ्यनु-ज्ञातत्वात्। अथवा सततामप्यनापद्येवमेव व्यवस्थायां कार्य्यान्तरेषु तद्दश-वस्थावलम्बनाचमत्वसम्भावनया प्रमाणानामेषां धर्मशास्त्रकारप्रदर्शितप्रति-प्रसवत्वात्।

विवेचनस्यास्य याथार्थ्यप्रतिपादनाय प्रदर्श्यन्तेऽधस्तात्प्रतिप्रसवावेदक-प्रमाणानि। यथा गादाधरीयाचारसारे शिष्टाः,—

"विष्णालयसमीपस्थान् विष्णुसेवार्थमागतान्।
चण्डालपुक्कशान् वापि स्पृष्ट्वा न स्नानमाचरेत्॥

तथाचाङ्गिराः—

"देवयात्राविवाहेषु यज्ञप्रकरणेषु च।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते"॥

तथा—

"तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे।
नगरे ग्रामदाहे च स्पृष्टास्पृष्टं न विद्यते"॥

स्पृष्टमस्पृष्टमिति स्पृष्टास्पृष्टम् ।

तथाचारपल्लवे,—

"कुण्डे मञ्चे शिलापृष्ठे नौकायां गजवृक्षयोः ।
संग्रामे संक्रमे चैव स्पर्शदोषो न विद्यते" ॥

इदं चोत्सवादौ बहुजनसङ्कुले । प्रमाणान्येतान्यापदोऽप्युपलक्षकाणीतरथा गमकत्वं । प्रमाणान्तरे ह्यापत्पदस्य दृष्टिविषयत्वात् ।

तथाच रघुनन्दनीयप्रायश्चित्ततत्त्वे रत्नाकरे बृहस्पतिः—,

"तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति ॥
आपद्यपि च कष्टायां रुग्भये पीड़िते तथा ।
मातापित्रोर्गुरोश्चैव निदेशे वर्त्तनात्तथा" ॥

स्पृष्टास्पृष्टि इत्यव्ययं क्रियाव्यतिहारे; तथैति न दुष्यति । तथा-मत्स्यसूक्तेऽष्टत्रिंशत्तमपटलेऽपि द्रष्टव्यमन्यदिति शब्दकल्पद्रुमः । इह च-कष्टापदीति पदं स्वल्पस्थपरिचलनाद्यात्मकबहुदिनस्थायिविपदर्थबोधकमित्य-बधेयम् । रुग्पीडाग्रामदाहाद्यल्पकालावस्थायिविपज्जातस्य पृथक्निर्देश-परिदर्शनात् ।

यत्तु कलिवर्ज्यप्रकरणे "संसर्गदोषः पापेषु मधुपर्के पशोर्वधः" । इत्यादि-रघुनन्दनोद्धृतादित्यपुराणीयवाक्यस्थसंसर्गदोषः पापेष्वित्यस्य पापेषु ब्रह्म-हत्यादिपञ्चपातकिषु कलियुगे परिहर्त्तव्य इत्यर्थापयन्ति, तत्तु न सङ्गतमेव । कलौ व्यवहारतस्तत्संसर्गिणः प्रायश्चित्तदर्शनात्, तथात्र महापातकादिपरि-चायकपदाभावाच्च । यत्र तु तत्पापावेदकपदोपदानेनावलोक्यते निरुक्तार्थ-सङ्गतिः, तद्वचनमधः समुल्लिख्यते पराशरीयमाधवभाष्यतः ।

यथा पुराणे,—

"प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम् ।
संसर्गदोषस्तेनाद्यैर्महापातकनिष्कृतिः" ॥

इत्यत्र स्तेनार्थैरिति पदस्योपात्तत्वेन पञ्चपातकिषु संसर्गदोषपरिहरणं-कलावित्यर्थकरणं सुसमम्। तथापि लोके तद्दोषपरिहरणाभावसमीक्षणा-त्कमलाकरभट्टेन संसर्गदोषस्तेयान्यमहापातकनिष्कृतिरिति निर्णयसिन्धुनामक-स्वकृतनिबन्धग्रन्थे पठितं व्याख्यातञ्च। संसर्गदोषस्तेयेतरमहापातकत्रये-ब्रह्महत्यासुरापानगुरुतल्पगमनरूपे स्नानकृते या निष्कृतिर्मरणरूपेति।

अतः पापेषु यावत्पापेषु स्पर्शास्पर्शदोषात्मकपातकमेकं युगान्तराद्दृतमेव। कलौतु—परिहातव्यं तन्नामकद्वर्जिनमितरार्थः सुसमीचीन एव। कलावङ्गी-कृते तत्परिहरणे सुतरां कलियुगान्तर्गतापदि परिवर्जनीयस्तद्दोष इति परा-मर्शः। अतएवैतत्तादिप्रमाणजालसामर्थ्यात्बहुसमयव्यापिन्यां विपत्तावस्थां-विज्ञानप्रसिद्धभक्ष्याभक्ष्यप्रकरणोक्तप्रमाणपर्य्यालोचनया व्रतावलम्बनाशनजल-पानदैवपैत्रककार्य्यानुष्ठानसमयमन्तरेण समग्रे अन्यत्र परिशुद्धचरितवेशपरि-च्छदैः प्रतिलोमसङ्करजातीयैः सहैकासनोपवेशनादिकार्य्यानुष्ठानावसरे नाव-गण्यः स्पृष्टास्पृष्टिविचारः, अन्यथैषां धर्मान्तरग्रहणेन स्वधर्मदौर्बल्यप्रसङ्गात्। तथा स्वधर्ममपहाय व्यवहारतो धर्मान्तरावलम्बिभिः परिस्कृतपरिच्छदादिभिः-शिक्षाश्रमिभिः साकं स्वजातीयैः स्वधर्मावलम्बिनामेकासनोपवेशनाद्यनुष्ठानस्य-शास्त्रनिषिद्धस्याप्यवलोकनाच्च।

अन्यच्च,—

यद्यपि वाष्पीयपोतशकटाद्यारोहणावसरे शूद्रादिभिर्निम्नतमजातीयैः-समं सतरापि स्पर्शं पक्कामान्नादिभक्षणं विधेयमापद्यस्यामिति यद्वदन्ति,-तदपि न आयुर्वेदीयादिविज्ञानशास्त्रासम्मतत्वात् तदनुमतधर्मशास्त्रविरुद्धत्वा-च्च। अतः स्वस्वजातीयानां स्वाधस्तनजातीयानां च स्पर्शमन्तरा फलाद्य-मात्रं तथा लवणविहीनं घृतपक्कगोधूमपिष्टकादिपक्कान्नं च भक्षयेद्ब्राह्मणः। तथा स्वभिन्ननिम्नतमजातीयस्पर्शं विशेषतो म्लेच्छजातीयस्पर्शं चापहाय-स्वजातीयैः स्वोच्चतमजातीयैश्चानुष्ठितं सत्यपि स्पर्शं तण्डुलपक्कान्नमन्तरेण घृत-पक्काद्यशनमापदि शास्त्राभ्यनुज्ञाततयाचरणीयमेव क्षत्रियाद्यनुलोमान्त-जातिनिवहेन। अतएव विपत्समये निरुक्तप्रमाणविवेचनदृष्ट्या,—

यथा,—

"आपत्काले तु सम्प्राप्ते शौचाचारं न चिन्तयेत् ।
स्वयं समुद्धरेत्पश्चात्-स्वस्थो धर्मं समाचरेत्" ॥

इति पाराशरीयवचनेन चानुष्ठेयं महापातक्यादिसंसर्गमन्तरा स्पृश्यास्पृश्य-विवेचनम् । अन्यथा महापातकाद्यनुष्ठाने दुरात्मनां निर्बाधप्रवृत्तिसम्भावनयाऽपद्युपस्थितापदन्तरत्वाल्लोकानाम् ।

तथाच;—

यथैव साम्प्रतिकभारतीयार्य्यजातिसमुन्नतिकल्पे सोपानमुच्चतममुत्थापयेदापदि तावदधस्तनजातिजातं विप्रादिद्विजातित्रयमिति प्रदर्शितं धर्मशास्त्राभ्यनुज्ञानमादितः । तथैव तन्निम्नतमजातिव्रातमपि निरन्तरतदुन्नतजातिनिवहमभिलक्ष्य प्रदर्शयेत्तावत्स्वकर्त्तृकसम्मानमित्येवेत्यनुष्ठीयते सुकराय-विवेचनमतेदानीमितत्प्रकरणोपयोगतः परस्परसौहार्दसम्पादनार्थम् । ननु तावत्कथमासीत्सम्मानस्तेषां द्विजातीनां रीत्या कया शास्त्रत—इतराशङ्कायां-निरस्यते सोऽधस्तात्शास्त्रीयप्रमाणदर्शनेनैव ।

रीतरा कया प्रदर्शनीयः सम्मान इतरास्मिन् विषये मानवीयसमीचीन-विवेचनमतोऽङ्गास्यते निम्नतो जातिसाधारण्येन ।

"ब्राह्मणं दशवर्षन्तु शतवर्षञ्च भूमिपम् ।
पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥
वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥
चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥
तेषां तु समवेतानां मान्यौ स्नातकपार्थिवौ ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक्" ॥ इति ।

तथा स एव,—

"भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः॥
ब्राह्मणेषु तु विद्वांसो विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः"॥ इति।

तथाच पद्मोत्तरखण्डे व्यासः,—

"सर्व्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः।
सर्व्वदेवाग्रजो विप्रः प्रत्यक्षत्रिदशो भुवि॥
सर्व्वेऽपि ब्राह्मणाः श्रेष्ठाः पूजनीयाः सदैव हि।
अविद्या वा सविद्या वा नात्र कार्य्या विचारणा॥
क्षत्रियाणाञ्च वैश्यानां शूद्राणां गुरवो द्विजाः।
अन्येषां गुरवो ज्ञेयाः पूजनीयाश्च भूसुराः"॥ इति।

ब्राह्मणस्याग्रसम्मानविषये हेतुमापादयति यथैव मनुः :—

"उत्पत्तिरेव विप्रस्य मूर्त्तिर्धर्म्मस्य शाश्वती।
स हि धर्म्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥
ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
ईश्वरः सर्व्वभूतानां धर्म्मकोषस्य गुप्तये"॥ इति।

तथाच स एव,—

"यानुपाश्रित्य तिष्ठन्ति लोका वेदाश्च सर्व्वदा।
ब्रह्म चैव धनं येषां को हिंस्यात्तान् जिजीविषुः॥
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति॥

हूयमानश्च यज्ञेषु भूय एवाभिवर्द्धते।
क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः॥
ब्रह्मैव सन्नियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम्।
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्॥
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति।
नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते।
ब्रह्म क्षत्रञ्च सम्पृक्तमिह चामुत्र वर्द्धते"॥ इति।

तत्रैव क्षत्रियस्य ब्राह्मणसम्मानानन्तरसम्मानार्हत्वे प्रदर्शितं कारणजातं-तत्रैव,—

"ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि।
सर्वस्यास्य यथान्यायं कर्त्तव्यं परिरक्षणम्॥
अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।
रक्षायामस्य सर्वस्य राजानमसृजत्-प्रभुः॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः।
तस्मादभिभवत्येष सर्वभूतानि तेजसा॥
अपत्यादित्यवच्चैष चक्षूंषि च मनांसि च।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम्॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट्।
स कुवेरः स वरुणः स महेन्द्रः प्रभावतः॥
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति"॥ इति।

भूमिप इति पदं क्षत्रियजातेरुपलक्षकं, अतो-राजनि सम्मानप्रदर्शन-पूर्विका विधेया भक्तिः प्रजाभिरिति निष्कर्षः। न चेदानीन्तननृपतीनां-विदेशीयानां विजातीयतया ब्रह्मसंस्काराभावाच्च तेषु कर्त्तव्या भक्तिरिति-वाच्यम्। कलौ मूलतः क्षत्रियवैश्यजात्योरभावस्य शास्त्रप्रतिपादितत्वात्। युगेऽस्मिन्नपि भारते वैदेशिकनृपतेराधिपत्यस्य शास्त्रसूचितत्वाच्च। अतः-सदैव राजभक्तिर्विधेया सकलजातीयनृपतिषु पापात्मकदुःखसम्भवात्प्रजा-वर्गेणेत्याशयः। किन्तु "स्वधर्मे निधनं श्रेयः परधर्मो भयावह" इति शास्त्र-प्रमाणसामर्थ्याद्विभिन्नधर्मावलम्बिनो विदेशीयनृपतेः स्वदेशीयनृपस्य च-धर्मावलम्बनं न करणीयमेव। विवेचनमेतद्दृढयति निम्नलिखितप्रमाण-व्रातम्।

यथा पण्डितसर्वस्वे—क्षत्रिया इति। "नन्दान्ताः क्षत्रिया गताः" इति-कलौ क्षत्रियलोपः। यद्यपि क्षतात्त्रायत इति व्युत्पत्त्या क्षत्रियशब्दो योग रूढस्तथापि प्रजापालनार्थं शस्त्रधारिणो भूपतयः क्षत्रियत्वेन व्यवहार्य्याः। केवलं धर्माचरणे शूद्रा एव। एषां वृत्तिमात्र,—

"क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रतापवान्।
निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत्" ॥ इति।

वैश्या इति—कलौ वैश्याः शूद्रतुल्याः। गर्भाधानादिसंस्कारहीनत्वात्। तत्र वचनं "जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते" इति। तेऽपि विप्रवत्-कूटस्थऋषिभेदेन भिन्नगोत्रप्रवराः। अतएव विप्रशूद्रावधिकृत्य द्विवर्णा-पृथिवी कलाविति वचनम्। एतेन सम्प्रत्यपि दशसंस्कारा न विधीयन्ते। तथापि जलादिग्रहणार्थं धनिनः पारम्पर्य्येणागताः केचन वैश्यत्वेन व्यव-हार्य्याः। तथा मिताक्षरायां विज्ञानेश्वरः,—

यद्यपि राजन्यविशां प्रातिस्विकगोत्राभावस्तथापि पुरोहितगोत्रप्रवरौ-वेदितव्यौ। तथाच यजमानस्यार्षेयान् प्रवृणीत इत्युक्त्वा पौरोहित्यान् राज-विशां प्रवृणीते इत्याश्वलायनः। इत्यनेन कलावापादयति राजन्यवैश्या-भावः स्फुटतः।

तथाच पूर्व्वोक्तेन "इंरेजा नव षट् पञ्च लक्ष्जाश्चापि भाविनः" इति-मेवतत्स्वादयुक्तप्रमाणव्रातेन वैदेशिकचक्रवर्त्तिनां सूचितराजत्वादत्र नोत्तोलितानि तानि । तथा वैश्यजातेरपि चत्त्रियजातिसम्मानोत्तरभाविसम्मानास्पदत्वे-वाचनिकप्रमाणजालमपि प्रतिपाद्यतेऽत्र मनुस्मृतितः—

यथाह मनुः,—

"वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम् ।
वार्त्ताय नित्ययुक्तः स्यात्-पशूनाञ्चैव रक्षणे ॥
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् ।
ब्राह्मणाय च राज्ञे च सर्व्वाः परिददे प्रजाः ॥
भृत्यानाञ्च भृतिं दद्याद्भाषाश्च विविधा नृणाम् ।
द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ॥
धर्मेण च द्रव्यवृद्धावातिष्ठेद्-यत्नमुत्तमम् ।
दद्याच्च सर्व्वभूतानामन्नमेव प्रयत्नतः" ॥ इति ।

तथा ब्रह्मपुराणीयोत्तरखण्डे यथा,—

"रक्षया स हि तेषां वै महत्-सुखमवाप्नुयात् ।
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे प्रजाः ॥
ब्राह्मणेभ्यश्च राज्ञे च सर्व्वाः परिददे प्रजाः" । इति ।

निरुक्तप्रमाणव्रातसमकक्षाणां प्रमाणान्तराणां ग्रन्थान्तरेषु सतापि विद्यमानत्वे ग्रन्थावयवविस्तृताशङ्कया न तावदत्र सन्निवेशितमन्यग्रन्थीयं वचनजालमितरवधेयम् ।

अन्यच्च—द्विजातित्रितयस्य यथाक्रमं सम्मानप्रदाने प्रोक्तवाचनिकप्रमाणनिकरतः सतापि प्रकाशिते संक्षेपेण प्रमाणनिवहे साधारणाववोधनार्थं-प्रकाश्यते प्रतीकशः वैज्ञानिकनिदानं निम्नतः स्थौल्येन ब्राह्मणादिजातेः-सम्माननं । यथा,—

श्रीजगदीशितुः सविधे सदैव "स्वस्ति प्रजाभ्यः परिपालयन्त्वि"त्यादि-प्रमाणव्रातद्वारेण प्रार्थितसकललोकमङ्गलत्वेन स्वार्थसिद्धिमन्तरा जाति-निर्विशेषेण सर्वप्राणिशुभकाङ्क्षित्वेन च तथा सर्वलोकेभ्यो ज्ञानालोकप्रदानाय-निर्मितविविधशास्त्रतया तथा सर्वलोकप्रदत्तहितोपदेशकतया तथा धर्मनीति-राजनीत्यादिसकलनीतिग्रन्थरचकत्वेन तथा तत्परिचालकत्वेन च समाज-शीर्षस्थानोपर्य्यासीनतया तथा कामादिषड्रिपुविहीनत्वात् निःस्वार्थपरहित-साधनतया सकललोकाध्यापकत्वेन गुरुपदवीमधिरूढ़त्वात् तथा सकल-लोकमनोराज्याधिपतित्वाच्च सत्वगुणप्रधानानां ब्राह्मणानां सर्वाग्रसम्माना-स्पदत्वं सुस्थिरमेव ।

अपरञ्च—यद्यप्यधुना ब्राह्मणवंशीयपूज्यपादमहर्षिवृन्दनिर्मिताध्यात्म-विज्ञानादिसकलविज्ञानशास्त्रं नाभविष्यद्विद्यमानमत्र, तदा भारतस्यास्येदानीं-क्षत्रियबाहुवीर्य्यशून्यतया वैश्यसम्पद्विहीनतया च भारतीया आसन् सुशि-क्षिताः सकला धनशालिनः पूर्वत इति प्राचीनगौरवप्रचारो नाभविष्य-द्राज्यान्तरे । अतस्त एवापि सम्मानार्हाः । अन्यथा सुगुरोरसम्मा-नं प्रदर्श-यन्तो दुर्दान्ता अन्तेवासिनो यथैव सांसारिकमानसिकसकलसुखराजिभ्रष्टा-स्तथैव जगति भवेयुरवश्यं भारतीयार्य्याः ब्राह्मणासम्मानप्रदर्शनेनेवेति-राद्धान्तः ।

पुनश्च—वहिर्जगति क्षत्रियजातिमन्तरा लोकानां सर्वेषां शत्रुचौरादि-भयनिवारणप्रभृतिभारनिवहस्य जात्यन्तरेण निर्वाहयितुं अशक्यत्वाच्च । जागतिकसमस्तप्राणिनां परिपालने स्वपरिवाराणामिव सन्ततभावनान्वित-त्वात्, ब्राह्मणप्राड्विवाकसाचिव्येन स्वप्रजावर्गस्य सदैवानन्दमापादयितुं-घूर्णायमानमस्तिष्कत्वाच्च, तथा स्वबाहुच्छायाश्रितप्रजानिवहस्य सुखनिद्रा-निमज्जनसम्पादनतत्परत्वेन लोककर्त्तृकधर्मानुष्ठाननिवारकत्वेन विलासिता-विहीनत्वेन च सत्वरजोगुणाश्रयाणां क्षत्रियाणां ब्राह्मणानन्तरसम्मानास्पदत्वं-सुसङ्गतमेव । अन्यथा तज्जातेः सम्भवतासन्तोषे जागतिकमङ्गलं सुदूरपरा-हतमेव ।

तथाच—कृषिवाणिज्याद्यन्तरेण सांसारिकनिखिलजन्तूनां प्राणधारणा-

सम्भावनया तदभावपूरणे समुत्सृष्टजीवनत्वात् स्थानान्तरतो नानाविधद्रव्य-जातादानेनान्यस्थानोपस्थितदुर्भिक्षाद्यापदं निवारयितुं सततसन्ततप्रयत्नत्वात्-धर्मतो लोकहितसम्पादनतत्परत्वाच्च रजस्तमोगुणशालिनां वैश्यानां क्षत्रिय-ब्राह्मणन्तरसम्मानार्हत्वं युक्तियुक्तमेव ।

अन्यथा दुरवस्थोपस्थितेरवश्यम्भावित्वाल्लोकनिवहानाम् । अतएवाना-पदि विशेषतो विपदि च भारतीयविविधार्य्यजातीयानां परस्परसौहार्द-सम्पादनार्थं स्वस्वजातीयोन्नतिसाधनार्थं चान्योन्येन सम्मानप्रदर्शनानुष्ठानं न नीतयनर्हमिति राद्धान्तः । इति स्पृश्यास्पृश्यविचारः ।

अथ सदाचारविचारः,—

सदुपपदस्याङुपसर्गस्य गत्यर्थकचरधातोर्भावे घञ्प्रत्ययनिष्पन्नं सदाचार-इति पदं सुसिद्धम् । तस्य तु व्यासवाक्यं यथा—सतां आचारः शिष्टकर्तृक-परम्परागतक्रियाद्यनुष्ठानं सदाचारः, न त्विदानींतनायातक्रियाद्यनुष्ठानं-सदाचारः । स एव नियमविधिः । तन्नियमविधिप्रतिपादितक्रियाजातस्य-लोककर्तृकाचरणं व्यवहारनाम्नाभिहितं भारतेऽनेतयनयोः पार्थक्यम् । तथापि प्रसमीक्ष्यन्तेऽन्ये बहुविधा अर्था आचारशब्दस्य । यथा, प्रकृति-वादाभिधाने—अनुष्ठानं व्यवहारः नियमः रीतिः । तथाच शब्दकल्पद्रुमे,—

आचारशब्दस्यार्थाः—यथा व्यवहारः तत्पर्य्यायः, पवित्रं, चारित्रं, चरणं, वृत्तं, शीलमिति हेमचन्द्रः । स्नानाचमनादिरिति मानवीयद्वितीयाध्यायोक्तो-नसप्ततिश्लोकव्याख्यायां,—कुल्लूकभट्टः, यथा—

"उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्य्यञ्च सन्ध्योपासनमेव च" ॥

तद्विवरणं तु,—

उपनीय गुरुरिति गुरुः शिष्यं उपनीय प्रथमं एकालिङ्गे गुदे तिस्र-इत्यादि वक्ष्यमाणशौचं स्नानाचमनाद्याचारमग्नौ सायंप्रातः समिद्धोमानुष्ठानं-समन्त्रकसन्ध्योपासनविधिं च शिक्षयेदिति ।

तथा व्यवहारापरनामकस्याचारशब्दस्यान्योऽर्थो यथा व्यवहृतो व्यवहारतत्त्वे—यथाह बृहस्पतिः,—

"आचारेणावसन्नो हि पुनर्लेखयते यदि।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते"॥

आचारेण व्यवहारेण अवसन्नः भङ्गीं लेखयति भाषामितरार्थः।
व्यवहारस्य पारिभाषिकार्थमाह कात्यायनः,—

"वि नानार्थेऽवसन्देहे हरणं हार उच्यते।
नानासन्देहहरणात्-व्यवहार इति स्थितम्"॥

नानाविवादविषयः संशयो क्रियतेऽनेनेति व्यवहारः भाषोत्तरक्रियानिर्णायकत्वं व्यवहारत्वं। इति।

इत्येतेषामभ्यन्तरे कं तावत् शिष्टास्तेषामाचारस्तु कीदृगितस्मिन् प्रकरणेइतराशङ्कायां शास्त्रीयसम्मतिरत्र प्रदर्श्यते अधस्तात्। यथाह पराशरभाष्येसायनमाधवः। आचारो निरूप्यते,—यत्पृष्टं चातुर्वर्ण्यसमाचारं किञ्चित्साधारणं वदेति,—

पराशरः,—

"चतुर्णामपि वर्णानामाचारो धर्मपालकः।
आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः"॥ इति।

आचारस्यान्वयव्यतिरेकाभ्यामैहिकामुष्मिकश्रेयोहेतुत्वम्। आचारलक्षणञ्चआनुशासनिकपर्वण्यभिहितम्,—

"आचाराल्लभते ह्यायुराचाराल्लभते श्रियम्।
आचारात्-कीर्त्तिमाप्नोति पुरुषः प्रेत्य चेह च॥
दुराचारो हि पुरुषो नेहायुर्विन्दते महत्।
त्रसन्ति चास्य भूतानि तथा परिभवन्ति च॥

तस्मात्-कुर्य्यादिहाचारं यदीच्छेद्भूतिमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥
आचारलक्षणो धर्मः सन्तश्चाचारलक्षणाः ।
साधूनाञ्च यथा वृत्तमेतदाचारलक्षणम्" ॥

हारीतोऽपि स्मरति,—

"साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते" ॥

मनुरपि,—

"यस्मिन् देशे य आचारः पारम्पर्य्यसमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते" ॥ इति ।

सन्तः शिष्टाः । तेषां स्वरूपमाह भगवान् बौधायनः,—

"शिष्टाः विगतमत्सराः निरहङ्काराः कुम्भीधान्याः अलोलुपाः दम्भदर्प-लोभमोहक्रोधविवर्जिताः" । इति —

आरण्यकपर्वणि,—

"अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः ।
ऋजवः शमसम्पन्नाः सिष्टाचारा भवन्ति ते" ॥ इति ।

अत्र शिष्टानामभिमतो दयादाक्षिण्यविनयाद्यन्वितो वृत्तविशेष आचार इत्युक्तं भवति । स आचारः श्रौतं स्मार्त्तं च धर्मं पालयति । धर्मविघातिनां नैर्घृण्यक्रोधादीनां अभावात् । असति त्वाचारे विरोधिसद्भावात् धर्म एव न प्रवर्त्तते, कथञ्चित् प्रवृत्तोऽपि परावर्त्तते, सोऽयं धर्मपालक आचारश्चतुर्णां वर्णानां साधारणः । ननु किञ्चित् साधारणं वद इति न सङ्गच्छते इतिचेन्न । निमित्तनैमित्तिकयोः आचारधर्मयोरभेदस्य विवक्षितत्वात् ।

अनेन तावत्प्रदर्शितः सदाचारः स्थूलतो माधवाचार्य्येण । किन्त्वेतत्-प्रकरणीयविवेकबीजं शौचस्नानाचमनादिक्रियाजातमिति सुस्थिरम् । भार-

तीयार्थ्याणां तदात्मकसदाचारस्य शास्त्राभिप्रेतत्वे प्रमाणानि समुपस्थाप्यन्तेऽध-स्तात् संक्षेपतः।

यथा वामनपुराणीयचतुर्दशाध्याये राक्षसं प्रति ऋषिवर्गवचनम्।

ऋषय ऊचुः,—

"सदाचारो निगदितस्तव योऽस्माभिरादरात्।
लक्षणं तस्य वक्ष्यामस्तच्छृणुष्व निशाचर!॥
गृहस्थेन सदा कार्य्यमाचारपरिपालनम्।
न ह्याचारविहीनस्य भद्रमत्र परत्र च॥
यज्ञदानतपांसीह पुरुषस्य न भूतये।
भवन्ति यः समुल्लङ्घ्य सदाचारं प्रवर्त्तते॥
दुराचारो हि पुरुषो नेह नामुत्र नन्दति।
कार्य्यो यत्नः सदाचारे आचारो हन्त्यलक्षणम्॥
तस्य स्वरूपं वक्ष्यामः सदाचारस्य राक्षस!।
शृणुष्वैकमनास्त्वञ्च यदि श्रेयो हि वाञ्छसि"॥

"धर्मोऽस्य मूलं धनमस्य शाखाः पुष्पाणि कामः फलमस्य मोक्षः।
असौ सदाचारतरुः सुकेशिन्! संसेवितो येन स पुण्यभोक्ता॥
ब्राह्मे मुहूर्त्ते प्रथमे विबुध्येदनुस्मरेद्देववरं महर्षीन्।
प्राभातिकं मङ्गलमेव वाच्यं यदुक्तवान् देवपतिस्त्रिनेत्रः॥
इत्थं प्रभाते परमं पवित्रं यः संस्मरेद्वा शृणुयाच्च भक्त्या।
दुःस्वप्ननाशो ननु सुप्रभातं भवेच्च सत्यं भगवत्प्रसादात्।
ततः समुत्थाय विचिन्तयेच्च धर्मं तथार्थञ्च विहाय शय्याम्॥
उत्थाय पश्चाद्धरिमित्युदीर्य्य गच्छेत्तदोत्सर्गविधिं हि कर्त्तुम्।
न देवगोब्राह्मणवह्निमार्गे न राजमार्गे न चतुष्पथे च॥

कुर्य्याद्दयथोत्सर्गमपीह गोष्ठे प्रच्छाद्य शीर्षं मुखनासिकञ्च।
ततश्च शौचार्थमुपाहरेन्मृदं गुदे त्रयं पाणितले च सप्त॥
तथोभयोः पञ्च चतुस्तथैकां लिङ्गे तथैकां मृदमाहरेच्च।
नान्तर्जलाद्राचसमूषिकस्थलान्नचावशिष्टा सदनादिभग्ना-
वल्मीकमृच्चैव हि शौचनाय ग्राह्या सदाऽरविदा नरेण॥
"उदङ्मुखः स्नात्य पदौ भुविस्थः समाचमेदङ्भिरफेनिलाभिः।
आचम्य च त्रिः परिमृज्य च द्विस्ततः स्पृशेच्चात्मशिरः करेण॥
सन्ध्यां स निर्वर्त्त्य ततः क्रमेण केशांश्च संशोध्य च दन्तधावनम्।
कृत्वा तथा दर्पणदर्शनञ्च कृत्वा शिरःस्नानमथाह्निकञ्च॥
संपूज्य तोयेन पितॄन् सदेवान् होमञ्च कृत्वा लभनं शुभानाम्।
कृत्वा वहिर्निर्गमनं प्रशस्तं दूर्वां दधि सर्पिरथोदकुम्भम्॥
धेनुं सवत्सां वृषभं सुवर्णं मृद्गोमयं स्वस्तिकमक्षतानि।
लाजा मधुब्राह्मणकन्यकाश्च श्वेतानि पुष्पाण्यथ शोभनानि॥
हुताशनं चन्दनमर्कविम्बमश्वत्थवृक्षञ्च समालभेत।
ततस्तु कुर्य्यान्निजजातिधर्मदेशानुशिष्टं कुलधर्ममग्र्यम्॥
स्वगोत्रधर्मं न हि सन्त्यजेत तेनापि सिद्धिमनुपाचरेत।
नासत्प्रलापं न च सत्यहीनं न निष्ठुरं नागमशास्त्रहीनम्।
वाक्यं वदेत्-साधुजनेन येन निन्द्यो भवेन्नैव च धर्मभेदी॥
सङ्गं न चासत्सु जनेषु कुर्य्यात्सन्ध्यां सुभक्षं सुरतं दिवा च।
सर्वासु योनीषु परावलासु रजस्वलास्वेव जलेषु चौरः" ॥
"वृथाटनं वृथादानं वृथा च पशुमारणम्।
नं कर्त्तव्यं गृहस्थेन वृथादारपरिग्रहम्॥

वृथाटनान्नित्यहानिर्वृथादानाद्धनक्षयः ।
वृथापशुघ्नः प्राप्नोति यातनान्नरकं महत् ॥
सन्तत्या हानिरश्लाघ्या वर्णसङ्करतो भयम् ।
भेतव्यञ्च भवेल्लोके वृथादारपरिग्रहात् ॥
परस्वे परदारे च न कार्य्या बुद्धिरुत्तमैः ।
परस्वं नरकायैव परदाराश्च मृत्यवे ॥
नेक्षेत्-परस्त्रियं नग्नां न सम्भाषेच्च तस्करान् ।
उदक्या दर्शनं स्पर्शं सम्भाषञ्च विवर्जयेत्" ॥ इति ।

एतादृक्सदाचारज्ञापकेषु सत्स्वपि बहुषु वाक्येष्वन्येषु निबन्धशरीरवृद्धया-शङ्कया नानुष्ठितमेतेषामुत्तोलनम् । किन्तु द्रष्टव्यैतद्विवृतिः पद्मपुराणीयस्वर्ग-खण्डे विष्णुपुराणीयतृतीयांशे मार्कण्डपुराणीयसदाचारनामकाध्याये च ।

अन्यच्च—प्रमाणजातेनानेन तावदवगम्यते शौचादिक्रियाजातमारभ्य यथा-देशकालपात्रं समयाचारादिपरिवर्त्तनं यावत् सकलं क्रियाजातं सदाचारा-त्मकत्वेन परिगणितमिति ।

अपरञ्च—ये त्विदानीन्तनशिष्टेषु प्रायेण निरुक्तप्रमाणोक्तशिष्टगुणक्रिया-विशिष्टत्वानवलोकनान्न विद्यन्तेऽधुना भारतेऽस्मिन् शिष्टा इति चेन्न साम्प्रति-कानामभ्यन्तरे सर्वलोकापेक्षया ये प्रायशः शिष्टगुणान्विताः त एव सन्त-इति शास्त्राभ्यनुज्ञातत्वात् । अनुमोदते विवरणमेतत् पराशरः,—

"युगे युगेषु ये धर्मास्तेषु धर्मेषु ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ब्राह्मणाः ॥
हुङ्कारं ब्राह्मणस्योक्त्वा त्वंकारञ्च गरीयसः ।
स्नात्वा तिष्ठन्नहःशेषमभिवाद्य प्रसादयेत्" ॥

इत्येतद्वचनद्वयं युगानुरूपशिष्टानामुपलक्षकम् । न च—
"यस्मिन् देशे य आचारः पारम्पर्य्यक्रमागत"—इति ।
मानवीयवचनोक्तपारम्पर्य्यपदसामर्थ्यात्तद्देशीयपुरातनाचारः शिष्टाचारः,-

नचेदानीन्तन: शिष्टाचार: शिष्टाचारात्मकत्वेन परिगणनीय इति वाच्यं,-मनूक्ताचारजातमन्तरा पूर्वप्रदर्शितवशिष्ठसंहितावचनेऽप्याचाराधिक्यपरिदर्श-नात् । अतएवेदानीन्तनशिष्टाचारोऽपि ग्रहणीय: शिष्टाचारात्मकत्वेन । न च नित्यक्तबहुविधाचारानुष्ठाने निष्प्रयोजनक: सतामायासो लोकहितानापादकत्वादिति वाच्यम् । नियमात्मकाचाराणामवलम्बनमन्तरोच्छृङ्खलाचरणेन-शरीराद्यपतनस्य शारीरिकविज्ञानायुर्वेदादिशास्त्रसम्मततया सदाचारानुष्ठा-नस्य लोकहितापादकत्वेन सप्रयोजनकत्वात्, अतएवैतदाचरणं मङ्गलाधायकं-लोकानामिति सिद्धान्त: । प्रमाणयन्ति युक्तिमेतामायुर्वेदीयभावप्रकाश-श्रुस्रुतवचनानि । यथा,—

भावप्रकाशे प्रथमभागे,—

"मानवो येन विधिना स्वस्थस्तिष्ठति सर्वदा ।
तमेव कारयेद्वैद्यो यत: स्वास्थ्यं सदेप्सितम् ॥
दिनचर्य्यां रात्रिचर्य्यामृतुचर्य्यां यथोदिताम् ।
आचरन् पुरुष: स्वस्थ: सदा तिष्ठति नान्यथा ॥
ब्राह्मे मुहूर्त्ते बुध्येत स्वस्थो रक्षार्थमायुष: ।
तत दु:खप्रशान्त्यर्थं स्मरेद्धि मधुसूदनम् ॥
आयुष्यमुषसि प्रोक्तं मलादीनां विसर्जनम् ।
गुदादिमलमार्गाणां शौचं कान्तिवलप्रदम् ॥
पवित्रकरमायुष्यमलक्ष्मीकलिपापहृत् ।
प्रक्षालनमत: पाण्यो: पादयो: शुद्धिकारणम् ॥
मलश्रमहरं वृष्यं चक्षुष्यं राजसापहम् ।
भक्षयेद्दन्तवपनं द्वादशाङ्गुलमायतम् ॥
कनिष्ठकाग्रवत्-स्थूलमृज्वग्रन्थि तथाव्रणम् ।
एकैकं घर्षयेद्दन्तमृजुना क्रूच्र्केण तु ॥

दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन्।
क्षौद्रत्रिकटुकाक्तेन तैलत्वक्षभवेन वा॥
चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत्।
मधुको मधुरे श्रेष्ठः करञ्जः कटुके तथा॥
निम्बः स्यात्तिक्तके श्रेष्ठः काषाये खदिरस्तथा।
समयं तु समालोक्य दोषञ्च प्रकृतिं तथा"॥
यथोचितै-रसैर्वीर्य्यैरुक्तं द्रव्यं प्रयोजयेत्।
"तेनास्य मुखवैरस्यदन्तजिह्वास्यजा गदाः"।
रुचिवैशद्यलघुता न भवतीत्यादि तथा तत्रैव।
"दीपनं वृष्यमायुष्यं स्नानमोजोवलप्रदम्।
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपापनुत्॥
भुञ्जीत मधुरप्रायं स्निग्धं काले हितं मतम्।
न रात्रौ दधि भुञ्जीत न च निर्लवणं तथा॥
नामुद्गखफलाक्षौद्रं न चाप्यघृतशर्करम्"। इति।

तथा च सुश्रुतः,—

"बुभुक्षितोऽन्नमश्नीयान्मात्रावद्विदितागमः।
काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते॥
पूर्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ।
नाप्राप्तातीतकालं वा हीनाधिकमथापि वा॥
अप्राप्तकाले भुञ्जानः शरीरे ह्यलघौ नरः।
तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति।
अतीतकाले भुञ्जानो वायुनोपहतेऽनले।
कृच्छाद्वि-पच्यते भुक्तं द्वितीयञ्च न काङ्क्षति"॥ इति।

तदेवमनुमनुते मनुरपि,—

"नोच्छिष्टं कस्यचित्-दद्यान्नाद्याच्चैव तथान्तरा ।
न चैवात्यशनं कुर्य्यान्न चोच्छिष्टः क्वचिद्व्रजेत् ॥
अनारोग्यमनायुष्यमस्वर्ग्यञ्चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तं परिवर्जयेत्" ॥ इत्यादि ।

एवमन्येष्वायुर्वेदीयग्रन्थेषु तथा संहितान्तरेषु चैतत्समान्यैतदधिकाचारबोधकानि प्रमाणानि सन्त्यपि निबन्धबाहुल्यभयान्न संगृहीतानि । निरुक्ताचारव्रातानुष्ठानस्य यथाक्रमं शारीरिकस्वास्थ्यापादकतया तथा परमायुर्विवर्द्धकतया परमेश्वरोपासनानुरागाधायकतया च स्वदेशीयार्य्यनृपतिसाहाय्येनानापदि स्वपरिवारपोषणे तथा स्वोदरपरिपूरणे च भावनाविहीनत्वात् प्रातरारभ्य प्रदोषं यावत् समयाभ्यन्तरे स्वस्वजात्युक्तसकलाचारजातमनुष्ठितं पूर्व्वतो ब्राह्मणादिभिः । किन्त्वधुना परिजनपरिपालने स्वजठरानलोपशमने च तादृक्साचिव्याभावात्तदेव चिन्तानिमग्नतयाऽचारात्मकशौचादिकर्म्मनिवहस्य प्रचुरतया चापद्यस्यां तत्कर्मवृन्दानुष्ठाने हतोत्साहित्वात्तदभावे दैहिकारोग्यस्य दीर्घजीवनस्य तथा परमेश्वरोपासनानुरक्तेश्च क्षीणबलत्वाच्च सत्यपि सङ्कोचेन तदनुष्ठाने तत्त्रितयरक्षणसम्भावनया संक्षेपतो विधेयमन्ततस्तदाचरणं विप्रादिभिरिति सुपरामर्शः । स त्वाचारः किमात्मकः इत्यपेक्षायामुच्यतेऽधस्तात्तः । यथा,—

स आचारो नित्यनैमित्तिककाम्यकर्मात्मकत्वेन त्रिविधः । ततः कर्मनाम्नाभिहितः सः । तत्त्रिविधकर्ममध्यतो नैमित्तिककाम्यकर्मणोः कालान्तरोपस्थिततया तथा ग्रन्थान्तरेषु तद्विशेषविवृतेर्विद्यमानतया च नित्यकर्मपद्धत्यनुसारतः केवलमत्र समुल्लिख्यन्ते नित्यकर्माणि सामान्येन प्रकृतोपयोगतः । यथा नित्यकर्मपद्धतौ प्रातःस्मरणम्,—

"प्रभाते यः स्मरेन्नित्यं दुर्गा दुर्गाक्षरद्वयम् ।
आपदस्तस्य नश्यन्ति तमः सूर्य्योदये यथा ॥

भ्रमरी-कबरी-पुष्प-भ्रमरीमुखरीकृतम्।
दूरीकरोति दुरितं दुर्गाचरणपङ्कजम्॥
हरं हरिं हरिश्चन्द्रं हनूमन्तं हुताशनम्।
हकारादीन् स्मरन्नित्यं हानिस्तस्य न विद्यते॥
कर्कोटकस्य नागस्य दमयन्त्या नलस्य च।
ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्॥
अहल्या द्रौपदी तारा शची मन्दोदरी तथा।
पञ्च कन्याः स्मरन्नित्यं महापातकनाशनम्॥
पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः।
पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः" ॥

"जय जय राम! जयासुरसूदन! जय माधव! जय विष्णो!।
हर नरकं नरकरिपो! केशव! कल्मषभारम्॥
मामनुकम्पय दीनमनाथं नृहरे! कुरु भवसागरपारम्।
अपराधं मे हर! हर परिहर कुरु ते चरणं शरणम्॥
संसारार्णवतरणे करुणावरुणालय! भवतरणं हर!।
पुनरपि जननं पुनरपि मरणं पुनरपि गर्भनिवासम्॥
सोढुमहं न प्रभुरच्युत! माधव! मामुद्धर निजदासं हर!।
त्वं जननी जनिमतां मद्भर्त्तासि मे कलत्रमिवम्॥
त्वं शरणं शरणागत! हृद्वत्सल! त्वं भवजलधिनिमग्नमित्रम् हर!।
हे नारायण! हे पुरुषोत्तम! हे वामन! हे कंसारे!॥
उद्धर मामशुभाद्घनाशन! पतितं भवसंसारे हर!।
औषधे चिन्तयेद्विष्णुं भोजने च जनार्द्दनम्।
शयने पद्मनाभञ्च विवाहे च प्रजापतिम्॥

संग्रामे चक्रिणं देवं प्रवासे च त्रिविक्रमम् ।
नारायणं प्राणत्यागे श्रीधरं प्रियसङ्गमे ॥
दुःस्वप्ने स्मर गोविन्दं विपत्तौ मधुसूदनम् ।
कानने नरसिंहञ्च पर्व्वते रघुनन्दनम् ॥
जलमध्ये च वाराहं पावके जलशायिनम् ।
मायासु वामनं देवं सर्वकार्य्येषु माधवम् ॥
इति षोड़शनामानि प्रातरुत्थाय यः पठेत् ।
अचलां श्रियमाप्नोति विष्णुलोकं स गच्छति" ॥

इति प्रभातस्मरणम् ।

अथ पुरीषोत्सर्गः । ततः शौचं । अथ दन्तधावनं, तत्र दन्तकाष्ठ-विवेचनम् । यथा,—

"खदिरश्च करञ्जश्च कदम्बश्च कटस्तथा ।
तिन्तिड़ी वेणुपृष्ठश्च आम्रनिम्बौ तथैव च ॥
अपामार्गश्च विल्वश्च अर्कश्चोदुम्बरस्तथा ।
एताः प्रशस्ताः कथिता दन्तधावनकर्मणि" ॥ इति ।

परिमाणमेतेषां काष्ठानां वर्णभेदक्रमेण । यथा,—

"द्वादशाङ्गुलं तु विप्राणां क्षत्रियाणां दशाङ्गुलम् ।
अष्टाङ्गुलं तु वैश्यानां शूद्राणाञ्च षड़ङ्गुलम्" ॥

अथ स्नानम् । तत्र मन्त्रः,—

"शिवगङ्गे नमस्तुभ्यं सर्वपापव्यपोहिनि ! ।
स्नानं करोमि त्वत्तोये शिवलोकं प्रयच्छ मे" ॥

अथ गङ्गाष्टकं यथा,—

"मातः शैलसुतासपत्नि ! वसुधाशृङ्गारहारावलि ! ।
स्वर्गारोहणवैजयन्ति ! भवतीं भागीरथीं प्रार्थये ॥

त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्वीचिमुत्प्रेक्षत,—
स्त्वन्नाम स्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः ॥

त्वत्तीरे तरुकोटरान्तरगतो गङ्गे ! विहङ्गो वरम् ।
त्वन्नीरे नरकान्तकारिणि ! वरं मत्स्योऽथवा कच्छपः ॥

नैवान्यत्र मदान्धसिन्धुरघटासङ्घट्टघण्टारणत्,
कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ।

काकैर्निष्कुषितं श्वभिः कवलितं गोमायुभिर्लुण्ठितम् ।
स्रोतोभिश्चलितं तटाम्बुमिलितं वीचिभिरान्दोलितम् ॥

दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानः कदा ।
द्रक्ष्येऽहम् परमेश्वरि ! त्रिपथगे ! भागीरथि ! स्वं वपुः ।

अभिनवविषवल्लीपादपद्मस्य विष्णो-
र्मदनमथनमौलेर्मालतीपुष्पमाला ।
जयतु जयपताका काप्यसौ मोक्षलक्ष्म्याः-
क्षयितकलिकलङ्का जाह्नवी नः पुनातु ॥

यत्तत्तालतमालतालसरलव्यालोलवल्लीचयच्छन्नं,
सूर्य्यकरप्रतापरहितं गङ्गेन्दुकुन्दोज्ज्वलं ।
गन्धर्वामरसिद्धकिन्नरवधूतुङ्गस्तनास्फालितम्,
स्नानाय प्रतिवासरं भवतु मे गाङ्गं जलं निर्मलम् ॥

गाङ्गं वारि मनोहारि मुरारिचरणच्युतम् ।
त्रिपुरारिशिरश्चारि ! पापहारि ! पुनातु मां ॥

पापापहारि ! दुरितारि ! तरङ्गधारि ! ।
दूरप्रसारि ! गिरिराजगुहाविदारि ! ॥

धत्कारकारि ! हरिपादरजोपहारि ! ।
गाङ्गं पुनातु जगतः शुभकारि-वारि ॥
वरमिह गङ्गातीरे सरटः करटः कृशशुनीतनयः ।
न पुनर्दूरतरस्थः करिवरकोटीश्वरो नृपतिः ॥
गङ्गाष्टकं पठति यः प्रयतः प्रभाते,
वाल्मीकिना विरचितं सुखदं मनुष्यः ।
प्रक्षाल्य गात्रकलिकिल्बिषपङ्कमाशु,
मोक्षं लभेत्-पतति नैव पुनर्भवाब्धौ" ॥ इति ।

श्रीवाल्मीकिना विरचितं गङ्गाष्टकं सम्पूर्णं । सत्स्वपि बहुषु गङ्गास्तवेषु-विशेषतः समादृततया समुन्मीलितमत्र गङ्गाष्टकमिदम् ।

अथ तिलकप्रकारः । यथा,—

"ललाटे दण्डवत्-कुर्य्याद्धृदये कमलाकृतिम् ।
बाहौ च वेणुपत्रं स्यात्तदन्यत्र तु दीपवत्" ॥

रीत्यानया तिलकधारणम् ।

अथ सन्ध्या,—

ततः पवित्रमुद्रां दक्षकरे, वामकरे कुशान् धृत्वा प्रथमतो द्विराचमनं-त्रिर्गण्डमार्ज्जनम् । इन्द्रियस्पर्शनम् । "ॐ अपवित्रः पवित्रो वा सर्व्वावस्थां-गतोऽपि वा । यः स्मरेत्-पुण्डरीकाक्षं स वाह्याभ्यन्तरशुचिः" । ॐ विष्णवे नमः । इति नारायणं स्मरेत् । "ॐ शं न आपो धन्वन्याः शं नः सन्त्वनूप्याः । शन्नः समुद्रापः शमुनः सन्तु कूप्याः", इति शिरसि मार्जनम् । "द्रुपदादिव-मुमुचानः स्विन्नः स्नातो मलादिव । पूतं पवित्रेण वाज्यमापः शुन्धन्तु-मैनसः" । पूर्ववत् ।

"ॐ आपो हिष्ठा मयोभुवस्तान ऊर्जे दधातन । महेरणाय चक्षसे यो वः-शिवतमोरसस्तस्य भाजयते हनः । तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ ।

आपो जनयथाचन: "इति नवधा मार्जनम्। ॐ ऋतं च सत्यञ्चाभीद्धात्तप-सोऽध्यजायत। ततो रात्र्यजायत। तत: समुद्रोऽर्णव: समुद्रादर्णवादधिसम्ब-त्सरोऽजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ-धाता यथा पूर्वमकल्पयद्दिवञ्च पृथिवीं चान्तरीक्षमथो स्व:"। इति शिरसि-मार्जनं। "अघमर्षणसूक्तस्य। अघमर्षण-ऋषि:। अनुष्टुप्छन्द:। भाववृत्तं दैवतम्। अश्वमेधावभृथे विनियोग:", ऋतं चेति जलाभिमन्त्रणम्।

द्विराचमनम्—

सप्रणवविव्याहृतियुक्तगायत्र्या मार्जनं, आपोहिष्ठेति मार्जनम्। ऋतं-चेति मार्जनं, "दर्भेषु दर्भपाणि: स्यादिति वचनात्, कुशाद्यासने। "आसन-मन्त्रस्य। मेरुपृष्ठ-ऋषि:। सुतलीछन्द:। श्रीकूर्मो देवता। आसने-विनियोग:। स्वासने कमलासनाय नम:, "ॐ पृथिवि! त्वया धृता लोका-देवि! त्वं विष्णुना धृता। त्वञ्च धारय मां देवि पवित्रमासनं कुरु" इति। पृथ्वीं प्रार्थ्य ब्रह्मणे नम इत्यभितो जलं निक्षिपेत्। "ॐ कारस्य ब्रह्मा-ऋषि:। गायत्री छन्द:। अग्निर्देवता। सर्वकर्मारम्भे विनियोग:" "ॐ खं ब्रह्मेत्यादि-ब्राह्मणम्। सप्तव्याहृतीनां प्रजापति: ऋषि:, गायत्र्युष्णिगनुष्टुप्-बृहती-पंक्ति-त्रिष्टुब्जगत्य: छन्दांसि। अग्निवायुसूर्य्यबृहस्पतिवरुणेन्द्रविश्वेदेवा: देवता:। प्राणायामे विनियोग:। "ॐ भूरिति ऋग्वेदादित्यादि ब्राह्मणम्। गायत्र्या-विश्वामित्र-ऋषि:। गायत्री छन्द:। अग्निमुखोपनयने विनियोग:"। "ॐ-भूमिरन्तरीक्षं द्यौरित्यादि ब्राह्मणम्। शिरस: प्रजापति: ऋषि:। छन्दोऽभाव:। यजु:। ब्रह्माग्निवायुसूर्य्या देवता:। प्राणायामे विनियोग:"। सशिरस्कं-त्रि: पठेदित्यादि-ब्राह्मणं। तत: प्राणायाम:। "निरोधाज्जायते वायुरग्निश्च-जायते तत:। अग्नेराप: प्रजायन्ते ततोऽन्त: शुध्यते द्विज:"। फलं। "सप्त-व्याहृतिभि: सार्द्धं दशोंकारसमन्विताम्। शिरसा संहितां देवीं प्राणायामे-प्रयोजयेत्"। तत्यथा। ॐ भू:, ॐ भुव:, ॐ स्व:, ॐ मह:, ॐ जन:-ॐ तप:, ॐ सत्यं, ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो न:-प्रचोदयात्। ॐ आपो-ज्योति-रसोऽमृतं ब्रह्म भूर्भुव: स्वरों"। इति मन्त्रेण पूरककुम्भकरेचकक्रमेण मध्यमातर्जन्यौ विहाय। "दक्षिणे रेचयेद्वायुं-

पूरकं वामतः स्मृतं । निरुद्धपवनश्चैव कुम्भकः परिकीर्त्तितः" इति विधिना । पूरणे श्यामं विष्णुं हृदम्बुजे । कुम्भके रुद्रं शिरःपद्मे । रेचके रक्तं ब्रह्माणं नाभिपद्मे । ध्यायन् प्राणायामत्रयं कार्य्यम् । सन्ध्यासु च तिस्रष्वपीति वचनात् प्राणायामत्रयं कुर्य्यात् ।

"ॐ अन्तश्चरति भूतेषु गुहायां विश्वतो मुखः । त्वं यज्ञस्त्वं वषट्कार-आपोज्योतिरसोऽमृतम्" । इति सकृदाचमनम् । आपोहिष्ठेति मार्जनम् । द्रुपदादिवेत्यञ्जलिरेकः । जलाञ्जलिं धृत्वा ऋतं चेति पठित्वा नासाग्रेण-दक्षिणहस्ते समर्पयेत् । ततः कराभ्यां तोयमादाय गायत्र्याऽभिमन्त्रितम् । आदित्याभिमुखं तिष्ठन्नूर्द्धं सन्ध्ययोः क्षिपेत्, इति वचनात् प्रणवव्याहृति-गायत्र्या त्रीनञ्जलीन् क्षिपेत् । मध्याह्ने तु सकृदेव क्षेपणीयं द्विजातिभिः । इति वचनान्मध्याह्ने एकाञ्जलिं वा क्षिपेत् । ततः उपस्थानं कुर्य्यात् । सायं प्रातरानताञ्जलिना । मध्याह्ने ऊर्द्धं बाहुः । प्रातर्मध्याह्ने उपस्थानम् । असावादित्यो ब्रह्म इति प्रावृत्य तिष्ठेत्, "उदुत्यं जातवेदसं । देवं वहन्ति-केतवः । दृशे विश्वाय सूर्य्यं ।१। चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य-वरुणस्याग्नेः । आप्राद्यावा पृथिवी अन्तरीक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च ।२। ॐ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरं । देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमं । तच्चक्षुर्देवहितं पुरस्तात् शुक्रमुच्चरत् । जीवेमः शरदः शतं पश्येमः शरदः-शतं । शृणुयामः शरदः शतं ।४। गायत्र्या विश्वामित्र ऋषिः । गायत्री-छन्दः । सविता देवता । गीं वीजं । यं शक्तिः । गायत्रीजपे विनियोगः । ॐ भूः अङ्गुष्ठाभ्यां नमः । ॐ भुवस्तर्जनीभ्यां स्वाहा । ॐ स्वः मध्यमाभ्यां-वषट् । ॐ तत्सवितुर्वरेण्यं अनामिकाभ्यां हुं । ॐ भर्गोदेवस्य धीमहि-कनिष्ठाभ्यां वौषट् । धियो यो नः प्रचोदयात्-करतलकरपृष्ठाभ्यां फट् । एवमङ्गन्यासः । अस्त्रायफट् इति विशेषः ।

ध्यानं यथा,—

"ॐ ध्येयः सदा सवितृमण्डलमध्यवर्त्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् मकरकुण्डलवान् किरीटिहारी हिरण्मयवपुर्धृतशङ्खचक्रः" ।

"ॐ आयाहि वरदे देवि ! त्र्यक्षरे ! ब्रह्मवादिनि ! ।
गायत्रि ! छन्दसां मातः ! स्वयं ब्रह्म भुवः स्वरोम्" ॥

इति ध्यात्वा,—

"ब्रह्मचारी गृहस्थश्च अष्टोत्तरशतं जपेत् ।

इति वचनात् अष्टोऽष्टोत्तरशतं जपेत् ।

अशक्तस्तु

सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह" ॥

"ये जपन्ति सदा तेषां न भयं विद्यते क्वचित् ।
दश जप्ता तु सा देवी दिनपापप्रणाशिनी ॥
शतं जप्ता तथा सा तु सर्व्वकल्मषनाशिनी ।
सहस्रं जप्ता सा नृणां पातकेभ्यः समुद्धरेत्" ॥

इत्यादि ग्रंथवचनात् ।

दशसंख्यकमपि गायत्रीजपं कुर्य्यात् । जपसमर्पणम् ।

"ॐ उत्तरे शिखरे जाते भूम्यां पर्वतवासिनि ! ।
ब्रह्मणा समनुज्ञाता गच्छ देवि ! यथेच्छया" ॥

पूर्ववत्प्राणायाममेकम् । निरग्निकः जलाञ्जलिहोमं कुर्य्यात् । सूर्य्याय-स्वाहा । ॐ प्रजापतये स्वाहा । सायं सन्ध्यायां ; ॐ अग्नये स्वाहा । ॐ-प्रजापतये स्वाहा । प्रातर्मध्याह्नयोः सूर्य्यार्घः । सायं नास्ति । तद्यथा कुशान्वित-ताम्रपात्रजले जले वा रक्तचन्दनपद्मं लिखित्वा अर्घप्रकरणोक्तजलं गृहीत्वा,—

ॐ हंसःशुचिषद्वसुरन्तरीक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरस-दृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । इति पठित्वा सूर्य्य-सर्वात्मकं ध्यात्वा श्रीसूर्य्याय एषोऽर्घः स्वाहा इति पद्मे निक्षिपेत् । नेत्राभ्यां-वौषट् इति नेत्रे जलेन प्रमृज्यात् ।

"ॐ आब्रह्मस्तम्भपर्य्यन्तं जगदेतच्चराचरम् ।
मया दत्तेन तोयेन तृप्यते तच्चतुर्विधम्" ॥

त्रिः । ब्रह्मणे विष्णवे, रुद्राय नमः ।

ॐ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशङ्करात्मने नमः ॥

"अच्युतं केशवं विष्णुं हरिं सत्यं जनार्द्दनम् ।
हंसं नारायणञ्चैव एतन्नामाष्टकं शुभम् ॥
त्रिसन्ध्यं यः पठेन्नित्यं दारिद्र्यं तस्य नश्यति ।
शत्रुसैन्यं क्षयं याति दुःस्वप्नं चापकर्षति ॥
गङ्गायां मरणञ्चापि दृढ़ा भक्तिश्च केशवे ।
ब्रह्मविद्याप्रबोधश्च तस्मान्नित्यं पठेन्नरः" ॥

इति यजुर्वेदीयसन्ध्यापद्धतिः । सन्ध्यामेतामनुतिष्ठेयुर्यजुर्वेदीयाः प्रातः-सायं चापदि । तथैवमृग्वेदीयादयः स्वस्ववेदोक्तसन्ध्यामनुतिष्ठेयुः । किन्तु ग्रन्थ-बाहुल्यभिया तत्तोक्तसन्ध्यापद्धतिर्नोद्धृताच ।

अथ महादेवदर्शनविधिः ।

"वृषं चण्डं वृषञ्चैव सोमसूत्रं पुनर्वृषम् ।
वृषस्य वृषणं स्पृष्ट्वा शङ्करस्यावलोकनम् ॥
कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति" ।

चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्ता सोऽस्य ।
त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्याँ२ऽआविवेश" ॥

गणेशदर्शनविधिः ।

"नमो गणेश ! विघ्नेश ! गिरिजानन्दन ! प्रभो ! ।
मम विघ्नं निहत्याशु सर्वसिद्धिप्रदो भव !" ॥

कार्त्तिकेयदर्शनविधिः ।

"क्रौञ्चहन्त्रे नमस्तुभ्यं पार्वतीप्रीतिवर्द्धन ! ।
नमस्ते नाकसेनान्ये स्वर्गलोकं प्रयच्छ मे" ॥

पार्वतीदर्शनविधिः ।

मन्दारमालाकलितालकायै कपालमालाङ्कितशेखराय ।
दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥

इति ॥ हर हर वं वं ह्रीं क्लं। श्रीमहादेवाय नमः ।

"पापोऽहं पापकर्माहं पापात्मा पापसम्भवः ।
त्राहि मां त्वं विरूपाक्ष ! सर्वपापहरो हर सर्वदुःखहरो हर ।
प्रथमञ्च महादेवं द्वितीयञ्च महेश्वरम् ।
तृतीयं शङ्करं नाम चतुर्थं वृषभध्वजम् ॥
पञ्चमं कृत्तिवासञ्च षष्ठं कामाङ्गनाशनम् ।
सप्तमं देवदेवेशं नीलकण्ठमथाष्टकम् ॥
नवमञ्चेश्वरं नाम दशमं पार्वतीप्रियम् ।
रुद्रमेकादशं नाम द्वादशं शिवमुच्यते ॥
एतानि द्वादशनामानि त्रिसन्ध्यं यः पठेन्नरः ।
गोघ्नश्चैव कृतघ्नश्च ब्रह्महा गुरुतल्पगः ॥
स्त्रीबालघातकश्चैव सुरापो वृषलीपतिः ।
मुच्यते सर्वपापेभ्यः शिवलोकं स गच्छति ॥"

इति श्रीस्कन्दपुराणीयशिवद्वादशनामस्तोत्रं सम्पूर्णम् ।

ॐपुरुषसूक्तस्य । नारायण ऋषिः । पञ्चदशार्चानुष्टुपछन्दः । षोडशत्रिष्टुप्छन्दः । जगती बीजम् । पुरुषो देवता । पुरुषमेधे विनियोगः । ध्यानम्—

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती-
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरिटीहारी-
हिरण्मयवपुर्धृतशङ्खचक्रः ॥

"ॐ सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं ᳫं सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥
पुरुष एवेदं सर्वं यद्भूतं यच्चभाव्यं ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥
एतावानस्य महिमातो ज्यायाᳫंश्च पुरुषः ।
पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥
त्रिपादूर्द्ध्वमुदैत्पुरुषः पादोऽस्येहा भवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥
ततो विराडजायत विराजोऽधिपूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥
तस्मात् यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूᳫंस्ताᳫंश्चक्रे वायव्या नारण्या ग्राम्याश्च ये ॥ ६ ॥
तस्माद् यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दाᳫंसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ ७ ॥
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥
तं यज्ञम्बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥
यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते ।
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याᳫं शूद्रोऽजायत ॥ १० ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽजायत ।
श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत ॥ ११ ॥
नाभ्या आसीदन्तरीक्षं शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ १२ ॥
यत् पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १३ ॥
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १४ ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्तयत्र पूर्वे साध्याः सन्ति देवाः ॥१५॥
अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१६॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥१७॥
प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥१८॥
यो देवेभ्य आतपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ १९ ॥
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ २० ॥
श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे
पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं म इषाण सर्वलोकम्म इषाण ॥ २१ ॥

भुभुवाके द्वाविंशतिः । इति श्रीकात्यायनाख्यायां सप्तत्रिंशोऽध्यायः ।

ॐ हरिः तत्पुरुषाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् ।

अथ शिवपञ्चाक्षरमन्त्रेण, श्रीशिवाय जलदानम् ।

अथ पञ्चदेवतामन्त्रजपः । यथा—अष्टाक्षरनारायणमन्त्रस्य । अन्तर्यामी-नारायण ऋषिः । देवी गायत्रीछन्दः । श्रीनारायणो देवता । ॐ बीजं । आयुः-शक्तिः । जपे विनियोगः । ॐ क्रुद्धोल्काय स्वाहा अंगुष्ठाभ्यां नमः । ॐ महोल्काय-स्वाहा । तर्जनीभ्यां स्वाहा । ॐ वीरोल्काय स्वाहा । मध्यमाभ्यां वषट् । ॐ-द्युरोल्काय स्वाहा, अनामिकाभ्यां हुं । ॐ शतोल्काय स्वाहा । कनिष्ठाभ्यां वौषट् । ॐ सहस्रोल्काय स्वाहा । करतलकरपृष्ठाभ्यां अस्त्राय फट् । एवमङ्गन्यासः ।

ध्यानं ।

ॐ अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराजत्केयूरं,
कौस्तुभाभाशवलरुचिरहारं सपीताम्बरं च ।
नानारत्नांशुभिन्नाभरणशतयुतं-श्रीधराश्लिष्टपार्श्वं,
वन्दे दोः सक्तचक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम् ॥

मन्त्रः, ॐ नमो नारायणाय ।

श्रीशिवपञ्चाक्षरमन्त्रस्य । वामदेव ऋषिः । अनुष्टुप्छन्दः । श्रीसदाशिवो-देवता । नं बीजं । मं शक्तिः । जपे विनियोगः । ॐ अङ्गुष्ठाभ्यां नमः । मं तर्जनीभ्यां स्वाहा । मं मध्यमाभ्यां वषट् । शिं अनामिकाभ्यां हुं । वां-कनिष्ठाभ्यां वौषट् । यं करतलकरपृष्ठाभ्यां अस्त्राय फट् एवमङ्गन्यासः ।

ध्यानं ।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसम् ।
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।

पद्मासीनं समन्तात्-स्तुतममरगणै र्व्याघ्रकृत्तिं वसानम् ।
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ।

मन्त्रः । ॐ नमः शिवाय ।

षडक्षरवक्रतुण्डमन्त्रस्य । भार्गव ऋषिः । अनुष्टुप् छन्दः । श्रीवक्रतुण्डो-देवता । वं बीजं । ह्रं शक्तिः । जपे विनियोगः । ॐ वं गणपतये अङ्गुष्ठाभ्यां-नमः । क्रं एकदंष्ट्रिणे तर्जनीभ्यां स्वाहा । तुं लम्बोदराय मध्यमाभ्यां वषट् । ण्डं चलत्कर्णाय अनामिकाभ्यां हुं । यं गजवक्त्राय कनिष्ठाभ्यां वौषट् । हुं-सर्वविघ्नोपशमनाय करतलकरपृष्ठाभ्यां अस्त्राय फट् । एवमङ्गन्यासः ।

ध्यानं ।

पाशाङ्कुशाभयवरान् धारयन्तं गजाननम् ।
लम्बोदरं त्रिनयनं विचलत्कर्णचामरम् ॥
तप्तचामीकरप्रख्यं गजवक्त्रं चतुर्भुजम् ।
पद्मे पद्मासनं रक्तं वक्रतुण्डं विचिन्तयेत् ॥

मन्त्रः, ॐ वक्रतुण्डायहुम् ।

ॐ वनदुर्गामन्त्रस्य । आरण्यकऋषिः । अनुष्टुप्छन्दः । श्रीदुर्गादेवी देवता । दुं बीजं । हुं शक्तिः । जपे विनियोगः । ॐ उत्तिष्ठ पुरुषि, अङ्गुष्ठाभ्यां नमः । किं स्वपिषि, तर्जनीभ्यां स्वाहा । भयं मे समुपस्थितं, मध्यमाभ्यां वषट् । यदि-शक्यमशक्यं हुं, अनामिकाभ्यां हुं । ॐ दुं दुर्गे भगवति शमयाय स्वाहा करतलकरपृष्ठाभ्यां अस्त्राय फट् । एवमङ्गन्यासः ।

ध्यानं ।

"हिमाचलगुहामध्ये निद्राघूर्णितलोचनाम् ।
शक्रानां देवताद्वन्द्वैर्बोध्यमानां वराननाम् ॥
विमुक्तकेशवसनां सव्यपाणिशमूर्द्धजाम् ।
चिन्तयेत्तालगहने खर्जुरीपूगवेष्टिते ॥

कदम्बद्रुमशोभाढ्ये नानाजन्तुसमाकुले।
नानापक्षिसमाकीर्णे नानाशब्दनिनादिते॥

केचित्तु गायेत्तु वर्णवर्णाभां इति मन्त्रः। ॐ उत्तिष्ठपुरुष इत्यादि।

अष्टाक्षरसूर्यमन्त्रस्य। ब्रह्मा ऋषिः। गायत्रीछन्दः। आदित्यो देवता। ह्रीं बीजं। आदित्य शक्तिः। घृणिसूर्यः कीलकं। जपे विनियोगः। सत्याय अङ्गुष्ठाभ्यां नमः। ब्रह्मणे तर्जनीभ्यां स्वाहा। विष्णवे मध्यमाभ्यां-वषट्। रुद्राय अनामिकाभ्यां हुं। अग्नये कनिष्ठाभ्यां वौषट्। सर्वाय-करतलकरपृष्ठाभ्यां अस्त्राय फट्। एवमङ्गन्यासः।

ध्यानं।

"रक्ताब्जयुग्माभयदानहस्तम्, केयूरहाराङ्गदकुण्डलाढ्यं।
माणिक्यमौलिं दीननाथमीडे बन्धूककान्तिं विलसत्त्रिनेत्रम्॥
जपसंख्या तु दशपरिमिता सर्वत्र। मन्त्रः।

अथ वैश्वदेवविधिः।

कुशत्रयं। गोमयं। उदकपात्रं। वस्त्राभावेन पुनः कुशत्रयं। ॐ-परिसमुह्य। उपलिप्य। उद्धृत्य। अभ्युक्ष्य। पञ्चभूसंस्कारेणाग्निसंस्थापनं।
ॐ एषो ह देवः प्रदिशोऽनुसर्वाः पूर्वो ह जातः स उ गर्भे अन्तः।
स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतो मुखः॥

ॐ दधीचिगोत्रहृतकल्लोलप्रवरपावकनामाग्नये नमः। पावक नामाग्नि-मावाहयामि। पावकनामाग्नेऽत्रागच्छ। ॐ अग्नये स्वाहा,—इदमग्नये। ॐ प्रजापतये स्वाहा। ॐ प्रजापतये। ॐ गुह्येभ्यः स्वाहा। ॐ गुह्येभ्यः। ॐ कश्यपाय स्वाहा। ॐ कश्यपाय। ॐ अनुमतये स्वाहा,— इदमनुमतये। एवमुक्त्वा प्रक्षिपेदग्नौ। ततः सिञ्चेज्जलं, ॐ पर्जन्याय नमः, इदं पर्जन्याय। ॐ पृथिव्यै नमः, इदं पृथिव्यै। ॐ अद्भ्यो नमः। इदमद्भ्यः। ॐ धात्रे नमः, इदं धात्रे। ॐ विधात्रे नमः। इदं विधात्रे। एतदेवमुक्त्वा धरातले-

तथा मध्यरेखायां च निक्षिपेन्मन्त्रं । ॐ वायवे नमः । इदं वायवे । इदमुक्त्वा-कोणचतुष्टये निक्षिपेदन्नं । ॐ प्राच्यै दिशे नमः । इदं प्राच्यै दिशे । ॐ दक्षिणायै दिशे नमः । इदं दक्षिणायै दिशे । ॐ उदीच्यै दिशे नमः,- इदं उदीच्यै दिशे । ॐ प्रतीच्यै दिशे नमः, इदं प्रतीच्यै दिशे । एव-मुक्त्वा चतुर्दिक्षु निक्षिपेदन्नं । तदनन्तरं सिञ्चेज्जलं मध्ये । ॐ ब्रह्मणे नमः, इदं-ब्रह्मणे । ॐ अन्तरीक्षाय नमः, इदं अन्तरीक्षाय । ॐ सूर्य्याय नमः, इदं-सूर्य्याय । तदुत्तरे । ॐ विश्वेभ्यो नमः, इदं विश्वेभ्यः । ॐ विश्वेभ्यो देवेभ्यो-नमः, इदं विश्वेभ्यो देवेभ्यः । ॐ विश्वेभ्यश्च भूतेभ्यो नमः, इदं विश्वेभ्योश्च-भूतेभ्यः । तदुत्तरे । ॐ भूतानाञ्च पतये नमः, इदं भूतानाञ्च पतये । ॐ उषसे-नमः, इदं उषसे । कथयित्वेदं मण्डलान्तर्गतधरातले दद्यादन्नं । ॐ पितृभ्यः-स्वधा नमः । इदं पितृभ्यः । यक्ष्मैतत्ते निर्णेजलं नमः । इदं यक्ष्मणे । एवमुक्त्वा-वलिपात्रपृष्ठे निक्षिपेदन्नं । ॐ सनकाद्याः सप्तमनुष्याः इदमन्नादिकं यथा-विभागं युष्मभ्यं हन्त । इदं सनकादिसप्तमनुष्येभ्यः । अमुकसगोत्राः अस्मत्-पितृपितामहप्रपितामहाः अमुकदेव ३ शर्माणः इदमन्नादिकं यथाविभागं-युष्मभ्यं स्वधा नमः । इदं अस्मत्पितृपितामहप्रपितामहेभ्यः अमुकदेव३-शर्मभ्यः । अमुकसगोत्राः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकदेव३-शर्माणः इदमन्नादिकं यथाविभागं युष्मभ्यं स्वधा नमः । इदमस्मत्मातामह-प्रमातामहवृद्धप्रमातामहेभ्यः अमुकदेव३ शर्मभ्यः । ॐ अतिथिब्राह्मणेभ्यो-नमः, इदं अतिथिब्राह्मणेभ्यः । शेषपात्रतो भक्तमानीय प्राङ्गणैकदेशे जलं-परिषिच्य तदुपरि तदन्नं निक्षिपेदक्ष्यमानमन्त्रत्रातोच्चारणेन । श्वभ्यो नमः । श्वपचेभ्यो नमः । वायसेभ्यो नमः । इति वैश्वदेवविधिः समाप्तः ।

अथ संक्षेपपूजाविधिः ।

उत्तिष्ठन्तु भूतगणाः सर्वेऽपि भूमिपालकाः ।
भूतानामविरोधेन पूजाकर्मसमाचरेत् ॥
अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्त्तारस्तेनश्यन्तु शिवाज्ञया ॥

ॐ आसनमन्त्रस्य, मेरुपृष्ठऋषिः। सुतलीछन्दः। श्रीकूर्मो देवता। आसने विनियोगः।

पृथिवी त्वया धृता लोका देवि त्वं विष्णुना धृता।

त्वं च धारय मांदेवि! पवित्रमासनं कुरु॥

इति वाक्येन पूजकस्य सर्वतः जलसेचनं। भूर्भुवः स्वः कूर्माय नमः,— इति मन्त्रेण आसने पुष्पं दद्यात्। वामे गुरुभ्यो नमः। दक्षिणे गणेशाय-नमः। मध्ये परमात्मने नमः। ततस्तालत्रयं कृत्वा दिग्बन्धनं कुर्य्यात्। इन्द्राय-नमः। अग्नये नमः। यमाय नमः। नैऋताय नमः। वरुणाय नमः। वायवे नमः। कुवेराय नमः। ईशानाय नमः। ब्रह्मणे नमः। अनन्ताय नमः। प्रणवमन्त्रस्य। प्रजापति ऋषिः। गायत्रीछन्दः परमात्मादेवता। अकारो-वीजं। उकारः शक्तिः। मकारः कीलकं। प्राणायामे विनियोगः। ॐ अं ॐ-आं अङ्गुष्ठाभ्यां नमः। ॐ इं ॐ ईं तर्जनीभ्यां स्वाहा। ॐ उं ॐ ऊं-मध्यमाभ्यां वौषट्। ॐ एं ॐ ऐं अनामिकाभ्यां हुं। ॐ ओं ॐ औं कनिष्ठाभ्यां-वषट्। ॐ अं ॐ अः करतल करपृष्ठाभ्यां अस्त्राय फट्। एवमङ्गन्यासः।

ध्यानं।

विष्णुं भास्वत्किरीटाङ्गदवलयगलाकल्पहारोदरांघ्रिम्,

श्रोणीभूषसवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम्।

हस्तोद्यच्चक्रशंखाम्बुजगदममलं पीतकौषेयवासम्,

विद्युद्भासं समुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि॥

प्रणवेन रेचकपूरककुम्भकान् कुर्य्यात्। आदौ घण्टावादनं, ततः करशुद्धिं-कृत्वाः त्रिकोणमण्डलं कृत्वा गन्धपुष्पं प्रक्षिप्य त्रिपादिकां शङ्खं च प्रक्षाल्य-तस्योपरि निधाय जलं तत्र दत्त्वा अङ्कुशमुद्रया शंखे तीर्थान्यावाह्य।

"गङ्गे! च यमुने! चैव गोदावरि! सरस्वति!।

नर्मदे सिन्धुकावेरि! जलेऽस्मिन् संनिधिं कुरु"॥

इति मन्त्रेण तत्र गङ्गादि-तीर्थजातमावाह्य तज्जलं सर्वोपरि निक्षिप्य-आवाहन-संस्थापन-सन्निधान-सन्निरोधनावगुण्ठनं धेनुमुद्रया अमृतीकरणं-महामुद्रया परमीकरणं। द्वारपालाय नमः। मणिपीठाय नमः। नारायणाय-आसनं नमः। नारायणाय गन्धो नमः। नारायणाय पुष्पं वौषट्। नारायणाय-धूपः स्वाहा। नारायणाय दीपः स्वाहा। अनया रीत्या संस्कारः। ॐ नारायणाय नैवेद्यं स्वाहा। प्राणाय स्वाहा। अपानाय स्वाहा। व्यानाय स्वाहा। उदानाय स्वाहा। समानाय स्वाहा। पुष्पं दद्यात्। अष्टवारं प्रणवं जपेत्।

गुह्याद्-गुह्यतरं गुह्यं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव! त्वत्प्रसादान्महेश्वर!॥
भक्तिहीनं क्रियाहीनं मन्त्रहीनार्थवर्जितम्।
यत्पूजितं मया देव! परिपूर्णं तदस्तु मे॥

इति पुष्पं दद्यात्।

"नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः"॥

इति पुष्पं दद्यात्।

इति पूजा समाप्ता।

देवतान्तरपूजने तु नारायणायेत्यत्र कार्य्यं तद्देवतानामोच्चारणं। प्रदर्शिताव तावन्नित्यकर्मपद्धतिराप्तकालीनोपरितः। किन्तु ये सततं परिवार-पोषणैकव्याकुलतया तथैव पराधीनतावशतः सम्यगलब्धसमयत्वेन च नित्य-कर्मजातमनुष्ठातुमक्षमाः। त एवान्ततः प्रातःस्मरणपूर्वकस्नानं तथा प्रातः-सायं च सन्ध्यां चानुतिष्ठेयुरवश्यमेव। तथास्ति चेत्सदर्भं देवतावातं, तेषां-पूजाचरणं विधेयमेवेति सुस्थिरम्। तथा विप्रेतरजातीयनित्यकर्मानुष्ठानस्य-संक्षेपीकरणोपलक्षमेतदेवेति बोध्यम्। प्रकृतोपयोगितयात्र विषयान्तर-मुत्थाप्यते साधारणभ्रमनिरसनाय। यथा,

न च भारतीयानामार्य्याणां सर्वस्वभूते वेदव्राते प्रतिमार्चनोल्लेखादर्शनात्तत्-

कर्त्तृकतदनुष्ठाने शास्त्रविरुद्धमिति वाच्यम् । साक्षात्सम्बन्धेन प्रतिमार्चन-विषयकविवेचनस्य वेदे सत्यप्यविद्यमनत्वे शक्रादिदेवानां वेदोक्तमन्त्रेषु-साकारस्वरूपकल्पनोल्लेखावलोकनात् । तथा पाणिनीयदर्शने सूत्रोदाहरणयो-रुल्लेखावलोकनेऽपि पिपठिषूणामन्तेवासिनामवबोधाय शिक्षकप्रदर्शितसाधन-प्रणालीवदुपासनामार्गपथिकानां मनःस्थैर्य्यप्रतिपादनपूर्वकमन्तःकरणं कर्त्तु-मीश्वरोन्मुखं वेदोक्तमन्त्रप्रकाशितरूपानुरूपेण पूज्यपादैस्त्रिकालज्ञैर्महर्षिभिः-कल्पितप्रतिमाकारत्वात् ।

तथा—वर्णशिक्षणादारभ्य यावद्दर्शनशिक्षं बालकानां यथाक्रमं शिक्षा-विधानन्यायेन साकारादिनिराकारान्तोपासनाकाङ्क्षिणामधिकारिभेदेन यथा-सोपानं महर्षिभिः प्रदर्शितवेदानुगतोभयविधोपासनत्वाच्च । एतत् समर्थक-वेदप्रतिपादितकतिपयमन्त्रजातं प्रदर्श्यतेऽधस्ताद्दिङ्मात्रेण ।

यथा ऋग्वेदे,

"अस्य मंदानो मध्वो वज्रहस्तोऽहिमिन्द्रो अर्णोवृतं विवृश्चत् ।
प्रयोद्वयो न स्वसराण्यच्छाप्रयांसि च नदीनाञ्च क्रमन्त" ॥

१म १८सू २अ ६अ ।

तथा सायनः,—

"अस्य मध्वः तृतीयार्थे षष्ठी अनेन मदकरेण सोमेन मन्दानो-हृष्यन् वज्रहस्तः । वज्रयुक्तो हस्तो यस्य सः इन्द्रः अर्णोवृतं उदकस्यावरकं-उदकेनावृतं वा अहिं वृत्रं मेघं वा विवृश्चत् विशेषेणाच्छिनत् ओ व्रश्चुच्छेदने-तौदादिकः लङि ग्रहिज्यादिना संप्रसारणं, किञ्च यद्यदा अहिभेदने जाते-नदीनां पयांसि प्रीणयितॄणि जलानि । अच्छसमुद्रमभिलक्ष्य प्रचक्रमन्त गन्तु-मुपाक्रमन् तत्र दृष्टान्तः वयो न यथा पक्षिणः स्वसराणि सुष्ठु अर्य्यन्ते प्राप्यन्ते-इति स्वसराणि कुलायाः तानभिलक्ष्य गच्छन्ति तद्वत् ।

तथैव तत्र—

"विते वज्रासो अस्थिरन्नवतिं न्याव्या अनु ।
महत्त इन्द्रवीर्य्यं वाह्वोस्ते वलं हितमर्चन्ननु स्वराज्यं" ॥

१म ८०सू १म, ५अ ।

तथा सायनः,—"हे इन्द्र ते तव वज्रासो वज्राः शतसंख्याकाग्राविर्गताग्न्यायुधानि नाव्याः नावा तार्य्या नवतिं नवतिसंख्यकाः स्रवेण निरुद्धाः नदीरनु उपलक्ष्य व्यस्थिरन् विविधमस्थिषत सर्वत्र व्याप्य वर्त्तमानं वृत्रं हन्तुं तव वज्रः-एकोऽपि अनेक इवासीदित्यर्थः । किञ्च इन्द्र ! ते तव वीर्य्यं महत् प्रभूतं-अन्यैरजेयमित्यर्थः । तथा ते बाह्वोः त्वदीययोर्हस्तयोर्बलं हितं निहितं-त्वदीयौ बाहू अपि अतिशयेन बलिनावित्यर्थः, अन्यत्पूर्ववत् । अस्थिरन्-तिष्ठतेर्लुङि समवप्रविभ्यःस्थ इति आत्मनेपदं । मन्त्रे घसेति च्लेर्लुक् । स्थाघ्वोरिच्चेतीत्वम् । व्यत्ययेन झस्य रनादेशः । नाव्याः नौवयोधर्मेत्यादिना-यत् । यतो नावो इति पर्य्युदासाभिन्नत्स्वरितत्वं । बाह्वोः उदात्त यण् इति-विभक्त्युदात्तत्वं । मन्त्रद्वयेऽस्मिन् वज्रहस्तबाहुपदपर्य्यवेक्षणादिन्द्रदेवस्या-कारकल्पनं स्फुटतः प्रतिभातम्" ।

तथा यजुर्वेदीयवाजसनेयसंहितायां । यथा,

"याते हेतिर्मीढुष्टमहस्ते बभूव ते धनुः ।
तयास्मा विश्वतः त्वमयक्ष्मया परिभुज" ॥

१६म ११ म ।

अस्यार्थः "हे मीढुष्टम् ! हे सेक्तृतम् तव हस्ते या हेतिः आयुधं यच्च ते-हस्ते धनुः बभूव आस्ते अयक्ष्मया न विद्यते यक्ष्मारोगः यस्याः तयोक्तया-तया हेत्या त्वं अस्मान् विश्वतः सर्वतः परिभुज परिपालय" । तथा—

"मात ! इन्द्र । ते वयं तुराषाड़युक्ता सो अब्रह्मता विद साम ।
तिष्ठारथमधि यं वज्रहस्ता रश्मीन् देवायमसे स्वश्वान् ॥"

अ१० म२२ ।

अस्यार्थः—"हे वज्रहस्त देव ! त्वं यं रथं अधितिष्ठ अधितिष्ठसि यस्य रश्मीन्-प्रग्रहान् आयमसे आयच्छसि । किं भूतान् रश्मीन् स्वश्वान् शोभनाः अश्वाः-येषु हे तुराषट् हे इन्द्र त्वदीयाः वयं ते रथे अयुक्ताः तस्मात् भिन्नाः सन्तः-अब्रह्मता ब्रह्मातिरिक्तपदार्थ इव मा विद साम मा विनाशं प्राप्नुमः" ।

"देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु अच्छिद्रेण पाणिना"।
१अ२०म ।

"नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो नमो-
वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः" । अ१६ म१७ ।

"ये तीर्थानि प्रचरन्ति सृकाहस्ता निषंगिणः ।
तेषां ॐसहस्रयोजने अवधन्वा नितन्वसि" । अ१६ म६१ ।

अस्यार्थः—"ये रुद्राः तीर्थानि प्रयागकाश्यादीनि प्रचरन्ति गच्छन्ति किं-भूताः सृकं आयुधं हस्ते येषां ते तथोक्ताः निषङ्गिणः खड्गधारिणः तेषां-रुद्राणां धन्वानि आयुधानि सहस्रयोजने अतिदूरे स्थाने वयं अवतन्मसि-अवस्थापयाम" इति । बज्रहस्तादिविशेषणप्रदानेनैवाकारकल्पनं स्फुटतः-प्रतिभातमेव । अन्यथा तद्विशेषणदानस्य नैरर्थक्यापत्तेः । तथैवं बहुषु-मन्त्रेषु सत्स्वपि विद्यमानेषु निबन्धबाहुल्यभिया नोद्धृतास्ते" ।

अन्यच्च—ननु सत्यपि प्रतिमापूजने रीत्यैवं वेदानुमोदिते महाभारत-रामायणयोस्तादृकपूजाविधानप्रतिपादकप्रमाणादर्शनात् न तादृगाचरणं-शास्त्रसिद्धमिति चेन्न । तत्र तत्र प्रमाणजातावलोकनेनैव शास्त्रसिद्धत्वात् । यथा महाभारते आदिपर्वणि त्रिंशदध्याये ।

"सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्याथ हि दैवतम् ।
दैवतानि च सर्वाणि ब्राह्मणान् स्वस्तिवाच्य च ।
प्रदक्षिणं गिरेः कृत्वा प्रययौ द्वारकां प्रति" ॥ इति ।

तथा वनपर्वणि द्वाविंशत्यध्याये,

"ततो गच्छेत धर्मज्ञः स्थानं पुण्यमुपागतः ।
नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतम् ॥
तत्राभिगम्य चेशानं गोसहस्रफलं लभेत् ।
महादेवप्रसादाच्च गाणपत्यं च विन्दति ॥

शङ्कं कर्णेश्वरं देवमर्च्चयित्वा युधिष्ठिर ! ।
अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥
ततो गच्छेत् धर्मज्ञ वाराहं तीर्थमुत्तमम् ।
विष्णुर्वराहरूपेण पूर्वं यत्र स्थितोऽभवत् ॥
तत्र वैतरणी पुण्या नदी पापप्रणाशिनी ।
तत्र स्नात्वार्चयित्वा च शूलपाणिं वृषध्वजम् ॥
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः ।
राममभ्यर्च्य राजेन्द्र ! लभेद्बहुसुवर्णकः ॥
सान्निध्यं तत्र राजेन्द्र ! रुद्रपत्न्याः कुरूद्वह !
अभिगम्य च तां देवीं न दुर्गतिमवाप्नुयात् ॥
तत्रैव च महाराज ! विश्वेश्वरमुपागतम् ।
अभिगम्य महादेवं मुच्यते सर्वकिल्बिषैः" ॥ इत्यादि ।

तथा विराटपर्वणि,

"राजमार्गाः क्रियन्तां मे पताकाभिरलङ्कृताः ।
पुष्पोपहारैरर्च्च्यन्तां देवताश्चापि सर्वशः ।" इत्यादि ।

तथा रामायणेऽयोध्याकाण्डीयपञ्चविंशसर्गे ।—

"येभ्यः प्रणमसे पुत्र ! देवेष्वायतनेषु च ।
ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥
इति माल्यैः सुरगणान् गन्धैश्चापि यशस्विनी ।
स्तुतिभिश्चानुरूपाभिरानर्च्चायतलोचना" ॥

तथायोध्याकाण्डीयषष्ठसर्गे ।

"ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् ।
प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् ॥

"सिताभ्रशिखराभेषु देवतायतनेषु च ।
ध्वजाः समुच्छ्रिताः साधुपताकाश्चाभवंस्तथा ॥"

निरुक्तप्रमाणेषु देवतायतनेष्विति पदोल्लेखदर्शनात्तथा गन्धमाल्यैः सुरगण-समर्चनप्रकाशनाच्च प्रतिमापूजनं प्रकटितमेव सुस्पष्टम् ।

निरुक्तविधया संक्षेपतः प्रदर्शितस्या अस्यस्याः सविज्ञानविवरणमालिख्य-तेऽत्र साधारणसुबोधाय । यथा—पुराकालतो भरतखण्डेऽस्मिन् ब्रह्मविषयको-पासनाद्वयमासीत् प्रचलितम् । तद्द्वयोरभ्यन्तरे निर्गुणोपासनैका सगुणोपासना-द्वितीया च । तद्द्वयाभ्यन्तरेऽर्थोऽयं निर्गुणोपासनायाः यथा—ब्रह्मणि-नामरूपगुणैश्वर्य्यादिकमनारोप्य केवलं चित्तवृत्तिनिरोधेनात्मस्वरूपे वा ब्रह्मस्वरूपे लीनात्मिकावस्थोपासकस्येति । तथाऽर्थोऽयं सगुणोपासनायाः,-यथा—ब्रह्मण्यारोप्य नामरूपगुणैश्वर्य्यादिकं तत्प्रति भक्तिपूर्वकचित्तसमर्पणेन-साकं तेन सम्मेलनमिति । तत्र ज्ञानयोगनाम्ना वाऽध्यात्मयोगाभिधेनाभिहितं-प्रथमोक्तोपासनं, साकारोपासनं च भक्तियोगनाम्ना परिचितम् । निर्गुणो-पासनमेतदतिकठोरसाधनापेक्षमिति शास्त्रीयसिद्धान्तः । सगुणोपासनायाः पुनः पुनरभ्यासेनैव सत्यामपि चित्तशुद्धौ समुत्पद्यतेऽधिकारो निराकारो-पासनायां । बहुप्राचीनसमयतोऽवलम्बितनिर्गुणोपासनं साधयति स्म मुक्तिमार्ग-योगिवृन्दम् ।

अपिच भारतेऽस्मिन् सर्वे साधारणलोकाः सगुणोपासनामाश्रित्य साधयन्ति स्म क्रमोन्नतिम् । साकारोपासनाकामन्तरालेऽलम्बितुं ज्ञानमार्गं ये भवेयुरधि-कारिणः तेऽभ्यस्य सगुणोपासनं बहुवारं विधाय च तदनुष्ठानेनान्तःकरणशुद्धिं-ज्ञानमार्गावलम्बिनः स्युः सद्गुरूपदेशेन । रीत्यानया पुरातनसमयतः प्रच-लत्युपासनाद्वयमविरोधं । अतोऽवलम्ब्य प्रतिमूर्त्तिमीश्वरोपासना या सैव-साकारोपासना । तथा तदन्यथाकारेण योपासना सा निराकारोपासना-चेत्यभिधीयते शास्त्रेण । एवमेवास्मिन् भारते प्रचलिते सत्यप्युपासनाद्वये न-कोऽपि दृश्यते विवादो विभिन्नसम्प्रदायेषु भारतीयेष । न च परमार्थतो नाम-रूपादिरहितेऽपरिमेयाव्यक्तरूपिणि परमात्मनि नामरूपगुणैश्वर्य्याद्यारोपेण-

यदुपासनं भक्तियोग । परपर्य्यायकं विधीयते तदभ्रमात्मकमिति वाच्यं । अतद्दतितत्प्रकार कत्वात् । नच भ्रमतः प्रवृत्तेः फलाशयकत्वं सम्भवि । नहि-जलाशयबुद्ध्या मरीचिकायां प्रवृत्तानां मुग्धमृगाणां तृषा शान्तिर्भवेत्, प्रत्युत-तद्बुद्धिरेव मतिपर्य्यवसायिनी स्यादतः भ्रमात्मिकायाः साकारोपासनायाः-प्रकृताव्यक्तपरतत्त्वपरिपन्थितया न प्रकृते त्वावामुपयोगित्वं इति चेन्न । भ्रमप्रवृत्तेरपि सम्बाद्यात्मिकायाः फलाधानसम्भवात् मणिप्रभामणिभ्रान्तिवत् । तच्चोक्तं पञ्चदश्याम् ।

यथा, ध्यानप्रदीपे,—

"न लभ्यते मणिर्दीपप्रभा प्रत्यभिधावता,
प्रभायां धावतावश्यं लभ्येतैव मणिर्मणेः ।
दीपप्रभामणिभ्रान्तिः विसंवादिभ्रमस्मृतः,
मणिप्रभामणिर्भ्रान्तिः सम्बादिभ्रम उच्यते" ॥

वरं निराकारोपासनापक्षपातिना श्रीमत्परमहंसपरिव्राजकाचार्य्येण-श्रीशङ्करस्वामिना वेदान्तदर्शनोक्तसूत्रमप्यधिकारिभेदेन व्याख्यातं साकारो-पासनात्मकत्वेन स्वभाष्ये । यथा,

ससीमतः क्रमेणासीमे, तथा सान्ततः क्रमशोऽनन्ते शक्तोत्युत्थातुं मनुष्यः । वस्तुतोऽनन्तस्य कदाप्यंशत्वं वा सान्तत्वं न सम्भवेदिति स्थिरीकृतं भावनया । यद्वस्तुजातमस्मत्सविधे सान्तं ससीमं चेति भवति प्रतीतम् । तदेवास्माकं भवतिमायिकज्ञानदोषेण । मायिकज्ञानाच्छन्नत्वेन वयमनन्तस्य न शक्नुयाम कर्त्तुमस्युपलब्धिं कर्त्तुमशक्तानामुपलब्धिं तद्भावनाय मायिकज्ञानस्यास्य सहायताभवेदेकान्तावश्यकी । मायिकज्ञाने ससीमं सान्तं चोपलभ्यानन्तं भावयितुंमान्तससीमाभ्यन्तरे वयमपि समर्थाः । तद्बोधनार्थं तृतीयाध्याय-द्वितीयपादीयत्रिंशत्सूत्रं उद्धृ'कितं वेदान्तदर्शने, यथा, "बुद्ध्यर्थः पादवत्" । बुद्ध्यर्थं इत्यत्रोपासनार्थी बुद्ध्यर्थ इति प्रतिपादितमाचार्य्येण शङ्करेण । सामान्य ज्ञानविषयकं कर्त्तुमनन्तं तदनन्तस्य पादकल्पनमनुष्ठितं श्रुत्या । परिमेयात्मकता निर्दिष्टाऽपरिमेयस्य तथैव ।

वस्तुतोऽनन्तनिर्गुणसत्ताया न सम्भवेत्त्रिगुणात्मकः कोऽप्यंशो-मायिकः-खण्डं वा । किन्तु मायिकज्ञानं न भवेदस्माकं खण्डं—

उपासनाङ्गं खण्डज्ञानेऽखण्डभावनं, सुतरां बुद्धयर्थो ज्ञानार्थात्मकः । इत्याशयः ।

निर्गुणाखण्डब्रह्मणः प्रकटितमेतादृक्पादकल्पनमृग्वेदीयपुरुषसूक्ते,—

यथा—

"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"

त्रैकालिकभूतसमुदायात्मकं जगदिदं विराड्पुरुषस्य तस्य पादैकमात्रम्। अपि चावशिष्टं पादत्रयममृतात्मकम् । तदेवामृतात्मकं पादत्रयं स्वप्रकाशक-त्वेनासीदवस्थितम् । निरुक्तश्रुत्यां दृष्टं यत्पादकल्पनं, विराजं सामान्यज्ञान-विषयं कर्त्तुमनुष्ठितं तदिति व्याख्यातं पूज्यपादेन श्रीशङ्कराचार्य्येण । सुखाव-गतये विव्रियतेऽत्र गूढार्थोऽयं, सत्यपि निरवयवे ब्रह्मणि तन्मायाया तु सावयवा ।

अस्या मायायास्तस्मिन्नारोप्यावयवित्वं विहितमस्य चतुष्पादात्मकत्व-वर्णनम् । उपासनार्थमेतादृग्निरंशे भोगवदंशारोपः । यस्य अन्नपानादिकेन-वा स्त्रीपुत्रादिना वा गृहशय्याप्रभृतिकेन भवति जनितो भोगः । केवलमर्थात्-स्वतन्त्रभोगोऽप्रसिद्धः । सुतरां भोगानुष्ठाने यथान्नपानादिसंसर्गोऽत्या-वश्यकः । तथैवोपासनानुष्ठानेऽवश्यकर्त्तव्यं मायांशग्रहणम् । किं वक्तव्य मधिकमत्र ? ब्रह्म वृहदा निरवयवमेतावन्मात्रात्मकज्ञाने गृह्यतेंऽशो-मायायाः । यथा वृहद्ज्ञानं क्षुद्रज्ञानसापेक्षम् । एवं निरवयवज्ञानमवयव-ज्ञानसापेक्षम् । अतएव मायांशग्रहणाभावेऽसम्भावितमेव ब्रह्मभावनम् । सत्यपि ब्रह्मातिवृहदित्येतावन्मात्रभावनानुष्ठाने तत्पूर्व्वतः षोड़शकलात्मको-वा चतुष्पादात्मको मायिकांशः प्रथमतो भवेत् कल्पितः । ततः शक्नुयात्-कर्त्तुमुपासनाम् । अथवैतत्कालपर्य्यन्तमेतादृगुपायो युक्तिर्वा नासीदुद्भूता, येन-मायिकसाहाय्यमन्तरा ब्रह्मणो निरंशत्वस्वरूपं भवेज्ज्ञानविषयकम् । किन्तु सम्प्रति प्रचलितमस्ति यन्निराकारोपासनं, तत्तु केनाप्यंशेन समं निरुक्तनिर्गुणो-पासनेन साकं । भारतेऽस्मिन्निदानीं प्रचलितनिराकारवादोऽयं पाश्चात्येश्वर-वादानुरूपः । तत्प्रवर्त्तनादारभ्य प्रसरति निराकारसाकारोपासनीयविरो-

धसुमुलस्तत्प्रवलान्दोलनं च । तद्विषये द्विविधेन्द्रियग्रातातस्तथा मनसो बुद्धेश्चातीतस्य ब्रह्मणो न शक्नुयात् कदाप्युपासनमनुष्ठातुमित्यार्य्यसिद्धान्तः । सिद्धान्तमेतमनुमोदते श्रुतिरपि ।

"यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
यन्मनसा न मनुते येनाहुर्मनोमतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" ॥ इत्यादि ।

बुद्धिमनसोस्तथा द्विविधेन्द्रियस्य चागोचरतया निरुपाधिकचैतन्यं नोपासनाविषय इत्यभिप्रायः ।

तथैवं प्रतिपादयति श्रुत्यन्तरमपि —

यथा,—

"यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" ।

प्रकाशयितुं यन्नशक्नुयाद्वचनं तन्निर्गुणब्रह्मणो ध्यानधारणादिकं मानसिकव्यापारात्मकं कथं भवेत् प्रयुक्तम् । मनुष्यस्य नास्ति काचिच्छक्तिरीदृशी । यया वयं शक्नुयामो निर्गुणेश्वरमवगन्तुम् । अतो नास्ति तादृशी शक्तिरस्माकमिति निर्गलितार्थः ।

यत्त्वाद्यात्यसिद्धान्तोऽयं, परमेश्वरस्य निर्गुणावस्थाऽस्मदीयचिन्तातीता । अतस्तस्य प्रकाशमानसगुणावस्था भवेच्चिन्तनीयोपास्या च । कारणादस्माद्भारतीयशास्त्रेषु साकारोपासनस्यास्ति विधानं सर्वसाधारणविषयकम् । ब्रह्मस्वरूपचिन्तनात्मिकोपासना न भवेच्छास्त्रीयनिर्गुणोपासना ।

अपिच—सांप्रतिकनिराकारोपासनाद्-ब्रह्मणो गुणचिन्तनं नोपासनात्मकमित्याशयः । ततोऽस्माकं देशेऽस्मिन् देवदेवीनां प्रतिमूर्त्तौ भवत्यनुष्ठितंब्रह्मोपासनमेव । इंलण्डीयराजत्वाभ्युदयावसरे ख्रीष्टीयधर्म्मयाजकनिवर्हायदागता भारतं, तदा ते सुगुणब्रह्मोपासनमिदं वर्व्वरजातीयपौत्तलिकतात्मकं वा जड़ोपासनस्वरूपमित्यात्मकेन ज्ञानेन यथासाध्यं नाभवन्निन्दावादं कर्त्तुंपराङ्मुखाः । किन्तु तैर्यद्दृष्टमपि न बुद्धं दुःखविषयकमेवेदम् । यतो-

लोकेश्वरयोरभ्यन्तरेऽवस्थाप्य श्रीयिशुखोष्टं तेरनुष्ठितपरमेश्वरोपासनस्य तथा-तयोरन्तराले प्रतिमूर्त्तिमवस्थाप्य भारतीयार्य्याचरितपरमेश्वरोपासनस्य चाभ्यन्तरे नावलोक्यते कोऽपि भेदः। ज्ञानतो जड़जागतिकसत्ता न-स्वतन्त्रेति। तथा ज्ञानक्रियायां जड़जगदावश्यकत्वं चामनन्ति ये दार्शनिकाः, तन्मध्यतो वेननामकोऽध्यापको मन्यतेऽस्म। कं सर्वविधज्ञानं भूयो दर्शनद्वारेण-बाह्यिकविश्वतो भवत्युत्पन्नमिति। तेनैव प्रमाणितं यत् सकलप्रकारकं ज्ञान-मस्माकं ऐन्द्रिकानुभूतितस्तथा शारीरिकानुभूतितश्च भवत्युत्पन्नम्।

अपिच—जड़जगत्साहाय्यमन्तरा जड़शरीरान्यवस्तुनो न भवेदुत्पन्नं तत्। ज्ञानं यद्यपि भवेन्निराकारं, तदा तन्नूनं साकारजगदुपरि प्रतिष्ठितम्। अत-एवास्माभिर्यद्दृष्टं (ब्रह्मात्मनोर्भिन्नं ज्ञानं भवतु यदर्थे व्यवहृतं) तत्तु साकारो-परि प्रतिष्ठितं तत्परवर्त्ति च।

अपरञ्चादितः समुद्भूतनिराकारज्ञानानान्तरं भवतु साकारज्ञानमित्यङ्गी-कृतमस्माभिस्तर्कच्छलेन। प्राप्यतेऽनेन सिद्धान्तोऽयं यत्; निराकारज्ञानो-परि प्रतिष्ठितं मनुष्यस्य साकारज्ञानम्। किन्तु वस्तुतोऽस्माकं पुरतः समुत्पन्न-साकारज्ञानतो भवति संजातं निराकारज्ञानं प्रत्यक्षतः।

अतः साकारपदार्थज्ञानोपरि प्रतिष्ठितमस्मदीयनिराकारज्ञानम्। अत-एवास्माकं साकारब्रह्मोपासनाभिन्ननिराकारब्रह्मोपासनं न भवति सुनिश्चि-तम्। विविच्यते तत्त्वमिदं निम्नतः।

पूर्वतो मानवानां निराकारज्ञानमुत साकारज्ञानमित्याशङ्कायामेतत्-प्रश्नमीमांसानुष्ठाने भवेच्चेत् प्रवृत्तिः; तदा दृष्टमेतदस्माभिर्यत, जड़विश्वतो-विभिन्नभावेन न शक्नुमो वयं कदापि कल्पयितुं जीवात्मानम्। जड़शरीरेणा-मृत्यु आत्मा बद्धः सर्वतो जड़जगद्वेष्टितश्च। मृत्योः परं भोक्तुं जीवात्मा पाप-पुण्यफलं भवति नियमितः सूक्ष्मशरीरेण। अपिच, यद्यपि भवेन्मुक्तिः, तदा-स एवात्मा न भवेन्मनुष्यात्मकः। भवति लीनो ब्रह्मणि सः। सुतरामस्माकं-जीवात्मनो जड़विश्वतो विभिन्नभावेनानवस्थिततया यदस्मदीयज्ञानम्-तत् कदापि न भवेत् जड़जगत्संवन्धीय ज्ञानभिन्नं शुद्धचैतन्यसंवन्धीयज्ञानं। तदा तदस्माकं साकारपदार्थज्ञानानन्तरभावि तदुपरि प्रतिष्ठितं च। विषये-

ऽस्मिन् पाश्चात्यदार्शनिकानां मतं न भिन्नं किन्त्वेकमेव । भारतीयानामिदानीन्तनपण्डितानां पाश्चात्यविद्यासुपण्डिततया प्राच्यदर्शनशास्त्रोक्तविषयजातस्य-वैज्ञानिकमौलिकतासंपादनार्थमुदाहरणात्मकत्वेन प्रदर्शयितव्यं पाश्चात्यदार्शनिकमतमेव । अन्यथा प्राच्यदार्शनिकमतं भ्रान्तमिति विभावनीयं तैः । तथैव श्रुतमेव पूर्वतः । अतः सम्प्रतीयुरोपीयमहादेशे प्रचलितम् । (इमरिकलनामकं, ओइण्ट्रुसनालनामकञ्च) एवंनामकमतद्वयं समर्थयति-भारतीयमतमेतत् । यथा तत्र प्रथमोक्तमतमिदम् । कया रीत्या मनुष्यस्य-भवेदुत्पन्नमित्याकाङ्क्षायां भवेदेवं रीत्या, यथा यत्किञ्चिद्भवति ज्ञानम् । तत्-समस्तज्ञानं भवति भूयो दर्शनद्वारेण । मतेनानेन भवत्यारब्धं जड़विश्वतोज्ञानमिति निर्णतिम् । साहाय्येनेन्द्रियाणां मनो जड़विश्वतः संगृह्य चित्र-सकलं करोत्यात्मसात् । तच्चित्रजातं स्मृतिविचारसूक्ष्मीकरणवितर्ककल्पनात्मकमानसिकवृत्तिसाहाय्येनास्माकं समुत्पादयति ज्ञानम् ।। मतेऽस्मिन् सूक्ष्मसाधारणात्मकं गुणवाचकस्वरूपञ्च भावव्रातमस्माकं वस्तुव्यक्तिवाचकज्ञानतः-समुत्पन्नम् । सुतरां वदेद्यदि गुणवाचकज्ञानं सूक्ष्मसाधारणभावसूचकज्ञानञ्च निराकारात्मकम् । तर्ह्यपि मतेऽस्मिन् साकारसगुणपदार्थजाततः समुत्पन्नमतस्तदनन्तरभावि तत् । दृष्टान्तप्रदर्शनेनैव द्रढ़यत्येतन्निम्नतः । यथा—

सौन्दर्य्यमित्येको गुणवाचको भावः प्रेमेत्येकः सूक्ष्मसाधारणभावश्च । ज्ञानमेतदस्माकं भवति कया रीत्येत्याकाङ्क्षायामुच्यते ; भवत्येतन्नानाविधवैलक्षण्यविशिष्टसाकारसुन्दरपदार्थदर्शनेन तथा तदाकर्णनेन तथा तद्विशिष्टप्रेमोदाहरणावलोकनेन तच्छ्रवणेन चेति । यथैतद्विवरणं, सुन्दरं पुष्पं, सुन्दरीमूर्त्तिः, सङ्गीतं सुन्दरं, तथा रामं प्रति तत्स्त्रियाः प्रेम । गोपालमभिलक्ष्यप्रेम तद्बन्धोः । परमेश्वरं प्रति प्रेम श्यामस्य च । रीत्येवं निरुक्तसकलपदार्थस्य-तथोक्तसमस्तव्यक्तेश्च विभिन्नप्रकारकं सौन्दर्य्यं, तथा प्रेम चैकैकया विभिन्नविशेषघटनया समुत्पद्यते ह्यनिशम् । यद्यपि कथयेत् सौन्दर्य्यं प्रेम च निराकारद्रव्यं तथापि तदुभयविधं ज्ञानं नूनं समुद्भूतं साकारज्ञानतः तदुपरि प्रतिष्ठितञ्च ।

प्रदर्शितेऽत्र निरुक्तसम्प्रदायान्तरमतम्,—

यथा सकलविधज्ञानमस्माकं साकारजड़जगतः समुत्पन्नम् । केवलन्नं साक-

मस्माभिर्ज्ञातः कतिपयसाधारणभावः । यथा, देशः, कालः, कार्य्यकारणभावः-गणितस्य स्वतःसिद्धिः प्रतिज्ञाज्ञातञ्च । तथा पापपुण्यभावः परमात्मनो-जीवात्मनश्चाविनश्वरत्वात्मकभावश्च । कथ्यते तेनैवेदम् । जड़विश्वतो न लभ्यते-ज्ञानमिदं सर्वविधमस्माभिरिति । जड़जगत्सम्बन्धीयमस्माकं समस्तज्ञान-मस्मत्सहजातभावज्ञाततः समुद्भूतम् । ये त्विदानीमत्र भारते निराकारोपा-सकास्त एवैतन्मतावलम्बिन इति स्थिरीक्रियतेऽस्माभिः । यतः कथ्यते साकार-ज्ञानं निराकारज्ञानापेक्षमिति ।

भारतीया आर्य्या अपि मतमेतत् स्वीकर्त्तुमुत्थापयन्ति न काममप्यापत्तिम् । यतोऽङ्गीकृतं तैः पूर्वजन्म जीवात्मनः । किन्तु स्थलेऽस्मिन् भावो ज्ञानञ्च पृथक्-पृथगिति बोध्यम् । परमेश्वरोऽस्तीत्यात्मको भावः संस्कारादनन्यः । एष-एवास्माकमाशैशवान्मनसि जागरूकः । यदास्माकमुत्पद्यते नो ज्ञानं, यदा-कस्यापि वस्तुनो विचारं कर्त्तुं वयमक्षमाः । तदैतदस्माकं मनस्यवतिष्ठते-संस्कारात्मकत्वेन । किन्तु यदा भवत्यस्माकं ज्ञानं तदाहमेकस्माद्वस्तुनः परि-चेतुं समर्थो वस्त्वन्तरम् । तदा संस्कारोऽयं जड़जगत्साहाय्येन भूत्वा-परिस्फुटोऽस्माकं पारमेश्वरिकज्ञानात्मकत्वेन भवति परिणतः । अतएवैश्वरिक-कतिपयो भावः । ( यथा तस्यास्तित्वमित्यादिभावः ) यद्यप्यस्माकं स्वभाव-जातोऽयमित्यङ्गीकृतस्तथाप्यस्माकं भवति तत्सकलभावस्य परिणतिर्ज्ञाने-धारणायां वा । सैव भूयो दर्शनद्वारा भवत्युत्पन्ना । नेत्यत्र कोऽपि संशयः । सम्प्रतीश्वर सम्बन्धीयभावे सत्यपि निराकारे तत्सम्बन्धीयज्ञानं धारणा वा-निराकारात्मिकेति न शक्नुयाद्वक्तुम् । परमेश्वरस्यास्तित्वस्वरूपो भाव एको-वा संस्कारो यः । स एव निराकार इत्यङ्गीकृतमेव । किन्तु तस्यास्तित्व-चिन्तानुष्ठाने मया कृता निराकारपदार्थस्य चिन्तेति केनापि शक्यते वक्तुम् । जगति व्यावहारिके वस्तु वा जातिमन्तरा देशकालयोर्ज्ञानं लब्धुं कदापि-न शक्नुयात् कः ।

अपिच—गणितशास्त्रस्य स्वतःसिद्धं प्रतिज्ञाज्ञातंच प्रथमतः प्रतिविशेष-विशेषवस्तु भवति प्रयोगद्वारैवावलोकितम् । तत्परं विशेषविशेषोदाहरणतो-गणितं सूत्रकारेण तज्ज्ञातम् । तथा पापपुण्ययोर्दृश्यन्ते प्रभेदोऽस्माभिः विशेष

विशेष-कार्य्यनिकरे । तथैश्वरिकस्य भावस्य संस्कारस्य वा सकलस्यास्मत्-सञ्जातस्यापि वयमादितो जगति प्रकाशमवलोक्य लभामहे तत् ज्ञानम् । एतद्ज्ञानमन्तरा तद्विषयकज्ञानं न भवत्यस्माकम् । अथापि तत्सम्बन्धीयं-यद् ज्ञानजातं समुत्पन्नं मानवस्य । तदेव भावेनैतेन त्रिसंख्यकेन सीमाबद्धम् । कस्माचित्रिसंख्यको भाव इत्याकांक्षायामुच्यते । यथा,—

स एव जगत्कर्त्ता, स एव पालनकर्त्ता, स एव संहारकर्त्ता, इत्यात्मकः । विश्वतोऽस्मद्विच्छिन्नभावेन न पारयेदीश्वरं ज्ञातुं मनुष्यः । यदा पारयेत्-ज्ञातुं तं मानवस्तदा न भवेन्मनुष्यः । तस्य तत्कालीनज्ञानं न तावन्मानवीय-ज्ञानम् । तदैव स भवति ब्रह्मात्मकः । तदा भवेदेवंविधं तार्किकज्ञानं-ऐश्वरिकम् । द्वितीयसाम्प्रदायिकमतमेतत् । पुनश्च वदन्त्येवमिग्रुरोपीयाः-दार्शनिकपण्डितसन्दोहाः । स्थूलजगति वस्तुनो जातिवाचकस्याभ्यस्य-ज्ञानलाभं गुणवाचकवस्तुनः कर्त्तुं ज्ञानावाप्तिं शक्नुमो वयम् । कस्यापि गुण-वाचकस्यास्माभिरनुष्ठितायां सत्यामपि चिन्तायां तज्जातिवाचकवस्तुनश्चिन्तन-मनभ्यस्य कर्त्तुं तच्चिन्तनं न वयं शक्नुयाम । यथा—

वृक्षत्वसम्बन्धीयज्ञानोत्पत्तिपूर्व्वतो-वृक्षविषयकज्ञानोत्पत्तिरावश्यकी । बाल-कस्यैकस्य ज्ञानोत्पत्तिपर्य्यन्तं वृक्षत्वं किमात्मकमित्येतन्नावबुध्यते तेनैवा-दितः । सदैव पश्यति वृक्षं सः । यदाज्ञानमेधते तस्य ; यदा स नानाविध-वृक्षमवलोक्य शक्नुयात्तेषां साधारणगुणम्, तथा भावं वा धर्म्मं बोद्धुम् । तदा वृक्षत्वं किमात्मकमित्येतच्चिन्तनं शक्नुयादनुष्ठातुम् । अनन्तरं भवेज्जातं वृक्षत्वसम्बन्धीयज्ञानम् । कर्त्तुमेवं वृक्षत्वस्य चिन्तनं पूर्व्वाभ्यासवशतश्चिन्तयि-ष्यति विशेषवृक्षस्यैकस्य विषयम् । वृक्षं विहाय कर्त्तुं वृक्षत्वचिन्तनं न शक्नु-यात्कदापि । अतएव जातिवाचकपदार्थज्ञानमन्तरा तदपेक्षिततया न-भवति गुणवाचकज्ञानम् । तथासत्यभिन्नत्वेन भवत्यनुभूतमिदम् । यद्यधुना-गुणवाचकपदार्थं कथयेन्निराकारात्मकं, तदा ज्ञानं तत्प्रतिष्ठितं ज्ञानोपरि-साकारजातिवाचकपदार्थस्य । प्रमाणितं तदभवत्पूर्व्वतः । जड़जगत्यस्मिन्-इदानीमैश्वरिकज्ञानं भवेन्मिलितं जातिवाचकवस्तुना साकं वा गुणवाचकवस्तुना-सार्द्धम् । ज्ञानमिदमुभयविधं साकारमेव । सुतरां जड़जगत्यैश्वरिकज्ञानमपि-

भवित्साकारज्ञानात्मकं । सत्यपि स्वरूपतो निर्गुणे तस्मिन् आगतिकगुणजात-मारोप्य तस्मिन् स एव सगुण इति वयमनुभवामः । वस्तुतस्तस्मिन् सत्यपि-निराकारे सह साकारजगता तद्दर्शनस्यास्मच्चक्षुर्विषयत्वात् स एवास्माकं-सविधे प्रकाशते साकारवत् । सुतरां साकं चित्तस्यैकाग्रतासम्पादनेन परमेश्वरोपासनात्मकोद्देश्यसिद्ध्यर्थं पौत्तलिकतात्मिकायामपि सत्यां प्रति-मापूजायां निराकारोपासनमत्र नासङ्गतमिति प्रेक्षावतां राद्धान्तः ।

इति प्रतिमापूजाविचारः ।

अथ प्रकृतोपकारतया क्रमप्राप्तव्यवहारजातान्तर्गतदायभागनिरूपणं-प्रारभ्यते ससंक्षेपमधस्तात् ।

भरतखण्डेऽस्मिन् दायभागविषयकबहुविधग्रन्थव्रातस्य सत्यपि विद्यमानत्वे-पुनर्दायभागात्मकनिबन्धनिर्माणं निष्प्रयोजनमिति चेदुच्यतेऽनुपदमेव ।

यथा—भारतप्रचलितोनविंशसंहितानां तथोपसंहितानाञ्च दायभाग-विषयकप्रमाणजालाभ्यन्तरतः स्वस्वप्रदेशीयव्यवहारोपकारकानि कति कति-प्रमाणान्यवलम्ब्य तत्तत्प्रादेशिकनिबन्धकर्त्तारो निर्म्ममुर्निबन्धग्रन्थमेकैकम् ।

तत्तत्प्रदेशीयास्तत्तद्ग्रन्थनिर्द्दिष्टपथमनुसृत्य वस्तु चक्रुर्दायविभागं । तादृ-शमनुष्ठिते सत्यपि दायविभागे शास्त्रानुगते दायाधिकारिणां हस्तगतदाय-तया तथा तदनधिकारिणां ग्रासाच्छादनमन्तराऽलब्धदायत्वेन च नाभवन्ना-पद्ग्रस्तास्तत्तद्देशीयलोकनिवहाः, तथा भारतीयार्य्यचक्रवर्त्तिनो धर्म्मराजनी-त्यनुसृतशासनपरिचालकतया लङ्घितुं शास्त्रमर्य्यादां न केऽपि साहसिनः । किन्तु यदा भिन्नधर्म्मावलम्बिभिर्वैदेशिकनृपतिभिः स्वायत्तीकृतमासीद्भारतवर्षं बहुदिवसपूर्वतः ; तद्दिनादारभ्य विभज्य धर्म्मनीतितः शासनपरिचालनं राज-नीतिमन्वकार्षुस्ते विभिन्नधर्म्मित्वेन सततम् । तथेदानीमपि प्रचलति-तच्छासनं । स्वसमाजोपरि विन्यस्तो धर्म्मनीतिपरिचालनभारस्तद्दिवसतः । अतो धर्म्मशास्त्रीयभीतेः क्रमशो लोकान्तःकरणतस्तिरोहिततया सर्वे धर्म्मं प्रति-समानांशीभवितुमभवन्नग्रसरा निरन्तरम् । तेन धर्म्मग्रन्थिक्रमेणाभव-च्छिथिलः । धर्म्ममार्गस्तु प्रतिदिनमभवत्पङ्किलः । अतएव तत्पथमपहाय सर्वे-

स्वाधीनतया बभूवुः स्वेच्छाचारिणः । समदृष्टिरेव प्रजात्वेन सर्वत्र कारणमत्रे-दानीन्तनानां चक्रवर्त्तिनां, न त्वन्यत् ।

अतो धर्म्मधना भारतीया धर्म्मसरणिभ्रष्टतयाऽभवन् विपदुन्मुखाः-सर्वदा । तद्विपदभ्यन्तरे धर्म्मशास्त्रीयदायभागमार्गोल्लङ्घनमपि प्रधानतम-मेकमापत्स्थानम् । कथमितिचेद्विव्रियतेऽधस्तात् । यथा भारतेऽस्मिन्-विदेशीय राजत्वप्रचारसमयतो विभागाधिकारिणां तदनधिकारिणां च दाये-समानाधिकारप्रचलनपरिदर्शनात् ।

केचन मूर्खतावशतः कतिपये विलासितापरवशतया च स्वस्वत्वस्य-रक्षणादिक्षणशक्तिहीनत्वादिनाश्य स्वस्वत्वमवलम्बन्ते भिक्षुकवृत्तिम् । तथा-प्रतिपदं लाञ्छिता भवन्ति च सततम् । परिवारवर्गाश्च तेषां सर्वदा सहन्ते-ऽतीवकष्टं निरन्तरम् । राजत्वावसरेऽधुनातनेऽपि दायभागीयनियमै-कतिपयभागानधिकारिणां दृष्टे सत्यपि दायानर्हत्वे तादृग्भागानधिकारिणां-केषामपि तथैवात्र दायभागयोग्यतापरिदर्शनादृश्यतेऽवस्था तादृशी । अतो-बलीयसी का कथ्यते विपदात्मकत्वेन ।

अन्यच्च—राजपरिवारवर्गं प्रति कृते सति दृष्टिपातेऽवलोक्येत चेत्तदीय—राज्यं बहुदिवसतो विद्यतेऽत्तु णभावेन, तथा स्थास्यत्येव । निदानमत्र-सत्स्वपि बहुषु भ्रातृषु स्वत्वस्य ज्येष्ठानुगततया तदेवावतिष्ठते निर्बाधमिति ।

अपिच—ज्येष्ठमपि वालिशत्वेन वा विलासित्वेन राज्यपरिचालनभारा-समर्थमवलोक्य दयालुनाऽधुनातनभारतीयसार्व्वभौमेन तद्राज्यं समादाय-तद्धस्ततः संरक्ष्यते सयत्नम् । तथा तदीयोत्तराधिकारिणं विविच्य तदुपयोग्यं-विन्यस्यते तदुपरि तद्राज्यम् । अतएव राज्यं तदेव न लभते (विनाशं) पचयं-केनापि कारणेन, यद्यप्यतो भारतीयजनसाधारणतो बहुभ्रातृभ्यन्तरे गुण-शालिनः प्रायशः सकलकार्य्यकुशलस्य ज्येष्ठस्य दृष्टिविषये तादृशगुणादि-शोभिनस्तद्भ्रातृव्रातात्तभृतस्य यस्य कस्यापि भ्रातुः स्वत्वाधिकारित्वं-भवेत् प्रचलितं, तथा तदन्येषां यथाविभवं भरणपोषणं स्यात्र प्रचारितं निरुक्तरीत्या यथाशास्त्रं ; अथवा शास्त्रोक्तस्वत्वानधिकारिजातमन्तरा विभा-गार्हाः सुयोग्यभ्रातरः शास्त्रीयविभागानुसारेण भवेयुश्चेत् स्वत्वाधिकारिण-

स्त्वथेतरे यथास्वं ग्रासाच्छादनभागिनश्च, तदापन्मुक्तिर्भवेदेतेषामित्यस्माकम् प्रत्ययः। एतदर्थं निरुक्तविचारानुसृतं शास्त्रीयदायभागप्रभृतिनिरूपणात्मकविवेचनमावश्यकम्। नन्वधुनातनचक्रवर्त्तिनः साम्प्रतिकदायविभागनियमस्यान्यथात्मकतया विवेचनमिदं निष्प्रयोजनमिति चेन्न, विवेचनस्यास्य साधारणैरवश्यैः सर्व्वजनहितसम्पादनोपयोगितया निर्द्धारणीये सति समीचीनत्वे परमदयालुना चक्रवर्त्तिनाधुनातनेन कृतपरिवर्त्तनत्वस्य सम्भावनया सम्प्रयोजनकत्वादित्याशयात्र सन्निवेशितं विवरणमेतद्धर्म्मशास्त्रानुमोदितम्—

शास्त्रीयदायभागनिरूपितसमालोचनसमीचीननिर्णयात् परतः।

सत्स्वपि बहुविधेषु स्व-स्व-मतसमर्थकेषु निबन्धग्रन्थेषु समस्तमतसमालोचनपूर्व्वकविचारणस्य वीरमित्रोदयनामके दायभागनिबन्धे तथा मिताक्षरानामिकायां विज्ञानेश्वरकृतयाज्ञवल्क्यटीकायाञ्च प्रायशः परिदृष्टतया विशेषतस्तत्सदनुगतं क्वचित् क्वचित् दत्तककौमुदीकारादिमतानुसृतञ्च विवेचनमत्र प्रदर्श्यते निम्नतः। यथाह दायभागलक्षणं नारदः,—

“विभागोऽर्थस्य पित्र्यस्य पुत्त्रैर्यत्र प्रकल्प्यते।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैरिति॥”

पित्रोरयं पित्र्य इति कृतैकशेषात् पितृशब्दात् यत्। अग्रे मातृधनस्यापि विभागकथनात्।

पित्र्यस्य पुत्त्रैरिति च द्वयमपि सम्बन्धमात्रोपलक्षणम्। पत्नीत्यादिनान्येषामपि भर्त्रादिधने तन्निरूपणात्।

अतएवोपक्रमे मनुना पित्रादिपदं नोपात्तम्।

एष स्त्रीपुंसयोरुक्तो धर्म्मो वो रतिसंहितः।
आपद्यपत्यप्राप्तिश्च दायधर्म्मं निबोधतेति॥

दायधर्म्मोऽप्यत्र विभागरूपोऽभिप्रेतस्तस्यैवाग्रे लक्षणकथनपूर्व्वकं निरूपणात्। उद्देशावसरेऽपि स्त्रीपुंधर्म्मो विभागश्चेति तस्यैव विवादपदेनोद्देशात्। अतएवाग्रे यावत् सम्बन्धिधनविभागमेव प्रदर्शितवान् मनुः।

दायशब्दश्चायं—स्वामिसम्बन्धमात्रद्रव्ये स्वत्वं (तद्रूपो) वदति।

तथाच निर्घण्टुकारः —

"विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः" इत्याह,

अत्रापि पितृपदं सम्बन्धिमात्रोपलक्षणमन्यत्रापि दायशब्दप्रयोगात्। विभक्तव्यं विभागार्हमित्यर्थः। अन्यथैकपुत्रादिस्वामिके विभागाभावाद्दायशब्दवाच्यता न स्यात्। यत्तु जीमूतवाहनेन दीयत इति व्युत्पत्त्या दायशब्दोऽददाति प्रयोगश्च गौणः मृतप्रव्रजितादिस्वत्वनिवृत्तिपूर्व्वकपरस्वत्वोत्पत्तिफलसाम्यात्। ननु मृतादीनां तत्र त्यागोऽस्ति। तच्च पूर्व्वद्रव्यस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे।

यत्र द्रव्येऽन्यसत्त्वं तत्र निरूढो दायशब्द इत्युक्तं, तन्न सुन्दरम्।

निरूढ़त्वाङ्गीकारे,—

दायददातिशब्दयोर्गौणत्वोपन्यासानर्थक्यात्।

सर्व्वथाऽवयवार्थराहित्ये हि निरूढ़त्वम्।

न च योगरूढ़त्वं। अवयवार्थवाधस्य स्वयमेवोपन्यस्तत्वात् गौणमवयवार्थं परिकल्प्य तदङ्गीकारस्य निष्प्रयोजनकत्वमन्योन्याश्रयत्वमनुभवविरोधो व्याघातश्च।

तत्स्वाम्योपरम इति च जन्मनापि स्वत्वस्योपपादयिष्यमाणत्वादिव्यापकम्।

विभागशब्दस्त्वनेकस्वाम्यानां द्रव्यसमुदायविषयाणां तत्तदेकदेशे व्यवस्थापने शक्तः। अतएवैकपुत्त्रादीनां पित्रादिधनविभागप्रयोगो दायोऽनेनलब्ध इत्येव च प्रयोगः। यत्रापि चैकं दासीगवादिबहुसाधारणं, तत्रापि तत्तत्कालविशेषनियतदास्य-दोहनादिना तस्य तस्य स्वत्वव्यञ्जनादस्येकदेशस्वाम्यत्वव्यवस्थापनरूपो विभागशब्दार्थः।

अतएव,—

"एकां स्त्रीं कारयेत् कर्म्म यथांशेन गृहे गृहे।" इति।

"उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते।"

इति युक्त्या विभजनीयं तदन्यथानर्थकं भवेदिति, वृहस्पत्यादिवचनेषु च वक्ष्यमाणरीत्या तदुपपादयिष्यते।

स च दायो द्विविधोऽप्रतिबन्धः सप्रतिबन्धश्च । पुत्रादीनां पित्रादिधने-पुत्रत्वादिनैव सत्यपि स्वामिनि पित्रादौ जन्मनैव स्वत्वोत्पत्तेः स तेषामप्रति-बन्धो दायः, स्वामिसद्भावस्याप्रतिबन्धकत्वात् । यत्तु विभक्तस्यासंसृष्टिनोऽ-पुत्रस्य मृतस्य पितृभ्रात्रादीनां तद्धनरूपो दायः सप्रतिबन्धः । स्वामि-सद्भावस्यापगम एव तत्र स्वत्वोत्पत्तेः ।

ननु सर्वोऽपि सप्रतिबन्ध एव दायः । स्वामिसद्भावे पुत्रादीनामपि-जन्ममात्रेण स्वत्वस्य वक्तुमशक्यत्वात् ।

तथाहि,—

यदि जन्मनैव पुत्रादीनां पित्रादिधने स्वत्वं स्यात् तर्ह्युत्पन्नमात्रस्य-पुत्रादेस्तत्साधारणमिति तदनुमतिं विना द्रव्यसाध्येष्वाधानादिषु—पित्रा-दीनामनधिकारापत्तौ "जातपुत्रः कृष्णकेशोऽग्नीनादधीते"ति श्रुतिविरोधः ।

किञ्च—विभागात् प्राक् पित्रादिप्रसादलब्धस्याविभाज्यत्ववचनं व्यर्थं-स्यात् । तद्धि पिता पुत्रान्तरानुमत्या यदि दत्तं सर्वैरेव दत्तमिति विभाग-प्राप्त्यभावादेव प्रतिषेधोऽनर्थकः । अननुमत्या तु साधारणद्रव्यस्य दानमेव न-सम्भवतीति पित्रादिप्रीतिदत्तत्वादिवाचोयुक्तिरयुक्ता ।

एवं पुत्राद्यनुमतिमन्तरेण स्त्र्यादीनामपि भर्त्रादिभिः प्रीतिदानस्या-सम्भवात् तदनुमतौ तु तैरपि दत्तत्वात् ।

"भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत् ।
सा यथा काममश्नीयाद्दद्याद्वा स्थावरादृते" ॥

वचने यथाकाममश्नीयाद्दद्याद्वेत्यनेनाविभाज्यत्वं भर्तृप्रीतिलब्धस्य यदभिहितं तदपि व्यर्थं । न चेदमविभागावस्थायां प्रीतिदानं तस्य चाविभा-ज्यत्वं न प्रतिपादयति, किन्तु स्थावरादृते यद्दत्तमित्यन्वयाद्विभागोत्तरमपि भर्त्रा स्त्रियै स्थावरं न प्रीत्या देयमज्ञानाद्दत्तमपि तेन पुत्रादिभिः परिहृत्य-विभजनीयमस्थावरं तु न प्रत्याहर्त्तव्यमित्यनुवादमात्रं, स्थावरस्य स्त्रियै-

प्रीतिदानप्रतिषेधमात्रं तात्पर्य्येण बोधयतीति शङ्कनीयं, तथात्वयस्य-व्यवहितयोजनाप्रसङ्गेनायुक्तत्वात् । स्थावरप्रीतिदानप्रतिषेधमात्रतात्पर्य्यकत्वे-ऽन्यांशस्यानुवादमात्रं व्यर्थत्वापरपर्य्यायञ्चापद्यते ।

"मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः ।
स्थावरस्य तु सर्वस्य न पिता न पितामहः" ।

तथा, -

"पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च ।
स्थावरं तु न भुज्येत प्रसादे सति पैतृक इति" ॥

वचनमवश्यं विभागप्राक्कालीनस्थावरप्रसाददानप्रतिषेधपरं वाच्यं-मणिमुक्तादिप्रसाददानानुमतिपुरःसरं तत्प्रतिषेधाभिधानात् । अन्यथा तस्यानु-वादमात्रत्वेन वैयर्थ्यापत्तेः । तथाच जन्मना पुत्रादीनां स्वत्वान्मणि-मुक्तादिषु तदनुमतिमन्तरेणापि दानं पितुः स्वातन्त्र्यं । स्थावरे तु तदनुमत्य-वेति विशेष इति वचनद्वयार्थस्य वाच्यत्वाज्जन्मना स्वत्वमायातीति, सर्वं, तस्य-पितामहोपात्तस्थावरविषयत्वात् । अतोऽत्र पितामहे तत्स्वाम्यनाशात् पितापुत्रयोः साधारणं तदोयद्रव्यमत्वेऽपि···स्थावर एव पुत्रानुमत्यपेक्षा-मणिमुक्तादौ तु नेति तदर्थात् ।

यत्तु गौतमवचनं उत्पत्त्यैवार्थस्वामित्वं लभेत इत्याचार्य्या इति ।

जन्मनः स्वत्वहेतुत्वे मिताक्षराकृता प्रमाणत्वेनोपन्यस्तं, तद्दायभागकृता-व्याख्यातमेव । पितृस्वत्वापरमे तज्जन्यत्वस्य हेतुभूतेनोत्पत्तिमात्रसम्बन्धे-नान्यसम्बन्धाधिक्येन जनकधने पुत्राणां स्वामित्वाद्यदिदं पुत्रा लभन्ते नान्यः सम्बन्धीत्याचार्य्या मन्यन्त—इति । न तु पितृस्वत्वे विद्यमानेऽपि तत्र पुत्र-स्वत्वमिति तदर्थः । नारददेवलवचनविरोधात् ।

"पितर्य्यूर्द्ध्वं गते पुत्रा विभजेयुर्द्धनं पितुरिति"

नारदः पितुर्द्धनमित्याह, अन्यथा धनं विभजेयुरित्येवावक्ष्यत् ।

पितर्य्युपरते पुत्त्रा विभजेयुर्द्धनं पितुः ।

अस्वाम्यं हि भवेदेषां निर्द्दोषे पितरि स्थिते ॥ इति ।

देवलोऽपि,—

पितुर्द्धनमित्युक्तोत्तरार्द्धेनास्वाम्यं ब्रूते स्पष्टमेव । तेषामस्वत्वं तत्र हेतुत्वेनोक्तवान् । निर्द्दोषे पातित्यादिस्वत्वापगमकदोषरहिते ।

मनुरपि,—

"ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समं ।

भजेरन् पैतृकं रिक्थमनीशास्तेहि जीवतोः" ॥ इति ।

जीवतोर्मातापित्रोस्तद्धने पुत्त्राणामस्वाम्यं व्यक्तमेवाह ।

यत्तु शङ्खलिखितावाहतुः । "न जीवति पितरि पुत्त्रा रिक्थं भजेरन् यद्यपि स्वाम्यं पश्चादधिगतं तैरनर्हा एव पुत्त्रा अर्थधर्म्मयोरस्वातन्त्र्यादिति" । स्मृतिचन्द्रिकाकारेण च व्याख्यातं । यद्यपि तैः पुत्त्रैः स्वकीयजन्मनः- पश्चादनन्तरमेव पितृधने स्वाम्यमधिगतं प्राप्तं, तथापि जीवति पितरि तद्धनं- तदिच्छां विना न विभजेरन्नर्थधर्म्मयोरस्वातन्त्र्यात् पितृपारतन्त्र्याद्विभागकरणेऽनर्हाः पुत्त्रा इति । तेनानेन वचनेन जन्मना पुत्त्रादीनां पित्रादिस्वामिकधने स्वत्वमिति तदपि न । मन्वादिवचनानां बहूनामस्वाम्यप्रतिपादकानामनुरोधेनास्यान्यथावर्णनीयत्वात् । वर्णितं च कल्पतरौ । यद्यपि पश्चादधिगतं पितृधनव्यापारनिरपेक्षैः पुत्त्रैर्विद्यादिभिरुपात्ते धने- स्वाम्यं, तथापि तत्राप्यस्वाम्यं जीवति पितरि किमुत पितृधने अर्थधर्म्मयोस्तेषां- पितरि जीवत्यस्वातन्त्र्यादिति ।

किंच स्वत्वं शास्त्रैकसमधिगम्यं तत्र च रिक्थक्रियादिवज्जन्मनः स्वत्व— हेतुत्वेनानुक्तेर्जन्मना स्वत्वमप्रमाणकमेव । अतएव

यथा—भार्य्यादिवचनं,

"भार्य्या पुत्त्रश्च दासश्च त्रय एवाधनाः स्मृताः ।

यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमिति" ॥

पारतन्त्र्यमात्रप्रतिपादनपरं तथाऽस्वाम्यवचनान्यपीत्यपास्तं । भार्य्यादि-

स्वध्ययनादिवचनैः कर्षणादिनाचार्थकत्वेन स्वामित्वे सिद्धे युक्तमस्यातस्तन्मात्रपरत्वमन्यथा पुत्रादिषु धनसाध्येषु पुराणादिश्रुतं तेषामधिकारित्वमपि विरुध्येत। अत्र तु प्रस्तुत जन्मनः स्वत्वहेतुत्वे प्रमाणाभावादयर्थमेवाश्रयानिकवचनवर्णनं।

किंच यदि स्वत्वं लौकिकं स्यात्तर्हि तदुपायानामपि लौकिकत्वात्-स्वामी रिक्थक्रयसम्विभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं, क्षत्रियस्य-विजितं, निर्विष्टं वैश्यशूद्रयोरिति गौतमवचनं व्यर्थमेव स्यादनुवादमात्रत्वान्नहि पाकादोदनो भवतीत्यादिशास्त्रं निष्प्रयोजनमनुवादमात्रमुच्यते। तस्य हि वचनस्यायमर्थः। रिक्थं दायः, क्रयः प्रसिद्धः। सम्विभागो दायस्यैवैकदेशनिष्ठस्वामित्वव्यञ्जको विभागः। परिग्रहः पूर्वमपरेणास्वीकृतस्यारण्यादिसाधारणप्रदेशसम्बन्धिनस्तृणजलकाष्ठादेः स्वीकारः। अधिगमोऽज्ञातस्वामिकस्य निध्यादेः प्राप्तिः। एतेषु स्वत्वहेतुषु सत्सु स्वामी भवति। जातेषु च जायते। ब्राह्मणस्य लब्धं प्रतिग्रहादिप्राप्तमधिकमसाधारणं,-रिक्थादयस्तु सर्व्वसाधारणाः। अधिकमित्युत्तरत्र सर्व्वत्र सम्बध्यते। क्षत्रियस्य-विजितं युद्धविजयदण्डादिप्राप्तमसाधारणं। वैश्यस्य निर्विष्टं कृषिगोरक्षणादिलब्धं। शूद्रस्य द्विजशुश्रूषादिभृतिलब्धं। निःपूर्वस्य विशेर्भृतिवाचकत्वं। निर्व्वेशो भृतिभोगयोरिति त्रिकाण्डाभिधानात्। वैश्यशूद्रग्रहणस्योपलक्षणत्वादन्येषामप्यनुलोमजप्रतिलोमजातानां सूतनामश्वसारथ्यमित्याद्यागमादिप्रतिपादितं वृत्तिजातं निर्व्विष्टशब्देन संगृह्यते, सर्व्वस्य भृतिरूपत्वात्।

किंच

"योऽदत्तादायिनो हस्तात्लिप्सेत ब्राह्मणो धनम्।
याजनाध्यापनेनापि यथास्तेन स्तथैव सः" ॥

इत्यदत्तादायिनश्चौरस्य हस्तात् याजनादिस्ववृत्त्यापि धनमर्जयतो-दण्डविधानमनुपपन्नं स्वत्वस्य लौकिकत्वे। सुवृत्त्यार्जयतो निरपराधत्वात्।

मन्मते तु शास्त्रैकसमधिगम्यत्वात् स्वत्वस्य चौरदात्तक-याजनादावेतद्वचनादेव स्वत्वानुत्पादकत्वात्तद्विधानमुपपन्नतरम्।

अपिच मम स्वमनेनापहृतमिति व्यपदेशो न स्यात्, स्वत्वस्य लौकिकत्वे । अपहर्त्तुरेव तत्र स्वत्वात् । मन्मते त्वपहारस्य निषिद्धत्वेन स्वत्वानुत्पादकत्वादुपपन्नोऽयं व्यपदेशः ।

नच रिक्थादिवदुत्पत्त्येवार्थस्वामित्वमिति गौतमवचन—उत्पत्तेरपि-जन्मापरपर्य्यायायाः स्वत्वहेतुत्वोक्तेः सत्यपि स्वत्वस्य तदुपायानाञ्च शास्त्रैकसमधिगम्यत्वे जन्मना पुत्रादेः पित्रादिधने स्वत्वमक्षतमेवेति वाच्यं । तस्यानेकदूषणैरन्यथा व्याख्यानस्य प्रागेवोक्तत्वात् । इदमेवाभिसन्धाय धारेश्वरेणापि शास्त्रैकसमधिगम्यमेव स्वत्वमिति सिद्धान्तितम् ।

अपिच जीवत्यपि पित्रादौ पुत्रादेस्तद्धने जन्मना स्वत्वे तदनिच्छायामपि-पुत्रादीच्छयैव विभागः स्यात् । अस्वातन्त्र्यवचनान्नैवमिति चेत् न । तथा सति दृष्टादृष्टविरोधमात्रं भवेद्व्यवहारस्तु सिद्ध्येत् । यथा पित्रादिभिः-सह पुत्रादिभिस्तुल्यादव्यवहारे प्रवर्त्तमाने तेषां दृष्टादृष्टयोः श्रेयोविघातमात्रं-गुरोः शिष्ये पितुः पुत्र—इत्यादि वचनार्थ इति प्राक् प्रपञ्चितं, तथात्रापि-स्यात् । अस्त्विति चेन्न, सकलनिबन्धविरोधात् । क्वचिज्जन्मनैवेति-प्राचीनग्रन्थलिखनमपि जन्मनिबन्धनत्वात् पितापुत्रादिसम्बन्धस्य पितृमरणस्य-च तत्स्वत्वापगमहेतुत्वेन—परम्परया वर्णनीयं । नच यथा पुत्रानुमत्या-पितुर्भवन्मते तदधिकारस्तथा मन्मतेऽपि पुत्रादीनामपि पित्राद्यनुमत्येति-वाच्यं । यतो द्वयोरपि मते पितुः स्वत्वस्य धने विद्यमानत्वात् स्वत्वत्यागरूपप्रधाननिष्पत्तिरविच्छिन्ना, भवन्मते तु पुत्रादीनां स्वत्वस्यैवाभावादनुमतेश्च-स्वत्वाजनकत्वात् यागादिप्रधाननिष्पत्तिरेव कथं । वस्तुतस्तु पितुः-पुत्रानुमतिरपि नापेक्षिता स्वातन्त्र्यात् । पित्राद्यनुमतिस्तु पुत्रादेरपेक्षिता-पारतन्त्र्यादित्येतावान् विशेषो—यथा स्त्रियाः स्वधनेनापीष्टापूर्त्तादिव्रतादौ-भर्त्रादेरनुमतिस्तत्पारतन्त्र्यवचनात् । अननुमतौ तु स्वतन्त्रः प्रत्यवायो-वैगुण्यं वा कर्म्मणि नतु प्रधानस्वरूपा निष्पत्तिः, पित्राद्यनुमतेः स्वत्वोत्-पादकत्वञ्चैतदनुरोधात् कल्प्यमानमलौकिकमशास्त्रीयं च । तस्माच्छास्त्रीयसमधिगम्येऽपि स्वत्वे कथंचिज्जन्मनोऽपि रिक्थादिवचनादधिगमादिपदेन-संग्रह आवश्यकः श्रुतिस्मृतिपुराणशिष्टाचारसिद्धस्य निर्दोषे जीवत्यपि-

पित्रादौ पुत्रादियज्ञाद्यनुष्ठानाधिकारस्यानुरोधात्। वस्तुतस्तु लौकिकमेव स्वत्वं लोके च जातमात्राणामेव पुत्रादीनां पित्रादिधने स्वाम्यव्यवहारोऽप्येषा-मपीति साधयिष्यामः।

"यच्च पित्रादीनामनुमत्ययोग्यपुत्रादिसाधारणस्वत्वे कथमनुमतिमन्त-रेणाधानादिकं स्यादित्युक्तं—तदनुमतियोग्येष्वपि पुत्रादिषु स्वातन्त्र्यात् पित्रादीनां न तदनुमत्यपेक्षा किमुतानुमत्ययोग्येष्विति परिहृतप्रायमेव तथा-तद्विधिबलादेवाधिकारोऽवगम्यते;—तस्मात् पैतृके पैतामहे च द्रव्ये-जन्मनैव स्वत्वं, तथापि पितुरावश्यकेषु धर्म्मकृत्येषु वाचनिकेषु प्रसाददान-कुटुम्बभरणापद्विमोक्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति-स्थितं। स्थावरे तु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिपारतन्त्र्यमेव।

"स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितं।
असम्भूय सुतान् सर्व्वान्न दानं न च विक्रयः॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः।
वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः"॥

इत्यादि स्मरणात्।

अस्यापवादः,—

"एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्रयं।
आपत्काले कुटुम्बार्थं धर्म्मार्थं च विशेषतः"॥ इति।

अस्यार्थः—अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु वा अनुज्ञादानाद्यसमर्थेषु-भ्रातृषु वा तथाविधेष्वविभक्तेष्वपि सकलकुटुम्बव्यापिन्यामापदि तत्पोषणे-वावश्यं कर्त्तव्येषु पितृश्राद्धादिषु स्थावरस्य दानाधमनविक्रयमेकोऽपि समर्थः-कुर्य्यादिति तु विज्ञानेश्वराचार्य्याः।

अनघोत्पत्त्यैवार्थस्वामित्वमिति गौतमवचनस्य यज्ञीभूतवाहनरघुनन्दनाभ्यां पारम्परिकोत्पत्तिस्वत्वहेतुत्वेन व्याख्यानं कृतं, तदपि व्यर्थमेव।

यत्तु मनुवचनं तस्यापि स्मृतिचन्द्रिकोक्तव्याख्यैव साधीयसी। कल्पतरुक-

व्याख्यायान्तु विद्याद्युपात्ताध्याहारेऽनुपस्थितभूयःपदाध्याहारः प्रसज्येत । अस्मत्पदाध्याहारस्तु पुत्रत्वाद्याक्षेपोपस्थितेरल्पाध्याहाराच्च नायुक्तः ।

तेन श्रुत्युपष्टब्धस्मृत्यनुरोधाद्गुनारददेवलादिवचनानामेवास्वातन्त्र्यपरत्व-वर्णनमुचिततरं । यदप्युक्तं प्रीतिदत्तस्याविभाज्यत्ववचनानि जन्मना स्वत्वाभ्युप-गमेऽनुपपन्नानीति, तदपि न, अनुमत्यभिप्रायेण स्थावरप्रीतिदानाभाव-स्थिरीकरणार्थतयोपपत्तेः ।

स्वातन्त्र्याद्वा पितुरनुमतिमन्तरेणापि तेन दत्ते स्थावरव्यतिरिक्ते पुत्राणा-मविभाज्यत्वमुच्यते ।

अतएव स्थावरे विशेषवचनं—

"स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितं ।
असम्भूय सुतान् सर्वान् न दानं न च विक्रयः" ॥ इति ।

मणिमुक्ताप्रवालानामित्यादिवचनन्तु जन्मना स्वत्वपक्ष एवोपपन्नतरं, न च पितामहोपात्तस्थावरमात्रविषयकत्वमिति युक्तं, न पिता न पितामह-इति द्वयग्रहणात् । पितामहस्य स्वार्जितमपि पुत्रे पौत्रे च सत्यपि न देय-मिति वचनं जन्मना स्वत्वं गमयति । यथा परमते मणिमुक्ताप्रवालादीनां-पैतामहानामपि पितुरेव स्वत्वं स्मरणात्, तथास्मिन् मतेऽपि पुत्रादीनां तत्र-जन्मना स्वत्वे साधारणेऽपि पितुर्दानाधिकार इत्यविशेषः । तस्मात् पैतृके-पैतामहे च द्रव्ये पुत्रादीनां यद्यपि जन्मनैव स्वत्वं, तथापि पितुरावश्यकेषु-धर्म्मकृत्येषु वाचनिकेषु च प्रसाददानकुटुम्बभरणापद्विमोचनादिषु च स्थावर-व्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यं तुल्यमेव ।

"स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् ।
असम्भूय सुतान् सर्वान् न दानं न च विक्रयः ॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः" ।

इत्यादि वचनात् ।

यच्च स्वत्वस्य शास्त्रैकसमधिगम्यत्वाच्छास्त्रे च जन्मनः क्वापि स्वत्वहेतुतानभिधानात् कथं जन्मना पुत्रादिधने स्वत्वस्वीकार इत्युक्तम्। तत्तु शास्त्रैकसमधिगम्यत्वमभ्युपेत्यापि गौतमादिवचन—उत्पत्तेरपि स्वत्वोपायत्वोक्तेः-परिहृतमेव प्राक्। वस्तुतस्तु न स्वत्वस्य शास्त्रैकसमधिगम्यत्वं युक्तियुक्तं। सर्वथा शास्त्रज्ञानरहितानां प्रत्यन्तवासिनां म्लेच्छादीनामपि समस्तमिदमन्यस्वस्वमिति व्यपदेशस्तत्कृतश्च क्रयविक्रयादिव्यवहारो दृश्यते। तेनान्वय व्यतिरेकाभ्यां क्रयाद्युपायकं स्वामित्वनिरूपितस्वत्वमपि तैर्यथेष्टविनियोगार्हत्वरूपं पदार्थान्तररूपं वा प्रत्यक्षादिप्रमाणादेवावगतमित्यवश्यं वाच्यम्।

एतत्तर्कोपष्टब्धोऽनुमानवाक्यप्रयोगोऽपि विज्ञानयोगिनोक्तः स्वत्वं लौकिकं-लौकिकार्थक्रियासाधनत्वात् व्रीह्यादिवदित्यन्वयदृष्टान्तः। आहवनीयादीनां हि शास्त्रैकसमधिगम्यानां न लौकिकार्थक्रियासाधनत्वमस्तीति व्यतिरेकदृष्टान्तः।

तेनान्वयव्यतिरेको हेतुः, यद्यप्याहवनीयादीनामपि यागादिलौकिकक्रियासाधनत्वमप्यस्ति, तथापि तल्लोकप्रमाणकाग्न्यादिरूपेण नालौकिकाहवनीयादिरूपेणेति न व्यभिचारः।

इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वं अपितु स्वत्वेनैवेति। सुवर्णत्वादिनाभरणाद्यर्थक्रियासाधनात्वात्, तद्यथा लौकिकं रूपमेवं स्वत्वमपि सर्वानुगतं लौकिकमेव न ह्यस्वेन क्रयादिक्रियानिर्वाहो लोके।

स्वामी रिक्थेत्यादिवचनन्तु प्रागेव व्याख्यातम्। रिक्थशब्दस्तु पितृतिवन्धदायपरः, सम्विभागशब्दश्च सप्रतिवन्धदायपर—इति मिताक्षरायां-विज्ञानेश्वरेण व्याख्यातम्। स्मृतिचन्द्रिकाकृता तु रिक्थं पित्रादिधने विशेषनिष्ठस्वामित्वसम्पादको विभाग इति सम्विभागशब्दो व्याख्यातः। तत्र स्वस्य-सतो विभागात् स्वत्वहेतुत्वेन तत्प्रतिपादनानौचित्यात् एकदेशव्यवस्थापनमात्रं हि स्वत्वस्य विभागेन क्रियते। मुख्यामुख्यहेतुत्वग्रहणे स्वामिपदे वैरूप्यापत्तेः। अतएवाह-मिताक्षरायां विज्ञानेश्वराचार्य्यः। विभागशब्दश्चानेकस्वामिकधनविषयः प्रसिद्धो नान्यदीयविषयो न प्रक्षीणविषय इति। लोके पुत्रादीनां-जन्मनैव स्वत्वं प्रसिद्धतरमिति च। यदपि पत्नी दुहितरश्चेत्यादिवचनं-

तथापि स्वामिसम्बन्धनिबन्धनानेकदायहरप्राप्तौ लोकप्रसिद्धेऽपि स्वत्वे-ऽस्वामोहनिरासार्थम्। प्रायेण व्यवहारस्मृतीनां लोकसिद्धार्थानुवादकत्व-मिति सकलनिबन्धृभिरभिधानात्। नियतौपायिकं स्वत्वं लोकसिद्ध-मेवेति भगवतो गुरोरपि सम्मतम्। लिप्सानये हि तृतीये वर्णके द्रव्यार्ज्जन-नियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात् स्वत्वस्यालौकिकत्वादिति पूर्व्वपक्षा-सम्भवमाशङ्क्य द्रव्यार्ज्जनप्रतिग्रहादीनां स्वत्वसाधनत्वं लोकसिद्धमेवेति पूर्व्वपक्षः समर्थितस्तेन, नच द्रव्यार्ज्जनस्य क्रत्वर्थत्वे स्वमेव न भवतीति याग एव न वर्त्तेत। प्रलपितमिदं केनापि। अर्ज्जनं स्वत्वं नापादयतीति-विप्रतिपिद्धमिति ग्रन्थेन।

अस्यार्थः टीकाकृता विवृत एवं, यदा द्रव्यार्ज्जननियमानां क्रत्वर्थत्वं, तदा नियमानां स्वत्वोपायतामिदं शास्त्रं न बोधयति। क्रत्वर्थताबोधने-व्याहतत्वात्। तथा सति प्रतिग्रहादिप्राप्तस्य स्वत्वमित्यत्र प्रमाणाभावाद्-स्वेन च स्वत्यागात्मकयागासम्भवात् कस्येदं द्रव्यार्ज्जननियमा भवेयुरिति-पूर्वपक्षासम्भव इति शङ्कार्थः। प्रलपितमित्यादुग्रत्तरस्तस्यार्थः। अर्ज्जन-प्रतिग्रहादेः स्वत्वहेतुताया—लोकसिद्धत्वेन शास्त्रस्य तत्राव्यापारान्नियमानां-क्रत्वर्थतैव तेन गम्यत इति न यागासम्भवो—नियमानर्थक्यं चेति।

सिद्धान्तेऽपि तेन स्वत्वस्य लौकिकत्वाभ्युपगमेनैव विचारप्रयोजनमुक्तम्। अतो नियमातिक्रमः पुरुषस्य न क्रतोरिति। अस्याप्यर्थ एवं विवृतः। यदा-द्रव्यार्ज्जननियमानां क्रत्वर्थत्वं, तदा नियमार्ज्जितेनैव क्रतुर्न नियमाति-क्रमार्ज्जितेन द्रव्येण, नतु पुरुषस्य नियमातिक्रमदोषः पूर्व्वपक्षे। सिद्धान्ते-त्वर्ज्जननियमस्य क्रत्वर्थत्वाभावात् केवलपुरुषार्थत्वादतिक्रमार्ज्जितेनापि-द्रव्येण क्रतुसिद्धिरप्रत्यूहा। अनेन नियमातिक्रमार्ज्जितस्य स्वत्वमभ्युपगत-मन्यथा क्रतुसिद्ध्यभिधानविरोधात्, तत्रैवाधिकरणे कुमारिलस्वामिनाऽप्यत-भवतः स्वत्वं लौकिकमित्येवाभिमतमिति। तत्रत्यवार्त्तिकं तन्मरत्नाभियोग-भाजां सुलभमेव।

ततश्च स्वामीरिक्थेत्यादिवचसां लौकिकमेव रिक्थादीनां स्वत्वोपायत्व-मनुद्य तदतिरिक्तोपायनिवृत्तौ तात्पर्य्यं नियमविधयेति नानार्थत्वमग्रहापि,-

दृष्टिसाधनभोजनाश्रितदिङ्नियमवत्। द्रव्यार्ज्जनमेव क्रत्वर्थंपुरुषार्थत्वविचारोदाहरणं, नियमस्तु पूर्व्वपक्षयुक्तितयोपन्यस्तः। स एव तत्रोदाहरणमित्येव भट्टगुरुमतयोर्भेदः। स्वत्वस्य लौकिकत्वं तूभयसम्मतमिति निष्कर्षः। तत्तद्दूषणभूषणादि तु तन्त्राभियोगवतामाकरे एव व्यक्तं प्रस्तुतानुपयोगादिह नोच्यते। एतेन चौर्य्यादिप्राप्तस्यापि स्वत्वं स्यादिति यत् संग्रहकारधारेश्वराभ्यां स्वत्वस्य लौकिकत्वे दूषणमभिहितं तदपि परास्तं। चौर्य्यादिषु स्वत्वोपायत्वस्य लोक-एवाप्रसिद्धेरन्यस्य स्वमिदं नास्तीत्येवं व्यवहारात्। क्रयाद्युपायसन्देहादेव स्वत्वसन्देहोऽपीदमस्य वास्य वेत्याकारको नानुपपन्नः। मम स्वमनेनापहृतमिति न ब्रूयादपहर्त्तुरेव स्वत्वादिति च यत् स्वत्वस्यलौकिकत्वे दूषणमभिहितं, तदप्येतेनालूनविशीर्णम्।

अत्र मिताक्षरायां स्वत्वलौकिकालौकिकविचारप्रयोजनमुक्तम्।

शास्त्रैकसमधिगम्ये स्वत्वे,—

मनुः,—

"यद्गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम्।
तस्योत्सर्गेण शुध्यन्ति जपेन तपसैव च॥" इत्यादि—

स्मरणादसत्प्रतिग्रहादि यस्य यदर्ज्जनोपायत्वेन निषिद्धं तदर्ज्जिते तस्य स्वत्वाभावाच्चौर्य्याद्यर्ज्जितवत् तत्पुत्राणामपि तदविभाज्यमेव। लौकिकत्वे तु स्वत्वस्य तदर्ज्जितेऽपि पितुः स्वत्वात् तत्पुत्राणां पितृधनत्वेन तद्विभाज्यम्। अर्ज्जयितुरेव प्रतिषेधातिक्रमनिमित्तप्रत्यवायात् प्रायश्चित्तम्। तत्पुत्रादीनां तु दायरूपधर्म्मोपायतस्तत्स्वमिति न प्रायश्चित्तमपि।

"सप्त वित्तागमा धर्म्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव वा"॥

इति मनुस्मरणात्।

प्रयोगो वृद्ध्यर्थं द्रव्यप्रयोगः, कर्म्मयोग आर्त्विज्यादिकरणम्। तत्र दायादीनां त्रयाणां वर्णचतुष्टयसाधारण्येन, जयस्य क्षत्रियं प्रति प्रयोगस्य स्वयंकृतस्य वैश्यं शूद्रञ्च प्रति धर्म्म्यत्वं। अस्वयंकृतस्यापदि च स्वयंकृतस्यापि सर्व्वान्-

प्रति, कर्म्मयोगस्य तु विप्रं प्रत्येवेति विशेष इति, लौकिके तु तस्मिन् लोके-तेषामपि तदुपायत्वात् सिद्धं तद्विभाज्यत्वमिति मिताक्षरोक्तं साध्वेव प्रयोजनम्। इदञ्चोपलक्षणं, पूर्व्वपक्षे चौर्य्याद्यर्ज्जितपितृधनस्वीकारे यथा पुत्रादीनामपि-दण्डप्रायश्चित्तं भवत्येव, तथाऽसत्प्रतिग्रहाद्यर्ज्जिततद्ग्रहणेऽपीत्यपि प्रयोजन-मवसेयं मर्ज्जयितुरेव प्रायश्चित्तमित्यवधानेनोचितत्वात् ।

अपरञ्च, पैतृकादिधने जन्मना स्वत्वं न केवलं शास्त्रानुमोदितं, किन्तु-सुयुक्तिसुसिद्धमेव । तदन्यथास्वीकारे शास्त्रज्ञानविरहितस्य विलासपरतन्त्रस्य-स्वकार्य्यपरिचालनाद्यकुशलस्य, जनकस्य स्वीयसम्पत्परिचालनाशक्ततया-विलयमुपगतायां सम्पदि द्विविधायां भवेत्तनयव्रातं दारिद्र्याभिभूतमेव । अतएव जन्मना स्वत्वसम्पादनं युक्ततरम् । सति तत्र तेषां जन्मनैव स्वत्वे-पितुरेव स्वातन्त्र्येण विलोपयितुमक्षमत्वात् । अतो जन्मना स्वत्वस्वीकारे तु-सर्व्वमनाकुलमित्यादि सुधीभिरूह्येयम् । अतएव मिताक्षरादौ पूर्व्वस्वामि-सम्बन्धाधीनं यद्धनं तत्र स्वत्वमन्यस्य तदेव दायशब्दवाच्यमित्युक्तं न तु पूर्व्व-स्वाम्युपरमोऽपि तत्र प्रवेशितः । तत्सिद्धं द्विविधो दाय इति ।

मिताक्षरोक्तविभागकालत्रयसमर्थनन्तु तत्प्रस्तावे प्रपञ्चयिष्यामः ।

इत्यलं प्रसक्तानुप्रसक्तविचारेणेति ।

इति दायभागादिस्वत्वान्तनिरूपणम् ।

---

अथ विभागकालकर्तृनिरूपणम् ।

तत्र मनुः,—

"ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः" ॥

पैतृकं पित्रोः सम्बन्धि प्रागुभयोपादानात् । अतएव पितुरूर्द्ध्वमिति-पितृधनविभागकालः । मातुरूर्द्ध्वमिति मातृधनविभागकालोऽभिहितः ।

चशब्दस्तु कालान्तरसमुच्चयार्थः, न तु द्वयोरूर्द्ध्वमिति नियमार्थः, पितृधन विभागे मातृजीवनस्याप्रतिबन्धकत्वात् । मातृधनविभागे पितृजीवनस्य ।

तथाचाह संग्रहकारः—

"पितृद्रव्यविभागः स्याज्जीवन्त्यामपि मातरि ।
न स्वतन्त्रतया स्वाम्यं यस्मान्मातुः पतिं विना ॥
मातृद्रव्यविभागोऽपि तथा पितरि जीवति ।
सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिः पतिः" ॥ इति ।

पत्युरभावेऽपि पुत्रेषु सत्सु यतो मातुस्तद्धने स्वातन्त्र्येण स्वाम्यं नास्त्यतस्तस्यां जीवन्त्यामपि पितृधनविभागो युक्तः, यतश्चापत्येषु सत्सु भार्य्याधने पत्युः स्वाम्याभावस्ततस्तस्मिन् जीवत्यपि पुत्राणां मातृधनविभागाधिकार इति भावः ।

अतश्चानीशास्ते हि जीवतोरित्यपि तत्तद्धने व्यवस्थया अस्वातन्त्र्यप्रतिपादकं जन्मना स्वत्वस्य पुत्राणां पितृधने व्यवस्थापनात् ।

याज्ञवल्क्यः,—

"विभागञ्चेत् पिता कुर्य्यात् स्वेच्छया विभजेत् सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिनः" ॥

अत्रेच्छया पिता सुतान् विभजेदिति वदन् जीवत्यपि पितरि पितुरिच्छा यदा सोऽपि विभागकाल—इति सूचयति । तदा च पितैव विभागकर्त्ता ।

"अस्वाम्यं हि भवेदेषां निर्द्दोषे पितरि स्थिते" ।

इत्यनेन पुत्राणां अस्वातन्त्र्यप्रतिपादनात् । निर्दोषे इति विशेषणात् पातित्यादिदोषवति सत्यपि पितरि पुत्राणां तत्पारतन्त्र्याभावादिच्छा यदा सोऽपि विभागकालः पुत्राणाञ्च तदा विभागकर्त्तृत्वमित्युक्तं भवति ।

अन्योऽपि पुत्रेच्छया विभागकालः पितरि द्रव्यनिस्पृहे निवृत्तरमणे मातरि च निवृत्तरजस्कायाम् ।

यथाह नारदः,—

"अत ऊर्द्ध्वं पितुः पुत्रा विभजेयुर्धनं समं" । इति ।

पित्रोरूर्द्ध्वं विभागसुक्त्वा,—

"मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च।

निवृत्ते वापि मरणात् पितर्य्युपरतस्पृहे" ॥ इति।

जीमूतवाहनेन तु "विनष्टे वाप्यशरणे" इति पाठो लिखितः। विनष्टे-पतिते अशरणे गृहस्थाश्रमरहित—इति व्याख्यातञ्च निवृत्ते वापि मरणा-दितिपाठान्तरमनादरमित्यप्युक्तं, तदयुक्तं मिताक्षरादिबहुनिबन्धलिखितत्वात्।

पुत्रा धनं विभजेयुरित्यनुषङ्गः।

गौतमोऽप्यूर्द्ध्वं पितुः पुत्रा रिक्थं विभजेरन्नित्युक्त्वा निवृत्ते चापि रजसि-मातु र्जीवति चेच्छतीत्याह।

बृहस्पतिरपि,—

"पित्रोरभावे भ्रातृणां विभागः सम्प्रदर्शितः।

मातुर्निवृत्ते रजसि जीवतोरपि दृश्यत"—इति।

तथा सरजस्कायामपि मातर्य्यनिच्छत्यपि पितरि दीर्घरोगग्रस्तेऽधर्म्म-वर्त्तिनि पुत्रेच्छया विभागः। यथाह शङ्खः "अकामे पितरि रिक्थविभागो-वृद्धे विपरीतचेतसि रोगिणि चेति।

नारदोऽपि,—

"व्याधितः कुपितश्चैव विषयासक्तमानसः।

अयथाशास्त्रकारी च न विभागे पिता प्रभुः" ॥ इति।

अत्र पितुपरम एकः कालो निवृत्ते रजसीति द्वितीयो जीवति चेच्छ-तीति तृतीय-इति—

मिताक्षरायां जीमूतवाहनोक्तं दूषणं, मातृरजोनिवृत्तेः पितुपरतस्पृहत्व विशेषणत्वे।

"त्रिंशद्वर्षो वहेत्-कन्यां हृद्यां द्वादशवार्षिकीं।

त्र्यष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरः" ॥ इति।

मनुना विवाहकालविधानात्, वनं पश्चाग्नतो ब्रजेदित्याश्रमान्तरगमन-कालविधानाच । तदा रजोनिवृत्तेर्मातुरसम्भवे पितरि वोपरतस्पृहे-वानप्रस्थे तत्पुत्राणामिच्छया विभागाभावप्रसङ्गात् । निर्व्विशेषणमुपरत-स्पृहत्वमेव पितृधनविभागकाल इति तूच्यमाने अनुपरतस्पृहे पितरि पतिते-ऽप्यविभागप्रसङ्गात् अयमप्यपरः कालः, काल इत्यभिधाने कालचतुष्टयापत्तिः-पितुरुपरमः पतितत्वं ; निष्पृहत्वमिच्छा चेति, तस्मात् पतितत्वनिष्पृहत्वे-च्छोपरमैः पितुः स्वत्वापगम—एकः कालोऽपरश्च सति तत्स्वत्वे तदिच्छात-इति कालद्वयमेव युक्तम् ।

तन्मिताक्षराकृदाशया परिज्ञानात् । नहि तेन कालत्रयनियमो-ऽभिहितः । तथेत्यादिग्रन्थेन कालान्तरस्यानुपदमेव प्रतिपादनात् । नियमस्य-निर्जीवत्वात् पितृस्वत्वापगम एकः कालोऽपरश्चानपगत एव पितृस्वाम्ये-तदिच्छात इति कालद्वयमित्यप्यशुद्धं । निवृत्तरजस्कायां मातरि त्वनन्वयापत्तेः-न हि मातृनिवृत्तरजस्कतामात्रेण पितृस्वत्वापगमः। जन्मना स्वत्वाव-स्थापनात् पितृस्वत्वापगमस्य कालोपलक्षणत्वासम्भवाच, एवं दीर्घरोगग्रस्त-त्वेऽपि न स्वत्वापगम इति कालद्वयनियमस्तवापि दुःसमाधः । इष्टापत्तौ-तद्वचनविरोधः ।

यथोक्तं तेनैव । मातुर्निवृत्ते रजसीति पितामहादिधनाभिप्रायः । निवृत्ते-रजसि पुत्रान्तरसम्भवाभावात्तदानीमपि पितुरिच्छयैव पुत्राणां विभागः । अनिवृत्ते रजसि क्रमागतधनविभागे पश्चाज्जातानां वृत्तिलोपापत्तेः । न-चासौ युक्तः ।

"ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च तेऽभिकाङ्क्षन्ति वृत्तिलोपो न विद्यते" ॥

इति वचनात् ।

यत एव पितृधने कालद्वयमतएव मनुगौतमादिभिर्मृतपदम् परित्यज्योर्द्ध-मित्युक्तं, ऊर्द्धं पितुः स्वत्वापगम इत्यर्थः । यदि चास्य पितृधनविषयता स्यात्-तर्ह्यूर्द्धं विभागाज्जातस्तु पैत्रमेव हरेद्धनमित्यस्य निर्विषयता भवेत् । निवृत्ते-

रजसि पुत्रोत्पत्त्यसम्भवात्, मातृधनगोचरत्वं चास्य नाशङ्कनीयमेव। मातुरेव-निर्द्धनत्वापत्तेः। अतो निवृत्ते रजसीति पैतामहधनविषयं, न चेच्छा-मनपेक्ष्य रजोनिवृत्तिमात्रं विभागनिमित्तं सम्भवत्यनिच्छया विभागाभावात्। कस्येच्छयेत्यपेक्षयामूर्द्ध्वं पितुः पुत्रा रिक्थं विभजेयुर्निवृत्ते रजसि मातुर्जीवति-चेच्छतीति गौतमवचनात् पितुरेवेच्छात इति निर्णीयत इति पितामहादिधन-विभागस्यापि पित्रोरभाव इत्येकः कालः, मातुर्निवृत्ते रजसि पितुरिच्छात-इति कालद्वयम् ।

तदप्यनभियुक्तप्रमोदनं, वृत्तिलोपापत्तेः पितृधनेऽपि तुल्यत्वात्। ऊर्द्ध्वं-विभागादित्यस्य निर्विषयत्वापत्तेरपि पितामहादिधनेऽपि तुल्यत्वात्। सस्पृहे पितरि पातित्यादिदुष्टे पितामहधनेऽपि पुत्रेच्छया विभागस्य सकल-सम्मतत्वादवश्यवाच्यत्वाच्च। वस्तुतस्तु पितामहादिधने भूर्यापितामहो-पात्तेत्यादिना सदृशस्य पितापुत्रस्वाम्यस्य वक्ष्यमाणत्वात् पुत्रेच्छयापि तस्य-विभाग उचित एव। यत्त्वत्र व्याख्यानान्तरमनीशत्वस्य तद्धनगोचरत्वादि-कल्पनं तत्सर्वं तद्वचनविवेचने निराकरिष्यामः।

वयं तु स्वातन्त्र्यार्हे पितरि जीवति तदिच्छैव विभागनिमित्तं पारिव्रज्या-दिभिस्तदनर्हे पुत्रेच्छापि, तदुपरमे तु स्वेच्छाया निमित्तत्वमर्थसिद्धमिति-कालत्रयमेवानेन प्रकारेण; अन्यथा बहूनामुपरतस्पृहत्वादीनां विकल्प-समुच्चयादिकल्पनानुपपत्तौ विशेषणविशेष्यभावाद्यव्यवस्थापत्तौ बहुव्याकुली-भावः। अतएव क्वचिद्वचने केषांचिदेवोपादानमनुपादानञ्च केषाञ्चित्-संगच्छते। एकमूलकल्पनालाघवेनोपरतस्पृहत्वादिभिः पितुः स्वातन्त्र्या-भावस्यैकस्य सर्वैरुपलक्षणात्, अनीशास्तेहि जीवतोः, निर्द्दोषे पितरि स्थिते। जीवतोरपि शस्यते—इत्यादि वचनस्वरसोऽप्येवमेव।

अतएव पित्रोर्जीवतोर्भ्रातॄणां सहवासो मुख्यस्तदनुमत्यादिना ज्येष्ठस्य-कार्य्यक्षमस्य वा पुत्रस्य स्वातन्त्र्यमन्येषां तदनुरोधवृत्तित्वमिति च पक्षद्वय-मुक्तवन्तो व्यासादयः। भ्रातॄणां जीवतोः पित्रोः सहवासो विधीयते इति-व्यासः। जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यं। कामं-दीने प्रोषिते आर्त्तिं गते ज्येष्ठो वार्थांश्चिन्तयेदिति हारीतः। शङ्खलिखितौ तु-

स्पष्टतममाहतुः। पितर्य्यशक्ते कुटुम्बव्यवहारान् ज्येष्ठः प्रतिकुर्य्यादनन्तरो वा-कार्य्यज्ञस्तदनुमतो न त्वकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि-दीर्घरोगिणि वा ज्येष्ठ एव पितृवदर्थान् पालयेदितरेषाम्रिक्थमूलं हि कुटुम्बम-स्वतन्त्राः पितृमन्तो मातुरप्येवमवस्थिताया इति।

तस्माद् यथोक्तरीत्या विभागस्य कालत्रयमेवेति ब्रूमः।

तथापि, यथा च पित्रोर्जीवतोर्भ्रातॄणां सहवासो मुख्यस्तथा तदूर्द्धमपि। तथाच शङ्खलिखितौ। "कामं सहवसेयुरेकतः संहता वृद्धिमापद्येरन्निति"। संहताः सहवसन्तो द्रव्योपचयसाहाय्यादिना परस्परकृतेन वृद्धिमाप्नुयुरित्यर्थः।

नारदोऽपि,—

"बिभृयाद्वैकतः सर्वान् ज्येष्ठो भ्राता यथा पिता।
भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुलस्थितिः"॥

शक्तः सन् कनिष्ठोऽपि सर्वान् बिभृयात् मध्यमो दण्डापूपन्यायात्सिद्धः। इति जीमूतवाहनः।

मनुरपि,—

"ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा॥
ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।
पितॄणामनृणश्चैव स तस्मात्-सर्व्वमर्हति॥
यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते।
स एव धर्म्मजः पुत्त्रः कामजानितरान् विदुः॥
पितेव पालयेत्-पुत्त्रान् ज्येष्ठो भ्रातॄन् यवीयसः।
पुत्त्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्म्मतः।
ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः।
ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः॥

**यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः ।**
**अज्येष्ठवृत्तिर्यस्तु स्यात् सम्यक्पूज्यस्तु बन्धुवत् ॥**
**यो लोभाद्धि न कुर्वीत ज्येष्ठो भ्रातॄन् यवीयसः ।**
**सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः" ॥ इत्यादि—**

वचननिचयाद्गुणज्येष्ठवशवर्त्तितया सर्वेषां सहवासः प्रशस्तः । पञ्च-यज्ञाख्यास्थानापदि श्रेयस्करत्वेऽपि विशेषतो विपद्यानुकूल्यधायकतया समयेऽस्मिन् तदाश्रयणं प्रशस्ततरमिति निर्गलितार्थः, तादृशानुष्ठाने सम्पदो बहुव्यक्तिकरगतत्वाभावेन विपत्त्यसम्भवात् ।

ननु स्वस्वप्राधान्यस्थापनाभिलाषितया स्त्रैणत्वेन वा साकं गुणवज्ज्येष्ठेन-संवसितुमनिच्छन्तस्तदन्ये भ्रातरो भवेयुर्विभागार्हा-इति—

चेन्न, प्राधान्याभिलाषस्य वा स्त्रैणत्वस्याधार्म्मिकविषयत्वात् धर्म्मवृद्धि-कामनया मन्वादिधर्म्मशास्त्रप्रतिपादितविभागार्हत्वाच्च । अतः पृथक् सदनावस्थानेऽपि केवलं यथास्वं सुग्रासाच्छादनभागिनः ।

अनुमोदते मनुरप्येतत्,—

**"एवं सहवसेयुर्वा पृथग्-वा धर्म्मकाम्यया" । इति ।**

"एवमविभक्ता भ्रातरः सह संवसेयुः यदि वा धर्म्मकामनया कृतविभागाः-पृथक् पृथक् पञ्चमहायज्ञाद्यनुष्ठानधर्मस्तेषां वर्द्धते तस्माद्विभागक्रिया धर्म्मार्था-इति कुल्लूकभट्टव्याख्यानम् ।

तथाह स एव,—

**"शेषास्तमुपजीवेयुर्यथैव पितरं तथा" । इति ।**

तथाच कुल्लूकभट्टः,—कनिष्ठाः पुनर्ज्येष्ठं भक्ताच्छादनाद्यर्थं पितरमिवोपजीवेयुः । तथैव परिदृश्यते भारतीयराजपरिवारवर्गे व्यवहारः ।

यद्यप्राप्तव्यवहाराणामविदितगुणवज्ज्येष्ठत्वानां बालानामाव्यवहारप्राप्ते-स्तथाऽऽगुणवज्ज्येष्ठत्वपरिचयाच्च व्यवहारकुशलबन्धुमित्रादिषु विन्यस्यं सम्पत्तिजातमेव । अतएव विभागं प्रकम्याह कात्यायनः,—

"अप्राप्तव्यवहाराणां धनं व्ययविवर्ज्जितं ।
न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैव च" ॥
तथा रक्ष्यं बालधनमाव्यवहारप्राप्तेरिति वचनं" ।

विभागानुष्ठानं तु द्वितीयःपक्षः,'स तु धर्म्मकामनामूलकः न त्वन्यथात्मकः, यथा,—धर्म्मवृद्धिकामनया तु विभागः कार्य्य इत्याहतुर्मनुप्रजापती, एवं-पृथग्-वा धर्म्मकाम्यया, पृथक्-विवर्द्धते धर्म्मस्तस्माद्धर्म्म्या पृथक्-क्रिया । धर्म्मश्च-देवाद्यर्च्चनरूपस्तस्यैव सहवासे पृथक्-श्रवणात् ।

तथाच बृहस्पतिः,—

"एकपाकेन वसतां पितृदेवद्विजार्च्चनं ।
एकं भवेद्विभक्तानां तदेव स्यात् गृहे गृहे" ॥ इति ।

यत्तु संग्रहकारेणाग्निहोत्रादिधर्म्मवृद्धिरपि धर्म्मवृद्धिशब्देन गृह्यत इत्युक्तं ।

यदाह,—

"क्रियते स्वं विभागेन पुत्त्राणां पैतृकं धनं ।
स्वत्वे सति प्रवर्त्तन्ते तस्माद्धर्म्म्याः पृथक् क्रियाः ॥" इति ।

प्रवर्त्तन्ते साध्यन्ते अग्निहोत्रादिक्रिया—इति विशेष इति । तन्तु जन्मनैव पुत्त्राणां-पितृधनस्वत्वाद्विभागात् प्रागपि श्रौतस्मार्त्तकर्म्माधिकारं प्रतिपादयद्भिरस्माभिः-प्रागेव प्रत्याखि । तस्मात् पञ्चमहायज्ञादिधर्म्म एव धर्म्मशब्देनात्र ग्राह्यः ।

दत्तासु भगिनीषु चेति तु न कालार्थं किन्तु तासामवश्यं दानार्थं ।

यथा—

"यच्छिष्टं पितृदायेभ्यो दत्तर्णं पैतृकं ततः ।
भ्रातृभिस्तद्विभक्तव्यमृणी न स्याद्-यथा पिता ॥" इति ॥

नारदवचनमृणादानावश्यकत्वार्थं न विभागकालार्थं ।

पिता च यदि स्वेच्छया पुत्त्रान् विभजति तदापि निरङ्कुशेच्छा-नोपादेया । किन्तु ज्येष्ठं वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिन इति । पक्षयोर्म्मध्ये यः पक्ष इष्टः स ग्राह्य इति योगीश्वरवचनार्थः ।

ज्येष्ठं श्रेष्ठभागेन, मध्यमं मध्यमभागेन, कनिष्ठं कनिष्ठभागेन, सर्वे वा-ज्येष्ठादयः समांशभाजः कार्य्या इति विज्ञानेश्वराचार्य्याः ।

यत्तु,—

"न्यूनाधिकविभक्तानां धर्म्मः पितृकृतः स्मृतः" । इति ।

योगीश्वरवचनं, तदपि धर्म्यो धर्म्मादनपेतश्चेत् पित्रा कृतः कृत—एव-स्मृतौ न निवर्त्तते । अधर्म्मस्त्वयथाशास्त्रकृतो निवर्त्तत एवेत्यभिप्राय इति-विज्ञानयोगिभिरेव व्याख्यातं । व्याधितः कुपितश्चैवेत्यादिवचनानुरोधात् ।

एवं,—

"समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः ।
तथैव ते पालनीया विनेयास्ते स्युरन्यथा ॥
पित्रैव तु विभक्ता ये समन्यूनाधिकैर्द्धनैः ।
तेषां सएव धर्म्यः स्यात् सर्वस्य हि पिता प्रभुः" ॥ इति ।

वृहस्पति—नारदवचने अपि व्याख्येयश्रेष्ठादिविभागेऽपि पित्रा-ज्येष्ठादिभ्यो दत्तेऽन्यैरनुशयो न कार्य्यः । समांशविभागे वा ज्येष्ठादिभि-रिति तात्पर्य्यार्थः । अतएव नारदस्तेषां स एव धर्म्मः स्यादित्याह । श्रेष्ठादि-भागश्च मनुनोक्तः ।

"ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः" ॥ इति ।

समांशपक्षं बौधायन आह । मनुः पुत्रेभ्यो दायं व्यभजदिति श्रुतौ-विशेषाश्रवणात् सर्व्वेषां पुत्राणां समोऽंश इत्यर्थः ।

यदि पिता स्वेच्छया समांशेन पुत्रान् विभजते तदा स्वपत्नीभ्यः पुत्र-सममंशं दद्यादित्याह याज्ञवल्क्यः,

"यदि कुर्य्यात् समानंशान् पत्न्यः कार्य्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा" ॥

यासां भर्त्रा श्वशुरेण वा स्त्रीधनं प्रीत्यादिना न दत्तं। भर्त्रादिग्रहण-मुपलक्षणञ्च वक्ष्यमाणस्त्रीधनशून्या इत्यर्थः। तासां पत्नीनां पुत्रसमांशभाग-मात्रं नियम्यते। तथाच यदा श्रेष्ठभागादिनापि पिता पुत्रान् विभजति-तदापि श्रेष्ठभागादुद्धृत्योद्धृतोद्धारात् द्रव्यसमुदायात् पुत्रसमानेवांशान् पत्न्यो-लभन्ते, न तु ज्येष्ठभागादिकमित्यर्थः पर्य्यवस्यति।

यत्तु पत्न्याः स्त्रोद्धारः परीभाण्डादिस्तमपि पत्नी लभते। तथा-चापस्तम्बः "परीभाण्डं च गृहेऽलङ्कारो भार्य्याया इति" परीभाण्डं भोजन-पात्रादि यदसाधारणं यस्या अलङ्कारोऽप्यसाधारणस्तद्विवेचयिष्यते। न च-पक्षद्वयेऽप्येतावता पुत्रसमांशित्वं पत्नीनां विज्ञानेश्वरेणोक्तं तर्हि यदि कुर्य्यात्-समानंशानिति समांशानुवादो व्यर्थः पत्न्यो ज्येष्ठांशादि न लभन्ते इत्येताव-न्मात्रमेव वाच्यमिति युक्तं। यत एव समुद्धृतोद्धारे समानंशान् प्रकल्पयेत्।

"उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना।
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुजः॥
अंशमंश यवीयांस इति धर्म्मो व्यवस्थितः"। इति।

मनुना द्व्यंशो वा पूर्व्वजः स्यादेकैकमितरेषामिति। गोतमेन, चतु-र्भ्रातॄणांदायभागो द्व्यंशो हरेज्ज्येष्ठो गवाश्वस्य चात्र दशममजावः यो गृहञ्च-कनिष्ठस्य कार्ष्णायसं गृहोपकरणानि च मध्यमस्येति।

वशिष्ठेन,—

"ज्येष्ठस्यांशोऽधिको देयः कनिष्ठस्य वरः स्मृतः।
समांशभाजः शेषाः स्युरप्रत्ता भगिनी तथेति"॥

नारदेन चोद्धारमृते विषमभागमात्रमुक्तं; तद्-यदा क्रियते तदा-पत्नीनामंशाभावप्रतिपादनार्थं यदि कुर्य्यात् समांशानित्युक्तमिति न दोषः।

अतएव,—

"भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह।
न तत्र विषमं भागं पिता दद्यात् कथञ्चनेति"॥

मनुना सर्व्वेषां भ्रातॄणां द्रव्यार्ज्जने यदि सह समानमेवोत्थान—मुद्योगो-भवेत्तदा पितुर्विषमविभागदानप्रतिषेधकमनुवचनव्याख्याने जीमूतवाहने-नोक्तमुद्धारस्तु पित्रा दातव्य एव। तस्य विभागरूपत्वाभावात्, न्यूनाधिक-विभागस्यैव निषेधादिति, तस्माज्ज्येष्ठं वा श्रेष्ठभागेनेति याज्ञवल्क्याद्युक्त—उद्धारेऽपि समांशभागिता पुत्राणामस्त्येवेति तत्रापीदं वचनं प्रवर्त्तत एव-ईंशयादिपचे परं न प्रवर्त्तत—इति विज्ञानयोगिनामाशयः, दत्ते तु-स्त्रीधने दत्ते त्वर्द्धं प्रकल्पयेदित्यत्रार्द्धदानं वक्ष्यते। यद्यपि तदाधि-वेदनिके भर्त्रा दीयमाने वक्ष्यते तथाप्याकाङ्क्षायां समानन्यायत्वादत्रापि योज्यं।

बौधायनः,—

वहूनामेकधर्म्माणामेकस्यापि यदुच्यते।
सर्वेषामेव तत्कुर्य्यादेकरूपा हि ते स्मृताः" ॥ इति।

भ्रातॄणामविभक्तानामित्यादि मनुवाक्ये,—

सर्व्वेषां विभागप्रार्थना यदि भवतीति जीमूतवाहनेन तदनुयायिना-दायतत्त्वकृता च व्याख्यातं। यदि पुनः पितरि जीवति पुत्रा—एव विभाग-मर्थयन्ते तदा विषमविभागः पित्रा न दातव्य इति वदता, तत्र सहशब्द-वैयर्थ्यं उत्थानशब्दस्य चोद्योगवाचिनोऽपि भागप्रार्थनापरत्वमन्यायमित्यस्म-द्व्याख्यानमेवादर्त्तव्यं। तथाच सामान्यार्थसमुत्थाने विभागस्तु समःस्मृतः। इति-योगीश्वरवचःसम्वादोऽपि लभ्यते। तस्मास्मदभिमतार्थतयैवोपपत्तेः।

दत्ते-त्वर्द्धमित्यत्राप्यर्द्धशब्दः समपरिभागवचनो न भवति, अतश्च यावता पूर्व्व-दत्तमिदानीं दीयमानञ्च समं भवति तावद्देयमिति मिताक्षरायामुक्तं।

तत्रायमाशयः,—यद्यपि नपुंसकस्यार्द्धशब्दस्य पुंस्यर्द्धोऽर्द्धंसमेंऽशक इति-कोषात् समांशवाचित्वमस्ति, तथापि कदाचित् तासां पुत्राधिकधनत्वं कदा-चित् तद्न्यून-धनत्वमव्यवस्थितमर्द्धनियमस्य चादृष्टार्थत्वं मा प्रसंचीदिति पुत्र-समांशितायामेव तात्पर्य्यमिति।

अत्र मदनरत्नाकर आह,—

पत्न्य-इति-बहुवचनात् प्रतिपत्निं समानंशान् पिता गृह्णीयात्तु ताभ्यः-पृथक्कृत्यांशो दातव्यः। जायापत्योर्विभागो न विद्यत इति हारीतवचन-विरोधापत्तेरिति।

तन्न, नात्र जायापत्योर्विभाग उच्यते, येन हारीतवचनविरोधः स्यात्। किन्तु पत्न्यैव पुत्त्रविभागसमये ताभ्यस्तत्समांशदानं प्रीतिदानवत्। अतएव-स्त्रीधने दत्ते त्वर्द्धमित्युक्तमिति न कोऽपि दोषः।

यस्तु पितरि जीवति पुत्त्रेच्छया विभागः स वैषम्याश्रवणान्मातुर्निवृत्ते-रजसीति मनुवचने समशब्दानुषङ्गाच्च सम एव।

योऽपि पितुरूर्द्धं विभागः सोऽपि सम एव पूर्व्वोदाहृतमनुवचने सम-मित्यभिधानात्।

हारीतोऽपि,—

"समानो मृते पितरि रिक्थविभागः। पैठीनसिरपि,—"पैतृके-विभज्यमाने दायाद्ये भ्रातृणां समो विभागः।

याज्ञवल्क्योऽपि,—

विभजेरन् सुताः पित्रोरूर्द्धमृक्थमृणं समं। पित्रोरूर्द्धमितिकालः, सुता-इति कर्त्तारः समभिति प्रकारनियम इति मिताक्षरा।

ननु मनुनैव पितुरूर्द्धं विभागमुपक्रम्य।

"ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा" ॥ इति।

सद्वामपत्तं मुख्यमुक्त्वा ज्येष्ठस्य वंश उद्धार इत्यादिना विषमविभागो-ऽप्युक्तस्तत् कथं समनियम इति चेत् उच्यते। यद्यप्ययं विषमविभागो-जीवत्यजीवति च पितरि शास्त्रदृष्टस्तथापि वचनान्तरानुरोधात्कलौ सम-एवेति नियमः। अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न त्विति योगीश्वर-वचनात्। अत्र लोकपदेन युगमुच्यते, युगान्तरे धर्म्यमपि युगान्तरे यद्विद्विष्टं-प्रतिषिद्धं तन्नाचरेदित्यर्थः, अन्यथाधर्म्यत्वास्वर्ग्यत्वयोर्व्याघातः। शास्त्रविहित

तदभिन्नविद्वेषो बाधित एव। तदनभिज्ञया मरजनविद्वेषस्तु नास्वर्ग्यत्वा-पादकोऽग्नीसोमादिहिंसादावतिप्रसङ्गादित्यादि दूषणं स्यात्। अतएव-मिताक्षरायां मधुपर्कपशुवधगवालम्भादिकलिवर्ज्यमेव लोकविद्विष्टत्वेनोदा-हृतम्।

कलिवर्ज्येषु च पुनरुद्वाहादिकमक्षतादीनां यत्रोक्तं, तत्र ज्येष्ठांशा-द्युद्धारादिकमपि।

यथा चादित्यपुराणे,—

"ऊढायाः पुनरुद्वाहो ज्येष्ठांशो गोवधस्तथा।
कलौ पञ्च न कुर्व्वीत भ्रातृजाया कमण्डलुः" ॥

स्मृतिसंग्रहेऽपि,—

"यथानियोगधर्म्मो नो नानुवन्ध्यावधोऽपि वा।
तथोद्धारविभागोऽपि नैव सम्प्रति वर्त्तते" ॥

नियोगधर्म्मो भ्रातृभार्य्यायां वाग्दत्तायां मृतपतिकायां गुर्व्वादिनियोगेन-विधिना गमनं, मैत्रावरुणीं गामनुबन्ध्यां वशामालभेतेति विहितो गोवधः,-सम्प्रति कलौ, अत एवापस्तम्बो,-जीवन् पुत्त्रेभ्यो दायं विभजेत् सममिति स्वमत-मुक्त्वा ज्येष्ठो दायाद इत्येक इति कृत्स्नधनग्रहणं ज्येष्ठस्येत्येकीयमतमुपन्यस्य-देशविशेषे सुवर्णं गावः कृष्णाः भौमं ज्येष्ठस्य रथः परीभाण्डं पितुर्गृहेऽलङ्कारो-भार्य्यायां ज्ञातिधनञ्चेत्येकमतत्वेनैवोद्धारविभागं दर्शयित्वा तच्छास्त्रविप्रतिषिद्ध-मिति निराकृतवान्। शास्त्रविप्रतिषेधञ्च स्वयमेव विवृतवान्।

मनुः,—

"पुत्त्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते"। इति।

तस्मान्न विषमविभागः शास्त्रदृष्टोऽपि कलावनुष्ठेयः, तथापि दृश्यतेऽधुनो-त्कलादिकतिपयप्रदेशेषु ज्येष्ठस्य विषमविभागित्वं। तत्र पितरि प्रेते यदि-केऽपि भ्रातरोऽसंस्कृताः सन्ति तदा तत्संस्कारं समुदायद्रव्येण विधायावशिष्टं-यथांशेन विभजनीयमित्याह—

याज्ञवल्क्यः,—

"असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः ।"

भ्रातृभिरित्यभिधानादसंस्कृता भ्रातर— इति प्रतीयते ।

संस्कार्य्यत्वमात्रविधानस्य दायभागप्रस्तावासम्बद्धत्वात् समुदायद्रव्यादिति-विवक्षितं । तथा च, व्यासः,—

"असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात् ।
संस्कार्य्या भ्रातृभि ज्येष्ठैः कन्यकाश्च यथाविधि" ॥

अविद्यमाने पितृधने असंस्कृतसंस्कारावश्यकतामाह नारदः,—

"अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः ॥
अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्व्वसंस्कृतैः ॥"

असंस्कृतभगिनीसंस्कारोऽप्यावश्यकः । सति पितृद्रव्ये ताभ्योऽंशदान-मधीत्याह याज्ञवल्क्यः,—

"भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकमिति" ।

असंस्कृता संस्कार्य्या इत्यनुषङ्गः

मनुः,—

"स्वेभ्योऽंशेभ्यस्तु कन्यायाः प्रदद्युर्भ्रातरः पृथक् ।
स्वात्-स्वादं-शाच्चतुर्भागं पतिताः स्युरदित्सवः ॥"

अतोभयत्र प्रत्येकपरिकल्पिता निजादंशादुद्धृत्य सर्व्वभ्रातृभिर्भगिनीभ्यः-प्रत्येकं चतुर्थांऽशो देय इत्यर्थो न भवति। तथा सति बहुभ्रातृकाया बहुधनत्वं-बहुभगिनीकस्य भ्रातुर्निर्द्धनतापत्तेः, तस्मात् संस्कारोपयुक्तद्रव्यदानमात्रं-विवक्षितमिति रत्नाकरचिन्तामण्यादौ व्याख्यातं । "अनूढानान्तु कन्यानां-वित्तानुरूपेण संस्कारं कुर्य्यादिति विष्णुवचनञ्च तत्रोपोद्बलकमुपन्यस्तं।

अनूढानां त्वित्यादि-विष्णुवचनमपि मेधातिथ्यादीनां न प्रतिकूलं। वित्तानुसारेण संस्कारमनूढानां पितुः कन्यानां स्वभगिनीनां कुर्य्यादित्यनेन संस्कारावश्यकतामात्रमतोच्यते ननु भागदानादानं ।

स्मृतिचन्द्रिकाकारस्तु—"कन्याभ्यश्च पितृद्रव्यं देयं वैवाहिकं वस्विति-देवलवचनानुसारेण संस्कारोपयोगिद्रव्यदानमेव मन्यते। वैवाहिकं-वसु देयमिति वैवाहिकविशेषणस्यान्यथा वैयर्थ्यापत्तेरिति तदाशयः। अत्र-वदामः—कन्याभ्यः पितृद्रव्यं देयमिति पृथग्विधिः। तच्च मन्वाद्यनु-रोधाच्चतुर्थांशरूपमेव। वैवाहिकं वसु देयमित्यपि पृथगेव विधिः, विभज्यमान-कन्यालङ्कारं वैवाहिकं च—स्त्रीधनं लभेतेति शङ्खवचनसमानार्थतया-व्याख्यातश्चेदं शङ्खवचनं विद्यारण्यश्रीचरणैः पराशरस्मृतिटीकायां, पैतृक-द्रव्यविभागकाले स्वधृतालङ्कारादिकमपि कन्या प्राप्नोतीत्याह शङ्ख इति। यदि तु वैवाहिकं विवाहोपयोगि पितृद्रव्यं कन्याभ्यो देयमित्यर्थः स्याद्वसुपदं-पुनरुक्तं स्यादिति पृथग्विधिद्वयमेवात्र युक्तं।

जीवद्विभागेऽजीवद्विभागे वा कस्याश्चित् पितृपत्न्यां भ्रातृपत्न्यां वा-स्पष्टगर्भायामाप्रसवं प्रतीक्ष्य विभागः कार्यः। अथ भ्रातॄणां दायविभागो-याश्चानपत्याः स्त्रियस्तासामापुत्रलाभादिति वशिष्ठस्मरणात्। आपुत्रलाभादिति-वचनात् स्पष्टगर्भासु प्रतीक्षाऽस्पष्टगर्भासु तु नेत्यवगम्यते, अतएव तत्र पश्चादुत्पन्नस्य विभागप्रकारमाह-योगीश्वरः,—

"विभक्तेषु सुतो जातः सवर्णायां विभागभाक्"।

पित्रिच्छया पुत्रेच्छया वा जीवतोः पित्रोर्विभक्तेषु पश्चात् सवर्णायां-भार्य्यायामुत्पन्नो विभागभाक्। विभज्यत इति विभागः पित्रोर्भागस्तं भजत-इति विभागभाग्-भवति। पित्रोरूर्द्धं स एव तनयोऽशं लभत इत्यर्थः-असत्यां दुहितरि मातृभागमिति विशेषः। एतदेवाभिप्रेत्य—

मनुः,—

"ऊर्द्धं विभागाज्जातस्तु पित्र्यमेव हरेद्धनं"। इति।

पित्रोरिदं पित्र्यं धनं यथोक्तव्यवस्थया हरेत्। एवकारेण भ्रातृभिः-स्वांशादाकृष्य स्वभागसमभाक् स न कार्य्यः।

गौतमोऽपि,—

"विभक्तजः पित्र्यमेवेति जीवति तु पितरि मातरि तत् सपत्न्याश्च स्पष्ट-

गर्भायां विभक्ते विभागानन्तरोत्पन्नोऽयं स्वभागादाकृष्य स्वभागसमभागभाक् स-कार्य्यः। तथाच विष्णुः,—"पितृविभक्ता विभागानन्तरोत्पन्नाय विभागं दद्युरिति", तच्च भ्रातृदत्तं तद्विभागं पितैव गृहीत्वा तं परिपालयेत्, तस्यैव-तत्राधिकारात् अप्राप्तव्यवहाराणामित्यादि प्रागुक्तवचनाच्च।

यच्च वचनं—"अनीशः पूर्व्वजः पित्रोर्भ्रातुर्भागे विभक्तज इति," तस्याप्यय-मेव विषयः। पूर्व्वजो विभागात् पूर्वं उत्पन्नः प्राप्तपितृधनविभागः पित्रोर्विभागे-ऽनीशो न स्वामी। विभक्तजश्च पूर्वविभक्तस्य भ्रातुर्भागेऽनीश इत्यर्थः।

विभागोत्तरञ्च;—यत् पितृर्ज्जितं तदपि विभक्तजस्यैव।

"पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्ज्जितं।
विभक्तजस्य तत् सर्वमनीशास्तत्र पूर्वजाः॥
यथा धने तथार्णे च दानाधानक्रयेषु च।
परस्परमनीशास्ते मुक्ता शौचोदकक्रियां"॥ इति—

बृहस्पतिस्मरणात्। स एव;—

"पित्रा सह विभक्ता ये सापत्ना वा सहोदराः।
जघन्यजास्तु ये तेषां पितृभागहरास्तु ते"॥

अत्र हेतुरनीशः पूर्वजः इत्यादितद्वचनोक्त एव।

ये तु विभक्ताः पित्रा संसृष्टाः पुत्रास्तैः सह तु तस्य विभागो न सकल-पित्र्यधनग्रहणमित्याह—मनुः।

"संसृष्टास्ते न वा ये स्यु-र्विभजेत स तैः सह"।

तेन पित्रा पितुरूर्द्ध्वं पितृधनं भ्रातृभिर्विभज्य गृहीते विभागसमयेऽस्पष्ट गर्भायाः पितृपत्न्याः पश्चात् पुत्रे जाते स्वस्वभागादायव्ययविशोधितात् तैः-स्वस्वभागसमभागभाक् करणीय इत्याह—याज्ञवल्क्यः,—

"दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्"।

दृश्याद्भ्रातृभिर्गृहीतात् आयः प्रतिमासं प्रतिदिनं प्रत्यब्दं यत्तदुपरि वृद्धं, व्ययः पितृकृतर्णापाकरणं भ्रातृभगिनीसंस्कारकरणञ्च। तस्य मधे

साधारण्येन कर्त्तव्यत्वात्। न तु भ्रातृकर्त्तव्यव्ययस्तस्यैतत्सम्बन्धाभावात्। ताभ्यामायव्ययाभ्यां विशोधितात् पितृधनात्तस्य विभागोत्तरोत्पन्नस्य विभागः-पूर्वविभक्तसमः स्यादितरार्थः। एतदुक्तं भवति। प्रातिस्विकेषु स्वस्वभागेषु-तदुत्थमायं प्रवेश्यावश्यकञ्च साधारणं व्ययं निष्काश्यावशिष्टस्वस्वभागेभ्यः-किञ्चित् किञ्चिदुद्धृत्य विभक्तजः स्वभागसमभाक् कार्य्य इति, वा शब्दस्तु-विभक्तेषु सुतो जात इति पूर्व्वार्द्धेन सह व्यवस्थितविकल्पार्थः, व्यवस्था चोक्तैव।

इति साधारण्येन विभागनिरूपणं ।

पुत्त्रपदोपादानेनात्र मन्वादिधर्म्मशास्त्रानुमोदितौरसादिद्वादशपुत्त्राणां-युगसाधारण्येन सतापि सिद्धे विभागार्हत्वे कलौ शक्तिविहीनत्वान्मनुष्याणां शास्त्रे-सन्तानसङ्कोचस्याभ्यनुज्ञाततया द्वादशपुत्त्रविवेकमपहायानुष्ठीयते यथाशास्त्रं-कलियुगानुकूलपुत्त्रविभागयोग्यत्वविवेचनमनुपदमेव ।

व्यवस्थारत्नमालायां यथाच स्मृतिः,—

"आहुर्मन्वादयो यांश्च क्षेत्रजादीन् सुतान् पुनः।
न शक्यन्ते कलौ कर्त्तुं तान् विना दत्तकं जनैः" ॥

तथाच वृहस्पतिः,—

मीमांसादिग्रन्थविदां विदां निगदितं मतं"। इति।
"अनेकधाः कृताः पुत्त्रा ऋषिभिश्च पुरातनैः।
न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः॥
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।
इत्यन्यः शौनकेनापि कलौ पुत्रो निषिध्यते" ॥ इति।

औरसपदं पुत्त्रिकापुत्त्रोपलक्षकमौरसतुल्यत्वात्, दत्तकशब्दस्तु क्रीतकृत्रि-मोपलक्षकः समानन्यायात्।

अतस्तेषां मुख्यामुख्यपुत्त्राणां व्यवस्थां वक्तुं तत्स्वरूपं निरूप्यते यथाक्रमं, --यथा सवर्णा धर्म्मविवाहोढ़ा धर्म्मपत्नी तस्यां जात औरसपुत्त्र इति-मिताक्षरा।

अतएव मनुः,—

"संस्कृतायां स्वभार्यायां स्वयमुत्पादयेत्तु यं।
औरसं तं विजानीयात् पुत्रं प्रथमकल्पितं॥" इति

वशिष्ठोऽपि,—"द्वादशैव पुत्राः पुराणदृष्टाः स्वयमुत्पादितः स्वक्षेत्रे-संस्कृतायामौरसः प्रथम इति।

विष्णुरपि,—अथ द्वादश पुत्रा भवन्ति स्वक्षेत्रे संस्कृतायामुत्पादितः-स्वयमौरसः प्रथम इति। अत्र वचनद्वयेऽपि स्वक्षेत्रे संस्कृतायामिति व्याख्यान-व्याख्येयभावोऽन्यथा पौनरुक्त्यापत्तेः।

देवलः,—

संस्कृतायां स्वभार्य्यायां स्वयमुत्पादितो हि यः।
औरसो नाम पुत्रः स प्रधानः पितृवंशधृक्॥

आपस्तम्बः;—सवर्णां शास्त्रविहितां यथर्त्तु गच्छतः पुत्रास्तेषां धर्म्माभि-सम्बन्धो दायेनाव्यतिक्रमश्चोभयोर्मातापित्रोः"।

बौधायनः,—सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात्"।

अथाप्युदाहरन्ति,—

"अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे।
आत्मा वै पुत्रनामासि स जीव शरदः शतं॥
आधत्त पितरो गर्भं कुमार पुष्करस्रजं।
यथेह पुरुषस्यात्मा तथा त्वमिह जायसे॥
आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात्।
पुन्नाम्नस्त्रायसे यस्मात् पुत्रस्तेनासि संज्ञितः॥" इति।

आपस्तम्बीय-बौधायनीययोः सवर्णाग्रहणमुत्कर्षाभिप्रायकमेव।
पारिजातेऽप्युक्तं,—सवर्णात्र द्विजस्य द्विजा शूद्रस्य शूद्रा"
"पुत्रिकायाः सुतः पुत्रिकासुतः स तत्समः। यथाह श्लोकं-

वशिष्ठः ;—

"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृतां ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति" ॥

मनुरपि ;—

"अपुत्रोऽनेन विधिना सुतां कुर्व्वीत पुत्रिकां ।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरं ॥
अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकां ।
विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः ॥
ददौ स दश धर्म्माय कश्यपाय त्रयोदश ।
सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिं ॥"

अत्र परिभाष्य दत्तायामुत्पन्नः पुत्रिकापुत्रो मातामहस्येत्युक्तं । अपरिभाषितदत्तायामपि सम्भवतीति भ्रातृमतीमिति विशेषणं पुत्रिकाकरणशङ्कानिवृत्त्यर्थं ; अनेन चापरिभाषितापि पुत्रिका भवतीत्याचारमिताक्षरायां निरूपितं, अतएव गौतमोऽपि पितोत्सृजेत् पुत्रिकामनपत्यो मदर्थमपत्यमिति सम्वाद्य । अभिसन्धिमात्रात् पुत्रिकेत्येकेषामिति ;

ब्रह्मपुराणे,—

"अपुत्रेण तु या कन्या मनसा पुत्रवत् कृता ।
राजाग्निवान्धवेभ्यश्च समक्षं वात्र कुत्रचित् ॥
प्राग्गर्भमथवा शुल्कयुक्ता पित्रा वराय वा ।
मृते पितरि वा दत्ता सा विज्ञेया तु पुत्रिका ॥
पित्र्याद्रिक्थात्समं भागं लभेत तादृशो सुतेति" ॥

मनुः,—

"मातुः प्रथमतः पिण्डं निर्व्वपेत् पुत्रिकासुतः ।
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुरिति" ॥

अथवा पुत्त्रिकाचासौ सुतश्च पुत्त्रिकासुत इति पुत्त्रिकैव पुत्त्रस्थानीयेत्यर्थः। तस्याश्चौरसो जातत्वेऽपि कन्यात्वात्पुत्त्रसमत्वमिति वयं। पित्रवयवानामल्पत्वा-न्मातृवयवानां बाहुल्याच्चौरससमत्वमिति मिताक्षरा।

यथाह वशिष्ठः ;—

"द्वितीयः पुत्त्रः पुत्त्रिकैवेति" माता भर्त्राज्ञया पिता वा यमन्यस्मै दद्यात्-स तस्य दत्तकः पुत्त्रः।

तथाच मनुः ;—

"माता पिता वा दद्यातां यमद्भिः पुत्त्रमापदि।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः॥"

आपदीत्युक्तेरनापदि दातुः प्रत्यवायः, मातापितरौ प्रत्येकं मिलितौ-वा अद्भिरिति दानप्रतिग्रहप्रकारोपलक्षणं, सदृशं सवर्णं प्रीतिसंयुक्तमिति-क्रियाविशेषणम्।

एकः पुत्त्रश्च न देयो न प्रतिग्राह्यः। तथाच वशिष्ठः,—

"शुक्रशोणितसम्भवपुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः, नत्वेकं पुत्त्रं दद्यात् प्रतिगृह्णीयाद्वा, स हि सन्तानाय पूर्व्वेषां न तु स्त्री पुत्त्रं दद्यात् प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुरिति" अत्र-भर्त्रनुज्ञां विना स्त्रियाः पुत्त्रप्रतिग्रहनिषेधाददत्तानुज्ञे भर्त्तरि मृते विधवया-कृतः पुत्त्रो दत्तको न भवतीत्याहुस्तन्न, अपुत्त्रस्य गत्यभावात् पुत्त्रकरणस्या-वश्यकत्वश्रवणाच्छास्त्रमूलकतदनुज्ञायास्तत्राप्यक्षतेः। न चैवमनुज्ञानादन्य-त्रेति व्यर्थं व्यावर्त्याभावाच्छास्त्रीयानुमतेः सर्व्वत्रावश्यकत्वादिति वाच्यं,-मुमुक्षोः पत्न्यान्तरे पुत्त्रवतोवानुज्ञाया असम्भवाद्भार्य्या यदि स्वपुत्रार्थमेव तं प्रति-गृह्णीतुमिच्छति तदा तां प्रतिषेधति।

"सर्व्वासामेकपत्नीनामेका चेत् पुत्त्रिणी भवेत्।
सर्वास्तास्तेन पुत्त्रेण प्राह पुत्त्रवती मनुरिति॥"

पुत्त्रकार्य्यश्राद्धादेः सपत्नीपुत्रेण सिद्धेर्भर्त्रनुज्ञां विना तादृश्या पुत्त्रो न-

कार्य्यः, उभयोरपि तत्र कार्य्यस्य तेन निष्पत्तेः भर्त्तुर्हि स औरस एव मुख्यः-तस्या अपि दत्तवद्-गौण इति तादृश्या अननुमतिमन्तरेणेतरो न प्रतिग्राह्य-इति तात्पर्य्यार्थः वस्तुतस्तु, "भ्रातॄणामेकजातानामेकश्चेत् पुत्त्रवान् भवेत्। सर्वे ते तेन पुत्त्रेण पुत्त्रिणो मनुरब्रवीदिति",—वचनवदेतस्यापि भ्रातृपुत्रस्य-गौणदत्तकपुत्वादिसम्भवेऽन्यः पुत्त्रप्रतिनिधिर्न कार्य्य इत्यर्थकतया मिताक्षरा-स्मृतिचन्द्रिकादौ व्याख्यातत्वाद्-भर्त्तरि जीवति भार्य्यया स्वातन्त्र्येण तदननुमतौ न पुत्त्रीकरणीय इति भर्त्तुरनुज्ञानादन्यत्रेत्यस्यार्थः।

ननु मृते तु तस्मिन् यत् पारतन्त्र्यं तदनुमतिरेवापेक्षिता। एवं सति-दृष्टार्थता भवति प्रतिषेधस्य, तस्माददत्तानुज्ञे मृतेऽपि भर्त्तरि भार्य्याया दत्त-कादिकरणमविरुद्धमिति चेन्न। भर्तृपदस्योपलक्षणतापत्तेः, प्रयोजनाभिदेश्च। प्रयोजनन्तु भर्त्रनुज्ञानस्य स्वीकृतपरिग्रहेणापि भर्तृपुत्त्रत्वसिद्धिः।

अपरञ्च, शास्त्रीयप्रमाणस्यान्यथार्थकरणेन देशविशेषेषु प्रचलत्यप्येवं-व्यवहारे सर्वत्र तद्व्यवहारादराभावात् न समीचीनमेतदाचरणं सद्युक्ति-विहीनत्वाच्च, का युक्तिरित्याकाङ्क्षायामेवं सा यथा,—

स्वामिनि मृते सति पुत्त्रीकरणे स्त्रीणां स्वातन्त्र्यप्रदर्शनेनैव पैतामहादि-स्थावरास्थावरसम्पत्तिजातस्य हस्तान्तरकरणसम्भवात् शास्त्रप्रतिपादितभर्त्रनु-मतिर्व्यर्थेति सुबोध्यमेव, तथा नारीस्वातन्त्र्यं सकलाहितसाधनमिति शास्त्रा-कूतञ्च।

केन कस्मात् किमर्थं तद्ग्रहणं शास्त्रोक्तं तदधस्ताल्लेख्यं यथाक्रमम्।

यथा तत्राहात्रिः,—

"अपुत्त्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्-प्रयत्नतः॥"

अपुत्त्रः अजातपुत्त्रः मृतपुत्त्रो वा। "अपुत्त्रो मृतपुत्त्रो वा पुत्त्रार्थं-समुपोष्य चेति शौनकीयात्"। यद्यपि अपुत्त्रेणैवेत्येवकारेण पुत्त्रवतो नाधिकार-इत्येतावन्मात्रं दीधितिकारेण लिखितं, तथाप्यत्र पुत्त्रपदं पौत्रप्रपौत्रयोरप्युप-लक्षकमित्यवश्यं वाच्यं, अन्यथा पौत्रप्रपौत्रसत्त्वे निर्निमित्तपुत्त्रग्रहणमापद्येत-

इति त्रैवर्णिकः सञ्जातोपनयनसंस्कारः, शूद्रश्चाकृतदारः कृतदारो वा षोडश-वर्षात् परं पुत्त्रग्रहणाधिकारी वाच्यः। एतदेव समर्थितं दत्तककौमुदीकारेण; यथा स च सपत्नीकापत्नीकभावान्यतरवत् पुत्त्रग्रहणेच्छावत्पुरुषो मृतभर्त्तरि-तदनुमता वा तत्पत्नी अधिकारिणीति। न हि किञ्चिद्वचनं पत्न्यभावे-दत्तकग्रहणनिषेधं बोधयति; एतज्जातीयमात्रमेवोक्ता भक्तार्णवकृता तथैव-सिद्धान्तितम्। प्रत्युत शङ्कर-सुतयोः पत्नीरहितयोः परमशिवभक्तयोरपि-पुत्त्राभावतया स्वर्ग्यां गतिमनवाप्नयोर्वेतालभैरवयो निन्दितवाक्येन तदीश्वया-भैरवेणोर्वश्यामुत्पादितसन्तानं वेतालेन स्वसुतं कृतवानितिहासगर्भकालिका-पुराणाम्नातवचनानि पत्नीरहितस्यापि पुत्रीकरणं बोधयन्ति। वचनान्येतानि-तत्रैव द्रष्टव्यानि अनेनेदानीन्तनमठाधीश्वराणां सकलसाम्प्रदायिकनैष्ठिक-ब्रह्मचारिणां गृहीतदत्तकस्यैवोपनयनपूर्व्वकशिष्यकरणं नाशास्त्रीयमिति-सूचितमेव। एतत्समर्थकसम्वादोऽपि लभ्यते दत्तकतिलके। यथा "ब्रह्म-चारिणो नैष्ठिकस्य पित्रादिपरित्यागेषु गुरुकुलवास एव कृतनियमस्य गृहो-दासीन्ये नाधिकारः"। इति—

पिण्डोदकक्रियाहेतोः-इत्यनेन यैः पिण्डोदकाद्यनिष्पत्तिः तेषु सत्स्वपि-पुत्रीकरणमभ्यनुज्ञायते; तेन जन्मान्धपङ्गुकृतप्रायश्चित्तपतितद्वादशवर्षानुद्दिष्ट-प्रभृतिषु दत्तकादिग्रहणं निरुपद्रवमिति सुधीभिर्विभावनीयं। तथा;—

अपुत्त्रेणेति अपुत्रताया निमित्ततात्रवणात् पुत्त्राकरणे प्रत्यवायोऽवगम्यते,-पुत्त्रोत्पादनविधेर्नित्यतया तल्लोपस्य प्रत्यवायनिमित्ततापर्य्यवसानात्।

"नापुत्रस्य लोकोऽस्तीति जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यां यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः-पुत्री यज्वा ब्रह्मचारी च"त्यत्रापि पुत्रसामान्यस्यानृण्यहेतुताश्रवणाच्च। पुत्त्राभावे पिण्डादिलोपप्रसङ्गात्।

अतएव मनुः,—

"पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण"—इति।

क्रियालोपादिति व्यतिरेके हेतुः पुत्त्रप्रतिनिध्यभावे क्रियालोपादित्यर्थः।

तथाच तत्राह मनुः,—

"अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्त्तनाय च" ॥ इति ।

तथैव वृहस्पतिः,—

"पुत्राभावे क्रियालोपाद्वंशसंरक्षणात्तथा ।
पुत्रप्रतिनिधिर्दत्तः कलौ कर्त्तव्य उच्यते" ॥ इति ।

नन्वौरसाभावे कथं दत्तकादिः प्रतिनिधिः क्रियते पिण्डोदकादिक्रियायाः पत्न्यापि निर्व्वाहादित्याह । "पुत्राभावे तु पत्नी स्यादित्यादिना पुत्राभावे पत्न्यादीनामपि क्रियाधिकारः श्रूयते । इत्यत्र क्रियाधिकार-इति प्रेतक्रियाधिकार इत्यर्थः । पत्न्याः पार्व्वणपिण्डदानानधिकारित्वेन-पुत्राभावे तत्सत्त्वेऽपि पार्व्वणपिण्डलोपापत्तिरित्यपि बोध्यम् ।

कुतस्तद्ग्रहणम् ? तथाच नारदोऽपि,—

"सपिण्डानां सुतो मुख्यस्तदभावेऽपि गोत्रजः ।
तदभावेऽन्यगोत्रोऽपि दत्तकः परिगृह्यते" ॥

इत्यत्र फलाश्रुतेर्नित्यतया पुत्रीकरणस्यावश्यकत्वं बोधितम् ।

तथात्र शौनकः,—

"ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः ।
तदभावेऽसपिण्डेषु अन्यत्र तु न कारयेत्" ॥ इति ।

अत्र च सपिण्डेष्वपि भ्रातृपुत्रो मुख्यः, तदभावे सगोत्रः सपिण्डोऽपि यः कश्चित् तदभावेऽसगोत्रः सपिण्डः, तदभावेऽसपिण्डोऽसगोत्रोऽपि ।

तथा—

"क्षत्रियाणां स्वजातौ वा गुरुगोत्रसमेऽपि वा ।
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु ।
सर्व्वेषाञ्चैव वर्णानां जातिष्वेव न चान्यतः" ॥

इति शौनकवचनात् ।

विशेषवचनेनैव समानवर्णत्वे सिद्धे पुनर्जातिष्वेव न चान्यतः इत्युक्तिः-त्रवर्णविषेण स्वीकर्त्तव्यस्य दत्तकस्य समानगोत्रत्वमिति ज्ञापनार्थं । वैश्यजातिषु-वैश्यजातिष्वित्यर्थः, गुरुगोत्रेति पारस्त्यात् राजन्यविशमित्याश्वलायनोक्तेः,-सभ्रातृक एव ग्राह्य इति सूचितं शौनकेन ।

यत्तु,—

"दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः ।
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्" ॥

अत्र "दौहित्रो भागिनेयो वा शूद्राणां विहितः सुत"—इति पाठान्तरं-दत्तकमीमांसाकृन्मतं । अत्र चतुर्थचरणस्थितं भागिनेयपदं दौहित्रमातृस्व-स्त्रीययोरुपलक्षणम् ।

तथाच शाकलः,—

सपिण्डापत्यकं चैव सगोत्रज-मथापि वा ।
अपुत्रको द्विजो यस्मात् पुत्रत्वे परिकल्पयेत् ॥
समानगोत्रजाभावे पालयेदन्यगोत्रजं ।
दौहित्रं भागिनेयं च मातृस्वसृसुतं विना ॥ इति ।

युक्तं चैतद्विरुद्धसम्बन्धस्य त्रिष्वपि समानत्वादित्युक्तं पुत्रीकरण मीमांसायामिति" इति दत्तककौमुदीकृतविवेचनस्य तथा, "तदभावेऽ-सपिण्डोऽसगोत्रोऽपि,तत्रापि भागिनेयदौहित्रवर्जं विरुद्धसम्बन्धापत्त्या पुत्रत्वबुद्ध्य-नर्हभ्रातृपितृव्यमातुलवर्जं च, त्रयाणां वर्णानां स्वसमानवर्ण एव, तत्रापि-देशभेदप्रयुक्तगुर्जरत्वादि-जात्या समानजातीय एव सर्व्वोऽपि सभ्रातृको-ज्येष्ठभिन्नः । शूद्रस्य तु भागिनेय-दौहित्रावपि ग्राह्यौ, प्रमाणं तूक्तं पूर्व्वतः-इति दीधितिकारानुष्ठितविवेकस्य च साचिव्येन विरुद्धसम्बन्धापत्त्याशङ्कया-दौहित्रभागिनेयभ्रातृपितृव्यमातुलस्वस्रेयवर्जं समानवर्णं समानजातौ चानुष्ठेयं-दत्तकग्रहणं द्विजातित्रयेणेति यद्दर्शयन्ति ; तन्मन्दं मन्वाद्युनविंशसंहितासु-तथा निरुक्तोपसंहितात्रयभिन्नोपसंहितासु मिताक्षरादिव्याख्यासु च-तादृङ्निषेधविधेरचक्षुर्विषयत्वात्, शास्त्रनिषिद्धतादृग्विरुद्धसम्बन्धस्य सर्व्वत्र-

समानतया शूद्रजातिष्वप्यस्य तथाऽदृष्टत्वात्, प्रायेण बहुप्रदेशेषु भागिनेयादि-पुत्रीकरणस्य शिष्टादृतत्वाच्च ।

"अथ प्रतिगृहीते पुत्रे दत्तकसिद्धिः, कः संस्कारो जातिभेदं पुरस्कृत्य-कं कालं प्राप्य साधयतीति तत्र पञ्चवर्षानधिककालमुपलभ्य जनकगोत्रोल्लेख-पूर्व्वकचूड़ाख्यसंस्काराभाव एव दत्तकत्वं साधयति ।

पञ्चवर्षनियमस्तु यथा,—

"पञ्चसम्वत्सरादर्वाक् गृहीत्वा तु कृतं शिशुं ।
स्वगोत्रेणैव संस्कारान् चूड़ान्तान् परिकल्पयेत् ॥
अथ चेज्जातमात्रं तु वालं दद्यादनुग्रहात् ।
जातकर्म्मादिकं सर्व्वं ग्रहीता तस्य कारयेत् ॥"

इति दत्तकतिलकोद्धृतवचनं, पञ्चसम्वत्सरात् पञ्चसम्वत्सराणां पूरणं-यस्मिन् दिने इति तद्धितप्रत्ययात् साधुः । अतः सुतरां तदभावे तदभावः । अतएव पञ्चवर्षाभ्यन्तरे पुत्रं गृहीत्वा यदि पिता मृतः, चूड़ादिकं न-कृतं तत्र तस्य पुत्रत्वं सिध्यति । अतो निजगोत्रेण चूड़ादेः सहकारित्वं न-युज्यते, परन्तु जनकगोत्रेण चूड़ाद्यभावस्येति, एवं च पुत्राणां चूड़ाख्यसंस्कारस्य-काम्यत्वेऽपि न क्षतिरिति विवादार्णवकृत्प्रभृतीनां सिद्धान्तितमनादेयं ।

"अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः ।
स्वगोत्रोक्तस्व-शाखोक्तविधिना स स्वशाखभागिति ॥"

कुवेरभट्टदत्तकदीधितिदत्तकमीमांसाधृतवशिष्ठवचनात् वक्ष्यमाण-श्रुतेश्च । अन्यशाखोद्भवः पुत्रोऽस्मै दत्तः सन् यदि प्रतिग्रहीता स्वगोत्रोल्लेखपूर्व्वक-स्वगोत्रोक्तविधिना कृतोपनयनः स्यात् तदा जनकशाखाभागित्वमपहाय-प्रतिग्रहीतृशाखाभागित्वं भवति । जनकशाखाभागित्वनिवृत्तौ तदीय-गोत्रपिण्डधनादिभागित्वं च सुतरां भवतीत्यर्थः, अतएव चन्द्रिकाकारेण-एवं चोपनयनमात्रकरणेऽपि प्रतिग्रहीतुर्दत्तकपुत्रसिद्धिरित्युक्तं । नैतावतो-पनीतस्य ग्रहीतुः पुत्रत्वं सिद्ध्यति । यतो दीधितिकारेण बहुविमृश्योपनय-चूड़ादिसंस्कारेषु कृतेष्वकृतेषु च पञ्चवर्षात् प्रागूर्द्धं च दत्तको ग्राह्य इत्युक्त-

उपसंहारेऽपि ग्रत: कृतसंस्कारोऽपि पञ्चवर्षाधिककालोऽपि दत्तको भवतीति-सिद्धमित्युक्तं। वक्ष्यमाणवक्ष्यचनानुरोधाच्च ब्राह्मणस्योपनयनमुख्यकालो-ऽष्टमाब्दरूप:। ब्रह्मवर्चसफलार्थिनस्तु तस्य पञ्चाब्दरूप: क्षत्रियस्य-एकादशाब्द: विशो द्वादशाब्द:।

"गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनं।
राज्ञामेकादशे चैके विशामेके यथाकुलमिति"॥

याज्ञवल्क्योक्ते:—"एके एकादशे इत्यनुषङ्गाद्द्वादश इत्यर्थ इतिस्मार्त्ता:। "ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे"—इति स्मार्त्तादिधृतवचनात्। शूद्रस्य तूपनयनाभावात् तत्स्थानीयत्वेन विवाहस्य विवाहमुख्यकाल एव-ग्राह्य:। स च षोड़शाब्दरूप:।

"शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनां"।

वैश्यवच्छौचकल्पश्चेत्यत्र चकाराद्वैश्यधर्म्मान्तरातिदेशेनोपनयनप्रसक्तौ-तत्स्थाने ब्रह्मपुराणेन विवाहो विधीयते, "विवाहमात्रं संस्कारं शूद्रोऽपि-लभतां सदेति"। तत्रोपनयनकालस्तु "गर्भाष्टमेऽष्टमे वाब्दे" इत्यादि पूर्वोक्त-याज्ञवल्क्यवचनमुपन्यस्यात्र चोत्तरोत्तरवर्णानामुत्तरोत्तरकालप्रदर्शनात् शूद्र-स्याप्युपनयनस्थलाभिषिक्तविवाहस्य तथैव युक्तत्वादिति स्मार्त्तोक्ते: एवमत्र-वैश्योपनयनकालात्—द्वादशवर्षादुत्तरे षोड़शवर्षे उपनयनस्थलाभिषिक्तस्य-शूद्रविवाहस्य युक्तत्वादिति टीकाकृतद्व्याख्यानाच्च"।

"पुनश्च ते दत्तादयो जनिमारभ्य विवाहप्राक्कालिका एव ग्रहीतुं योग्या: नतु विवाहोत्तरमपि।

"दत्ताद्या अपि तनया निजगोत्रेण संस्कृता:।
आयान्ति पुत्त्रतां सम्यगन्यवीजसमुद्भवा:"॥ इति—

कालिकापुराणेन स्वीकारपूर्वकस्वकर्त्तृकसंस्कार्य्यत्वरूप पुत्त्रत्वस्यैव दत्ता-दीनां विधानात्। अयुक्तिकं चैतत्, जात: पुत्त्र: षोड़शसंस्कारार्हो भवतीति निर्विवादं। तत्र जातकर्म्मारभ्य विवाहान्ता: संस्कारा: स्वपितृकर्त्तृका:, चरमश्च स्वपुत्रकर्त्तृक इत्यपि निर्वाधं। तत्रोरमानां स्वजातत्वादिना पुत्रत्वेऽपि-

दत्तादीनां तथात्वाभावादुक्तपुराणशाक्यैर्नोपदर्शितं, स्वकर्तृकसंस्कार्य्यत्वरूपस्यैव पुत्रत्वस्य वाच्यतया विवाहात् पूर्वं दत्तकस्वीकारे यथाकथंचिन्निरुक्तपुत्रत्वस्य सम्भवेऽपि विवाहोत्तरं तत्स्वीकारे तु तस्मिन् कथञ्चिदपि तस्यासम्भवेन तत्कालस्यायोग्यत्वेन तदधिकरणतत्स्वीकारस्य विहितकालानधिकरणत्वेन रात्रिकृतश्राद्धस्येव निरुक्तस्वीकारस्याप्यशास्त्रीयत्वेन हृथाचेष्टत्वात् । किञ्च सर्वथा कालनियमाभावेऽशीतिवार्षिकेण पुरुषेण सप्ततिवार्षिकस्य सपुत्रस्यापि ग्रहणप्रसङ्गात् । न चेष्टापत्तिः । सर्वानुभवसर्वव्यवहारविरोधस्यातिस्फुटत्वात् । नचान्यत्र कालनियमेऽपि भ्रातृसुतस्य पुत्रीकरणेनैवं नियम इति वाच्ये भ्रातृसुतस्यापि मुख्यपुत्रत्वासम्भवेन तस्मिन्नपि स्वीकारपूर्वकसकर्तृकसंस्कार्य्यत्वरूपपुत्रत्वस्यैव वाच्यतया तत्रापि तन्नियमस्यावश्यकत्वेनोक्तवाक्यस्य भ्रान्तप्रणीततुल्यत्वात् । अतएवौरसपुत्रस्य प्रतिबन्धादिनोक्तकालसामान्यातिक्रमे यथोक्तरीत्या क्रियमाणमप्युपनयनं तस्य द्विजत्वसम्पादकं न भवतीति सिद्धान्तोऽपि संगच्छते । तस्मादकाले क्रियमाणंपुत्रीकरणं दर्शितोपनयनवत् निष्फलमेव भवतीति न तदुपजीव्यत्वेन तेषांपितृीयधनविभागित्वमिति दायभागे प्रकटीकृतमिति दिक् । तत्रापि-चूड़ोत्तरमुपनयनात्—प्राक्कालिका उपदर्शितकालिकापेक्षया स्वशाखीयत्वादिनोत्कृष्टा भवन्ति, उक्तञ्च वशिष्ठेन,—

"अन्यशाखोद्भवो दत्तपुत्रश्चैवोपनायितः ।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक् ॥

एतदभिप्रत्येव पुनः कालिकापुराणेऽपि पठ्यते ;—

"पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ! ।
आचूड़ान्तं न पुत्रः स पुत्रतां याति चान्यतः" ॥ इति

न चैवं ।

"ऊर्द्धं तु पञ्चमाद्वर्षान्न दत्ताः स्युः सुता नृप ! ।
गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत्" ॥

इत्यनेन पञ्चमवर्षोत्तरं गृहीतानामपुत्रत्वप्रतिपादनात्तद्विरोध इति-वाच्यं, दत्तादीनां कृत्रिमस्वयंदत्ताद्युपलक्षकत्वेन ग्राह्यविहितत्वा-स्वयंदत्तस्य देवरातस्योपनीतस्यैव शुनःशेफाख्यानप्रतिपादकवाक्येन प्रबल-भूतप्रमाणेन ग्राह्यत्वप्रतिपादनात्। एवमन्यथाप्योरसोदत्त इत्यादिना-वशिष्ठेनापि दत्तादीनां स्वगृह्योक्तेन विधिनोपनायितपुत्रत्वप्रतिपादनाच्च-तथा चाविरुद्धयोः प्रबलदुर्बलयोरेकस्मिन् प्रवृत्तौ दुर्बलानां प्रबलबाध्यत्वमिति-न्यायादुक्तस्थले प्रबलभूतवेदवाक्यस्मृतिवाक्याभ्यां दुर्बलभूतपुराणवाक्यस्य-बाध्यत्वेनोक्तपुराणवाक्ये ऊर्द्ध्वं तु पञ्चमाद्वर्षादित्यस्य विवाहकालादूर्द्ध्वमित्यर्थ-स्योक्तत्व तथैव गृहीत्वा पञ्चवर्षीयमित्यस्यापि विवाहात् पूर्व्वकालिकं गृहीत्वेत्यर्थस्याद्दृत्योक्तवेदवाक्यस्मृतिवाक्याविरुद्धार्थकत्वं यथा कथंचिदुपजीव्य-प्रामाण्योपपादने न्याय्यत्वादुचितमेतत्। तदानीमेव नियतसंस्कार्यत्वरूप-पुत्रत्वस्यासम्भवेनोक्तवाक्यीया न स्युरिति निषेधसङ्गतिरिति, यदि चास्य-यथाश्रुतस्यैव प्रामाण्यमनुमन्यसे तथाप्युक्तप्रबल-प्रमाणविरोधभञ्जनान्यथानुप-पत्त्या न स्युरित्यस्योत्कृष्टतरा न स्युरित्यर्थकतया तदघटितत्वेनास्याप्यु-त्कृष्टतरा भवन्तीत्यग्रिमग्रन्थपुष्टिकरणद्वारा तत्रैव प्रामाण्यं निराबाधमिति-नोक्तप्रबलप्रमाणवाक्यार्थविरोधकत्वमिति ध्येयम्।

तथापि क्लिष्टार्थकल्पनया विहितस्य सिद्धान्तस्यास्य यथार्थार्थापरचैन-प्रकटितप्रचुरप्रमाणविरुद्धत्वात् प्रायशोऽवलोकितसर्व्वानादृतव्यवहारत्वाच्च-तदनुरूपदत्तकग्रहणं नोचितमिति परामर्शः।

अपिच—शुनःशेफाख्यानस्य तदानीं प्रचलितस्यापि युगान्तरे हृद्दोषा-धायकत्वेन तत्परवर्त्तिधर्म्मशास्त्रकर्त्तृभिस्तदनुसरणं परिहृतमित्यनुमितं-तत्सत्कर्तृकतद्विरुद्धप्रमाणपरिदर्शनात् पुराणे चोभयविधप्रमाणावलोकनात्तादृग्-व्यवहारः प्रचलति क्वचिदिति प्रतीयते।

तथैवं तत्रापि पितुर्गोत्रेणेत्यस्मिन् वाक्ये सार्वविभक्तिकस्तसिरित्यनेन-विहितस्य तस्यान्यत—इत्यस्य षष्ठ्यन्तार्थकतया चकारस्यावधारणार्थकत्वाच्चै-तद्वाक्यस्यार्थुढान्तं। जनकगोत्रेण संस्कृतस्तदुत्तरं त्वर्थात् प्रतिग्रहीतृगोत्रेण-संस्कृतो यः पुत्रः स पुत्रोऽन्यस्यैव प्रतिग्रहीतुरेव पुत्रतां न याति। किन्तु-

जनकप्रतिग्रहीत्रोरुभयोरपीति द्व्यामुष्यायणपुत्रत्वप्रतिपादनेन, ततोऽप्येकमात्र-पुत्रत्वेन जनिमारभ्य चूड़ाप्रान्तिका: संस्कृता उत्कृष्टतरा भवन्तीति बोध्यम् ।

तदेव तदभिसन्धाय शौनक: पुन: पपाठ ;—

"चूड़ाद्या यदि संस्कारा निजगोत्रेण संस्कृता: ।
दत्ताद्यास्तनयास्तेस्युरन्यथादास उच्यते" ॥

अथ च अदास इति पदच्छेद: । एवञ्च अन्यथा दत्तादीनां निजगोत्रेण-चूड़ादिसंस्कारायकरणे तेषां अदासता औरसादिपूर्वसमवाये दासवच्चतुर्थांश-भागराहित्ये न दासतुल्यता, यच्च नित्यद्व्यामुष्यायणत्वं किमात्मकमित्या-काङ्क्षायामुच्यते । यथा,—

"द्विविधा दत्तकादयो नित्यवत् द्व्यामुष्यायणा अनित्यवत् द्व्यामुष्यायणाश्चेति,-तत्र नित्यवत् द्व्यामुष्यायणानां ये जनकप्रतिग्रहीतृभ्यामावयोरयं पुत्र इति-सम्प्रतिपन्ना: । अनित्यवद्व्यामुष्यायणास्तु ये चूड़ान्तै: संस्कारैर्जनकेन संस्कृता:-उपनयनादिभिश्च प्रतिग्रहीत्रा तेषां गोत्रद्वयेनापि संस्कृतत्वात् द्व्यामुष्यायणत्वं ; परन्त्वनित्यं ; जातमात्रस्यैव परिग्रहे गोत्रद्वयेन संस्काराभावात्तस्य प्रतिग्रहीतृ-गोत्रत्वमेव । तदिदं सर्वमभिप्रेत्याह,—सत्याषाढ़:,—"नित्यानां द्व्यामुष्याय-णानां गोत्रद्वयप्रवरसम्बन्धमुक्त्वा तमेवानित्येष्वप्यतिदिशति दत्तकत्रीतानाम्तु-द्व्यामुष्यायणवदिति सूत्रेण व्याख्यातश्चैतत् प्रवरस्वामिभि:" द्व्यामुष्यायणप्रसङ्गे-नानित्यानाह दत्तकेति ; तावदेव गोत्तरसन्तती प्रथमेनैव संस्कारा: प्रति-ग्रहीत्रा चेत्तदा उत्तरस्य पूर्वत्वात्तेनैव उत्तरत्र । तथा पितृव्येण-भ्रातृव्येण चैकार्षेण ये जातास्ते प्रतिग्रहीतुरेवेति तस्य भाष्यस्यायमर्थ: यो-गोत्रद्वये संस्कृतस्तस्यैव गोत्रद्वयसम्बन्धो गोत्तरसन्तते: जनकगोत्रसम्बन्धे किं-कारणमित्यत आह, प्रथमेनेति प्रथमो जनकस्तेनैव संस्कृतत्वात् संस्कारा:-चौड़ान्ता: ।

"पितुर्गोत्रेण य: पुत्त: संस्कृत: पृथिवीपते ! ।
आचूड़ान्तं न पुत्र: स पुत्रतां याति चान्यत:" ॥ इति ।

व्याख्यातं चैतत् प्रागेव असाधारणीं पुत्रतां न याति किन्तु द्व्यामुष्यायणो-

भवतीति। प्रथमेनासंस्कारि कथमित्याह,—परिणीता चेति परिणीतैव जातकर्म्मादिसर्वसंस्कारकरणे चौड़ादिसंस्कारकरणेऽपि वा उत्तरस्य प्रतिग्रहीतुरेव गोत्रं ; तत्र हेतुः पूर्व्वत्वात् संस्कारकरणे प्रथमत्वात् द्व्यामुष्यायणसन्ततौ दत्तकसन्ततौ चापेक्षितं गोत्रमाह,—तेनैवेति परिणीतृगोत्रेणैव-उत्तरसन्ततिर्गोत्रमुभयत्रापि सगोत्रप्रतिग्रहमाह, तथेति जनकप्रतिग्रहीत्रोरेकगोत्रत्वेऽपि परिणीतैव व्यपदेशः परिणयसंस्कारकरणादिति"।

यत्तु,—

"गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः" ॥ इति।

तत्परिणीतैव जातकर्म्मादिसर्वसंस्कारकरणपक्षे वेदितव्यम्।

ननु क्षेत्रजस्यैव द्विपितृकत्वं दृश्यते। तथा हारीतः,—

"जीवति क्षेत्रजमाहुरस्वातन्त्र्यात्मृते द्व्यामुष्यायणं अनुमतबीजत्वात्-जीवतापि क्रियाभ्युपगमाद्-द्विपितृको भवतीत्याह—

मनुः,—

"क्रियाभ्युपगमात्त्वेवं बीजार्थं यत् प्रदीयते।

तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च" ॥ इति।

अपुत्रबीजक्षेत्रिकयोर्मम क्षेत्रं तव बीजं यदपत्यं तदावयोरित्ययं क्रियाभ्युपगमः।

तथा,—

"अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।

उभयोरप्यसावृक्थी पिण्डदाता च धर्म्मतः" ॥—इति।

दत्तकस्य तु तदद्दृष्टचरं, प्रत्युत गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुत-इति प्रागुक्तमनुवचनं तद्विपरीतार्थग्राहकमेवास्तीति—

नैव दत्तकादिष्वपि,—

"सर्वेषामेव धर्म्माणामेकस्यापि यदुच्यते।

सर्वेषामेव तत्कुर्य्यादेकरूपा हि ते सुताः" ॥—इति।

बौधायनदर्शनेन चेत्रजधर्म्मलाभात् । "द्वे श्राद्धे कुर्य्यात् एकश्राद्धे पृथग-नुद्दिश्य एकपिण्डे वा द्वावनुकीर्त्तयेत् । प्रतिग्रहीतारं चोत्पादयितारं चाहृतीयात् पुरुषादिति" सांख्यायनप्रवराध्याये सामान्यतो दर्शनाच्च दत्तकस्यापि-द्विपितृकत्वसिद्धिः ।

सम्प्रत्युच्यते दत्तकपुत्रप्रतिग्रहप्रकारः संक्षेपतः, यथा पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं-बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति वशिष्ठोक्तः । अदूरबान्धवमित्यत्र देश-भाषा-विप्रकृष्टस्य प्रतिषेधः । एवं क्रीतादिष्वपि समानन्यायत्वात् । कल्पतरौ-त्वदूरबान्धवमसन्निकृष्टमेवेति पाठं लिखित्वाऽदूरबान्धवं सन्निहितमातुलादिकं-असन्निकृष्टमेव अविज्ञातगुणदोषमपि अप्यर्थे एवकार इति व्याख्यातं । सन्देहे-चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत् विज्ञायते ह्येकेन च बहूंस्त्रायता-मितीति च वशिष्ठवचनमधिकं लिखित्वैवं विवृतं । सन्देहे बान्धवानां असन्नि-धानात् जातिसन्देह-उत्पन्ने शूद्रमिव संस्कारहीनमेव स्थापयेत् । शूद्रोऽपि-हि जातपुत्रो भवतीत्यभिप्राय-इति ।

क्रीतस्तु पुत्रस्ताभ्यां विक्रीत इति ताभ्यां मातापितृभ्यां माता भर्त्तनुज्ञया-पित्रा वा मूल्यग्रहणेनापरस्य दत्तः । एकपुत्रं ज्येष्ठपुत्रं वर्जयित्वा आपदी-त्येव सजातीयेष्वित्युपसंहारात् सवर्ण एव ।

यत्तु मनुनोक्तं,—

"क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा" ॥ इति ।

तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयं नतु जात्याऽसदृश इति स जातीये-ष्वित्यनेन विरोधापत्तेः । बौधायनोऽपि,—"मातापित्रोर्हस्तात् क्रीतोऽन्य-तरस्य वा योऽपत्यार्थे गृह्यते स क्रीतक इति" ।

कृत्रिमस्तु पुत्रार्थिना स्वयं धनक्षेत्रादिप्रदर्शनादिना प्रलोभ्य त्वं मे पुत्रो-भवेति यः सवर्णः पुत्रीकृतः स उच्यते । मातापितृविहीनश्चेत् । तत्सद्भावे-तत्परतन्त्रतया तेन पुत्रो भवितुमशक्यत्वात् ।

मनुविष्णू अपि,—

"सदृशं यं प्रकुर्य्यातां गुणदोषविचक्षणम्।

पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः" ॥ इति।

सदृशं सवर्णं प्रकुर्य्यातां मातापितरौ मिलितौ प्रत्येकं वा।

"दत्तात्मा तु स्वयं दत्तः स्वयमेव स्वात्मानमन्यस्मै दत्तवांस्तवाहं पुत्रो-भवामीति स्वयमुपगतो मातृपितृविहीनस्ताभ्यां त्यक्तो वा सवर्णोऽपतितः-स उच्यते।

तथाच मनुः,—

"मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्।

आत्मानं स्पर्शयेद्‌यस्मै स्वयंदत्तस्तु स स्मृत"—इति।

अकारणात् पातित्यादिकारणमन्तरेणैव दुर्भिक्षादौ पोषणाद्यसामर्थ्या-दिना मातापितृभ्यां त्यक्तः स्वतन्त्र इत्यर्थः।

पुत्रवत्कन्याया अपि भवति प्रतिनिधिः,—यथा "औरसपुत्राभावे यथा-श्राद्धादौर्द्धदैहिकक्रियासम्पत्त्यै यथायुगं दत्तकादयः पुत्राः पुत्रप्रतिनिधयो-श्राद्धादौर्द्धदैहिकक्रियासम्पत्त्यै यथायुगं दत्तकादयः पुत्राः पुत्रप्रतिनिधयो-भवन्ति; एवमौरसकन्याभावे दौहित्रजलोकावाप्तेर बहु विचार्य्य रामायणादि-पौराणिकलिङ्गप्रदर्शनेन च दत्तकादिदुहितरोऽपि ग्राह्यतया व्यवस्थापिताः;-इति दत्तकमीमांसामतं। एवमेव दत्तकदीधितिदत्तसिद्धान्तमञ्जर्यौ-मुक्तकण्ठमाहतुः। दत्तकचन्द्रिका-दत्तकनिर्णय-दत्तकतिलक-दत्तकदर्पण-दत्तककौमुद्यो—यद्यपि स्पष्टतयाच न किञ्चिदूचुस्तथापि पुत्रिकाकरण-लिङ्गदर्शनेन तेषां मतेऽपि दत्तकादिदुहितृकरणमविरुद्धं प्रतिभाति। दत्तक-दीधितिस्तु पत्न्यभावे दत्तकादिदुहितॄणां धनाधिकारश्चेति दत्तकशिरोमणिः। दत्तकादीनां सापिण्ड्यविवेचनं तु मिताक्षरादौ द्रष्टव्यं ग्रन्थबाहुल्यभिया-नोद्धृतमेतदत्र।

एवमेतेषां निरूप्य स्वरूपमिदानीं भागार्हानर्हत्वं निरूप्यते तत्र प्रथमतः;—यथा-तत्र योगीश्वरः;—

क्लीवोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्युर्निरंशकाः ॥

तज्जः पतितजः । क्लीवान्धौ यदि जन्मत आरभ्य तदा विभागानर्हावेव । यदि त्वन्तरा तदा तदपगमश्चेदौषधादिना तर्हि "दृष्टाद्वा तद्विभागः स्यादायव्ययविशोधितादि"ति रीत्या विभागार्हावेवेति ध्येयं । आद्यशब्देना-श्रमान्तरगतपितृद्वेष्युपपातकबधिरमूकनिरिन्द्रियाणां ग्रहणं ।

यथाह वशिष्ठः ;—

"अनंशास्त्वाश्रमान्तरगता"—इति ।

नारदोऽपि,—

"पितृद्विट् पतितः षण्डो यश्च स्यादौपपातिकः ।
औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः" ॥ इति ।

मनुरपि,—

"अनंशौ क्लीवपतितौ जातान्धबधिरौ तथा ।
उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः" ॥—इति ।

व्याधिना निर्गतमिन्द्रियं यस्य स इति निरिन्द्रियः, तेन क्लीवाद्भेदः । कश्चित्तु-"निरिन्द्रियाः पाणिपादादिहीना" इत्याह । एते क्लीवादयोऽंशभाजो न भवन्ति किन्तु ग्रासाच्छादनादिना भर्त्तव्याः पोषणीयाः । अभरणे तु-महान् दोषः । यथाह मनुः ;—

"सर्व्वेषामेव चैतेषां दातुं न्याय्यं मनीषिणा ।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेदिति" ॥

अत्यन्तं यावज्जीवं, तत्रापि पतितोपपातकिनोर्यावत्प्रायश्चित्ताचरण-मनंशित्वं । औषध्यादिना प्रायश्चित्तमकुर्व्वतोऽस्तु निपतनमेव ।

एतेषां च विभागात् प्रागेव दोषभाक्त्वेऽनंशित्वं, न पुनर्विभागोत्तरमपि-दत्तविभागापहरणं प्रमाणाभावात् । पश्चादप्यौषधादिना दोषनिर्हरणेऽप्येषांच भागितेति विज्ञानेश्वराचार्य्याः । युक्तं चैतत् । दोषप्रयुक्तत्वाद्विभागानर्हतायाः ।

"विभक्तेषु सुतो जातः सवर्णायां विभागभागिति न्यायसाम्यात्"। पतितादिषु लिङ्गमविवक्षितमनुपादेयत्वात्। "ब्राह्मणो न सुरां पिबे"दित्यादिवत्। तेन यथासम्भवे पत्नीदुहितृ इत्यादेरप्ययमपवादः।

पतिततत्सुतयोर्न भरणं।

"मृते पितरि न क्लीवकुष्ठ्युन्मत्तजड़ान्धकाः।
पतितः पतितापत्यं लिङ्गी दायांशभागिनः॥
तेषां पतितवर्ज्येभ्यो भक्तं वस्त्रं च दीयते।
तत्सुताः पितृदायांशं लभेरन् दोषवर्जिताः"॥—इति।

लिङ्गी प्रव्रजितादिः। पतितपदेनाच पतितसुतस्यापि प्रत्यंपतितोत्पन्नत्वेन तस्यापि पतितत्वात्। पतितापत्यं पतितमेवान्यत्र स्त्रियाः सा हि परगामिनी भवतीति स्मृतेः। मृत-इति विभागकालोपलक्षणं जीवद्विभागेऽप्यनर्हत्वात्। कात्यायनोऽपि,—

अक्रमोढ़ा सुतश्चैव सगोत्राद्यश्च जायते।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति॥"

हीनस्त्रीपरिणयानन्तरमुत्तमस्त्रीपरिणयने द्वयोरप्यक्रमोढ़ात्वं तयोः। सगोत्रादनियोगोत्पन्नः क्षेत्रजः पुत्रो नार्हति धनं। क्लीवादीनामनंशत्वेऽपि तत्पुत्राणामंशोऽस्तीत्याह योगीश्वरः,—

"औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः"।

निर्दोषाः पूर्व्वोक्तानंशत्वप्रयोजकदोषशून्याः। तत्र क्लीवस्य क्षेत्रजपुत्रः सम्भवत्यन्येषामौरसोऽपि पुत्रद्वयग्रहणमितरपुत्रव्युदासार्थं।

न च क्लीवादेरुपनयनाभावेन पतितत्वात् कथं दारसम्बन्ध इति वाच्यं। उपनयनानर्हतयाऽनुपनीयत्वे शूद्रवदपतितत्वात्, एतेषां क्लीवादीनांदुहितरो विवाहपर्य्यन्तं भर्त्तव्याः संस्कर्त्तव्याश्च। तत्स्त्रियस्तु पुत्ररहिताःसाध्व्यो भरणीयाः अप्रतिकूलाश्चेत्, अन्यथा बहिष्कारणीयाः।

तदाह योगीश्वरः,—

"सुतास्तेषां प्रभर्त्तव्या यावन्तो भर्त्तृसात्कृताः ।
अपुत्रा योषितस्तेषां भर्त्तव्याः साधुवृत्तयः ॥
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च" ।

क्लीबस्त्रीपरिणयानन्तरमित्यारभ्य प्रतिकूलास्तथैवचेत्यन्तग्रन्थांशस्य युगान्तरीयविषयत्वमित्यनुमेयं, सम्प्रति तादृग्व्यवहारानवलोकनात् । आपस्तम्बः,—अपपात्रितस्य रिक्थपिण्डोदकदानानि निवर्त्तन्ते । अपपात्रितो । भिन्नोदकीकृतः ।

तथा बृहस्पतिः,—

"सवर्णजोऽप्यगुणवान्नार्हः स्यात्-पैतृके धने ।
तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते ॥
उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः ।
अतस्तद्विपरीतेन नास्ति तेन प्रयोजनं ॥
तथा गवा किं क्रियते या न धेनुर्न गर्भिणी ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्म्मिकः ॥
शास्त्रशौर्य्यार्थरहितस्तपोज्ञानविवर्ज्जितः ।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमः सुतः" ॥

अयमर्थः । पित्रादेरौर्द्धदेहिककर्म्मणः । कर्त्ता सुतोऽसंस्कृतोऽपि वरः-श्रेष्ठः । ज्येष्ठो वेदपारगोऽप्यपरो न वर इति ।

"पुन्नाम्नो नरकाद्-यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवेति" ॥ स्मृतेः ।

पुत्रकार्य्यकर्त्तुः पितृधनस्वाम्यमेव वेतनमतस्तदकुर्वतः कुतो वेतनाधिकार इति भावः ।

मनुरपि,—

"सर्व्वे एव विकर्मस्था नार्हन्ति भ्रातरो धनं"। इति।

श्रौतस्मार्त्तकर्म्मानधिकारिणो गुणहीना विकर्म्मासक्ताश्च भागानर्हा इति भावः।

एवमेतेषामन्तरासे निर्णीय दायानधिकारिजातमिदानीं निरूप्यते-तदन्येषां दायग्रहणं मिताक्षरादावन्यत्र विशेषतः सत्यपि विवरणे संक्षेपतोऽत्र-विच्छेदनिराकरणाय। यथा,—

तत्र योगीश्वरः,—

"पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे परः परः"। इति।

वीप्सादर्शनात् पूर्वपूर्वाभाव इत्यपि वीप्सावसेया।

औरसपौत्रिकेयसमवायेऽप्येवमौरसे सति पुत्रिकासुतस्य दायग्रहणा-भावे प्रसक्ते मनुरपवदति,—

"पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्यात्-ज्येष्ठता नास्ति हि स्त्रियाः"—इति॥

बृहस्पतिरपि,—

"एक एवौरसः पित्र्ये धने स्वामी प्रकीर्त्तितः।
तत्तुल्या पुत्रिका प्रोक्ता भर्त्तव्यास्त्वपरे सुताः"॥

न च पुत्रिकाया एव प्रथमं पुत्रे जाते पश्चादौरसोत्पत्तौ पुत्रिकापुत्रस्य ज्येष्ठत्वादश्रौत्वाच्च ज्येष्ठांशभागिता भवेदिति युक्तं, तस्य पौत्रत्वात्।

तदाह मनुः,—

"अकृता वा कृता वापि यं विन्देत् सदृशात् सुतं।
पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनमिति"॥

पुत्रिका हि पुत्रस्तत्पुत्रो दौहित्रोऽपि पौत्रस्तस्मात् पौत्र भवति। पौत्रस्य च ज्येष्ठत्वेनांशातिरेको नैव युतः। न च "अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति" पुत्रिकापुत्रस्यापि पुत्रत्वाभिधानात्तद्विरोध इति वाच्यं।

मनुविरोधेन तस्य गौणपिण्डदातृत्वनिमित्तपुत्त्वाभिप्रायकत्वात्। पुत्रिकायाः-पुमपत्यत्वाभावात् यथा गौणं पुत्त्वपदप्रतिपाद्यत्वं तथा स्वजन्यपुत्रिकाजन्य-पुत्त्वस्यापि पुंस्त्वेऽ सत्यपि जन्यत्वाभावात्। जन्यपुंस्त्वस्यैव पुत्रपदशक्यत्वात्।

तथान्येषामपि पुत्राणां पूर्वपूर्वसत्त्वे सर्वभागा—नर्हत्वमनेन प्रसक्तमपव-दति वशिष्ठः ;—तस्मिंश्चेत् प्रतिगृह्णीत औरस उत्पद्येत चतुर्थभागभागी-स्याद्दत्तक इतिदत्तकग्रहणं क्रीतादीनामुपलक्षणं पुत्त्रीकरणाविशेषात्।

"उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः।
सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः" ॥ इति—

कात्यायनवचनाच्च। सवर्णाः क्षेत्रजदत्तकादयस्ते सत्यौरसे चतुर्थांशहराः,-असवर्णा कानीनगूढोत्पन्नसहोढ़पौनर्भवास्ते तु सत्यौरसे न चतुर्थांशहरा-अपि किन्तु ग्रासाच्छादनमात्रभागिन इत्यर्थः कात्यायनवचनस्य।

अतएव विष्णुः ;—

"अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः।
पौनर्भवाश्च नैवैते पिण्डरिक्थांशभागिनः" ॥ इति।

यच्च मनुवचनं—

"एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनं" ॥ इति।

तदपि दत्तकादीनामौरसप्रतिकूलत्वेऽत्यन्तनिर्गुणत्वे च चतुर्थांशादिनिषेध-परं कानीनादिपरं च। तेषां सत्यौरसे ग्रासाच्छादनमात्रभागित्वस्योक्तत्वात्-तदेकमूलकत्वकल्पनात्। औरसाभावे दत्तकस्याखिलधनग्रहणार्थं पृथगारब्धं-मनुना,—

"उपपन्नैर्गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः।
स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रतः" ॥

स्वगोत्रसंप्राप्तः किमुत-पञ्चर्थोऽपिशब्दः। जनकधनग्रहणञ्च तस्य प्रति-षिद्धं तेनैव।

"गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति" ॥

ददतः सम्बन्धी पिण्डस्ततो व्यपैति। स्वधा पितृतृप्तिहेतुरिति पिण्डविशेषणं, गोत्ररिक्थानुग इति हेतुगर्भं।

दत्तकमात्रविषयकमपि सत्यौरसे चतुर्थांशहरप्रतिपादकं पृथगारब्धं वशिष्ठेन। "तस्मिंश्चेत् प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति। क्रीतादिसाधारणं तु कात्यायनीयं प्रागेव पठितं। तत्र तृतीयांशहरा इति कल्पतरुलिखितपाठे यदि साकरस्तर्हि दत्तकादीनामौरसापेक्षया सगुणत्वे तृतीयांशहरत्वमिति व्याख्येयं।

अथ मुख्यगौणपुत्राभावे मृतपतितपरिव्राजकादिधनग्रहणाधिकारिण उच्यन्ते। तत्र योगीश्वरः,—

"पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुता गोत्रजा बन्धुः शिष्यः सब्रह्मचारिणः॥
एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥" इति।

अपुत्रस्य औरसादिपुत्ररहितस्य स्वर्यातस्य मृतस्य पत्न्यादयः पूर्वपूर्वाभावे पाठक्रमेणोत्तरोत्तरं धनं गृह्णीयुरित्यर्थः।

अयं विधिः सर्व्वेषु मूर्द्धाभिषिक्तावसिक्ताद्यनुलोमजप्रतिलोमजादिषु वर्णेषु च ब्राह्मणेषु वेदितव्यमित्यर्थः। तत्र प्रथमं पत्नी धनहारिणी, पत्नीशब्देनैव विवाहसंस्कृता। सा तु सती संयता प्रपौत्रपर्यन्ताभावे विभक्ता संसृष्टपतिरिक्थहारिणीति बोध्यं। तत्रेदं पर्य्यालोचनीयं यथा "गृहीतधनायाः पत्न्यास्तद्धनेन जीवनमात्रं दानाधीकरणविक्रयेषु तु नाधिकार" इति।

"मृते भर्त्तरि भर्त्त्रंशं लभेत कुलपालिका।
यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये"—इति,—

कात्यायनवचनात् प्रतीयते। तदपि दृष्टार्थनटनर्त्तकादिदानाद्यात—

स्मात् । भर्त्त्रर्थदाने तदुपयोगिनोराधीकरणविक्रययोश्च तेनैवाधिकारा-
भिधानात् ।

"व्रतोपवासनिरता ब्रह्मचर्य्ये व्यवस्थिता ।
दमदानरता नित्यमपुत्रापि दिवं व्रजेदिति" ॥

दिवं व्रजेदित्यनेन काम्येऽपि दानादौ तस्या अधिकारः प्रतीयते । प्रतीति-
मेतां समर्थयति प्रजापतिरपि यथा,—

"जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरं ।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकं ।
पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान् ।
पूजयेत्-कव्यपूर्त्ताभ्यां वृद्धांश्चाप्यतिथीन्स्त्रियः ॥"

कुप्यं त्रपुसीसादि, कव्यं पित्रर्थं संकल्पितमन्नादि, पूर्त्तं खातादि,-
कर्म्माङ्गदक्षिणादि । एतदुक्तं भवति, स्थावरेणापि सहितं सर्वं भर्त्तृधनमधि-
गत्य धनसाध्यं स्वाधिकारिकं पत्युरात्मनश्च श्रेयःसाधनकर्म्म पतिपक्ष-
पुरस्कारेण पत्न्या कार्य्यमित्यादिना । विवेच्यमेवात्र यथा,—पत्न्यादिगणा-
भ्यन्तरे यो विशेषगुणशाली स एव तद्धनभागी तदनन्तरपूर्वतो ये तद्धनाधि-
कारिणस्त एव तेनैव यथास्वं पोषणीयाः, सप्रमाणपर्य्यालोचनं च पूर्वमुक्तं ।
ग्रन्थबाहुल्यभिया प्रादेशिकदायभागादिनिबन्धग्रन्थापेक्षया प्रायशो भारत-
प्रचलितमिताक्षरानामकयाज्ञवल्क्यटीकायां दायभागविषयकविशेषविवृति-
परिदर्शनेन तद्विषयकविवरणाधिक्यमपहायेतत्समयोपयोगिकतिपयदाय-
भागविषयकविवरणमुट्टङ्कितं दिङ्मात्रेण । एतएवावलोकितव्या मिताक्ष-
रायां विशेषविवृतिरन्यान्यविषयेषु ।

इति दायभागनिरूपणं ।

---

अथ क्रमप्राप्तप्रायश्चित्तनिरूपणमारभ्यते सामान्यतः । ननु कथमुद्भावितं-
पुण्यपापैर्महर्षिभिः प्रायश्चित्तशास्त्रं । तथा ग्रन्थस्यास्यापत्कालधर्मविषयकतया-
कथमत्र निवेशितोऽयं निरूक्तविभागश्चेति चेदुद्विवियतेऽनुपदमेव यथाक्रमं ।

यथा ; संसारेऽस्मिन् मानवाः सकलजातीयाः सत्पथेऽवस्थाय स्वस्वकार्य्य-सम्पाद्य चैहिकं पारलौकिकं च श्रेयोजातं साधयितुं भवन्ति सुक्षमाः। किन्तु-सर्व्वे ते स्वाधीनतया सन्त उत्शृङ्खलास्सन्मार्गमाश्रयितुं न भवन्त्युन्मुखाः। अतः शासनमन्तरा न केऽपि तन्मार्गेऽवस्थातुं भवेयुरग्रसराः। अतएवैषां-निखिलदोषनिरसनपुरःसरहितसम्पादनार्थं शासनद्वितयमुद्भावितं त्रिकाल-विज्ञैर्महर्षिभिः। तच्छासनद्वयमध्यतो राजदण्डात्मकमेकं, धर्म्मशास्त्रीयप्राय-श्चित्तस्वरूपं चान्यत्। द्विविधशासनस्यास्य सति दृष्टादृष्टफलकत्वेऽपि प्रथमोक्त-शासनस्य साक्ष्यादिनानाविधावश्यकीयोपायापेक्षितया तथा साधारणसम-क्षतो लज्जाधायकतया च बहवो लोकाः स्वस्वापराधं निह्नोतुं प्रयतन्ते सततं। अतो द्वितीयशासनमाविर्भूतमित्यनुमीयते शिष्टैः। कथमिति पृच्छायां-निदानमत्रेदं। यथा ;—

राजशासनानूल्लङ्घनभीत्यपेक्षया धर्म्मशास्त्रीयादेशान्यथाकरणस्येहामुत्र च-क्लेशापादकत्वेन धर्म्मशास्त्रीयभयं मनसि मानवानां जागरूकं, विशेषतः-कक्षीकरोति विवेचनमेतन्मानवीयधर्म्मशास्त्रीयप्रमाणमपि। यथा ;—

"गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनां।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः" ॥ इति।

तथा तेनैव भवेत्त्रियगामित्वं। धर्म्मशास्त्रीयप्रमाणव्रातमप्यत्रानुकूलं-साकल्येन। आस्तां तावददृष्टफलकत्वं दृष्टफलकत्वमप्यस्यावलोक्यते ह्यनिशं-धर्म्महानिशङ्कया सन्मार्गावस्थानेन। किं बहुव्यमत्र विशेषेण धर्म्मचितत्रासेन-केनापि जनेनाविदितस्य रहस्यपापस्यापि प्रायश्चित्तमनुतिष्ठन्ति मनुजा भार-तीयाः स्वेच्छया। अतएव सुपथे लोकानवस्थापयितुं यत् प्रायश्चित्तव्रातोद्भावनं-तत् समीचीनमिति राद्धान्तः। न च राजदण्डप्रायश्चित्तयोः न साम्यं प्रतिपाद-नीयमिति वाच्यं "दण्डवत् प्रायश्चित्तानि भवन्ति" इति प्रमाणप्राबल्यात्। यत्तु-केचन पुरोभागिनः केवलं निर्वाहयितुं स्वजीविकामुल्लिखितमेतत् प्रायश्चित्ता-दिकं ब्राह्मणैर्न्यार्थमिति यद् विप्रतिपत्तिमुत्थापयन्ति, तत्तुच्छं, श्रोत्रियाणां-शास्त्रे लोके च सदैव सकलहितसम्पादनतत्परत्वस्य तथा स्वार्थपराङ्मुखत्वस्य-

तथा विलासपरायणतादिरहितत्वस्य च ज्ञानलोचनविषयत्वात् । तथाच प्रायश्चित्तप्रकरणे धर्मशास्त्रीये ; यथा ;—दोषिणां श्रोत्रियाणां साकल्यतः प्रायश्चित्तानुष्ठानस्थाने जातीयानामन्येषां पापिनामंशतस्तदाचरणं, तथा राजशासने च तद्भिन्नजातीयानामपराधिनां सत्यप्यनुष्ठिते शारीरिकार्थिकदण्डजाते-स्वभावतो ज्ञानतश्चैतेषां श्रोत्रियाणां सर्वाग्रगण्यतयातीवलज्जाविधायककेशमुण्डनपूर्व्वकनिष्कासनं च देशतोऽभ्यनुज्ञातं शास्त्रकारैः । तथैतद्भारतीयार्यचक्रवर्त्ये-वसरे प्रचलितमासीत् पूर्वतोऽत्युग्रं लोके । अतो महर्षयः शीलोत्कृष्टया स्वजीविकां निर्वाहयन्तोऽपि नानाविधशास्त्रनिर्माणेन तथा तदीयोपदेशप्रदानेन तथासन्ततपरमेश्वरप्रार्थनया च जगतः शुभसम्पादकतया न स्वार्थपरा इत्यवधेयम् ।

साक्ष्यं प्रददात्यत्र मन्वादिधर्मशास्त्रव्रातं निर्विवादं । अपिच साकल्येनाचरितप्रायश्चित्तसन्दोहानामन्तराले कतिपयानामपराधानामापदि मूलतःप्रायश्चित्तमननुष्ठातुं धर्मशास्त्रकारै-रभ्यनुज्ञातत्वात् तथा कियत्संख्यकानामेनसां,—

"देशे काले च पात्रे चे"त्यादि-धर्मशास्त्रीयप्रमाणप्राबल्यात् कालेऽस्मिन-भ्यनुज्ञातव्यवस्थालाघवात्तथा शास्त्रे स्फुटतः प्रकाशरहितकतिपयप्रायश्चित्तानां-प्रकटनाभिलाषेण च तत्तत्प्रदर्शनार्थमेव सन्निवेशितोऽस्मिन् ग्रन्थे तद्विभागः ।

न चाधुनातनशास्त्रीयप्रायश्चित्तजातोल्लेखनस्यावश्यकीयत्वे साकल्येनप्रायश्चित्तपरिदर्शनं नानुचितमिति वाच्यं । साकल्यतः प्रायश्चित्तविभागापरिदर्शनेन संक्षेपीकरणासम्भवात् । अतस्तदनुष्ठानं सुसङ्गतमेव ।

पुत्रादिजनन-पित्रादिमरण-जन्य बाह्याशौचेन प्रायश्चित्तापनोद्याभ्यन्तराशौचेनैव स्वस्याशुद्धेः समुद्भूतत्वात् शुद्धेरशुद्धिसापेक्षत्वात्—चाभ्यन्तराशौचादितो-निरूप्यते तद्बाह्याशौचं सामान्येन, न तावदेतन्नवीनं, परमयोगिना याज्ञवल्क्येनापि स्वकृतसंहितायाः प्रायश्चित्ताध्यायमूलतः प्रदर्शितत्वात् । एतदुभयस्याशौचात्मकत्वं क्रोडीकरोति कारिका गादाधरी ससाक्षिवचना,—

**"बाह्यं चाभ्यन्तरञ्च द्विविधमिति मतं कर्तृशौचं तु बाह्यं,**
**देहे स्यात्तद्द्विनेऽपीत्युभयविधमिदं ज्ञातिजन्मादिजन्यम् ।**

कालस्नानापनोद्यं यदवधिविदितौ जन्ममृत्यू तथाद्यं,
शेषाहैः सर्ववर्णेष्वपि लगति सतां यत्र कुत्राप्यशौचं" ॥

कर्तृशौचं द्विविधं वाह्याभ्यन्तरभेदात्।

तथाच देवलः,—

"अशौचं द्विविधं प्रोक्तं वाह्यं चाभ्यन्तरं तथा" ॥ इति।

आभ्यन्तरं प्रायश्चित्तापनोद्यमघलक्षणं तत्तु लेख्यं वाह्याशौचविवेचनानन्तरमेव। विचार्य्यतेऽत्र वाह्याशौचमिदानीं, यथा, वाह्यमपि द्विविधं-शरीरस्य कर्म्मानर्हत्वरूपमेकं तथाऽशौचिस्पृष्टत्वाश्रयद्रव्यस्यापि कर्म्मानर्हत्वरूपं-द्वितीयं। इदं च वाह्याशौचं जन्ममरणादिना स्त्रीणामृतुप्रसवादिना च। तदशौचस्य खण्डाखण्डात्मकत्वेन बहुविधत्वेऽपि तद्विवेचनस्य भारतीयसकलप्रादेशिकनिबन्धग्रन्थेषु विशेषतो विहिततयोपेक्षितं तद्विवेचनमत्र। तथापि कालेऽस्मिन् सम्पूर्णकालीनजनने तथोपनीतमरणे च कीदृगखण्डाशौचस्य प्रचलनेन-सकलजातीयानां भरतखण्डनिवासिनां भवेदुपकारकमिति समुन्नाय्योल्लेखन-पूर्वतोऽद्यावधि प्रचलिताखण्डाशौचव्यवस्थानं प्रदर्श्यतेऽधस्तात् समालोचनार्थं-मानवीयप्रमाणोल्लेखेनैव।

यथाह मनुः,—

"शुध्येद् विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति" ॥

एतदेवानुमनुते याज्ञवल्क्यः —

"क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु।
त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्त्तिनः ॥ इति।

विप्रादिजातिमभिलक्ष्य निरुक्तप्रमाणप्राप्तोक्तविभिन्नाखण्डाशौचव्यवस्थित्या-प्रायशः सत्यपि प्रचलितेऽखण्डाशौचे भारतीयसकलप्रदेशेषु संप्रति मानवानामेतत्प्रदेशीयानां कष्टासहिष्णुतया प्रायेण दारिद्र्याभिभूततया सदैव पराधीन-

त्वेन च न प्रतिपाद्यते तदशौचं यथाशास्त्रं मानवैरेतद्देशीयैः। एतदेवानुभवसिद्धं शास्त्रानुमतञ्च,—

"आपद्यपि च कष्टायां सद्यः शौचं विधीयते"। इति,—

याज्ञवल्कीयवचनेन प्रकारान्तरेण समर्थितमेतदप्रतिपालनं। इदं सद्यःशौचपदं उपलक्षणविधया आपदीयाशौचसङ्कोचविधायकञ्च। आपद्यस्मांभारतीयसकलार्य्याणामखण्डाशौचभेदमपहाय विधातव्यमेकाशौचं चेद्रक्षितंशास्त्रं सर्वतोभावेन तथा भवेयुर्लोकास्तत्कष्टमुक्ताः।

कक्षीकरोति धर्मशास्त्रीयप्रमाणमेतत्।

यथाङ्गिराः,—

"सर्वेषामेव वर्णानां सूतके मृतके तथा।
दशाहात्-शुद्धिरेतेषामिति शातातपोऽब्रवीत्"॥ इति।

यत्तु,—"सर्वेषामित्यादिप्रमाणानुसरणेनाशौचव्यवस्थाऽनुपयोगितयानानुष्ठेया लोके समाचाराभावादिति यद्वदन्ति, तत्तुच्छं, प्रदेशेषूत्कलीयेषुताद्दशाशौचव्यवहारस्य बहुवर्षावधि तद्देशीयशिष्टादृतत्वात्। अतः पद्यमिदमापत्कालविषयकमिति बोध्यं।

तथाच, योगिविज्ञानेश्वरेण मिताक्षरायाः स्थानान्तरे लिखितया-"अनयोश्च पक्षयोरापदनापद्विषयत्वेन व्यवस्थेति" चूर्णिकयोपलक्षणात्मकतयाक्रोडीकृतमेतदेव। अपिचाघदिनवर्द्धनं क्लेशापादकमिति "न वर्द्धयेदघाहानीति"। मानवीयप्रमाणेनाप्युद्भावितं, न च यद्यद्वर्णस्य यद्-यत्परिमितदिनानि नियमिताण्यशौचे तत्तद्दिनातिरिक्तदिवसपालनमतीव क्लेशाधायकमितितद्वचनस्याकूतं न त्वेवापत्कालविषयकमिति वाच्यं। सति तत्प्रकरणपठितत्वेनतथात्वेऽप्युपलक्षणविधया साधारणतोऽघदिनस्य दुःखापादकत्वसूचकत्वाद्वचनस्यास्य। अतो विपत्समयेऽधुनातनेऽखण्डाशौचस्य दशदिनात्मकस्य वर्णानांसर्वेषां साम्यं शास्त्रसिद्धं दुःखसङ्कोचकञ्च, खण्डाशौचे तु भवति सर्वेषां भेदाभावः, तथाचात्र मिताक्षरायां विज्ञानेश्वरः,—

यथाह व्याघ्रपादः,—

"तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च ।
उपनीते तु विषमं तस्मिन्नेवातिकालजमिति" ॥

"अयमर्थः—वयसि त्रिवर्षादिरूपे यदशौचमादन्तजन्मनः सद्य इति—वाक्यविहितं तत्सर्वेषां ब्राह्मणादिवर्णानां तुल्यमविशिष्टं अतिक्रान्ते दशाहादित्रेत्राहादि यदशौचं तदपि सर्वेषामवशिष्टं । उपनीते पुनरुपरमे दशद्वादशपञ्चदशत्रिंशद्दिनानीत्येवं विषमाशौचं ब्राह्मणादीनां । तस्मिन्नेवोपनीतोपरम एव अतिकालजमतिक्रान्ताशौचं भवति, न वयोऽवस्थाशौचातिक्रम" इति । अनेन सर्वेषां वर्णानां सूचितः खण्डाशौचवैषम्याभावः । ग्रन्थेऽस्मिन् यदावश्यकं तदेवोद्धृतं, तदन्यत् सर्वं मृग्यं स्वस्वप्रादेशिकनिबन्धेषु । पुनश्चाभ्यन्तराशौचस्य प्रदर्शितं दृष्टफलकत्वमुपरितः । इदानीन्तु बाह्याशौचस्य प्रदर्श्यते-दृष्टफलकत्वमत्रेदं । यथा,—

सूतिकाशौचे, गर्भविमोचनावधि गर्भवत्याः सदैवात्मीयानां गुरुतमोद्वेगाभिभूततया प्रसवात् परं शान्तिलाभार्थं मनसो कियत्कालमपेक्षन्ते मानवाः-लोके । तथा प्रसवावसरे सदनस्य पूयशोणितदूषितत्वेन तथा प्रसवागारीयानलस्यातीवदुर्गन्धात्मकतया भवन्ति चित्तानि विकृतानि सगोत्राणां विशेष-संसर्गतः ।

अपिच—शावाशौचे पूज्यपादानां पित्रादिगुरुचरणानां तथात्मीयानां-सगोत्रादीनां चोपरमे मनसोऽत्यन्तशोकाकुलतया शारीरिकशौचं प्रति-दृष्टेरभावात् तेषामन्त्येष्टिक्रियाया नानाविधद्रव्यसाध्यत्वेन तदायोजनार्थं-धनिकानामपि कियद्दिवसापेक्षित्वात् तथान्त्येष्टिक्रियाकरणस्य शोकापनोदनोपायत्वाच्चैतदनुष्ठानव्रातनिर्वाहाय नियमितकतिपयदिनानि निश्चितानि-महर्षिभिस्त्रिकालज्ञैः । तद्दिनान्येवाशौचदिनात्मकत्वेनोच्यन्ते भारतीयैः सर्वैः । मनसो विकृतत्वेन किमप्यनुष्ठानं प्रति न भवति प्रवृत्तिर्लोकस्येति वैज्ञानिक-सिद्धान्तः । सिद्धान्तमेतमनुमोदते भारविकविः । यथा, "दुःखिते मनसि-सर्वमसह्यमिति" ।

अतोऽनेन निवन्धविवरणेन दृष्टफलकत्वं सुस्पष्टमेव ।

नचात्रापत्कालीनशास्त्रीयप्रायश्चित्तजातोल्लेखनस्यावश्यकीयत्वे साकल्यतः-प्रायश्चित्तपरिदर्शनमनुचितमिति वाच्यं, साकल्येन प्रायश्चित्तविभागापरि-दर्शनेन संक्षेपीकरणासम्भवात् । अतस्तदनुष्ठानं सुसंगतमेव ।

सम्प्रति किमात्मकं प्रायश्चित्तमित्याशङ्कायां प्रकाश्यते स्थूलतस्तदवस्थात्-धर्मशास्त्रीयव्यवस्थानुगत्या । यथा प्रायश्चित्तं नाम पापक्षयसाधनं कर्म, अथवा-भविष्यद्दुःखापादकाधर्मनाशकारी कार्य्यविशेषः ।

यथा हारीतः ;—

"प्रयतत्वाद्वोपचितमशुभं नाशयतीति" प्रायश्चित्तं ।

तस्य व्युत्पत्तिर्यथा ।

अङ्गिराः,—

"प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।

तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्" ॥

निश्चयसंयुक्तं पापक्षयसाधनत्वेन निश्चितमित्यर्थः ; पापं तु वैदिकप्रति-पाद्योऽनर्थः अनर्थश्चानिष्टसाधनं ।

कपापकारणमुक्तम् याज्ञवल्क्येन, यथा,—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।

अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" ॥

पापविशेषेणावस्थाविशेषमाह मनुः,—

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।

वाचिकैः पक्षिमृगतां मानसैरन्त्यजातितां ॥

इह दुश्चरितैः केचित् केचित्-पूर्वकृतैस्तथा ।

प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम्" ॥

यमः,—

"सुरापो ब्रह्महा गोघ्नः सुवर्णस्तेयकृन्नरः।
पतितैः संप्रयुक्तश्च कृतघ्नो गुरुतल्पगः॥
एते पतन्ति सर्वेषु नरकेष्वनुपूर्वशः"।

प्रायश्चित्तमाहात्म्यं यथाह अङ्गिराः,—

"उद्यच्छन् यद्वदादित्यस्तमः सर्वं व्यपोहति।
तद्वत्-कल्याणमातिष्ठन् सर्वं पापं व्यपोहति॥
पापं चेत्-पुरुषः कृत्वा कल्याणमभिपद्यते।
मुच्यते पातकैः सर्वैर्महाभ्रैरिव चन्द्रमाः"॥

कल्याणं प्रायश्चित्तं। तस्यावश्यकर्त्तव्यत्वमाह यमः,—

"तपसोऽन्ते विशुध्यन्ति कर्मणां वा परिक्षयात्।
तस्मात् कर्त्तव्यमेतैस्तु प्रायश्चित्तं विशुद्धये"॥

कर्मणां भोगेन परिक्षयादित्यर्थः।

प्रायश्चित्तार्हत्वमाह मनुः,—

"अकुर्वन् विहितं कर्म निषिद्धञ्च समाचरन्।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥
अज्ञानात् यदि वा ज्ञानान्-कृत्वा कर्म विगर्हितम्।
तस्माद्-विमुक्तिमन्विच्छन् द्वितीयं न समाचरेत्"॥

प्रायश्चित्तस्य काम्यत्वं नैमित्तिकत्वं नित्यत्वञ्च यथाह जावालः,—

"काम्यानां सफलार्थञ्च दोषघातार्थमेव च।
काम्यं नैमित्तिकञ्चातः प्रायश्चित्तमितिस्थितिः॥
चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये।
निन्द्यैश्च लक्षणैर्युक्ता जायन्ते निष्कृतैनसः"॥

ज्ञानाज्ञानाकृतपापयोः प्रायश्चित्तभेदो यथा,—अङ्गिराः—

"अकामतः कृते पापे प्रायश्चित्तं न कामतः ।
स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके"—इति ॥

तथा कामकृतस्य पापस्य सत्यनुष्ठिते प्रायश्चित्ते केवलं व्यवहार्य्यत्वं न-नाशकत्वेन पापमुक्तत्वमपराधिन इत्याह ।

याज्ञवल्क्यः,—

"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो व्यवहार्य्यस्तु वचनादिह जायते" इति ।

तथाचात्र विज्ञानेश्वरः ; उपात्तदुरितनाशार्थं प्रायश्चित्तमित्युक्तं । तत्र-विशेषमाह प्रायश्चित्तैर्वक्ष्यमाणैरज्ञानाद् यदेनः पापं कृतं तदपैति गच्छति न-कामतः कृतं, किन्तु तत्र प्रायश्चित्तविधायकवचनबलादिह लोके व्यवहार्य्यो-जायते । अत्र च प्रायश्चित्तैरपैत्येनो यदज्ञानकृतमित्युपक्रमात्तत्प्रतियोगि-तया ज्ञानत इति वक्तव्ये यत्कामत इत्युक्तं, तत् ज्ञानकामयोस्तुल्यप्रदर्शनार्थं ।

तथाहि,—

"विहितं यदकामानां कामात्तद्द्विगुणं भवेत्" ।

तथा, अबुद्धिपूर्वक्रियायामर्द्धं प्रायश्चित्तं ।

तथा,—

"म्लेच्छेनाधिगता शूद्रा त्वज्ञानात्तु कथञ्चन ।
कृच्छ्रत्रयं प्रकुर्व्वीत ज्ञानात्तु द्विगुणं भवेत् ॥"

इत्यादिभिर्वचनैर्ज्ञानकामयोस्तुल्यप्रायश्चित्तदर्शनात्तुल्यफलतैव ।

किञ्च—स्वतन्त्रप्रवृत्तिर्विषयकामनाभ्यां नियता तयोरन्यतरापायेऽपि-तस्या असम्भवात् । अतः कामत इत्युक्तेऽपि ज्ञानाज्ञानत इत्युक्तेऽपि कामः-प्राप्तोत्यविनाभावात् ।

ननु कामकृते प्रायश्चित्ताभावात् कथं व्यवहार्य्यत्वं, तदभावश्चानभिसन्धि-कृतेऽपराधे प्रायश्चित्तमिति,—

वशिष्ठवचनात्,—

"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।

कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" इति ॥

मनुवचनाच्चावगम्यते,—नैतत् ।

"यः कामतो महापापं नरः कुर्य्यात् कथञ्चन ।

न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते" इति ॥

तथा,—

"विहितं यदकामानां कामात्तद्द्विगुणं भवेत्" ।

इति च कामकृतेऽपि प्रायश्चित्तदर्शनात् ।

यत्तु वशिष्टवचनं, तस्याप्यकामकृतेऽपराधे प्रायश्चित्तं शुद्धिकरं इत्यभिप्रायो न कामकृतेऽपि प्रायश्चित्ताभाव इति ।

यत्तु मनुवचनं,—इयं विशुद्धिरुदितेत्यादि तदपीयमिति सर्वनामपरामृष्टद्वादशवार्षिकव्रतचर्य्याया एव ।

"कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" ।

इत्यनेन प्रतिषेधो न पुनः प्रायश्चित्तमात्रस्य, मरणान्तिकादेः प्रायश्चित्तस्य दर्शितत्वात् । ननु यदि कामकृतेऽपि प्रायश्चित्तमस्ति तर्हि पापक्षयोऽपि कस्मात्तस्यादविशेषाद्, यदि पापक्षयो नास्ति तर्हि व्यवहार्य्यताऽपि कथं भवति । उच्यते उभयप्रायश्चित्ताविशेषेऽपि फलविशेषः शास्त्रतोऽवगम्यते,-अज्ञानकृते तु सर्व्वत्र पापक्षयः । यत्र तु ब्रह्महा सुरापो गुरुतल्पगो मातृपितृयोनिसम्बन्धागस्तेन नास्तिकनिन्दितकर्म्माभ्यासि—पतितात्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्चेति गौतमोक्तमहापातकादौ व्यवहार्य्यत्वनिषिद्धं, तस्मिन् पतनीये कर्म्मणि कामतः कृते व्यवहार्य्यत्वमात्रं न पापक्षय इति । नच पापक्षयाभावे व्यवहार्य्यत्वमनुपपन्नं, द्वे हि पापस्य शक्ती, नरकोत्पादिका व्यवहारनिरोधिका चेति । तत्रैतरशक्तविनाशेऽपि व्यवहारनिरोधिकायाः शक्तेर्विनाशो नानुपपन्नः । तस्मादपापानशेऽपि व्यवहार्य्यत्वं नानुपपन्नं । यत्तु मनुवचनं,—

**अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधा।**
**कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्—इति॥**

तदपि कामकृतेऽपि प्रायश्चित्तप्राप्त्यर्थं। न पुनः पापक्षयप्रतिपादनपरं। अपतनीये पुनः कामकृतेऽपि प्रायश्चित्तेन पापक्षयो भवत्येव।

**अकामतः कृतं पापं वेदाभ्यासेन शुध्यति।**
**कामतस्तु कृतं मोहात्-प्रायश्चित्तैः पृथग्विधैः॥**

इति मनुस्मरणात्।

पतनीयेऽपि कर्म्मणि कामकृते मरणान्तिकप्रायश्चित्तेषु कल्मषक्षयो-भवत्येव फलान्तराभावात्।

"नास्यान्यस्मिंल्लोके प्रत्यापत्तिर्विद्यते कल्मषन्तु निर्हन्यत इत्यापस्तम्ब-स्मरणात्"। मिताक्षराविवरणे विज्ञानेश्वरेणोद्धृते सत्यपि मानवीयवचनव्रातेऽस-साधारणसन्देहनिरसनायोत्तोल्यते तदेव मानवीयवचनजातं कुल्लूकभट्टकृत-तत्तद्विवृत्तिसहितं निम्नतः, यथाह मनुः;—

**अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः।**
**कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्॥**
**अकामतः कृतं पापं वेदाभ्यासेन शुध्यति।**
**कामतस्तु कृतं मोहात्-प्रायश्चित्तैः पृथग्विधैः॥"**

तथाह कुल्लूकभट्टः,—अकामत इति अबुद्धिपूर्व्वकृते पापे प्रायश्चित्तं-भवतीत्याहुः पण्डिताः, एके पुनराचार्य्याः कामतः कृते पापे प्रायश्चित्तं-भवतीत्याहुः।

एतच्च—पृथक्कृत्वाभिधानं प्रायश्चित्तगौरवार्थं श्रुतिनिदर्शनादिति।

इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् तमश्लीला वागित्यवदत् स प्रजापति-मुपधावत्, तस्मात् तमुपहव्यं प्रायच्छदिति।

अस्यार्थः—इन्द्रो यतीन् बुद्धिपूर्वकं श्वभ्यः खादितुं दत्तवान्। स-प्रायश्चित्तार्थं प्रजापतिसमीपमगमत्; तस्मै प्रजापतिरुपहव्याख्यं कर्म्म प्रायश्चित्तं-

दत्तवान्। अतः कामकारकृतेऽप्यस्ति प्रायश्चित्तं। तथा अकामत इति-अनिच्छातः कृतं पापं वेदाभ्यासेन शुध्यति नश्यति, वेदाभ्यासेनेति काम-कृतविषयप्रायश्चित्तापेक्षया लघुप्रायश्चित्तोपलक्षणार्थं प्रायश्चित्तान्तराणामपि-विधानात्। रागद्वेषादिव्यामूढ़तया पुनरिच्छातः कृतं नानाप्रकारैः-प्रायश्चित्तैर्विद्याधनतपोभिः शुध्यतीति गुरुप्रायश्चित्तपरं। अतः पूर्व्वोक्तस्यै-वायं व्याकारः। यद्यपि अधिकारिनिरूपणं प्रक्रान्तं, प्रायश्चित्तं त्वनन्तरं-वक्ष्यति, तथाप्यज्ञानाल्लघुप्रायश्चित्ताधिकारी ज्ञानाद् गुरुणि प्रायश्चित्तेऽधि-क्रियत इति। अधिकारिनिरूपणमेवेदं। तथाह स एव,—

"इयं विशुद्धिरुदिता प्रमाप्या कामतो द्विजं।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" ॥ इति।

तथाच कुल्लूकभट्टः,—

"इयमिति एतत्तु प्रायश्चित्तं विशेषोपदेशमन्तरेण अकामतो ब्राह्मणवधे-ऽभिहितं, कामतस्तु ब्राह्मणवधे नेयं निष्कृतिः; नेतत् प्रायश्चित्तं, किन्त्वतो-द्विगुणादिकरणात्मकमिति प्रायश्चित्तगौरवार्थं, न तु प्रायश्चित्ताभावार्थं।

"कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथक्विधैः"।

इति पूर्व्वोक्तविरोधात्। अतएव कामकृतपापे प्रायश्चित्तं विधेयमवश्य-मिति निर्गलितार्थः। प्रायश्चित्तानुष्ठानेनैवमनपगते सत्यप्येनसि साकल्ये-न व्यवहारनिरोधकशक्तेरपगमात् व्यवहार्य्यत्वमपराधिन इति सुस्थितमेव। यत्तु कामत इत्यज्ञानकृतेन प्रायश्चित्तेन ज्ञानकृतपापगमो न भवति-किन्तु व्यवहार्य्यतामात्रं, ननु सति पापे कथं व्यवहार्य्यता; अत्राह-वचनादिति अयमभिप्रायः। अर्द्धप्रायश्चित्तानुष्ठानेनार्द्धपापक्षयात् सम्भाषण-स्पर्शनदर्शनादिलघुव्यवहारो न दुष्टः। न तु भोजनपरिणयादिव्यवहारोऽपि-वचनादेव। यथा कुनखित्वादिव्याधिसूचितमहापापसद्भावे व्यवहार्य्यते-त्यर्थमुत्थापयन्ति, तन्मन्दं, अकृतप्रायश्चित्तेन पापिना दासीघटोत्सर्गानन्तरं-कृतप्रायश्चित्तेन सता सार्कं भोजनादिद्वितीयदलमन्तरा सम्भाषणादि-प्रथमदलस्य याज्ञवल्क्येनाज्ञनेवाभ्यनुज्ञातत्वात् मिताक्षरोक्तविवरणस्य पूर्वा-

परासकृतेशास्त्रेष्ट्याऽर्थकरणं न याज्ञवल्क्यानुमोदितमेव, कथमिति चेत् प्रदर्श्यते-समिताक्षरं याज्ञवल्क्यवचनं । यथाह—याज्ञवल्क्यः—सविज्ञानेश्वरः—"एवं-महापातकादिभिः पतितस्य प्रायश्चित्तमुक्तं, यस्तौत्वादेतन्न चिकीर्षति तस्य किं कार्य्यमित्यत आह—

"दासीकुम्भं वहिर्ग्रामान्निनयेरन् स्ववान्धवाः ।
पतितस्य वहिः कुर्य्युः सर्वकार्येषु चैव तं ॥

जीवत एव पतितस्य ये ज्ञातयो बान्धवाः पितृमातृपक्षास्ते सर्वे-सन्निपत्य दासी प्रेष्या तया सपिण्डादिप्रेषितया आनीतमपां पूर्णं कुम्भं घटं-ग्रामात् वहिर्निनयेयुः ।

एतच्चचतुर्थ्यादिरिक्तातिथिष्वह्नः पञ्चमे भागे गुर्वादिसन्निधौ कार्य्यं । अयं त्यागो यदा बन्धुभिः प्रेर्य्यमाणोऽपि प्रायश्चित्तं न करोति तदा द्रष्टव्यः । "यदा तु बन्धुत्यागादन्यथा वा जातवैराग्यः, प्रायश्चित्तं च कृतं, तदा किं-कार्य्यमित आह—

"चरितव्रत आयाते निनयेरन् नवं घटम् ।
जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्व्वशः" ॥

कृतप्रायश्चित्ते बन्धुसमीपं पुनरायाते तत्सपिण्डायास्तेन सहिता नवं-चानुपहतं घटं उदकपूर्णं निनयेयुः । एतच्च निनयनं पुण्यह्रदादिस्नानोत्तरं-द्रष्टव्यं ।

"प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवं ।
तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये" ॥

इति मनुस्मरणात् ।

तत एनं कृतप्रायश्चित्तं ते नैव कुत्सयेयुः । तथा सर्व्वकार्य्येषु क्रयविक्रयादिषु तेन सह संव्यवहरेयुः । पूर्वोक्तस्य पतितत्यागविधेरतिदेशमाह,—

"पतितानामेष एव विधिः स्त्रीणां प्रकीर्त्तितः ।
वासो गृहान्तिके देयं अन्नं वासः सरक्षणं" ॥

य एव पुरुषाणां परित्यागे पिण्डोदकदानविधिः कृतप्रायश्चित्तानाञ्च परिग्रहविधिश्च। स एव पतितानां स्त्रीणामपि वेदितव्यः। इयांस्तु विशेषः पतिताभ्योऽपि ताभ्यः स्त्रीभ्यः कृतोदकादिकर्मभ्यो वासस्तृणपर्णमयं कुटीगृहकं प्रधानगृहसमीपे देयं। तथा प्राणधारणमात्रमन्नं मलिनञ्च वस्त्रं पुनः पुरुषान्तरोपभोगनिवारणसहितं देयं।

मनुरपि निरुक्तयाज्ञवल्क्यविज्ञानेश्वराभिप्रायं कक्षीकरोत्यनुपदमेव।

यथा,—

"पतितस्योदकं कार्य्यं सपिण्डैर्बान्धवैर्बहिः।
निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ॥
दासी-घटमपां पूर्णं पर्य्यस्येत्-प्रेतवत्-पदा।
अहोरात्रमुपासीरन्नशौचं बान्धवैः सह॥
निवर्त्तेरंश्च तस्मात्तु सम्भाषणसहासने।
प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवं॥
तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये।
स त्वप्सु तं घटं प्रास्य प्रविश्य भवनं स्वकं॥
सर्व्वाणि ज्ञातिकार्य्याणि यथापूर्व्वं समाचरेत्।
एतमेव विधिं कुर्य्यात् योषित्सु पतितास्वपि॥
वस्त्रान्नपानं देयं तु वसेयुश्च गृहान्तिके।
एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित् सहाचरेत्।
कृतनिर्णेजकांश्चैव न जुगुप्सेत कर्हिचित्॥" इति।

तथा "पापकारिभिरकृतप्रायश्चित्तैः सह दानप्रतिग्रहादिकमर्थं किञ्चि-न्नानुतिष्ठेत्। कृतप्रायश्चित्तांश्चैव कदापि पूर्व्वकृतपापत्वेन निन्देत्। किन्तु-पूर्व्ववद्व्यवहरेदिति कुल्लूकभट्टः, अर्थात् क्रयविक्रयादिषु व्यवहरेत् न तु भोजन-परिणयादिषु। अन्यथा विज्ञानेश्वरकुल्लूकभट्टविहतेः परस्परविरोधापत्तेः।

अतएव निवृत्तपापिगमन्तरेण कामतः पूर्वं कृतपापि-र्मानवैः पश्चादनुष्ठित-प्रायश्चित्तैः सार्द्धं भोजनादिसकलकार्य्येषु व्यवहारोऽनुष्ठेय इति शास्त्रीय-सिद्धान्तः ।

तथैव कुष्ठयक्ष्मत्वादिसांक्रामिकरोगाभिभूतैः सह भोजनपरिणयनाद्यनुष्ठाने-ऽपि रोगसंक्रामणभिया शास्त्रनिषिद्धेऽपि लोकतो व्यवहारदर्शनात्तदृष्टान्तो-निष्प्रयोजनक इति सुसमीचीनं । यदपि, अथवा अकारप्रश्लेषात्-यथोक्त-प्रायश्चित्तेन कामतोऽपि पापक्षयो भवत्येव । किन्तु अव्यवहार्य्यः पापाभावे-ऽपि वचनात् ।

अतएव मनुः—

"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्म्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्" ॥

याज्ञवल्क्यः,—

"शरणागतबालस्त्रीहिंसकान् संवसेन्नतु ।
चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्" ॥

सहायीकृत्येत्यादिप्रमाणजातं यत्तु प्रतिपादितार्थवैपरीत्येन यत्कामकृता-पराधिनोऽव्यवहार्य्यत्वं साकल्येन प्रतिपादयन्ति तदपि न धर्म्मशास्त्रसम्मतं । धर्म्माचार्य्यैर्विज्ञानेश्वरादिभिः पूर्वापरासङ्गत्याशङ्कया तादृगर्थस्यानङ्गीकृतत्वात्, तथा कामतोऽकामतोऽपि प्रोक्तप्रमाणव्रातप्रकाशितपापजातकारिणो मानवस्य-स्वकर्तृकप्रायश्चित्तानुष्ठानेन नरकोत्पादिकायाः शक्तेः सत्यप्यगमे व्यवहार-निरोधिकशक्तेरनपगमस्य "न जुगुप्सेतेत्यादि" वाक्यवृन्दापवादात्मकैः प्रमाणैरेतैः-प्रकाशितत्वाच्च ।

हेतुद्वयसत्यत्वप्रदर्शनार्थं पुनः सूच्यते निवृत्तप्रमाणजातं सव्याख्यान-मधस्तात् ।

यथाह मनुः—

"बालघ्नांश्चेत्यारभ्य न संवसेदित्यन्तं" ।—

तथाच कुल्लूकभट्टः,—

"अस्यापवादमाह बालघ्नानिति—बालं यो हतवान् कृतोपकारं अप-काराचरणेन यो विनाशितवान् शरणार्थमागतं यो हतवान् स्त्रियं च यो-व्यापादितवान् एतान् यथावत्कृतप्रायश्चित्तानपि संसर्गितया न परिवसेत्।

तथाच याज्ञवल्क्यः,—

"शरणागतेत्यारभ्य-इमानित्यन्तं"।—

तथाच विज्ञानेश्वरः,—

"जुगुप्सेरन्नचाप्येनं सम्विशेयुश्च सर्वशः"।

"इत्यस्यापवादमाह—शरणागतादिव्यापादनकारिणः कृतप्रशस्तिवान्-प्रायश्चित्तेन क्षीणदोषानपि न संव्यवहरेदिति वाचनिकोऽयं प्रतिषेधः, किमिदं-वचनं न कुर्यादपि वचनस्यातिभारोऽस्ति, अतश्च यद्यपि व्यभिचारिणी-स्त्रीवधेऽल्पीयमेव प्रायश्चित्तं, तथापि वाचनिकोऽयं संव्यवहारप्रतिषेधः"। प्रोक्तमतद्वयं न शास्त्रानुगतं केवलं स्वस्वपाण्डित्योत्कर्षापादकमतएव-परिहेयमेव।

अथ प्रायश्चित्तिनश्चर्षदुपस्थानं, तत्राङ्गिराः,—

"कृते निःशंसये पापे न भुञ्जीतानुपस्थितः।
भुञ्जानो वर्द्धयेत्-पापमसत्यं पर्षदि ब्रुवन्॥
सचेलं प्रयतः स्नात्वा क्लिन्नवासाः समाहितः।
उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं गतः॥
गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत्"॥

उपस्थानञ्च ब्राह्मणान् वस्त्रादिना तोषयित्वा कार्य्यं।

महत्सु पापेषु राज्ञोऽप्युपस्थितिः कार्य्येत्याह देवलः,—

"स्वयं वा ब्राह्मणैः कृच्छ्रमल्पदोषे विधीयते।
राज्ञा च ब्राह्मणैश्चैव महत्सु परिचक्षते॥"

परिषदमाहाङ्गिरा:,—

"एकविंशतिसंख्याकैर्मीमांसाविद्पारगैः।
वेदाङ्गकुशलैश्चैव परिषत्संप्रकल्पयेत् ॥
चतुर्विद्यो विकल्पी च अङ्गविद्धर्म्मपाठकः।
त्रयश्चाश्रमिणो मुख्याः पर्षत्स्यात्तु दशावरा ॥"

मनुः,—

"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः।
त्रयश्चाश्रमिणः पूर्व्वं पर्षत्स्यात्तु दशावरा"।

अङ्गिरा:,—

"एषा तु लघुकार्य्येषु मध्यमेषु तु मध्यमा।
महापातकिशोध्येषु शतशो भूय एव वा" ॥

प्रदर्शनार्थमिदं। यावद्भिरेव निरूपणं तावद्भिरेव परिषत्। दृष्टार्थत्वादेव तस्याः। तथाच यमः,—

"एको द्वौ वा त्रयो वापि यद्ब्रूयुर्धर्म्मपाठकाः।
स धर्म्म इति विज्ञेयो नेतरेषां सहस्रशः" ॥

प्रायश्चित्ताकथने दोषो यथा,—

"आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः।
जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः ॥
अनर्च्चितैरनाहूतैरपृष्टैश्चैव संसदि।
प्रायश्चित्तं न वक्तव्यं जानद्भिरपि जल्पतः ॥
न्यायतो मार्गमाणस्य क्षत्रियादेः प्रयासिनः।
अन्तरा ब्राह्मणं कृत्वा व्रतमेतत् समादिशेत् ॥

हारीतः,—

"यथा वयो यथा कालं यथा प्राणश्च ब्राह्मणे।
प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्म्मपाठकैः॥
तस्मात् कृच्छ्रमथाप्यर्द्धं पादं वापि विधानतः।
ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत्"॥

अशक्तावनुग्रहमाह—पराशरः,—

"दुर्बलेऽनुग्रहः कार्य्यस्तथा वै शिशुवृद्धयोः।
अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहो भवेत्"॥

स्नेहादिनानुग्रहे दोषो यथा,—

"स्नेहाद्वा यदि वा लोभात्-मोहादज्ञानतोऽपि वा।
कुर्व्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति॥

शास्त्रीयप्रायश्चित्तमुदाहृत्य पश्चादनुग्रहः कार्य्य इत्याहाङ्गिराः,—

"कृत्वा पूर्व्वमुदाहारं यथोक्तं धर्म्मवक्तृभिः।
पश्चात्-कार्य्यानुसारेण शक्त्या कुर्व्वन्त्यनुग्रहं"॥

वृद्धत्वादिभेदात् प्रायश्चित्तं यथा,—

"अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च"॥

अथ पापनिष्क्रमणादिः। तत्र मनुः,—

"ख्यापनेनानुतापेन तपसाध्ययनेन च।
पापकृन्मुच्यते पापात्तथा दानेन चापदि"॥

आपदीत्यनेन अध्ययनतपसोर्दानमनुकल्प इत्युक्तं। एतद्धिंसाव्यतिरिक्तविषयं। हिंसायां तु दानं मुख्यं।

यथा भविष्ये,—

"हिंसात्मकानां सर्व्वेषां कीर्त्तितानां मनीषिभिः ।
प्रायश्चित्तकादम्बानां दानं प्रथम उच्यते ॥"

यथा मनुः,—

"दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् ।
एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये ॥"

सामान्यप्रायश्चित्तानि यथा संवर्त्तः,—

"हिरण्यदानं गोदानं भूमिदानं तथैव च ।
नाशयन्त्याशु पापानि महापातकजान्यपि" ॥

तथाच यमः,—

"शोषणेन शरीरस्य तपसाध्ययनेन च ।
पापकृन्मुच्यते पापाद्दानेन च दमेन च" ।

तथाच मनुः,—

"कृत्वा पापं हि सन्तप्य तस्मात्पापात्-प्रमुच्यते ।
नैतत् कुर्य्यां पुनरिति-निवृत्त्या पूयते नरः" ॥

तथा विष्णुपुराणे ;—

"प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परं" ॥

यमोऽपि,—

"गवाह्निका देवपूजा वेदाभ्यासः सरित्प्लवः ।
नाशयन्त्याशु पापानि महापातकजान्यपि" ॥

गौतमोऽपि—

"गोर्वासोऽश्वा भूमिस्तिला घृतमन्नमिति देयानि । एतान्येवानादेशे विकल्पेन क्रियेरन् एनसि लघुनि लघूनि गुरूणि गुरूणीति" ।

तथा विष्णुपुराणे,—

"एवं विषयभेदाद्वै व्यवस्थापद्यानि पुत्रक!।
प्रायश्चित्तानि सर्व्वाणि गुरूणि च लघूनि च॥"
अन्यथा हि महाबाहो! लघूनामुपदेशतः।
गुरूणामुपदेशो हि निष्प्रयोजनतां व्रजेत्"॥

महाभारतेऽपि,—

"यद्यकार्य्यशतं कृत्वा कृतं गङ्गाभिषेचनं।
सर्वं दहति गङ्गाम्भस्तूलराशिमिवानलः"॥

व्रतानि शुचिकारणान्याह विश्वामित्रः—

"कृच्छ्रं चान्द्रायणादीनि शुद्धग्रभ्युदयकारणं।
प्रकाशे वा रहस्ये वा संशयेऽनुक्तकेऽस्फुटे॥
प्राजापत्यः शान्तपनः शिशुकृच्छ्रः पराककः।
अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः॥
महाशान्तपनः शुद्ध्यै तप्तकृच्छ्रस्तु पावनः।
जलोपवासकृच्छ्रश्च ब्रह्मकूर्चस्तु शोधकः॥
एते समस्ता व्यस्ता वा प्रत्येकमेकशोऽपि वा।
पातकादिषु सर्वेषु पापकेषु प्रयत्नतः॥
कार्य्याश्चान्द्रायणैर्युक्ता केवला वा विशुद्धये।
शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा॥
यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति।
उपवासस्त्रिरात्रं वा मासपक्षस्तदर्द्धकं॥
षड्द्वादशाहादि कार्य्यं शुद्धिफलार्थिना।
उपपातकयुक्तानामनादिष्टेषु चैव हि॥

प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया ।
जातिशक्तिगुणान् दृष्ट्वा सकृद्-बुद्धिकृतं तथा ॥
अनुबन्ध्यादिकं दृष्ट्वा सर्वं कार्य्यं यथाक्रमम्" ।

प्रकाशकृते पापे व्रतानि मुख्यानि । रहस्यकृते जपादीनि ।

यथा प्राजापत्याद्यभिधाय मनुः,—

"एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ।
अनाविष्कृतपापांस्तु मन्त्रैर्होमैस्तु शोधयेत्" ॥

देवलः,—

"प्रकाश उक्तं यत्किञ्चित्-विंशभागो रहस्यके ।
विंशभागः षष्ठिभागः कल्प्यो जात्याद्यपेक्षया" ॥ इति ।

अथ प्रायश्चित्तपूर्वाङ्गकृत्यं—शङ्खलिखितौ ।

"व्यापन्न केशनखान् पूर्वं घृतं प्राश्य वह्निर्निशि ।
प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् ॥
प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत् । इति ।

केशधारणेच्छायां द्विगुणव्रतादिकमाह हारीतः,—

"राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥
केशानां धारणार्थं च द्विगुणं व्रतमाचरेत् ।
द्विगुणे तु व्रते चीर्णे द्विगुणा दक्षिणा भवेत् ॥
विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनं ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः" ॥

सधवास्त्रीणां विशेषमाह भवदेवभट्टधृतं वचनं ।

"वपनं नैव नारीणां नानुव्रज्याजपादिकं ।
न गोष्ठे शयनं तासां न च दद्यात्-गवाजिनम् ॥
सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।
सर्वत्रैवं हि नारीणां शिरसो मुण्डनं स्मृतम्" ॥

अथ धेनुमूल्यव्यवस्था । तत्र सम्वर्त्तः,—

"प्राजापत्यव्रताशक्तौ धेनुं दद्यात्पयस्विनीम् ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः" ॥

पयस्विनीमिति विशेषणं दुग्धोपयोगाय । स च वत्सं विना न सम्भवति । अतः सवत्साया एव दानं मुख्यं, तदभावे यथोचितं मूल्यं । तदसम्भवे पौराणिकत्रयं ।

"द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेदिति" ।

कात्यायनवचनात् ।

षट्त्रिंशन्मतमिति कृत्वा पठन्ति,—

"धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिकी ।
कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता" ॥

प्रायश्चित्तोत्तरकर्त्तव्यानि यथाह भविष्ये,—

"क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम् ।
शुद्ध्यर्थमिति तत्-प्रोक्तं वैनतेय ! मनीषिभिः ॥"

जावालः,—

"आरम्भे सर्व्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शालाग्नौ जुहुयादाहुतीः पृथक् ॥
श्राद्धं कुर्य्यात्-व्रतस्यान्ते गोहिरण्यान्नदक्षिणम्" । इति ।

प्रायश्चित्तानन्तरं गोभ्यो यवसं दद्यात् । यदि गावस्तद्भक्षणं न गृह्णीयुस्तदा पुनस्तत्प्रायश्चित्तमनुतिष्ठेत् । यथाह हारीतः,—

"स्वशिरसा यवसमादाय गोभ्यो दद्यात् यदि ताः प्रमुदिता गृह्णीयुरथैनं प्रवर्त्तयेयुः"। एवं कृतप्रायश्चित्तं विद्यादितरथा न इति। जातिशक्ति-गुणापेक्षेत्यादि निरुक्तप्रमाणतो जातिशक्त्याद्यनुसारेण स्थूलतः प्रायश्चित्तस्य-सत्यपि कथिते गुरुलाघवे जातेः कस्याः कीदृक् प्रायश्चित्तं विधेयमित्याशङ्क्य-तन्निर्णयमाह।

मिताक्षरायां वृद्धविष्णुः,—

"विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषं तु शूद्रजातिषु शस्यते"॥ इति।

सान्तपनादिव्रतव्रातमुपरितः प्रोच्यापि तत्तत्स्वरूपानिर्णयात् प्रकाश्यन्ते-तत्तत्स्वरूपाणि निम्नतः ;—

यथोत्कलदेशप्रचलितपण्डितसर्वस्वे,—

तथा तप्तकृच्छ्रस्वरूपं,—

"त्र्यहमुष्णं जलं पीत्वा त्र्यहमुष्णं पयः पिवेत्।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्ष्यो दिनत्रयम्"॥

तथा सान्तपनकृच्छ्रस्वरूपं,—

"गोमुत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
जग्ध्वा परेऽह्न्युपवसेत्-कृच्छ्रं सान्तपनं चरन्"॥

पूर्वेद्युराहारान्तरपरित्यागेन गोमूत्रादीनि पीत्वा परेऽह्न्युपवसेदिति-द्वैरात्रिकसान्तपनकृच्छ्रं। गोमुत्रादीनां परिमाणमुपरि वाच्यं।

तथा ब्रह्मकूर्चस्वरूपं,—

"पूर्व्वेद्युरुपवासी सन्नपरेद्युः समन्त्रकम्।
पञ्चगव्यं यदश्नाति ब्रह्मकूर्चः स उच्यते"॥

यदाह पराशरः,—

"गोमुत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
निर्द्दिष्टं पञ्चगव्यं च पवित्रं कायशोधनम्॥

गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चैव गोमयम् ।
पयः काञ्चनवर्णायाः नीलायाश्च तथा दधि ॥

घृतं च कृष्णवर्णायाः सर्वं कापिलमेव वा ।
अलाभे सर्ववर्णानां पञ्चगव्येष्वयं विधिः ॥

गोमूत्रं माषकास्त्वष्टौ गोमयस्य तु षोड़श ।
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्त्तिताः ॥

गोमूत्रवद्घृतस्याष्टौ तदर्द्धं तु कुशोदकम् ।
गायत्रीति च गोमूत्रं गन्धद्वारेति गोमयम् ॥

आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
तेजोऽसि शुक्रमत्याज्यं देवस्य त्वा कुशोदकम् ॥

पञ्चगव्यमृचा पूतं होमयेदग्निसन्निधौ ।
सप्तपर्णाश्च ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥

एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ।
इरावती इदं विष्णुर्मानस्तोकेन संवती ॥

एताभिश्चैव होतव्यं हुतशेषं पिवेद्द्विजः ।
प्रणवेन समालोड्य प्रणवेनाभिमन्त्र्य च ॥

प्रणवेन समुद्धृत्य पिवेत्तत्-प्रणवेन तु ।
मध्यमेन पलाशस्य पद्मपत्रेण तत्पिवेत् ॥

स्वर्णपात्रेण ताम्रेण ब्रह्मतीर्थेन वा पुनः ।
यत्त्वगस्थिस्थितं पापं देहे तिष्ठति मानवे ॥

ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धन"मिति ।

तथा पादकृच्छ्रस्वरूपं,—

"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्त्तितः"॥

अयाचितेन स्वप्रेरणाविरहपूर्वकस्वयाञ्चारहितेन।

एकभक्तादीनां ग्राससंख्यातु—

"सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः।
चतुर्विंशत्ययाच्याश्च परं निरशनं स्मृतम्"॥

सायंनक्ते,—प्रातरेकभक्ते—ग्रासस्थौल्यं तु,—

"कुक्कुटाण्डप्रमाणं तु यथास्यं सम्विशेत्-मुखम्"।

तथा प्राजापत्यकृच्छ्रस्वरूपं,—

"त्र्यहं प्रातः त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन् द्विजः"॥

ग्रासपरिमाणं तु पूर्ववत्।

तथाऽर्द्धकृच्छ्रस्वरूपं,—

"सायं प्रातस्तथैवैकं दिनद्वयमयाचितम्।
दिनद्वयं तु नाश्नीयात् कृच्छ्रार्द्धं तत् विधीयते"॥

तथातिकृच्छ्रस्वरूपं,—

"अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः"।

अयमेव प्राजापत्यकृच्छ्र एव। पाणिपूरान्नभोजन :—द्वाविंशत्यादि-ग्रासस्थाने त्रिदिनेष्वेकैकं स्वप्रसृतिमात्रभोजनं।

तथा कृच्छ्रातिकृच्छ्रस्वरूपं,—

"कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिं"॥

पयसा वर्त्तनमिति विशेषः जलेन।

तथा पराकस्वरूपं,—

"द्वादशाहोपवासेन पराकः परिकीर्त्तितः"।

तथा सौम्यकृच्छ्रस्वरूपं,—

"पिण्याकाचमतक्राम्बुसक्तूनां प्रतिवासरम्।
एकरात्रोपवासश्च सौम्यकृच्छ्रोऽयमुच्यते"॥

पिण्याकाचममादिवर्त्तनेन षड् दिनसाध्यो बोध्यः।

तथा तुलापुरुषाख्यकृच्छ्रस्वरूपं,—

"एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः"॥

एषां पिण्याकादीनां क्रमेणैकैकस्य त्रिरभ्यासात्पञ्चदशाहसाध्योऽयं कृच्छ्रः। पञ्चदशाहविधानादुपवासरहितः"।

तथा चान्द्रायणस्वरूपं,—

"तिथिवृद्ध्या चरेत्-पिण्डान् शुक्ले शिख्यण्डसम्मितान्।
एकैकं वर्द्धयेत्-पिण्डं शुक्ले कृष्णे च ह्रासयेत्॥
इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः"।

चन्द्रस्य ह्रासवृद्धिभ्यामयनमिवाचरणं यस्मिन् कर्म्मणि तच्चान्द्रायणं-मन्नायां दीर्घः"। इदं यववत् प्रान्तयोरल्पत्वेन मध्ये स्थूलत्वेन च यवमध्य-मित्युच्यते।

"अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु।
धर्म्मार्थं यश्चरेदेतच्चन्द्रस्येति सलोकताम्॥
यच्चोक्तं यच्च वा नोक्तमिह पातकनाशनम्।
प्राजापत्येन कृच्छ्रेण शोधयेन्नात्र संशयः"॥

कृच्छ्रचान्द्रायणादीनामितिकर्त्तव्यतामाधारणमिदानीं प्रदर्श्यते निबन्ध:।

यथा तत्रैव,—

"कृत्वा त्रिसवणस्नानं कृच्छ्रे चान्द्रायणे तथा ।
पवित्राणि जपेत्-पिण्डान् गायत्र्या परिमन्त्रयेत्" ॥

कृच्छ्रे प्राजापत्यादिके—

"सावित्रीञ्च जपेन्नित्यं पवित्राणि च सर्वशः ।
महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम् ॥
अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्या चाभिमन्त्रितम् ।
प्राश्याचम्य पुनः कुर्य्यादपरस्याभिमन्त्रणम् ॥
पूर्वं व्रतं गृहीत्वा तु नाचरेत-काममोहितः ।
जीवन् भवति चण्डालो मृतस्तत्रैव जायते" ॥

चरेत् भक्षयेत् ।

अथ यथा व्रतग्रहणविधिस्तत्रैव,—एतानि कृच्छ्रचान्द्रायणादीनि पाप-प्रायश्चित्तार्थमनुष्ठीयन्ते । तदा केशवपनपूर्व्वकं व्रतात् पूर्व्वद्युः सायं काले-गृहीतव्यानि, अभ्युदयार्थं तु नैव वपनम् ।

"सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकम् ।
ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते ॥
दीयते नखरोमादीन् प्रवाप्य स्नानमाचरेत् ।
भस्मगोमयमृद्वारि पञ्चगव्यानि कल्पयेत् ॥
मलापकर्षणं कार्य्यं वाह्याशौचोपशुद्धये ।
दन्तधावनपूर्वेण पञ्चगव्येन संस्कृतम् ।
व्रतं निशामुखे ग्राह्यं वहिस्तारकदर्शने ॥
आचम्याणः परं मौनी ध्यायन् दुष्कृतमात्मनः ।
मनःसन्तापनं तीव्रमुद्वहेच्छोकमन्ततः" ॥

दिनान्ते व्रतस्य दिनस्य पूर्वंद्युः सायं वह्निः ग्रामाद्बहिः ।

"आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शालाग्नौ जुहुयाद्व्याहृतीः पृथक् ॥
गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलमनुलेपनम् ।
व्रतस्थो वर्जयेत्-सर्वं यच्चान्यद्-बलकारकम्" ॥

स्त्रियाप्येवं व्रतपरिग्रहः कार्य्यः केशनखरोमवपनवर्ज्जं ।

"विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनं ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः" ॥

इति वचनात् ।

कृच्छ्राणामेतेषां कर्त्तव्यत्वाशक्तावुक्तो धेनुदानविधिस्तत्रैव । यथा,—

"प्राजापत्ये भवेद्धेनुः तिस्रः सान्तपने तथा ।
पञ्च चान्द्रायणे प्रोक्ताः चतस्रो-वाथ धेनवः ॥
पराके द्वे तु निर्द्दिष्टे तप्तकृच्छ्रे तथैव च ।
द्वेऽतिकृच्छ्रे समाख्याते धेनुः पञ्चपुराणिका ॥
कृच्छ्रे पञ्चातिकृच्छ्रे द्विगुणमहरहस्त्रिंशदेव तृतीये ।
चत्वारिंशच्च तप्ते तदनु च रचयेत्-सार्द्धमासं पराके ॥
कृच्छ्रे सान्तापनाख्ये भवति षड्धिका विंशतिः सैव हीना ।
द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशवलो भोजयेद्विप्रमुख्यान् ॥
पञ्चाहे तु चरेत्-कृच्छ्रं दशाहे तप्तकृच्छ्रकम् ।
पराकस्त्वर्द्धमासे स्यान्मासे चान्द्रायणं चरेत् ॥
मासत्रये तु कुर्व्वीत कृच्छ्रं चान्द्रायणद्वयम् ।
षाण्मासिकव्रते तावत्-कृच्छ्रार्द्धमभिधीयते" ॥

वाक्यमिदं न साधारणं किन्तु शक्त्यपेक्षया प्रयोज्यं । कृच्छ्रार्द्धमतिकृच्छ्रं ।

अथ वार्षिकव्रतविधिस्तत्रैव । "वर्षेण साध्यं कर्म वार्षिकं ।

तत्र सुमन्तुः,—

"यद्यप्यसकृदभ्यस्तं बुद्धिपूर्वमघञ्च यत् ।
तच्छुद्धात्यवकृच्छ्रेण महतः पातकादृते" ॥

अब्दकृच्छ्राशक्तौ,—

"प्राजापत्यक्रियाशक्तो धेनुं दद्यात् विचक्षणः ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः ॥
गवामभावे निष्कं स्यात्तदर्द्धं पाद एव वे"ति । पराशरः ।

तदभावे गायत्रीजप उदवासो वा कार्य्यः ।

"कृच्छ्रेऽयुतं हि गायत्र्या उदवासस्तथैव च ।
धेनुप्रदानं विप्राय सममेतच्चतुष्टयम्" ॥ इति पराशरः ।

उदवास उदकसमीपे वासः । तथा वाक्यं,—देशकालवाक्यानन्तरं ममैतज्जन्मप्रभृतिबुद्धिपूर्व्वसकृदत्यन्ताभ्यासकृतमहापातकव्यतिरिक्तोपपातकादिक्षयार्थं सुमन्तूक्तानां त्रिंशत्कृच्छ्राणां कर्त्तव्यत्वेन प्राप्तानां साक्षादनुष्ठानाशक्तौ तत्प्रतिनिधित्वेन प्रतिप्राजापत्यमेकैकधेनुव्यवस्थया त्रिंशद्धेनूनां दातव्यत्वेन प्राप्तानां साक्षाद्दानासम्भवे प्रतिधेनु निष्कनिष्कार्द्धनिष्कपादव्यवस्थया यावद्भवति तावत्-परिमितमग्निपुराणोक्तमग्निदैवतं काञ्चनं तुभ्यमहं संप्रददे । तेभ्यो-दातुमहमुत्सृज इति वा ।

अथ द्वैवार्षिकव्रतविधिर्यथा,—

"जन्मप्रभृति यत्किञ्चित्-पातकं तूपपातकम् ।
तावदावर्त्तयेत्कृच्छ्रं यावत् षष्टिगुणं भवेत्" ॥

वाक्यं,—ममैतज्जन्मप्रभृति-ज्ञानाज्ञानसकृदत्यन्ताभ्यासकृतमहापातकातिपातकव्यतिरिक्तपापक्षयार्थं षष्टिकृच्छ्राणां कर्त्तव्यत्वेन प्राप्तानामित्यादि सर्वं पूर्व्ववत् । त्रिंशद्धेनूनामित्यत्र षष्टिधेनूनामिति विशेषः ।

अथ त्रैवार्षिकव्रतविधिः।

यथा,—

"त्रैवार्षिकं भ्रूणहत्यायामुदक्यागमे तथा।

गोवधे च तथा कुर्य्यात्-परस्त्रीगमनेऽपि च" ॥

वाक्यं,—एतज्जन्मप्रभृतिभ्रूणहत्यादिजनितपापक्षयार्थं शङ्खोक्तानां नवतिकृच्छ्राणामिति। सर्वं पूर्ववत्। षष्टिधेनूनामित्यत्र नवतिधेनूनामिति विशेषः।

अथ षाड्‌वार्षिकव्रतविधिः।

यथा,—

"जन्मप्रभृति पापानि विविधानि बहूनि च।

कृत्वार्वाक् ब्रह्महत्यायाः षड़ब्दं कृच्छ्रमाचरेत्" ॥

वाक्यं,—एतज्जन्मप्रभृतिब्रह्महत्यादिमहापातकव्यतिरिक्तबहुविधपापक्षयार्थं अशीत्यधिकशतकृच्छ्राणां कर्त्तव्यत्वेनेत्यादि। सर्वं पूर्ववत्। अशीत्यधिकशतधेनूनामिति विशेषः।

अथ द्वादशवार्षिकव्रतविधिः।

यथा अकामकृतविषये,—

"रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।

व्रतेनानेन शुध्यन्ति महापातकिनस्त्विमे" ॥

अनेन द्वादशवार्षिकेण। वाक्यं,—एतज्जन्मप्रभृत्यकामकृतसकृदत्यन्ताभ्यासजनितब्रह्मवधादिमहापातकक्षयार्थं शङ्खोक्तानां षष्टाधिकशतत्रयाणांकृच्छ्राणां कर्त्तव्यत्वेनेत्यादि। सर्वं पूर्ववत्। षष्टाधिकशतधेनूनामिति विशेषः। धेनुदानासमर्थेऽयुतजपस्य एककृच्छ्रप्रतिनिधित्वोक्तेर्यावत्कृच्छ्रानुरूपं कार्य्यं। अथवा सप्तधेनुदानमिति गौतमः, वाक्यं,—ममैतज्जन्मप्रभृतिज्ञानाज्ञानतःसकृदत्यन्ताभ्यासकृतमहापातकातिपातकव्यतिरिक्तसर्वपापक्षयार्थं कृच्छ्रातिकृच्छ्रचान्द्रायणाचरणं प्राप्तं, तदशक्तौ कृच्छ्रे धेनुरतिकृच्छ्रे धेनुद्वयं चान्द्रायणेधेनुचतुष्टयमिति तत्प्रतिनिधित्वेन सप्तधेनवो दातव्यत्वेन प्राप्ताः सम्प्रति-

तासासम्भवे प्रतिषेनु निष्कपादव्यवस्थया यावद्भवति तावत्परिमितं काञ्चनं-तुल्यमित्यादि" ।

अथ पापोद्देशोल्लेखपूर्वकं पापस्वरूपपापभेदनिरूपणं ।

पापोद्देशे विष्णुर्यथा प्रायश्चित्तविवेके,—

"अथ पुरुषस्य कामक्रोधलोभाख्यरिपुत्रयं सुघोरं भवति परिग्रहप्रसङ्गा-दर्थात् विषयप्रसङ्गात् विशेषेण गृहाश्रमिणस्तेन रिपुत्रयेणायमाक्रान्तोऽति-पातकमहापातकानुपातकोपपातकेषु वर्त्तते जातिभ्रंशकरेषु संकरीकरणेषु-अपात्रीकरणेषु मलावहेषु प्रकीर्णकेषु" । अनेन नवविधत्वं पापस्योक्तं । किं-तावत्पातकं ? तत्र महापातकाधिकारे मनुः—

"असम्भाष्या असंयोज्या अविवाह्या ह्यपाठिनः ।
चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः" ॥

अतो महापातकेषु द्विजातिकर्म्मानधिकारः, एतद्विहितद्वादशवार्षिक-प्रायश्चित्तापनेयत्वादतिपातकानुपातकयोरपि । अतो द्वादशवार्षिकप्रायश्चित्ता-पनेयार्हं पापं पतनं । द्विजातिग्रहणं प्राधान्यार्थं शूद्रस्यापि वाक्यान्तरेण पातित्याभिधानात् ।

अथवा द्विजातिकर्म्मानधिकारापादकं पातकं पतनं । अनधिकारश्च-महापातके श्रुत एव, अनुपातकेऽपि तत्समत्वादुपपातकादौ क्वचित्पततीति-श्रुतेः, अतिपातके च ततो गुरुत्वाल्लभ्यते । यद्वा महापातकानपकृष्ट-पातकं पतनं अनुपातकस्य तत्समत्वादुपपातकादेश्च क्वचित् पततीत्यभिधा-नात् अपकर्ष एव । अतः सद्यः पतति मांसेनेति, शूद्रावेदी पतत्यत्रेरित्यादि-मनुवचनं निन्दार्थं । तथापि पतितशब्दोऽयं पापकारिवचनः ।

यथाह मनुः,—

"यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये" ॥

तथाच कुल्लूकभट्टः,—यो येनेति, पतितशब्दोऽयं पापकारिवचनः सकल-पापानामविशेषपाठात् । एषां पतितानां मध्ये यो येन पापकारिणा सह-

पूर्वोक्तं संसर्गं करोति स तस्यैव व्रतरूपं प्रायश्चित्तं कुर्य्यात्, न तु मरणान्तिक-मित्यभिहितं। तदपि व्रतं संसर्गिणा क्रियमाणं ब्रह्महा द्वादश समा-इत्यादिकं पादहीनं कर्त्तव्यं।

तथाच व्यासः,—

"यो येन संसृजेद्वर्षं सोऽपि तत्समतामियात्।
पादन्यूनं चरेत् सोऽपि तस्य तस्य व्रतं द्विजः" ॥

तथाच विज्ञानेश्वरः,—"ननूपपातकादीनां कथं पातकत्वं पतनहेतुत्वा-भावात्। यदि तेषामपि पतनहेतुत्वं तर्हि मातृपितृसम्बन्धाद्-इत्यादि-परिगणनमनर्थकं। अत्रैवमुच्यते—यद्यपि महापातकतत्समेष्विव सद्यः—

पातित्यहेतुत्वं नास्ति तथाप्यभ्यासापेक्षया पातित्यहेतुत्वमविरुद्धं। निन्दितकर्म्माभ्यासी गौतमवचनादिति। अभ्यासस्तु तस्मिन्निन्दितकर्म्मणि-यावत्यभ्यस्यमाने महापातकतुल्यत्वं भवति तावानभ्यासः पातित्यहेतुः।

युक्तमतोऽभ्यासापेक्षयोपपातकादेः पतनहेतुत्वमिति।"

प्रकृतमभिधीयते। मनुना अष्टविधं पापं महापातकादिप्रकीर्णकान्त-मुक्तं—नातिपातकं ज्ञानादज्ञानाद्वा सकृदभ्यासाद्वा तत्र मरणान्तिकाभि-धानात्, तस्य चानिर्द्देशत्वात् तस्य चानिर्द्देशत्वमिति प्रायश्चित्तविशेषनिरूपणार्थं-एवहि पापविशेषनिर्द्देशः। अतिपातकप्रायश्चित्तस्य तु मरणस्य ज्ञानाज्ञान-सकृदभ्यासादिभिर्विशेषतो निरूपणाभावात् तत्पापस्य चानिर्द्देशत्वमिति भावः।

किमतिपातकं तदाह विष्णुः,—

"मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि"।

सम्प्रति महापातकादिनवविधपातकानां प्रत्येकं सप्रमाणतद्विवेचनोल्लेखपूर्वक-मुन्नाव्यते प्रायश्चित्तव्यवस्थाधस्ताद्यथाक्रमं। तत्र नवविधानामेतेषां पापानामन्तराले महापातकव्रातस्य प्रायश्चित्तानिशय्येन गुरुत्वादादितो-निरूप्यते महापातकव्रातं यथा,—

प्रायश्चित्तमनोहरे:—

"ब्राह्मणो न च हन्तव्यः सुरा पेया न च द्विजैः ।
ब्राह्मणस्वर्णहरणं न कर्त्तव्यं कथञ्चन ॥
गुरुपत्नीं न गच्छेत्तु न च तैः सङ्गमं चरेत् ।
महापातकसञ्ज्ञा तु निर्द्दिष्टैषा मनीषिभिः" ॥ इति ।

तत्र महापातकसामान्यप्रायश्चित्तानि । यथाह शङ्खः,—

"नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीं वने ।
अधःशायी जटाधारी पर्णमूलफलाशनः ॥
ग्रामं विशेत्तु भिक्षार्थी स्वकर्म्म परिकीर्त्तयन् ।
एककालं समश्नानो वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे" ॥ इति ।

विष्णुः,—

"अश्वमेधेन शुद्ध्येयुर्महापातकिनस्त्विमे ।
पृथिव्यां सर्वतीर्थानां तथाऽनुसरणेन वा ॥"

यथा देवलः,—

"तीर्थे पुण्यतमे यथावद्देहसन्न्यासात् ब्राह्मणो महापातकात् प्रमुच्यते। धर्म्मयुद्धे गोग्रहे ग्रामघातादिषु प्राणत्यागात् पूयते क्षत्रियः शस्त्रोपजीविनश्च ।" महापातकानुवृत्तौ च्यवनः,—"आसेतुदर्शनात् पूतो भवति अश्वमेधावभृथ-स्नानात् पूतो भवत्युभयशिरसं वा प्रदाय ब्राह्मणेभ्यः पूतो भवति । उभयतो-मुखी" ।

पराशरः,—

"चातुर्व्विद्योपसम्पत्तौ ब्रह्महा गुरुतल्पगः ।
सेतुं पश्येत्-समुद्रस्य प्रायश्चित्तं विनिर्द्दिशेत् ॥

सेतुबन्धं तथा पश्येल्लङ्कामार्गं महोदधेः ।
दशयोजनविस्तीर्णं शतयोजनमायतम् ।
रामभद्रसमादेशान्नलसञ्चयसञ्चितम्" ॥

प्रायश्चित्तमकृत्वा सेतुबन्धं पश्येदित्यर्थः ।

तथा ब्रह्मपुराणे,—

"एवं वै स्तूयमानस्तु देवदेवो महेश्वरः ।
उवाच राघवं वाक्यं भक्तिनम्रं पुरःस्थितम् ॥
त्वया चेह कृते स्थाने मदीये रघुनन्दन ! ।
आराध्यमानं मां राम पश्येयुरिह सागरे ।
महापातकयुक्ता वै तेषां पापं विनङ्क्ष्यति" ॥

अथ क्रमप्राप्तब्रह्मवधप्रायश्चित्तविवेचनं । तत्र ब्रह्मवधप्रायश्चित्तार्थं प्रथमं वध एव निरूप्यते । वधो नाम प्राणोत्क्रान्तिकारको व्यापारविशेषः । तत्राहाग्नेय-पुराणे,—"स्यात् प्राणवियोगफलो व्यापारो हननं स्मृतमिति" । स च द्विविधः,-कामकृतोऽकामकृतश्च । कामकृतोऽपि द्विविधः । सगुणब्राह्मणवधो निर्गुण-ब्राह्मणवधश्च ।

यथाहाद्ये भविष्यपुराणे,—

"सगुणैर्विहिते कामान्निष्कृतिर्न विधीयते" ।
सगुणं ब्राह्मणं बालं मातरं पितरं गुरुम् ।
यो हन्यात्-बुद्धिपूर्वन्तु भवेत्तस्य प्रवासनम्" ॥

मनुरपि,—

"कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ।"

व्यासोऽपि,—

"कामतो ब्राह्मणवधे जीवतो नास्ति निष्कृतिः" ।

अङ्गिराः,—कामकारानुवृत्तौ,—

"शरीरं न दहेद्‌यावत् ब्रह्महा पापकृत्तमः ।
तावत्तस्य न शुद्धिः स्यात्-भगवान्मनुरब्रवीत् ॥
प्राणान्तिकं तु यत्-प्रोक्तं प्रायश्चित्तं मनीषिभिः ।
तत्तु कामकृतं प्राप्य विज्ञेयं नात्र संशयः" ॥

आदित्यपुराणे,—"कामतो मरणान्तिकीति ।"

कामकृतलक्षणमाह हारीतः,—

"मनसा संकल्पयति वाचा वदति कर्म्मणा करोतीति कामकृतं । द्वितीयपक्षे कामकृतनिर्गुणब्राह्मणवधे चाह,—

भविष्यपुराणे,—

"जातिमात्रे हते विप्रे कामतो यद्‌व्रवीत् शृणु ।
चरेद्‌द्वादशवर्षाणि कृत्वा शवशिरोध्वजम्" ॥ इति ।

अकामकृतब्राह्मणवधोऽपि द्विविधः । सगुणब्राह्मणवधो निर्गुणब्राह्मण-वधश्च ।

आद्ये आह भविष्यपुराणे,—

"हनने गुणयुक्तस्य एतदेव प्रकीर्त्तितम् ।
अकामतः सुरश्रेष्ठ ! ऋषिभिर्गौतमादिभिः" ॥

एतदेव द्वादशवार्षिकमेव ।

"ब्राह्मणो ब्राह्मणं हन्याज्जातिमात्रो गुणान्वितम् ।
प्रायश्चित्तमिदं कुर्य्यादेकं पापविशुद्धये ॥
ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ।
अबुद्धिपूर्वं भिक्षाशी कृत्वा शवशिरोध्वजमिति" ॥

शवशिरोध्वजमिति —शवशिरोऽन्वितं ध्वजं चिह्नं कृत्वेत्यर्थः । शवशिरश्च-हतब्राह्मणस्यैव । "ब्राह्मणं हत्वा तस्य शिरः कपालमादायेति" शातातपवचनात् । तदलाभे तज्जातीयं कार्य्यमित्येके ।

द्वितीयमाह भविष्यपुराणे,—

"कपाली देवशार्दूल ! भिक्षाशी पापशुद्धये
हत्वा चेद्गुणवान् धीर अकामान्निर्गुणो हतः।
ब्रह्महा द्वादशाब्दानि, कुटीं कृत्वा वने वसेदिति" ॥

तथाच मनुः, —

"ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्।
भैक्ष्याण्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजः ॥
भिक्षाशी विचरेद्ग्रामं वन्यैर्यदि न जीवति"।

एतेन द्वादशवर्षैः षष्ट्यधिकशतत्रयप्राजापत्यानि भवन्ति। कायेन तत्करणाशक्तौ षष्ट्यधिकशतत्रयधेनवो दातव्यत्वेन भवन्तीति। इदं द्वादशवार्षिकप्रायश्चित्तं साक्षाद्धन्तुरेवाकामकृतस्य"। "तथात्र जिकनोक्तं यथा,— यस्मिन् दिने गृहीतयावज्जीवव्रतसंकल्पस्तस्मिन्नेव दिने म्रियते तथापि शुद्धो भवति। तथा द्वादशवार्षिकव्रतारम्भेऽपि। न त्वाममासत्वादशुद्धिशङ्का कार्य्या। द्वादशवार्षिकादिविधिभिरेवास्यार्थस्य स्वहस्तितत्वात्। अन्यथा आममासिशङ्कया प्रवृत्त्यभावे विधिरनर्थकः स्यात्"।

यथाह बृहन्मनुः,—

"प्रायश्चित्ते व्यवसिते कर्त्ता यदि विपद्यते।
शुद्धस्तदहरेवासाविह लोके परत्र च" ॥ इति।

धर्म्मार्थव्रतेष्वेवमेव अङ्गिराः, —

"यो यदर्थं चरेद्धर्म्ममप्राप्य म्रियते तु तत्।
स तत्पुण्यफलं प्रेत्य प्राप्नुयान्मनुरब्रवीत्" ॥ इति।

निबन्धप्रमाणव्रातानुगत्या लिख्यते प्रायश्चित्तव्यवस्था संक्षेपतोऽधस्तात्।
अकामतो ब्राह्मणकर्त्तृकब्रह्मवधे प्रायश्चित्तानि।

यथा,—द्वादशवार्षिकव्रतं तदशक्तौ धेनुदानं।
तत्परिमाणं षष्ट्यधिकशतत्रयधेन्वात्मकं ॥

तदशक्तौ चूर्णीदानं धेनोरेकस्याः त्रिकार्षापणात्मकनिम्नतममूल्यानुसारेणाशीत्यधिकसहस्रकार्षापणपरिमितं। तन्नाभ्यर्हिरिण्यादिकं वा। दक्षिणाशतधेन्वात्मिका। तदशक्तौ त्रिशतकार्षापणाः। कामीतो ब्राह्मणकर्तृकब्रह्मवधेप्रायश्चित्तानि,—

याज्ञवल्क्योक्तप्रकारेण मरणं, तथा।

"लोमभ्यः स्वाहेति ऋचा लोम प्रभृति वै तनुं।
मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमं॥

एतत्तु कलौ ब्राह्मणेतरपरम्।

तदशक्तौ द्विगुणद्वादशवार्षिकव्रतं। तदशक्तौ धेनुदानं विंशत्यधिकमसशतधेन्वात्मकं, तदशक्तौ चूर्णीदानं षष्ट्यधिकैकविंशतिशतकार्षापणात्मकं। तन्नाभ्यस्वर्णादि वा। दक्षिणा द्विशतधेन्वात्मिका। तदशक्तौ षट्शतकार्षापणाः।

अथ तद्वधेऽनुग्राहकादीनां प्रायश्चित्तविवेचनं, संक्षेपार्थन्तु साक्षाद्वधककर्तृप्रयुक्त्यनुग्राहकानुमतिनिमित्तरूपकारणभेदात् पञ्चप्रकारो वधः।

ननु कया रीत्याऽनुग्राहकादीनां वधकारणत्वं तत्प्रकाश्यतेऽधः।

वधस्य पलायनादिनिरोधकोऽनुग्राहकः।

उद्देश्यत्वे सति हन्तुर्मन्युत्पादको निमित्ती। अत्र प्रयोजकस्य कर्त्तृप्रयुक्तिद्वारेण वधकारणत्वं, अनुमन्तुश्च हन्तुर्निर्भयत्वेन दृढतरप्रहारोत्पत्तिद्वारेण,-अनुग्राहकस्य पलायनाद्यसम्भवेन हननोयस्थैर्यं कुर्व्वतः प्रहारस्वरूपोत्पत्तिद्वारेण कारणत्वं, निमित्तिनो हन्तुर्मन्यूत्पादनद्वारेणेति। प्रयोजकादीनां-चतुर्णां व्यवहितहननकारणानां अवान्तरव्यापारप्रकारभेदाद्भेदः। अतः-पञ्चविधं वधित्वं"। ननु यदि व्यवहितस्यापि कारणत्वं तर्हि मातृपित्रोरपि-हन्तृपुरुषोत्पत्तिद्वारेण हननकर्त्तृत्वप्रसङ्गः। उच्यते। न हि पूर्वभावित्वमात्रेण-कारणत्वं। कारणतया अपि तथा भावित्वोपपत्तेः।

यत् खलु स्वरूपातिरिक्तकार्य्योत्पत्त्यनुगुणव्यापारयोगि भवति तद्धि कारणं।

यदि रथान्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् इति। रथान्तरसामतैव क्रतोरैन्द्रवायवाग्रतायां कारणं नहि तत्र सोमयागः-

स्वरूपेण कारणं व्यभिचाराच्च पित्रोरुत्पाद्यत्वविधकारणत्वप्रयोजिकत्वमिति-नातिप्रसङ्गः। अनेनैव न्यायेन धर्म्माभिसन्धिना निर्म्मितकूपवाप्यादौ प्रमाद-पतितब्राह्मणादिमरणे खानयितुर्दोषाभावः।

नहि कूपोऽनेन खनितः, अतोऽहमात्मानं व्यापादयामीत्येवं कूपखनन-निमित्तव्यापादनं, यथा क्रोधादौ, अतः कूपकर्त्तुरपि कारणत्वमेव न पुन-र्हिंसाहेतुत्वमिति मातापितृतुल्यतैव"। तथाच क्वचित् सत्यपि हिंसानिमि-त्तयोगित्वे परोपकारार्थप्रवृत्तौ वचनाद्दोषाभावः।

यथाह सम्वर्त्तः,—

"बन्धने गोश्चिकित्सार्थे गूढ़गर्भविमोचने"—इत्यादि।

साक्षाद्वधकर्त्तुः प्रायश्चित्तमुक्तं, प्रयोजकस्य वधभागित्वमाह—

आग्नेयपुराणे,—

"रागाद्-द्वेषात्-प्रमादाच्च स्वतः परत एव वा।
ब्राह्मणं घातयेत् यस्तु तमाहुर्ब्रह्मघातकम्" ॥ इति ॥

अत्र परत इत्युपादानादनुग्राहकस्य वधभागित्वमाह मनुः,—

"बहूनामेककार्य्याणां सर्व्वेषां शस्त्रधारिणाम्।
यद्येको घातकस्तेषां सर्व्वे ते घातकाः स्मृताः" ॥

अनुमन्तेरपि वधभागित्वमाहापस्तम्बः,—योजयितानुमन्ता कर्त्ता चेति।" तत्रानुग्राहको नववार्षिकं कुर्य्यात्। प्रयोजकस्तु षड्वार्षिकं, अनुमन्ता पुनः-सार्द्धचतुर्वार्षिकमिति विज्ञानेश्वरः।

निमित्तिनोऽपि वधभागित्वमाह—विष्णुः,—

"आक्रुष्टस्ताड़ितो वापि धनैर्वा परिपीड़ितः।
यमुद्दिश्य त्यजेत्-प्राणांस्तमाहुर्ब्रह्मघातकम् ॥
ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव वा।
यमुद्दिश्य त्यजेत्-प्राणांस्तमाहुर्ब्रह्मघातकम्" ॥

यद्यपि साक्षाद्धन्तुरेव ब्रह्मघातित्वं वक्तुमुचितं तथापि तत्र मुख्यं घात-गौणं इति व्यवस्थातव्यं। तत्र प्रायश्चित्ताल्पकत्वात्।

भविष्यपुराणेऽपि,—

"ससम्बन्धं यदा विप्रो हत्वात्मानं मृतो गुरु !।
निर्गुणः सहसा क्रोधात् गृहक्षेत्रादितो विभो !॥
त्रैवार्षिकं व्रतं कुर्य्यात्-ब्रह्मचर्य्यं चरन् वने।
एवं शुद्धिमवाप्नोति हत्वा विप्रो मृतो यदि"॥

ससम्बन्धमिति अन्यायेन गृहीतधनभूम्यादिकं पुरुषं प्रति यदि क्रोधात्-आक्रोशरणादिना यमुद्दिश्यात्मानं विप्रो हन्यात् स तद्वधनिमित्तत्वात् ब्रह्महेति-व्यपदिश्यते। न तु मुख्यत्वेन ब्रह्मवधजनकोऽयमिति सुमन्तुः,—

"तिरस्कृतो यदा विप्रो हत्वात्मानं मृतो यदि।
निर्गुणः सहसा क्रोधाद्गृहक्षेत्रादिकारणात्॥
त्रैवार्षिकं व्रतं कुर्य्यात् प्रतिलोमां सरस्वतीं।
गच्छेद्वापि विशुद्ध्यर्थं तत्पापस्येति निश्चितम्॥"

निरुक्तप्रमाणद्वन्द्वानुगतव्यवस्थो ज्ञाप्यते लाघवेन निरूतः। यथा प्रायश्चित्तानि,—

यदेव साक्षात् वधकर्त्तुः प्रायश्चित्तं, तदेव स्वल्पप्रहर्त्तुरनुग्राहकस्य अप्रवृत्त-प्रवर्त्तकरूपप्रयोजकस्य च पादहीनं। वध्यप्रतिरोधकस्यानुग्राहकस्य प्रवृत्त-प्रवर्त्तकरूप प्रयोजकस्य च अर्द्धं। अनुमन्तुर्निमित्तिनश्च पादः। अशक्तौ-स्त्रीबालवृद्धानां सर्वत्राद्धं। तदशक्तौ धेनुदानं तद्द्विगुणं। तदशक्तौ वराटक-दानं त्रिगुणकार्षापणात्मकं। दक्षिणादानं तद्द्विगुणं।

अथ सवनस्थवधप्रायश्चित्तविवेचनं तथा वध्यब्राह्मणस्य विशेषेण प्रायश्चित्त-गौरवमुक्तं याज्ञवल्क्येन,—

"द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्"।

सवनस्थः यज्ञस्थः।

तथा भविष्ये,—

"बालं वृद्धं गुरुञ्चैव स्त्रियं वीर ! रजस्वलाम्।
ब्राह्मणं यजमानञ्च हत्वा निष्कृतिमाचरेत्॥
चरित्वा द्वादशाब्दानि वीर ! ब्रह्महणो व्रतम्।
गोसहस्रं ततो दद्यात् ब्राह्मणेभ्यः शताधिकम्॥
अथवा कल्पयेद्-वीर। हन्तुर्द्रव्याद्यपेक्षया।
प्रायश्चित्तं महाबाहो ! यथावत्-शृणु सुव्रत !॥
द्रव्यहीनो यदा हन्ता बालादीनां सुराधिप !।
चरित्वा द्वादशाब्दानि सेतुबन्धं च पश्यति"॥

शताधिकगोसहस्रदानव्रतदक्षिणागौरवाद्गौरवं प्रायश्चित्तस्य एतच्चाप्य-त्यन्तधनवतः।

धनाभावे व्रतं कृत्वा सेतुबन्धं पश्येत्। सेतुबन्धदर्शनस्य द्वादशवार्षिक-व्रतवैकल्पिकत्वात्। व्रतद्वैगुण्यमप्यूहनीयं।

अकामतः सवनस्थब्राह्मणवधः,—प्रायश्चित्तानि,—

ब्रह्मवधप्रायश्चित्तं। द्विगुणद्वादशवार्षिकव्रतं। तदशक्तौ विंशत्यधिक-सप्तशतपरिमितधेनुदानं। तदशक्तौ वराटकदानं तु षष्ट्यधिकैकविंशतिशत-परिमितकार्षापणात्मकं। तथा कामतः सवनस्थब्राह्मणवधः। प्रायश्चित्तानि,—तत्-द्वैगुण्यं। अष्टचत्वारिंशद्वार्षिकव्रतं। तदशक्तौ धेनुदानं चत्वारिंशदधिक-चतुर्दशशतधेन्वात्मकं। तदशक्तौ वराटकदानं, तत्-त्रिगुणकार्षापणात्मकं।

अथ ब्राह्मणकर्तृकमातृसोदरादिवधप्रायश्चित्तविवेचनम्।

तथा, भविष्ये,—

"मातरं पितरं हत्वा सोदर्य्यं भ्रातरं तथा।
गुरुं हत्वा श्रोत्रियञ्च आहिताग्निमथापि वा॥
आ-उत्तमादुदुच्छ्वासाद्व्रतं चीर्त्वा विशुध्यति"।

श्रोत्रियः साङ्गसकल्पसमस्तैकशाखाध्यायी। आ उत्तमादुदुच्छ्वासादित्यनेन

यावज्जीवव्रताचरणमुक्तं। एतच्च द्विगुणद्वादशवार्षिकव्रतसमं बोद्धव्यं गुरुवधे-पूर्ववचने द्वैगुण्यस्योक्तत्वादत्र च तत्साहचर्य्यात् द्वैगुण्यं बोद्धव्यम्।

तथा ब्रह्मपुराणे,—

"यज्ञसंस्थौ तु पितरौ राजानं चापरनागसम्।
हत्वा चरेद्-व्रतं तत्तु चतुर्विंशतिवत्सरान्"॥

"भवदेवेन तूक्तं जीवनकालस्यानियतत्वात् त्रिंशत्यधिकशतस्य यावदवशिष्टं तावत्परिमाणमशक्तव्रतानुरूपा धेनवो दातव्या इति। "तच्चिन्त्यं उक्तब्रह्मपुराणवचनविरोधात्।" तच्चिन्त्यमिति बालं हत्वमित्याद्युक्तभविष्यपुराणवचनविरोधोऽपि मन्तव्यः।

निरुक्तप्रमाणानुगतप्रायश्चित्तव्यवस्था। यथा,—ब्राह्मणकर्तृकमातृसोदरभ्रातृगुरुश्रोत्रियाहिताग्नीनां वधे प्रायश्चित्तानि। अष्टचत्वारिंशद्वार्षिकव्रतं-एतच्च कामतः, अकामतः एतदर्द्धं। तदशक्तौ धेनुदानं चत्वारिंशदधिकचतुर्द्दशशतसंख्याकं। तदशक्तौ तत्त्रिगुणकार्षापणपरिमितं वराटकदानं। तत्तुल्यस्वर्णादि वा। दक्षिणा तु चतुःशतगावः, अशक्तौ तत्त्रिगुणकार्षापणाः।

अथ ब्राह्मणकर्तृकवेदपारगाततायिब्राह्मणवधप्रायश्चित्तविवेचनं।

तथा भविष्ये,—

"हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगं।
कामतोऽपि चरेद्-वीर! द्वादशाब्दाख्यमुत्तमम्"॥

एतदत्यन्तोत्कृष्टगुणाततायिवधविषयं। एवम्भूताततायिब्राह्मणवधे कामतोऽपि द्वादशवार्षिकव्रतमेव।

प्रोक्तप्रमाणानुगतव्यवस्था। यथा,—ज्ञानतो ब्राह्मणकर्तृकवेदपारगाततायिब्राह्मणवधे प्रायश्चित्तानि, द्वादशवार्षिकव्रतं। तदशक्तौ धेनुदानं षष्ट्यधिकशतत्रयसंख्याकं। तदशक्तौ वराटकदानं तत्त्रिगुणकार्षापणात्मकं, तत्तुल्यस्वर्णादि वा। दक्षिणा तु शतधेन्वात्मिका, अशक्तौ तत्त्रिगुणकार्षापणसंख्यका। अज्ञानतस्तद्वधे प्रायश्चित्तानि तदर्द्धं। यथात् षाड्वार्षिकव्रतं। तदशक्तौ धेनुदानं अशीत्यधिकशतसंख्यकं। तदशक्तौ वराटकदानं तत्त्रिगुण-

कार्षापणात्मकं । दक्षिणा तु पञ्चाशद्गावः तदशक्तौ तन्निगुणकार्षापणाः ।
अथैतदतिरिक्ताततायिवधे दोषाभावं प्रदर्शयति मनुः यथा,—

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते आततायिनः ॥
आततायिनमायान्तं वेदवेदाङ्गपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥"

"ननु आततायी ब्राह्मणो हन्तव्य इति यत्तदर्थविषयं शास्त्रं । ब्राह्मणो-न हन्तव्य इति धर्म्मशास्त्रं । द्वयोर्विरोधे धर्म्मशास्त्रं बलीयः ।

"अर्थशास्त्रं समुत्सृज्य धर्म्मशास्त्रं समाचरेत्" ।

इति वचनात् ।

तेन आततायिनमपि ब्राह्मणं न हन्यादित्यर्थः ।

अथैकब्राह्मणस्य युगपदनेकब्राह्मणवधे विशेषमाह,—

भविष्ये,—

"ब्राह्मणं ब्राह्मणो वीरो ब्राह्मणानथवा बहून् ।
निहत्य युगपत्-वीर ! एकं प्राणान्तिकं चरेत् ॥
किन्त्वत्र सुरशार्द्दूल ! विशेषं वदतः शृणु ।
बुद्धिपूर्वाबुद्धिपूर्वविकल्पं शृणु पुत्रक ! ॥
अकामतो यदा हन्यात्-ब्राह्मणो मानवो गुह ! ।
अरोहने तदा घोरे यावत्स्यात्प्राणपरिक्षयः ॥
कामतस्तु यदा हन्याद्-ब्राह्मणान् सुरसत्तम ! ।
तदात्मानं दहेदग्नौ विधिना येन तत्शृणु ॥"

ननु किमेकजातीयेष्वनेकपातकेष्वाहत्तं प्रायश्चित्तमुत तन्त्रेणेति तत्र महा पातकजातीयेषु कामकृतेषु तन्त्रता न सम्भवत्येव । अग्निप्रवेशाग्निवर्णसुरा पानसुवर्णपातनव्यत्सूर्मीसमालिङ्गनानां मरणप्रकाराणां भिन्नत्वात् । न

चाकामकृतेषु महापातकजातीयेषु ब्रह्मवधजातीयेषु वा एकप्रायश्चित्तं प्रति-प्रधानं गुणावृत्तेरेव युक्तत्वात् वचनाभावाच्च प्रत्युतावृत्तिमाहतुर्मनुदेवलौ,—

"यस्मादनभिसन्धाय पापं कर्म्म सकृत्कृतं ।
तस्यैव निष्कृतिः प्रोक्ता धर्म्मविद्भिर्मनीषीभिः ॥
विधिः प्राथमिकादस्माद्-द्वितीये द्विगुणं भवेत् ।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः" ।

तथा,—"एनसि गुरुणि गुरूणि, लघुनि लघूनि" इति गौतमवचनात् ।
तथा यमः,—

"गोघ्नवद्विहितः कल्पः चान्द्रायणमथापि वा ।
अभ्यासे तु तयोर्भूयस्ततः शुद्धिमवाप्नुयात् ॥"

तयोः प्रकृतिविकृतिभूतयोरित्यर्थः अर्थात् गोवधत्रिविधसुरेतरमद्य-पानयोः—प्रकृतिविकृतिभूतयोरभ्यासे भूयः पुनरपि तदेव प्रायश्चित्तं कुर्य्या-दित्यर्थः ।

तथापस्तम्बः,—

"सवर्णायामनन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्युपदिशन्ति । द्वितीये-ऽर्द्धपादः तृतीये त्रिपादः चतुर्थे सर्वमिति" । यस्मात् पापात् पुरुषः पतितो-भवतीत्युपदिशन्ति मन्वादिमुनिस्तस्य महापातकस्य पादश्चतुर्थांशः सकृत्-सवर्णागमने भवतीत्यर्थः स्वयमेव व्याख्यास्यते द्वितीये द्विपादः; तृतीये-त्रिपादः, चतुर्थे सर्वमिति । किञ्च एकैकस्मै वा कामायान्ये यज्ञक्रतव आह्रियन्ते-सर्वेभ्यो दर्शपौर्णमासावित्यत्र सकृत् कृतेनैव दर्शपौर्णमासेनानेकफलसिद्धेर्ना-वृत्तिः, स्यादिति योगसिद्ध्यधिकरणविरोधः । एकैकस्मा इति क्रतुः ससोमोको यागः । तदन्यो यज्ञः, अन्ये दर्शपौर्णमासादितरे ये यज्ञक्रतवः ते एकैकस्मै विधिबोधिताय कामायाह्रियन्ते । दर्शपौर्णमासौ तु सर्वेभ्योऽग्निष्टोमवाज पेयादिसर्वयज्ञोक्तफलेभ्यो भवतः । अत्र सकृत् कृतेनैव दर्शपौर्णमासेन-यदि सर्वफलसिद्धिः स्यात्तदा दर्शपौर्णमासावृत्तिर्न स्यात् ततश्च योगसिद्ध्यधि-करणविरोधः, यत्रानेकजातीयफलान्येकप्रयोगान्न सिध्यन्तीति सिद्धान्तस्तद्-

योगसिद्धाधिकरणं, ततश्च कामनादिभेदात्—यथा दर्शपौर्णमासावृत्तिस्तथा त्रापि महापातकभेदात् प्रायश्चित्तावृत्तिरित्यर्थः। इति गोविन्दानन्दः। "किञ्च-सकृत्कृतादेव ज्योतिष्टोमात् सकलस्वर्गव्यक्तिसिद्धौ नावृत्तिः स्यादिति कर्मणि-प्रारम्भाधिकरणविरोधः स्यात्। किञ्च तन्त्रतापक्षे सकृत्कृतादेव ब्रह्मवधा-द्यनेकपापोत्पत्तिः स्यात्। किञ्च प्रयोगविध्यैक्ये हि तन्त्रता दृष्टा, प्रयाजा-दीनामिवाग्नेयादित्रितयोपकारकाणां नचात्र तथा प्रयोगविधीनामपूर्वाणां-भिन्नत्वात्। किंच ब्राह्मणो न च हन्तव्य इति। तदिति ब्रह्महत्यामित्येक-वचनमपि श्रूयते। अतः कथं तन्त्रता "इति शूलपाणिः।" इदानीं सजातीये-ब्रह्मवधान्तरे तन्त्रतां निरस्यति किंचेति—यत्र सजातीयान्यनेकफलान्येक-प्रयोगात्र सिध्यन्ति इति सिद्धान्तस्तत्कर्मण्यारम्भाधिकरणं। तथाचोक्तं-कर्माण्यारम्भभाव्यत्वात्। प्रतिफलमावृत्तिरिति कर्मणि यत्फलं तस्यारम्भ-भाव्यत्वात् आरम्भजन्यत्वात्। प्रतिफलं कर्मणामावृत्तिरित्यर्थः। अतः-षष्टिवर्षोपभोग्यफलस्य सकृज्ज्योतिष्टोमारम्भजन्यत्वात् अपरषष्टिवर्षफलं प्रति-पुनरारम्भः इति सिद्धान्तः, ततश्च तन्त्रतायां तद्विरोधः स्यादित्यर्थः,-अनेकपापोत्पत्तिः स्यादित्यादि। ननु बहूद्देशेन सकृदनुष्ठानं तन्त्रतेति-वक्ष्यते नात्रानेकपापानामुद्देश्यत्वं अतः कथमनेकपापोत्पत्तिप्रसङ्गः। सत्यं-अनेकफलकं सकृदनुष्ठानं तन्त्रतेति परमतमवलोक्य—उक्तं स्वमते तु तन्त्रता-लक्षणं, पश्चाद् वक्ष्यते इति भावः। प्रयाजादीनामिति, आग्नेयोऽष्टकपालो-भवति। ऐन्द्रं दधि भवत्यमावास्यायां, ऐन्द्रं पयो भवत्यमावास्यायामिति-यागत्रयं तेषां प्रयाजेयाजसंयाजानुयाजयाजाः पञ्चाङ्गानि तेषां तन्त्रता-दर्शपौर्णमासप्रयोगविध्यैक्ये एव दृष्टा। न चात्रेति तथा प्रयोगविध्यैक्यं-पापभेदेन प्रायश्चित्तप्रयोगजन्यानामपूर्वाणां भिन्नत्वात् प्रायश्चित्तापूर्वस्तु-नाशकमदृष्टद्वयमावात् प्रागङ्गीकृतमस्तीति। इति प्रायश्चित्तविवेकटीका-कारः। तर्हि तन्त्रतेत्याकाङ्क्षायामुच्यते यथा प्रायश्चित्तविवेके, 'बहूद्देशेन-सकृदनुष्ठानं तन्त्रता, एकफलोद्देशेन सकृदनुष्ठानेऽपरफलसिद्धौ प्रसङ्गः। हेतुश्च तन्त्रतायाः अदृष्टार्थस्य कर्मणः एकजातीयस्य देशकालकर्त्रा-दीनामैकत्वे उद्देश्यविशेषाग्रहः नतु प्रयोगविध्यैक्यमपि। अनावृत्त्यैव कर्मणा-

नामाद्दृष्टफलसिद्धेर्लाघवात् सकृदनुष्ठानमिति लाघवमेव सकृदनुष्ठाने हेतुः-अङ्गेष्वेव प्रयोगविध्यैक्यमुक्तं। अत्र तु ब्रह्मवधपापक्षयकामस्याधिकारि-विनिगमनायां प्रमाणाभावात् देवदत्तादेव विशेषस्याशास्त्रीयत्वात् तन्त्रतायां-बाधकाभावात् तन्त्रतैव। यत्र त्वभ्यासप्रायश्चित्तावृत्तिः प्रायश्चित्तान्तरं वा श्रूयते एकविषये वा गुरुलघुप्रायश्चित्तमवगम्यते तत्र तदेव बाधकं। बहूद्देशेनेति अनेन फलोद्देशेनेत्यर्थः तेनैकफलोद्देशेन सकृदनुष्ठाने प्रसङ्गादपरफलसिद्धिक-स्तन्त्रतायाः प्रसङ्गः। येनातिव्याप्तिः यथा अमावास्याश्राद्धानुष्ठाने प्रसङ्गात्-तीर्थश्राद्धफलसिद्धिः, एवं गोदोहेनापः प्रणयेदित्यादौ गुणोद्देशेन प्रधाना-वृत्तेर्न तन्त्रतेति। हेतुरिति अदृष्टार्थस्येति विशेषणं दृष्टार्थकर्मधारणाय-तेन एककालजन्यानेकमशकक्रियमाणदंशनानामपनयाय धूमकरणे दृष्टार्थे-नातिव्याप्तिः उद्देश्यविशेषाग्रहः देवदत्तादिवधजन्यपापक्षयमात्रफलविशेषस्या-ग्रहोऽनुसन्धानं, किन्तु सामान्यतः फलानुसन्धानमित्यर्थः। नन्विति-- प्रयोग-विध्यैक्यं न तन्त्रताहेतुः किन्तु लाघवमेवेत्यर्थः। अङ्गेष्वेवेति न तु-प्रधानद्वये अयं भावः असति विरोधे लाघवमेव सर्वत्र तन्त्रताबीजं-प्रयोगविध्यैक्यस्य तु देशकालकर्त्रादीनामैक्याविरोधाभावघटकतयैवाङ्गानां तन्त्रतायामुपयोगो न तु स्वरूपत इति। एवं प्रकृतेऽपि विरोधाभावं दर्शयति-अत्र त्विति। पूर्वपक्षात्-कृततीर्थब्रह्मवधयोरन्यतरस्य प्रायश्चित्ताधिकारे नास्ति विनिगमना, कामनातौल्येन उभयोर्युगपदुपस्थितत्वात्।

न च वध्यस्य देवदत्तादेर्नामकृतः सम्बन्धकृतो वा विशेषोऽस्ति अशास्त्रीय-त्वात्। न चात्र,—

"अर्घेऽक्षय्योदके चैव पिण्डदानेऽवनेजने।
तन्त्रस्य विनिवृत्तिः स्यात् स्वधावचन एव च"॥

इति वत् तन्त्रताबाधकं वचनमस्ति बीजं तु लाघवमस्ति न कथं-तन्त्रता स्यादित्यर्थः। तर्हि पूर्वोक्तानि प्रायश्चित्तावृत्तिविधायकानि वचनानि-कथमुपपन्नानीत्याशङ्क्याह यत्र त्विति तत्तद्विशेषस्थले तत्तद्विशेषवचनमेव-तन्त्रताबाधकमित्यर्थः। इति—गोविन्दानन्दः।

निबन्धविवेकविधयाऽज्ञानतोऽस्मिन् वधे तन्नैव प्रायश्चित्तात्मकं द्वादशवार्षिकं प्राजापत्यानुष्ठानं युक्तं । कामकृते तत्र मरणान्तिकप्रायश्चित्तमनुष्ठेयमेव । निबन्धप्रमाणज्ञातानुगता व्यवस्थेयं,—

यथा—तद्वधेऽज्ञानतः प्रायश्चित्तानि द्वादशवार्षिकव्रतं । तदशक्तौ धेनुदानं-षष्ठ्यधिकशतत्रयसंख्याकं । तदशक्तौ वराटकदानं तन्निगुणकार्षापणात्मकं । तन्मूल्यस्वर्णादि वा । दक्षिणा तु शतधेन्वात्मिका तदशक्तौ तन्निगुणकार्षापणसंख्यका । कामतस्तद्वधे प्रायश्चित्तानि ;—मरणान्तिकप्रायश्चित्तं युगान्तरीयं । कलौ तु द्विगुणद्वादशवार्षिकव्रतं । तदशक्तौ विंशत्यधिकसप्तशतधेन्वात्मकं धेनुदानं । तदशक्तौ वराटकदानं षष्ठ्यधिकैकविंशतिशतकार्षापणसंख्याकं, तन्मूल्यस्वर्णादि वा । दक्षिणा तु द्विशतधेन्वात्मिका तदशक्तौ षट्शतकार्षापणाः ।

अथ ब्राह्मणकर्तृकपतिताशूद्रारिकादिब्राह्मणवधप्रायश्चित्तविवेचनं । प्रायश्चित्तविवेके भविष्यपुराणीयवचनम् ।

यथा,—

“जातिमात्रे हते विप्रे कामतो यद्भवेच्छृणु ।
चरेत्-द्वादशवर्षाणि कृत्वा शवशिरोध्वजम्” ॥ इति ।

एतत्पतितब्राह्मणवधविषयम् ।

एतस्मिन्नेव विषये व्यासः,—

“प्रायश्चित्तान्यथो वक्ष्ये संक्षेपेण निबोध मे ।
ब्रह्माब्दत्रितयं विप्रो गायत्रीमभ्यसेत्सदा ॥
प्रणायामशतं कुर्य्यात्-प्रत्यहं नियतः शुचिः ।
भिक्षाशी निवसेन्नित्यमरण्ये संयतेन्द्रियः ॥
षोड़श-ब्राह्मणान् विप्रो भोजयित्वा समाहितः ।
प्रयच्छेत-वस्त्रयुग्मानि हिरण्यं चापि शक्तितः” ॥

एतत्त्रैवार्षिकमपि वाचनिकं पापक्षयसाधनैतिकर्त्तव्यताबाहुल्यात् द्वादशवार्षिकसमानमेव बहुप्रामाणिकसम्मतं चेदं ।

यत्तु सुमन्तुवचनं,—

"ब्राह्मणहा वत्सरं कृच्छ्रं चरेत्पूर्णे तु वत्सरे" ।

हिरण्यमणिगोधान्यतिलभूमिसर्पींषि ब्राह्मणेभ्यो दद्यात् । एतद्-गायत्र्यादिविवर्जित इति भविष्यपुराणदर्शनादाग्नहारिकब्राह्मणवधविषयं । एतत्प्रमाणानुगतप्रायश्चित्तव्यवस्थेयं, यथा,— ।

कामतोऽज्ञानतो वा ब्राह्मणकर्त्तृकपतितब्राह्मणवधे प्रायश्चित्तानि—,

तदर्द्धं अर्थात् षड्वार्षिकव्रतं । तदशक्तौ धेनुदानं अशीत्यधिक-शतसंख्याकं । तदशक्तौ वराटकदानं तत्त्रिगुणकार्षापणात्मकं । दक्षिणा तु-पञ्चाशद्गावः । तदशक्तौ तत्त्रिगुणकार्षापणाः । तथाऽकामत-आग्र-हारिकादिब्राह्मणवधे प्रायश्चित्तानि एकवार्षिकव्रतं, तदशक्तौ धेनुदानं-पञ्चदशसंख्याकं । तदशक्तौ कपर्दिकादानं पञ्चचत्वारिंशत्-कार्षापणसंख्याकं । दक्षिणा तु नवधेनुसंख्यका । तदशक्तौ सप्तविंशतिकार्षापणाः । कामतस्तस्य वधे प्रायश्चित्तानि द्विवार्षिकव्रतं । तदशक्तौ धेनुदानं त्रिंशत्संख्याकं । तदशक्तौ-कपर्द्दिकादानं नवतिकार्षापणसंख्याकं । दक्षिणा तु अष्टादशधेनुसंख्यका । तदशक्तौ षट्त्रिंशत्कार्षापणाः ।

अथ ब्राह्मणकर्त्तृकब्राह्मणीगर्भवधप्रायश्चित्तविवेचनं ।

यथा प्रायश्चित्तविवेके,—

तत्र पुंस्त्वेन विज्ञाते पुरुषवधप्रायश्चित्तं, स्त्रीत्वेन ज्ञाते—स्त्रीवधप्राय-श्चित्तं, अविज्ञाते तु पुंवधप्रायश्चित्तमाह,

"हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत् ।
राजन्यवैश्यौ चेज्यानां वात्रेयीमेव च स्त्रियं ॥"

एतदेवेति ब्रह्महत्याव्रतमित्यर्थः । ब्राह्मणगर्भविषयमिदं तस्यैव प्रकृत-त्वात् । क्षत्रियादिगर्भवधे तु यद्वर्णगर्भस्तद्वधप्रायश्चित्तं कार्य्यं ।

यथा याज्ञवल्क्यः,—

यागस्थक्षत्रविड्घाते चरेद्ब्रह्महणो व्रतम् ।
गर्भहा च यथावर्णं तथात्रेयीनिषूदकः ॥

व्रतपदोपदानात् ज्ञानत-इदं अज्ञानतस्तदर्द्धं तेन ज्ञानकृते ब्राह्मणगर्भवधे-द्वादशवार्षिकं। क्षत्रियगर्भवधे त्रैवार्षिकं। वैश्यगर्भवधे सार्द्धवार्षिकं शूद्रगर्भवधे-नवममासिकं, धेनुसंकलनमभ्यूहनीयं।"

अनुपनीतस्य शूद्रसमत्वमाह मनुः,—यथा,—

"शूद्रेण हि समस्तावद्यावद्वेदे न जायते"।

तथा शङ्खलिखितौ, अविज्ञातगर्भवधे—यथा वर्णमादिशेत् शूद्रवदेवाव्रते-सर्व्वेषामविशेषेणेति। आभ्यामव्रतब्राह्मणवधे शूद्रवधप्रायश्चित्तमुक्तं। तथापि-अव्रतब्राह्मणवधे संस्कृतवाचिद्विजपदस्य केनाप्यप्रयुक्तत्वात् सर्व्वैर्मुनिभिः ब्राह्मण-पदस्यैव प्रयोगात्तस्य जातिवचनत्वात् अनुपनीतब्राह्मणवधेऽपि महापातकं,-तथा च पठितं।

"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते।
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेवच॥" इति।

तथातत्रैव निबन्धप्रमाणजालानुगतव्यवस्थेयं,—

यथा, ज्ञानतो ब्राह्मणकर्त्तृकब्राह्मणीगर्भवधे प्रायश्चित्तानि, ब्रह्मवध-प्रायश्चित्तमत्र। अज्ञानत एतदर्द्धं। अनुपनीतबालकवधेऽप्येवं। तदशक्तौ-धेनुदानं ब्रह्मवधधेनुदानवत्। तदशक्तौ वराटकदानं तथैव। तत्क्रयस्वर्णादि-वा। दक्षिणा तु चतुःशतगावः। तदशक्तौ तत्त्रिगुणकार्षापणाः।

एतज्जातीयगर्भवधातिरिक्तजातीयगर्भवधप्रायश्चित्तव्यवस्थाजातं तत्तद्-व्यवस्थाविवेकावसरे प्रदातव्यमेव।

अथ ब्राह्मणकर्त्तृकब्राह्मणीवधप्रायश्चित्तविवेचनं। यथा तत्रैव,—

"तत्र ब्रह्महत्याव्रतानुवृत्तौ हारीतः,"—षड्वर्षाणि राजन्ये, त्रीणि वैश्ये,-एकं शूद्रे, क्षत्रियवत् ब्राह्मणीषु, वैश्यवत् क्षत्रियासु, शूद्रवदितरासु, तेन-ब्राह्मणीवधे षड्वार्षिकं महाव्रतं, क्षत्रियावधे त्रैवार्षिकं, वैश्यावधे शूद्रावधे च-वार्षिकमिति।

निबन्धप्रमाणानुगतव्यवस्थेयं,—अकामतो ब्राह्मणकर्त्तृकब्राह्मणीवधे प्रायश्चित्तानि ब्रह्मवधप्रायश्चित्तार्द्धं, तच्च षड्वार्षिकव्रतं तदशक्तौ धेनुदानं-

अशीत्यधिकशतपरिमितं। तदशक्तौ चूर्णीदानं तन्त्रिगुणकार्षापणसंख्याकं। दक्षिणा तु पञ्चाशद्गावः, अशक्तौ तन्त्रिगुणकार्षापणाः। ब्राह्मणीतरजातीय-स्त्रीवधप्रायश्चित्तव्यवस्था प्रदेया तत्तद्विचारावसरे। कामतस्तद्वधे प्रायश्चित्तं-तद्द्विगुणं। क्षत्रियस्य ब्राह्मणीवधे ब्राह्मणकर्त्तृकवधप्रायश्चित्तद्विगुणं,-वैश्यस्य-त्रिगुणं। शूद्रस्य चतुर्गुणं। प्रमाणान्यत्रापि शतः प्रदर्शयितव्यानि।

अथ क्षत्रियादिकर्त्तृकब्राह्मणवधप्रायश्चित्तविवेचनं,—

यथा—प्रायश्चित्तमनोहरे क्षत्रियादीनां ब्राह्मणवधे विशेषमाहुर्मुरारि-मिश्राः,—

"क्षत्रियो ब्राह्मणं हत्वा प्रायाश्चित्तद्वयं चरेत्।
प्रायश्चित्तत्रयं वैश्यो हत्वा विप्रं सुराधिप!।
शूद्रो वै ब्राह्मणं हत्वा प्रायश्चित्तचतुष्टयम्" ॥ इति।

तथा भविष्ये महेश्वरपादा,—

"कामतो ब्राह्मणवधे यदेतद्व्रतमोदितम्।
एकान्ततो विप्रवधवर्जनार्थमुदीरितम् ॥
यद्वा चैत्रादिविषयमेतद्वै वचनं विदुः।
गुणान्वितं तु यो विप्रं गुणैर्हीनस्तु क्षत्रियः।
निघ्नते बुद्धिपूर्वन्तु न भवेत्तस्य निष्कृतिः ॥
विट्शूद्राणां विशेषेण घ्नतां कामतो द्विजान्।
प्राणान्तिकी भवेद् यत्र कामतो निर्गुणे हते।
सगुणे निहते कामान्निष्कृतिर्न विधीयते" ॥

विप्रवधवर्जनार्थमित्यनेन निन्दार्थतोक्ता। अतोऽज्ञानतो ब्राह्मणस्य सगुण-निर्गुण ब्राह्मणवधे द्वादशवार्षिकादिव्रतं। कामतस्तु याज्ञवल्क्योक्त-प्रकारेण मरणं क्षत्रियादीनां निर्गुण-ब्राह्मणवधेष्वेवं सगुणब्राह्मणवधे निष्कृत्य-भावः।

तथा क्षत्रियादीनान्तु ब्राह्मणवधे प्रायश्चित्तद्वैगुण्यादिकमाह—

भविष्यपुराणे,—

"पर्षद्विधानमुद्देदसुमन्तमाङ्गिरसेन तु।
द्विगुणा क्षत्रियाणान्तु वैश्यानां त्रिगुणा स्मृता॥
चतुर्गुणा तु शूद्राणां पर्षदुक्ता महात्मना।
पर्षदुक्तव्रतं प्रोक्तं शुद्धये पापकर्मणाम्॥
अधमानान्तु वर्णानामुत्कृष्टहनने गुह!।
दोषो गुरुतरो ज्ञेयः क्षत्रादीनां न संशयः"॥

तेन क्षत्रियस्य ब्राह्मणवधे ब्राह्मणकृतब्रह्मवधप्रायश्चित्ताद्द्विगुणं प्रायश्चित्तं। वैश्यस्य त्रिगुणं। शूद्रस्य चतुर्गुणम्।

अपरो विशेष उक्तो भविष्ये, विस्तरभयान्नलिखितः।

तथा आक्रोशितेऽपि दण्डद्वैगुण्यादिकं क्षत्रियादीनां दृश्यते।

यथा याज्ञवल्क्यः,—

"प्रतिलोमापवादेऽपि चतुस्त्रिद्विगुणा दमाः।
वर्णानामानुलोम्येन तस्मादर्द्धार्द्धहानितः"॥

दण्डवत्प्रायश्चित्तानि भवन्तीति प्रायश्चित्तमपि तथैवोक्तम्।

यच्च विष्णुवचनं,—

"विप्रे तु सकलं देयं पादोनं क्षत्रिये मतं।
वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यते"॥ इति,।

तत्सामान्यविशेषन्यायात्तेषां वधेतरविषयं।

"प्रकरणादभक्ष्यभक्षणविषयञ्च", इति शूलपाणिः। प्रोक्तप्रमाणानुगत्य-वस्थेयं,—

यथा,—अकामतः क्षत्रियकर्तृकब्रह्मवधे प्रायश्चित्तानि, ब्राह्मणकर्तृक-वधप्रायश्चित्तद्विगुणं, तच्च चतुर्विंशतिवार्षिकव्रतं, तदशक्तौ धेनुदानं-

विंशत्यधिकसप्तशतसंख्याकं, तदशक्तौ वराटकदानं तत्त्रिगुणकार्षापणात्मकं,-तन्मूल्यसुवर्णादि वा । दक्षिणा द्विशतगावः । अशक्तौ तत्त्रिगुणकार्षापणाः ।

कामतस्तद्वधे,—प्रायश्चित्तानि तद्द्विगुणं, तदशक्तौ तद्धेनुदानं द्विगुणं । तदशक्तौ चूर्णीदानं तत्त्रिगुणं, दक्षिणा तु तद्द्विगुणं ।

अकामतो वैश्यकर्तृकब्राह्मणवधे प्रायश्चित्तानि ।

ब्राह्मणकर्तृकवधप्रायश्चित्तत्रिगुणं । तच्च षट्त्रिंशद्वार्षिकव्रतं । तदशक्तौ-धेनुदानं तत्त्रिगुणं, तदशक्तौ वराटकदानं तत्त्रिगुणं । दक्षिणा तु त्रिशत-धेनवः । तदशक्तौ तत्त्रिगुणकार्षापणाः ।

कामतो वैश्यकर्तृकब्राह्मणवधे प्रायश्चित्तानि,—

द्विसप्ततिवार्षिकव्रतं, तदशक्तौ धेनुदानं तद्द्विगुणं, तदशक्तौ वराटकदानं-तद्द्विगुणकार्षापणात्मकं, दक्षिणा तु षट्शतधेनुपरिमिता । तदशक्तौ-पञ्चदशशतकार्षापणाः ।

अकामतः शूद्रकर्तृकब्राह्मणवधे प्रायश्चित्तानि,—

ब्राह्मणकर्तृकवधप्रायश्चित्तचतुर्गुणं, अष्टचत्वारिंशद्वार्षिकव्रतं । तदशक्तौ-धेनुदानं तच्चतुर्गुणं, तदशक्तौ वराटकदानं तच्चतुर्गुणं, दक्षिणा तु-चतुः-शतधेनुसंख्यका, तदशक्तौ तच्चतुर्गुणकार्षापणाः, कामतस्तद्वधे प्राय-श्चित्तानि-तद्द्विगुणं, तदशक्तौ धेनुदानं, तद्द्विगुणं, तदशक्तौ वराटकदानं-तद्द्विगुणं, दक्षिणा तद्द्विगुणा ।

अथ जलाग्न्यादिप्रवेशादिना मरणोद्यतानां दैवाज्जीवने प्रायश्चित्तविवेचनं । तथा प्रायश्चित्तमनोहरे मुरारिमिश्राः ।

यदि जलाग्निप्रवेशादिना मरणोद्यतस्य केनापि प्रतिबन्धादिनाग्नि-प्रवेशादिकं न जातं तत्र प्रायश्चित्तमाह यमः,—

"जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानशकाच्युताः ।
विषप्रपतनप्रायशस्त्रघातच्युताश्च ये ॥
सर्वे ते प्रत्यवसिताः सर्वधर्मबहिष्कृताः ।
चान्द्रायणेन शुध्येयुस्तप्तकृच्छ्रद्वयेन वा" ॥

प्रव्रज्या सन्न्यासस्तस्मादुभ्रष्टा, अनशको मरणपर्य्यन्तं सङ्कल्पिताहारत्यागः-प्रायो महाप्रस्थानं प्रत्यवसिताः पतिता इत्यर्थः। यत्र शूद्रादिवधकामस्य-प्रमादतो भ्रान्त्या वा ब्राह्मणवधो जातः। तत्रापि ब्रह्मवधोक्तप्रायश्चित्तं-कर्त्तव्यमिति। भवदेवः, चिमदण्डादिना वध्यो ब्राह्मणः यदि न जीवति, तदा हन्ता त्रैवार्षिकं कुर्य्यात्, अवधे वार्षिकं, यदि क्रोधवशादात्मवधार्थं-जलाग्निप्रवेशो गलपाशो, विषभक्षणं, देवकुलादिभ्यः पतनं, शस्त्रेणो-दरादिखननं, एवमादिभ्योऽपि यदि दैवाज्जीवति तत्राह,—

"जलप्रवेशनादौ तु कृते जीवति दैवतः।
तत्र त्रैवार्षिकं कुर्य्याद्गौतमस्य च सम्मतम्" ॥

अङ्गिराः,—

"पितृव्यपितृव्यादीन् हत्वा आत्मबन्धून् द्विजस्तथा।
गवां सहस्रदानात्तु ततः शुद्धिमवाप्नुयात्" ॥

अवस्थाविशेषे प्रायश्चित्तकथनस्य संक्षेपतः उक्तावपि प्रदर्श्यतेऽत्र-विशेषतस्तत्। यथा,—

"अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च" ॥

च्यवनः, "बालवृद्धस्त्रीणामर्द्धं प्रायश्चित्तं, आषोडशाद्बालाः सप्तत्यूर्द्ध्वं-स्थविराः, स्थविरोऽत्यन्तजीर्णो ग्राह्यः"।

लघुविष्णुः,—

"स्त्रीणामर्द्धं प्रदातव्यं वृद्धानां रोगिणां तथा।
पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः" ॥

पादविधिरयं ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य बालस्य।

यथाह अङ्गिराः,—

"ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च।
चरेद्गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये ॥

ततो न्यूनतरस्यास्य नापराधो न पातकम्।
न चास्य राजदण्डोऽस्ति प्रायश्चित्तं न विद्यते" ॥

आदिपर्वणि,—

"आचतुर्दशकाद्वर्षान्न भविष्यति पातकं।
परेण कुर्वतामेवं दोष एव भविष्यति" ॥

अत्यन्तगुणवद्वालविषयमिदं, परेण परदारापि न कार्य्यं, करणे प्रत्युत-दोष एव तत्रेत्यर्थः, अत्यन्तगुणवत्त्वं वेदाध्ययनब्रह्मचर्य्यशालित्वं।

तथाच विश्वामित्रः,—

"जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत्" ॥

अनुबन्धोऽत्यन्ताभिनिवेशः। अशीतिर्यस्य वर्षाणीत्यारभ्य प्रायश्चित्तं-प्रकल्पयेदित्यन्तप्रमाणबलेन कृच्छ्रपराकं त्वङ्गकर्त्तने विधेयं।

तथा च विष्णुः—

अवपूर्य्य चरेत्-कृच्छ्रमतिकृच्छ्रं निपातने।
कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितं।
दशसंख्याश्च गा दद्यादङ्गच्छेदो यदा भवेत् ॥

अवपूर्य्य मरणाय उद्यम्य इत्यर्थः। बहुविषयकप्रायश्चित्तविधानस्यैकत्र-सन्निवेशिततया प्रत्येकविषयस्य प्रायश्चित्तव्यवस्थोल्लेखने ग्रन्थगौरवसम्भवात्-लिखितप्रमाणपर्य्यालोचनत एकैकस्य व्यवस्थानुऽष्ठेया व्यवस्थापकैरिति-परामर्शः।

अथानुग्राहकादेरनुग्राहकादीनां प्रायश्चित्तविवेचनं। तथा प्रायश्चित्त-मनोहरेऽनुग्राहकप्रयोजकादीनां येऽनुग्राहकप्रयोजकास्तेषां प्रायश्चित्तमाह-पैठीनसिः।

"हन्ता मन्त्रोपदेष्टा च तथा संप्रतिपादकः।
प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥

आश्रयः शस्त्रदाता च भक्तदाता विकर्म्मिणां ।
उपेक्षकः शक्तिमांश्च दोषवक्ताऽनुमोदकः ॥
अकार्य्यकारिणस्तेषां प्रायश्चित्तं प्रकल्पयेत् ।
यथाशक्त्यनुरूपं च दण्डं चैषां प्रकल्पयेत् ॥ इति" ।

प्रमाणैरेतैः केवलं सत्यप्युक्ते प्रायश्चित्ते कस्य कीदृक्स्वरूपप्रायश्चित्तस्य-विधेयतयाऽनुक्तत्वेन प्रोक्तानुग्राहकादिप्रायश्चित्तानुष्ठानस्यार्द्धमाचरितव्यमिति-सिद्धान्तितं, साक्षादनुग्राहकाद्यपेक्षया पारंपरिकानुग्राहकादेर्लघुपराधत्वात् ।

तथा—व्रतद्वादशवार्षिकादिव्रतस्य दक्षिणामाह,—विष्णुः,—

"समाप्ते तु व्रते दद्यात् गवामस्मिन् शतं विभो ! ।
ततोऽप्यर्द्धं तदर्द्धं वा दश वा भैक्ष्यसंभृताः ॥
पूतश्च प्रविशेद्वेश्म धर्म्मार्थैरुपपाद्य तु ।
द्वारि वस्त्रपवित्राणि भोजनानि विशेषतः ॥
गवां चैव शतं दद्याच्चातुर्वैद्याय दक्षिणाम्" ।

तत्र शक्ताशक्तभेदेन दक्षिणाव्यवस्था ।

यत्तु यमवचनं,—

"ब्राह्मणक्षत्रियविशां शूद्राणां चरितव्रतः ।
दद्याद्-यथानुपूर्व्वेण यथाशक्त्या च दक्षिणाम् ॥
गोसहस्रं सहस्रार्द्धं शतं वा दश वै तथा ।
वृषभश्चैव दातव्यो वर्गाणां प्रवरस्तु यः" ॥

अत्यन्ताशक्तौ भैक्ष्यसम्भृताः भिक्षालब्धा दश गा दद्यादित्यर्थः ।

स्वधर्म्मोपार्जितैरर्थैर्वस्त्राणि मेध्यानि च भोज्यानि उपपाद्य वेश्मद्वारि-, ब्राह्मणेभ्यो दद्यादित्यन्वयः ।

ब्राह्मणेति चरितव्रतः ब्राह्मणादिजातीनां यथानुपूर्व्वेण यथाशक्तिदक्षिणां-दद्यादित्यर्थः, वर्गाणां वृन्दानां प्रवरो यूथः श्रेष्ठ इत्यर्थः, देशान्तरप्रसिद्ध-

पुराणैकमूल्यताम्रनिर्मितमुद्राविशेषमूर्ती, इति गोविन्दानन्दः, इदं च-दक्षिणागौरवं विपुलधनधान्यले बोद्धव्यमिति महामहोपाध्यायशूलपाणिः ।

अत्र विशेष उक्तो भविष्ये,—

"यद्युत्तरे वसेत्पार्श्वे विन्ध्यस्य सुरसत्तम ! ।
दक्षिणे वसतश्चेदं न भवेदिति तच्छृणु" ॥ इति ।

अनेन विन्ध्योत्तरतो यत् प्रायश्चित्तानुष्ठानं । तत्तु तद्दक्षिणतो न समान-मिति सुस्थिरं ।

अथ कुत्रचित् दोषाभावस्तद्विवेचनं, यथा प्रायश्चित्तमनोहरे,

दुष्टत्वनिवारणार्थं रोषवशात् पुत्रभार्य्यादीनां ताड़नकर्त्तुर्ज्जनकादेर्न-दोष इत्याह—भविष्ये व्यासः,—

"पुत्रः शिष्यस्तथा भार्य्या शासितश्चेद्विनश्यति ।
शास्ता तत्र न दोषेण लिप्यते सुरसत्तम ! ॥" इति ।

तथा प्रायश्चित्तविवेके शास्त्रविहितताड़नादौ कृते यत्र शिष्यादिः म्रियते-तत्रापि वधो नास्त्येव ।

यथा, भविष्यपुराणं,—

"पुत्रः शिष्यस्तथा भार्य्या शासितश्चेद्विनश्यति ।
न शास्ता तत्र दोषेण लिप्यते देवसत्तम ! ॥"

अशास्त्रीयताड़नादौ भवत्येव ।

यथा, मनुः,

"पुत्रः शिष्यस्तथा भार्य्या दासो दासस्तु पञ्चमः ।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ।
अधस्तात्तु प्रहर्त्तव्यं नोत्तमाङ्गे कदाचन ॥"

अतोऽन्यथा हि प्रहारश्चौरस्याप्नोति किल्विषं ।"

एवञ्च विहितदण्डाचरणे शास्त्रीयकारणवशे क्रियमाणे यदि ब्राह्मणो-म्रियते तदापि वधो नास्त्येव दण्डादिशास्त्रविरोधात्निषेधाप्रवृत्तेः ।"

तथाक्रोशादिव्यतिरेकेण च यमुद्दिश्य प्राणत्यागं करोति तस्य दोषो-नास्तीत्याह नारदः,—

"अकारणं तु यं कश्चिद्द्विजः प्राणान् परित्यजेत्।
तस्यैव तत्र दोषः स्यान्नान्यस्य परिकीर्त्तयेत्॥" इति।

तथा ताड़ितः पुरुषो यदि ताड़नादिकर्त्रा धनदानादिना मरणात् पूर्वं तोषितः तदुद्देशेऽपि ताड़नादिकर्त्तुर्दोषो नास्तीत्याह—

विष्णुः—

"उद्दिश्य कुपितो हत्वा तोषितं श्रावयेत्ततः।
तस्मिन् मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते॥" इति।

द्वयोर्जनयोरुच्छ्रवणं बहूनां वा उच्छ्रवणं, एतमुद्दिश्य प्राणान् त्यजामीति पुनः पुनरुद्घोषणं।

तथा प्रायश्चित्तविवेके याज्ञवल्क्यः,—

"कृच्छ्रत्रयं गुरुः कुर्य्यान्म्रियते प्रहितो यदि।"

तथा बौधायनः,—

"गुरुः...युक्तश्चेत् म्रियते गुरुस्त्रीन्-कृच्छ्रान्-चरेत्।"

उपकारार्थत्वेन वधनिष्पत्तौ निमित्तवधापवादमाह सम्वर्त्तः,—

"औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च।
प्राणिनां प्राणहत्यर्थं प्रायश्चित्तं न विद्यते॥
यन्त्रणे गोचिकित्सायां मूढगर्भविमोचने।
यत्ने कृते विपत्तिः स्यात्-प्रायश्चित्तं न विद्यते॥"

मूढगर्भः अन्तर्मृतगर्भः। तथा,

"दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम्।
द्विजानां गोहितार्थञ्चेत् प्रायश्चित्तं न विद्यते॥"

एतच्च निपुणचिकित्सकविषयम्।

तथा याज्ञवल्क्यः,—

"क्रियमाणोपकारे तु मृते विप्रे न पातकम् ।

विपाके गोवृषाणां च भेषजाग्निक्रियासु च ॥"

विशेषमाहाङ्गिराः,—

"औषधेऽपि न दोषोऽस्ति स्वेच्छया पिबते यदि ।

अन्यथा दीयमाने तु प्रायश्चित्तं न संशयः ॥"

इति ब्रह्मवधप्रायश्चित्तनिरूपणम् ।

---

## अथ सुरापानप्रायश्चित्तविवेचनम् ।

तदर्थं सुरापाननिरूपणं क्रियते, अत्र कः सुराशब्दार्थः, किंवा तस्याः-पानं, कस्य वा तत्पानं महापातकमिति निरूप्यते ।

तत्र मनुहारीतयमाः,—

"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।

तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥"

यथा श्रुतिः,—

"सुरा वै मलमन्नानामनृतं पाप्मा तमः सुरा ।" इति ।

"यद्यप्यन्नशब्दः शूकधान्यतण्डुलविकारविशेष ओदने प्रसिद्धस्तथापि बहु-ब्रह्मवचनात्पिष्टयवाग्वादिविकारमपि लक्षयति । तेनान्नविकारविशेषो मद-हेतुः सुरेत्युच्यते" इति शूलपाणिः । तथाचात्रिः,—

"गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।

यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥"

"यथैवैका तथैवान्या न पेया ब्राह्मणैः सुरेति ॥"

पाठान्तरं । इति मनुहारीतवचनात्त्रिविधैव सुरेति । गौड़ी गुड़विकारः ।

"पैष्टी अन्नविकारः, माध्वी मधुकफलविकारः, त्रिस्रोऽपि पाकजन्याः,-

एकेति गौद्यादिस्त्रिविधा सुरा एका तुल्येर्थः। अन्या तालनारिकेलखर्जूरैभिः-स्यन्दरूपा न पेया मादकत्वात् ब्राह्मणैरित्युपादानादुपनीतानां निषेधो-बोध्यः। इति पण्डितसर्वस्वे।

तथाच प्रायश्चित्तविवेके शूलपाणिः,—

"पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्।
माध्वीकं टाङ्कमाध्वीकं मैरेयं नारिकेलजम्॥
समानानि विजानीयान्मद्यान्येकादशैव तु।
द्वादशन्तु सुरामद्यं सर्वेषामधमं स्मृतम्॥"

टङ्कादित्रयं देशविशेषप्रसिद्धफलविशेषजन्यमिति साम्प्रदायिकाः अनेनै-कादशानां सुरात्वं निषेधयति। मद्यशब्दम् मदहेतुद्रवद्रव्यमात्रवचनः अस्मा-देव वचनात्। न तु मद्यमात्रं सुराशब्दार्थः।

तथाच वृहस्पतिः,—

"गौड़ीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत्।
तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्रमात्॥"

त्रयाणां सुरात्वे क्रमेण प्रायश्चित्तत्रयं न स्यात्।

यथा भविष्ये,—

"सुरा तु पैष्टी मुख्योक्ता न तस्यास्त्वितरे समे।"

पैष्टीति तण्डुलमात्रोपलक्षणं, इतरे गौडीमाध्व्यौ, अतोऽत्र विचार-एव सुराशब्दस्य मुख्यत्वात्त्रिविधा सुरेति गौड़ीमाध्व्योर्गौणसुरात्वज्ञापनार्थं। तेनैतत्पानेऽपि महापातकत्वमितिदिशति। यथैवैका तथा सर्वेति पैष्ट्यां-पूर्वप्रसिद्धं दर्शयति,—

यथा पैष्टी सुरा तथा सर्वा गौड़ी च माध्वी चेति पूर्ववचनोक्ता तु पैष्टी-दृष्टान्तत्वेनात्रदर्शिता। न पातव्या द्विजोत्तमैर्ब्राह्मणैरित्यर्थः। त्रैवर्णिकपरत्वे उत्तमपदानर्थक्यात्।

न च बहुवचनानर्थक्यपरिहारार्थं उत्तमप्रातिपदिकानर्थक्यं युक्तं बहु-

वचनस्य सजातीयानेकत्वे चरितार्थत्वात्। अतो ब्राह्मणस्यैव त्रिविधैव सुरा-महापातकहेतुः। क्षत्रियवैश्ययोस्तु सुरा वै मलमन्नानामिति वचनेन पैष्ट्येवेति स्थितं। गोविन्दराजविश्वरूपधारेश्वराणामयमनुमतोऽर्थः।

अतएव,—

"एका माध्वी च पैष्टी च गौड़ी च त्रिविधा सुरा।
द्विजातिभिर्न पातव्या कदाचिदपि कर्हिचित्॥"

इति यमवचनेऽपि द्विजातिपदं ब्राह्मणपरमेव, अतएव द्विविधसुरापाने-क्षत्रियादीनां महापातकं तावदस्तु।

दोषाभावमेवाह,—वृद्धयाज्ञवल्क्यः,—

"अकामादपि राजन्यो वैश्यो वापि कथञ्चन।
मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते॥"

तदेवं पैष्टीनिषेधस्त्रैवर्णिकानां। गौड़ीमाध्वीनिषेधस्तु ब्राह्मणानामेव। "ब्राह्मणैरित्युपादनेन क्षत्रियवैश्ययोर्निषेधो वाच्यः। न शूद्रस्य, सर्वाशी सर्वविक्रयीति वचनात्। इति पण्डितसर्वस्वमतं।

तथा प्रायश्चित्तमनोहरे मुरारिमिश्राः,—

"यथा चैका तथाचान्या न पातव्या द्विजातिभिः॥"

एतदपि प्रायश्चित्तं चतुर्विधं। बुद्धिपूर्वाभ्यासविषयं, बुद्धिपूर्वकसकृद्विषयं, अबुद्धिपूर्वकाभ्यासविषयं, अबुद्धिपूर्वकसकृद्विषयं चेति,—

आद्याद्ये वशिष्ठः।

"अभ्यासे तु सुरापाने अग्निवर्णां सुरां पिबेत्।"

अत्र अग्निवर्णां सुरामिति मन्तव्यं, अग्निवर्णां अग्निसंस्पर्शां। एतत्कामकारविषयमिति विज्ञानेश्वरः, अत्र द्विज इत्युपादानादुपनीतस्यैव नानुपनीतस्य मरणान्तिकप्रायश्चित्तमिति लक्ष्मीधरः।

यमोऽप्याह,—

"असकृत्त्वानतः पीत्वा वारुणीं पतति द्विजः।
मरणं पूर्वनिर्दिष्टं प्रायश्चित्तं विधीयते॥"

अनुपनीतविषयमाह दक्षः,—

"भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते।
तस्मिन् काले न दोषोऽस्ति स यावन्नोपनीयते।
उपनीतस्य दोषोऽस्ति क्रियमाणैर्विगर्हितैः॥"

तत्र पञ्चवर्षादधः प्रायश्चित्ताभावः, अत ऊर्द्धमेकादशवर्षपर्य्यन्तं पादः, अत ऊर्द्धं षोडशवर्षपर्य्यन्तमर्द्धप्रायश्चित्तं, अत ऊर्द्धं यथोक्तप्रायश्चित्तमिति भवदेवेनोक्तं।

द्वितीयमाहाङ्गिराः,—

"सुरापानं सकृत्कृत्वाप्यग्निवर्णां सुरां पिबेत्।"

तृतीये द्वादशवार्षिकं प्राजापत्यं कर्त्तव्यं।

अत्राह याज्ञवल्क्यः,—

"चर्मवासा जटी वापि चरेद्ब्रह्महणो व्रत"मिति।

चतुर्थे आह बौधायनः,—"अमत्या सुरापाने कृच्छ्रार्द्धपादं चरित्वा पुनरुपनयनमिति"।

वशिष्ठः,—

"प्रमादान्मध्यमसुरां सकृत्पीत्वा द्विजोत्तमः।
गोमूत्रयावकाहारो दशरात्रेण शुध्यति॥" इति।

एतदकामकृतौषधयोगभक्षणविषयं, मुखमात्रप्रवेशविषयं वा।

द्विजातिभार्य्यां प्रत्याह मनुः।

"पतत्यर्द्धशरीरस्य यस्य भार्य्या सुरां पिबेत्।
पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते॥"

तथोशनाः। "सुरापस्य गन्धमाघ्राय द्विराचम्य घृतं प्राश्य अपाम्ले

पूतो भवतीति" । अत्र गुरुलघुप्रतिपादकवाक्यानि समुच्चनिर्गुणसुरामद्यभेदमुखमात्रप्रवेशोदरप्रवेशविषयतया व्यवस्थापनीयानि" ।

तथाच मनुः,—

"सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिवेत् ।
तया सकाये निर्दग्धे मुच्यते किल्विषात्ततः ॥
गोमूत्रमग्निवर्णं वा पिवेदुदकमेव वा ।
पयो घृतं वा मरणाद्गोशकृद्रसमेव वा ॥"

पयोघृतं गोरेव आदावन्ते च गोः कीर्त्तनात् । मोहशब्दोऽत्र बुद्धिपरइति जिकनः ।

याज्ञवल्क्यः,—

"सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम् ।
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥"

तथा देवलः,—"सुरापाने ब्राह्मणो कृष्यतान्नसीसानामन्यतममग्निकल्पंपीत्वा शरीरत्यागात् पूयते । कृष्यादयोऽत्र द्रवीभूताः पीत्वेति दर्शनात्स्वयमशक्तावन्यैरपि मुखे सेचनीयाः" ।

तथाच भविष्ये,—

"मतिपूर्वं सुरापाने प्राणान्तिकमुदाहृतम् ।
पैष्टीपाने तु ऋषिभिर्नेतरासां कथञ्चन ॥
शङ्खेनापि महावाहो ! प्रायश्चित्तमुदाहृतम् ।
सुरायाः कामतः पाने मुख्याया प्राणनाशनं ॥"

पुनः पुनः पैष्टीविषयत्वाभिधानं त्रिविधा सुरा मुख्येति भ्रमनिरासार्थं,-कथञ्चन सकृदित्यर्थः, इतिरासामसुराणां गौड़ीमाध्वीप्रभृतीनां ज्ञानतः-सकृत्पाने मरणान्तिकं न भवति, गौड़ीमाध्वोस्तु ज्ञानतोऽभ्यस्तपाने-गौड़ीमाध्वीव्यतिरिक्तायास्तु सुराया अत्यन्ताभ्यस्तपाने मरणान्तिकमुक्तं ।

तथा भविष्ये,—

"गौड़ीमाध्व्योस्तथाभ्यासे प्राणान्तिकमुदाहृतम्।
अभ्यासे त्वसुरायास्तु तामेवाग्निनिभां पिबेत्॥"

तथेति ज्ञानत इत्यर्थः,।

तथाच वृहस्पतिः,—

"गौड़ीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत्।
तप्तकृच्छ्रं पराकं वा चान्द्रायणमनुक्रमात्॥"

सुरां पीत्वा द्विज इति मनुवचने द्विजपदश्रुतेः, क्षत्रियवैश्ययोरपि-कामतः पैष्टीपाने मरणान्तिकमेव प्रायश्चित्तं। एतेन देवलादिषु ब्राह्मणपदं-द्विजातिपरमेव। क्षत्रियवैश्ययोः पृथक्प्रायश्चित्तानभिधानात्। प्राणान्तिके-च पादह्रानेरसम्भवात् तयोरपि यथोक्तं मरणमेव। द्वादशवार्षिकादौ-पादपादहानिः, अभक्ष्यभक्षणे क्षत्रियादीनां ह्रासदर्शनात्"।

तथाच पराशरः,—

"तड़गस्य च दुष्टस्य पीतं स्यादुदकं यदि।
प्रायश्चित्तं भवेत्पुंसः क्रमेणैतेन सर्वशः॥
विप्रः शुध्येत्त्रिरात्रेण क्षत्रियस्तु दिनद्वयात्।
एकाहेनैव वैश्यस्तु शूद्रो नक्तेन शुध्यति॥"

इति शूलपाणिः। तथा—

"तत्रापि प्रयोजकादीनां पादपादहानिर्द्रष्टव्या इति जिकनः"। एवं-संक्षेपः। ज्ञानतो ब्राह्मणक्षत्रियवैश्यानां सुरापाने मरणान्तिकं। कलौ-मरणात्मकप्रायश्चित्तविधानाभावाच्चतुर्विंशतिवार्षिकमेव। अज्ञानतो द्वादश-वार्षिकं ब्राह्मणस्य, तदशक्तौ षष्ट्युत्तरपयस्विधेनुशतत्रयं देयं। तदशक्तौ-धेनुसंकलनरीत्या अशीतिपुराणाधिकचूर्णीसहस्रं देयं। क्षत्रियवैश्ययोस्तु-पादपादहानिरुक्ता पूर्वतः। बालवृद्धस्त्रीणामर्द्धादिकं। दक्षिणा च-ब्रह्मवधप्रायश्चित्तोक्तरीत्या ऊहनीया।

दृश्यते यन्मतानैक्यमत्र निबन्धकर्त्तृणाम्, तत्तु देशकालभेदेनेत्यूहनीयम्। अपिच मादकद्रव्यजातसेवनस्य मानवानामहिताधायकत्वेन रोगोपशान्त्याद्यावश्यकीयकार्य्येषु प्रोक्तमादकपदार्थव्रातस्यौषधसंयोगाद्यनुष्ठानमन्तरा सर्वथा परिहेयमेव तत्सेवनं सर्वेषामिति सिद्धान्तः।
निरुक्तप्रमाणव्रातानुगता व्यवस्थेयम्।

यथा, ज्ञानतो ब्राह्मणस्य पैष्टीसुरापाने, तथा हिरण्यस्यगौड़ीमाध्वीपानेच प्रायश्चित्तानि। अग्निसमस्पर्शानां सुरागोमूत्रजलदुग्धघृतगोमयरसानामन्यतमस्यामरणात् पाने, कलौ तदभावाच्चतुर्विंशतिवार्षिकव्रतम्, तदशक्तौ धेनुदानं विंशत्यधिकसप्तशतसंख्याकम्। तदशक्तौ वराटकदानम् तत्त्रिगुणकार्षापणात्मकम्। तन्मूल्यस्वर्णादि वा। दक्षिणा तु द्विशतधेन्वात्मिका। तदशक्तौ तत्त्रिगुणकार्षापणाः। अज्ञानतो ब्राह्मणस्य तासां पाने प्रायश्चित्तानि एतदर्द्धं। तत्तु द्वादशवार्षिकव्रतं। तदशक्तौ धेनुदानं षष्ठ्यधिकशतत्रयात्मकम्। तदशक्तौ वराटकदानम्—

तत्त्रिगुणकार्षापणसंख्यकं। तन्मूल्यस्वर्णादि वा। दक्षिणा तु शतधेन्वात्मिका, तदशक्तौ तत्त्रिगुणकार्षापणाः। अज्ञानतः क्षत्रियस्य पैष्टीसुरापाने प्रायश्चित्तानि नववार्षिकव्रतं, ज्ञानतः एतद्द्विगुणं, तदशक्तौ धेनुदानं चत्वारिंशदधिकद्विशतसंख्यकं। तदशक्तौ वराटकदानं तत्त्रिगुणकार्षापणात्मकं। तन्मूल्यस्वर्णादि वा। दक्षिणा तु पञ्चसप्ततिधेन्वात्मिका। तदशक्तौ तत्त्रिगुणकार्षापणाः। अज्ञानतो वैश्यस्य पैष्टीसुरापाने प्रायश्चित्तानि षड्वार्षिकव्रतं, ज्ञानतः एतद्द्विगुणं। स्त्रीबालवृद्धादीनामर्द्धादिकं। तदशक्तौ धेनुदानंअशीत्यधिकैकशतसंख्यकम्। तदशक्तौ वराटकदानं तत्त्रिगुणकार्षापणात्मकं। तन्मूल्यसुवर्णादि वा। दक्षिणा तु पञ्चाशद्धेन्वात्मिका। तदशक्तौ तत्त्रिगुणकार्षापणाः॥ इति सुरापानप्रायश्चित्तविवेचनं।

अथ सुवर्णस्तेयप्रायश्चित्तविवेचनं।

"तदर्थं सुवर्णस्तेयनिरूपणं क्रियते, यद्यपि महापातकोद्देशे स्तेयं गुर्वङ्गनागम" इति मनुना सामान्येन स्तेयमुपदिष्टम्। तथापि सुवर्णस्तेयपरं तत्मनुनैव "सुवर्णस्तेयकृद्विप्र" इत्यनेन प्रायश्चित्तेषु सुवर्णविषयत्वोपसंहारात्।

तथाच देवलः,—"ब्रह्महत्या सुवर्णस्तेयं गुरुतल्पगमनं सुरापानं चेति महापातकानि" । ब्राह्मणसुवर्णहरणञ्च महापातकं, यथा हारीतः,—"ब्रह्महत्या-सुरापानं ब्राह्मणसुवर्णहरणं गुरुदारगमनं संयोगश्च तैः सह इति पञ्चमहापातकानि" ।

तथा विष्णुः,—"ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदाराभिगमनं-संयोगश्च तैः सहेति महापातकानि" क्षत्रियादिसुवर्णहरणमुपपातकं । ननु-परिमाणविशेषान्वितसुवर्णापहारो महापातकं जातिमात्रापहारो वा, नाद्यः परिमाणवाचकपदाश्रवणात् । नच "पञ्चकृष्णलको माषस्ते सुवर्णस्तु-षोड़श" इति मनुवचने पुंलिङ्गसुवर्णशब्दस्य परिमाणवाचित्वात् सुवर्ण-शब्दादेव परिमाणं लभ्यमिति वाच्यम् ॥

सुवर्णस्तेयशब्दे समस्ते पुलिङ्गनपुंसकलिङ्गसन्देहात् वचनान्तराज्जाति-मात्रपरत्वमेवास्य निर्णीयते । तदाह अङ्गिराः,—

"गुरुतल्पः सुरापश्च रुक्मस्तेय्यथ विप्रहा ।
महापातकिनस्त्वेते संसर्गी चैव पञ्चमः ॥"

तथाच विश्वामित्रः,—

"ब्राह्मणो नैव हन्तव्यः सुरा पेया न च द्विजैः ।
ब्राह्मणस्वर्णहरणं न कर्त्तव्यं कदाचन ॥"

अत्र जातिमात्रवाचिरुक्मस्वर्णपदोपादानात् । किं तावत् स्तेयमित्या-काङ्क्षायामुच्यतेऽनुपदमेवत् । "यथा परस्वत्वेन विशेषतो ज्ञायमाने द्रव्ये परानु-मतिमन्तरेण ममेदं यथेष्टविनियोज्यमिति ज्ञात्वा व्यवहारः स्तेयं, स क्वचिन्मान-सः संकल्परूपः, क्वचित् कायिको दानविक्रयादिरूपः, अतोऽविभक्तभ्रात्रादि-धने नातिव्याप्तिः, विशेषतो ज्ञानाभावात्, नचात्मीयभ्रमविक्रीतधने परकीय-त्वेन ज्ञानाभावात्, अतएव प्राप्तनिधिस्वीकारे न स्तेयत्वं परस्येदं स्वमिति-ज्ञानाभावात् प्रनष्टस्वामिकस्यापि सम्भवात् ।

अतएव याज्ञवल्क्यः,—

"राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्द्धं द्विजः पुनः।
विद्वानशेषमादद्यात् स सर्वस्य प्रभुर्यतः। इति।"

एवं वस्त्रापहारे तदन्तर्गतलब्धस्याविज्ञातस्य सुवर्णस्य नापहारः अज्ञातत्वात्। यत्रासुवर्णस्य सुवर्णबुद्ध्या अपहारस्तत्र सुवर्णस्य नापहारः सुवर्णस्य-यथेष्टविनियोज्यत्वेन व्यवहारकर्मत्वाभावात्। यत्र सुवर्णमेव पारदरसोपलिप्तत्वेन सीसकबुद्ध्याऽपहरति तत्र परस्येदमिति जानाति एव पुरुषस्य सुवर्णविनियोगसंकल्पविषयः अतः स्तेयमिति, किन्तु सुवर्णजात्यज्ञानादज्ञानकृतं तत् अतो न तत्र प्रायश्चित्तकमिति वक्ष्यते,—

किन्तु तत्र कियत् सुवर्णं कियान्स इति प्रायश्चित्तार्थमनुसरणीयं न पुनरसुवर्णांशेऽपि प्रायश्चित्तमिति।

यत्तु मनुवचनं,—

"वानस्पत्यं फलं मूलं दार्वग्न्यर्थं तथैव च।
तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्॥"

"तद्दोषपरिहारार्थं न तु स्तेयनिषेधपरं" इति शूलपाणिः।

किमत्र प्रायश्चित्तं;—

तदाह मनुः,—

"सुवर्णस्तेयकृद् विप्रो राजानमभिगम्य तु।
स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति॥
गृहीत्वा मुषलं राजा सकृद्धन्यात्तु तं स्वयं।
वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वा"॥

एतद्व्याचष्टे भगवान् महेश्वरो भविष्ये,—

"निर्गुणस्तु यदा विप्रोऽपहर्त्ता क्षत्रियस्तथा।
प्रायश्चित्तमिदं कुर्य्यात्तदा शुद्ध्यर्थमात्मनः॥

गृहीत्वा मुषलं राजा सकृद्धन्यात्तु तं स्वयं ।
बधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वा ॥
निःशङ्केनापि चेद्राज्ञा हतो न म्रियते गुरु ! ।
पूयत्येव न सन्देहो यदि जीवति स द्विजः" ॥

स्तेनो बधेन शुध्यति इति क्षत्रियादिविषयं बधशब्देन विकल्पितं जीवनमपि लक्ष्यते । अतएव विप्रशब्दो वर्णचतुष्टयपरः ।

तथा यमः,—

"तस्मात्तं मुषलं गृह्य यथा प्राणेन भूपतिः ।
सकृद्धन्यान्मृतो वापि जीवन्नपि विशुध्यति" ॥

यच्चात्र विश्वरूपदूषणं दण्डो दमनायेत्याहुरिति । दमनार्थं दण्डः-प्रायश्चित्तं तु दुरितक्षयार्थं नच भिन्नार्थयोर्विकल्पः, तदयुक्तं दण्डेनैव विशुध्यतीति दण्डस्यैव पापक्षयार्थत्वात् ।

तथाच मनुः,—

"राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा" ॥

राजनिर्धूतदण्डास्त्विति पाठान्तरं ।

तथा दण्डप्रकरणे,—

"राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ।

तथा विष्णुधर्मोत्तरे,—

"प्रायश्चित्तैः शमं याति पापं कृतमसंशयं ।
राजदण्डात् क्षयं याति प्रायश्चित्तमकुर्वतां ॥
प्रायश्चित्तविहीना ये राजभिश्चाप्यदण्डिताः ।
नरकं प्रतिपद्यन्ते तिर्य्यग्योनिं तथैव च ॥"

अतो राजदण्डोऽपि पापनाशक इति सिद्धान्तः ।

तथाऽत्रापि प्रायश्चित्तमनोहरे मुरारिमिश्राः,—

यथा,—

"तपसानुपसृष्टस्तु सुवर्णस्तेयजं मलं ।
चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतं" ॥

ब्रह्महणो व्रतं द्वादशवार्षिकं ।

तथाच भविष्यपुराणे,—

"ब्राह्मणस्य गुणाढ्यस्य ज्ञानाद्विप्रस्य निर्गुणः ।
प्रभूतं सानुबन्धं च स शुध्येत कटाग्निना ॥
हृत्वा तु काञ्चनं विप्रो गुणिनो ब्राह्मणस्य तु ।
स्वयञ्च निर्गुणो विप्रश्चरेद्ब्रह्महणो व्रतं" ॥

एतत्तु बुद्धिपूर्वकषोडशमाषात्मकसुवर्णाद्यपहारविषयं ।

तथाच मनुः,—

"पञ्चकृष्णलको माषस्ते सुवर्णास्तु षोड़श" । इति ।

अन्यथा सुवर्णशब्दस्य जातिपरत्वे सर्षपपरिमितहेमहरणेऽपि द्वादशवार्षिकप्रायश्चित्तानुष्ठानं स्यात् ।

तथाच भविष्ये,—

"क्षत्रियस्य गुणाढ्यस्य हृत्वा विप्रस्तु निर्गुणः ।
चतुर्थकाले भुञ्जानस्त्रिभिर्वर्षैर्व्यपोहति ॥
निर्गुणस्य तु विप्रस्य हृत्वा जाम्बूनदं गुह ! ।
क्षत्रियः शुद्धिकामस्तु चरेद्ब्रह्महणो व्रतं" ॥

बुद्धिपूर्वकविषयमेतत् ।

तथा षट्त्रिंशन्मते,—

"वालाग्रमात्रेऽपहृते प्राणायामं समाचरेत् ।
यवमात्रे सुवर्णस्य प्रायश्चित्तं दिनद्वयं" ॥

सुवर्णकुटमलं ह्येकमपहृत्य द्विजोत्तमः।

सुवर्णस्य कुड्मलसंख्या।

"कुर्य्यात्सान्तपनं कृच्छ्रं तत्पापस्यापनुत्तये।
अपहृत्य सुवर्णस्य माषमात्रं द्विजातयः॥
गोमूत्रयावकाहारा स्त्रिभिर्मासैर्व्यपोहति।
सुवर्णस्यापहरणे वत्सरं यावकी भवेत्"॥

(यावकी गोमूत्रयवाग्वाहारी)।

"अर्द्धं प्राणान्तिकं ज्ञेयमथ ब्रह्महणो व्रतं।
सर्वेषां धातुलोहानां पराकं तु समाचरेत्॥
धान्यानां हरणे कृच्छ्रं तैलानामैन्द्रवं स्मृतं।
रत्नानां हरणे विप्रश्चरेत् चान्द्रायणं व्रतं"॥

"रत्नहरणं स्वल्पमूल्यविषयं, ऐन्दवं चान्द्रायणं, इदं ब्रह्मक्षत्रियविशां समानं। शूद्रस्यापकर्ष ब्राह्मणहारः"।

पण्डितसर्वस्वकारः, जपप्रायश्चित्तमाहविष्णुः,—"गायत्र्या दशसाहस्रजप्येन सुवर्णस्तेयकृत्त्रिरात्रोषितः कर्मणोऽन्ते च पयस्विनीं धेनुं दद्यात्। तदिच्छामातः सुवर्णस्तेयकृत्त्रिरात्रोपवासपूर्वकं गायत्र्या दशसहस्राणि संकल्पजपितव्यानि"।

अथ हृत्वा पश्चात् प्रकारान्तरेण दाने दोषाभावो यथा—

प्रायश्चित्तमनोहरे,—

"दत्त्वैवापहृतं द्रव्यं धनिकस्याप्युपायतः।
प्रायश्चित्तं ततः कुर्य्यात् कल्मषस्यापनुत्तये"॥

ब्रह्मस्वन्यासापहारे तद्धनं स्वामिने प्रकारान्तरेणापि दत्त्वा शुध्यतीत्याह बृहस्पतिः।

"शोध्यः शुध्यति मृत्तोयैः प्रायश्चित्तैश्च पापतः ।
ब्रह्मस्वन्यासहर्त्ता तु तमदत्त्वा न शुध्यतीति"—

पण्डित सर्वस्वकारः ।

अथात्र संक्षेपः, सुवर्णशब्दस्य जातिपरत्वे वा परिमाणपरत्वेऽपि हेमापहरणमेवात्र पञ्चमहापातकान्तर्भूतं न तन्यद्रव्यापहरणमिति बोध्यम् । तत्र सगुणस्य ब्राह्मणस्य तु कामतो द्वादशवार्षिकं, अकामतः षाड्वार्षिकं,-तेनात्र यत्र मरणमुक्तं तत्र मरणं चतुर्विंशतिवार्षिकं वा, यत्र द्वादशवार्षिकं-तत्राशक्तौ धेनुसङ्कलनरीत्या विंशत्यधिकपयस्विधेनुसप्तशतं देयं । तदशक्तौ-तत्त्रिगुणकार्षापणात्मकं वराटकदानं । तन्मूल्यं वा काञ्चनादिकं देयं । बालवृद्धस्त्रीणामर्द्धादिकमुक्तरीत्योन्नेयमिति ।

मिताक्षराप्रमाणजातानुसृतव्यवस्थेयं—अज्ञानतो ब्राह्मणकर्त्तृकब्राह्मणस्वामिकसुवर्णपरिमाणातिरिक्तापरिमितसुवर्णस्तेये प्रायश्चित्तानि, अपहृतद्रव्यं-तस्यानुरूपं मूल्यं वा स्वामिने दत्त्वा द्वादशवार्षिकव्रतं करणीयं । तदशक्तौ-धेनुदानं पूर्वोक्तं । तदशक्तौ वराटकदानं पूर्ववत् । तन्नभ्यस्वर्णादि वा । दक्षिणा तु पूर्ववत् ।

ज्ञानतस्तत्कर्त्तृकतत्स्तेये प्रायश्चित्तानि, एतद्द्विगुणं अर्थाच्चतुर्विंशतिवार्षिकव्रतं । तदशक्तौ धेनुदानं पूर्वमुक्तं, तदशक्तौ वराटकदानं पूर्ववत् । ज्ञानतः क्षत्रियवैश्यशूद्रकर्त्तृकब्राह्मणस्वामिकसुवर्णपरिमाणातिरिक्तापरिमितसुवर्णस्तेये प्रायश्चित्तानि । राजकर्त्तृकमुषलाघातेन मरणं, चतुर्विंशतिवार्षिक व्रतं वा ।

तदशक्तौ धेनुदानं पूर्ववत् । तदशक्तौ वराटकदानं पूर्ववत् । दक्षिणातु तथैव । अज्ञानतस्तत्कर्त्तृकतत्स्वामिकतत्सुवर्णस्तेये प्रायश्चित्तानि—द्वादशवार्षिकव्रतं । स्त्रीबालवृद्धानामर्द्धं, एकस्योभयधर्मवत्त्वे पादः । तदशक्तौ-धेनुदानं पूर्ववत् । तदशक्तौ वराटकदानं पूर्वमुक्तं । दक्षिणातु तथैव ।

इति सुवर्णस्तेयप्रायश्चित्तविवेचनं ।

## अथ गुरुतल्पगमनप्रायश्चित्तविवेचनम्।

तदर्थं गुर्वङ्गनानिरूपणं, तत्र को गुरुः का चाङ्गना, तत्र कश्चित् पितैव गुरुः।

तथाच मनुः,—

"निषेकादीनि कर्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते"॥

तथाच याज्ञवल्क्यः,—

स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति।
उपनीय ददद्वेदमाचार्य्यः स उदाहृतः"॥

क्रिया निषेकादिका, आभ्यां वचनाभ्यां गर्भाधानादिक्रियाकर्त्तरि गुरुशब्दस्य सङ्केतितत्वात् पिता गुरुः, अस्य अङ्गना स्त्री माता तत्सपत्नी सवर्णा। तथाच मनुरेवान्यगुरुमाह,—

"पिता वै गार्हपत्याग्निर्माताग्निर्दक्षिणः स्मृतः।
गुरुराहवनीयोऽग्निः साग्नित्रेता गरीयसी॥
इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमं।
गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते॥
अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया"॥

तथाच गौतमः,—

"आचार्य्यः श्रेष्ठो मातेत्येके" पितरि सङ्केतितत्वादाचार्य्ये गौणं गुरुपदमिति चेन्न ; आचार्य्यादावपि सङ्केतदर्शनात्।

यथा विष्णुः,—

त्रयः पुरुषस्यातिगुरवो भवन्ति माता पिता आचार्य्यश्चेति।

यथा देवलः,—

"आचार्य्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ।
वर्णज्येष्ठः पितृव्यश्च पुंस्येव गुरवो मताः" ॥

त्राता प्राणरक्षकः, वर्णज्येष्ठः क्षत्रियादीनां ब्राह्मणः । अनेनैकादशगुरवः-संकीर्तिताः । इति प्रायश्चित्तविवेके ।

ननु कोऽयं गुरुशब्दवाच्य इत्यत आह विष्णुः,—तत्र ते पुरुषस्यातिगुरवो भवन्ति । माता पिता आचार्य्यश्च । तत्र गुरुशब्दो मुख्यः । अन्यगौणः । तथाहि देवलः,—आचार्य्यादीत्यत्र उपाध्यायः पितेत्यारभ्य गुरवः-स्मृता" इत्युक्तं, एतेषामन्यतरस्य स्त्रियं गत्वा गुरुतल्पव्रतं कुर्य्यादिति-ज्ञानकृताभ्यासविषयं, इति मुरारिमिश्राः । तत्प्रायश्चित्तं द्विविधं, बुद्धि-पूर्वकमबुद्धिपूर्वकञ्च । आद्ये प्राणान्तिकप्रायश्चित्तं ।

तत्र मनुः,—

"गुरुतल्पोऽभिभाष्यैनस्तप्ते सुप्यादयोमये ।
शूर्मीं ज्वलन्तीं वाश्लिष्य मृत्युना स विशुध्यतीति" ॥

अभिभाष्येन इति । एनः स्वकृतं पापं अभिभाष्य कथयित्वा अयोमये-लौहमये शूर्मीं लौहप्रतिमां ।

तथाच स एव,—

"स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।
नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥

तथाच हारीतेन शूर्मी मृण्मयी प्रतिमेति दर्शितं । यथा "गुरुतल्पगो-मृण्मयीं स्त्रीप्रकृतिमग्निवर्णां कृत्वेत्यादि "तेनानयोर्विकल्पः । चशब्दात्तप्त-लौहशय्याशयनज्वलच्छूर्मीसमालिङ्गनयोर्विकल्पः । स्वयं वेति उत्कर्त्तनमपि-क्षुरेण । क्षुरेण वा शिश्नवृषणावुत्कृत्येत्यादिशङ्खलिखितवचनादेतत्प्राय-श्चित्तत्रयं मरणान्तिकं, तदुत्तमवर्णगुरुतल्पविषयं ।

तथाचाङ्गिराः,—

"गुरुतल्पी शिलां तप्तामायसीं वा स्वयं विशेत् ।
उत्कृत्य वृषणौ वापि धारयेदञ्जलौ स्वयं ॥
मरणायाथवा पद्भ्यां प्रव्रजेद्दिशमुत्तराम् ।
शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात् ॥
महाव्रतञ्चरेद्वापि दद्यात् सर्वस्वमेव वा ।
गुर्वर्थं वा हतो युद्धे मुच्यते गुरुतल्पगः" ॥

अत्र मरणान्तिकं ज्ञानकृते मातृव्यतिरिक्तसवर्णासमवर्णगुरुदारगमने बोद्धव्यं । महाव्रतं चरेद्वेति चतुर्विंशतिवार्षिकं बोद्धव्यं ।

द्वितीयमाह शङ्खः,—

"अधःशायी जटाधारी पर्णमूलफलाशनः ।
एककालं समश्नन् वै वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनानेन शुध्यन्ति महापातकिनस्त्विमे" ॥

अकामकृतपितृदारविषयमिति विज्ञानेश्वरः । तथाच प्राणायामशताचरणगायत्रीजपमहितत्रैवार्षिकब्रह्महत्याव्रतानुवृत्तौ—

व्यासः,—

"गत्वैतदेव कुर्वीत गुरुतल्पमकामतः ।
कामतो द्विगुणं प्रोक्तं पूर्वेषु च यदुच्यते" ॥

इति पूर्वेषु ब्रह्मवधादिषु अत्र कामत इत्युपादानात् अकामकृते त्रैवार्षिकं महाव्रतं सर्वस्वदानं वा करणीयमिति कर्त्तव्यतावाहुल्यात् त्रैवार्षिकमपि द्वादशवार्षिकसमानमिदमिति ब्रह्मवधप्रायश्चित्ते दर्शितमेव ।

यत्तु आपस्तम्बेन,—"स्तेयं कृत्वा सुरां पीत्वा गुरुतल्पं च गत्वा ब्रह्महत्यां च कृत्वा चतुर्थकालमितभोजनाः स्युरपोऽभ्युपेयुः सवनानुकल्पं स्थानासनाभ्यां-

विहरन्त एते त्रिभिर्वर्षैरेव पापं नुदन्त इति त्रैवार्षिकं दर्शितं । तच्चतुर्थ-कालाहारत्वेन सार्द्धवर्षोपवासात् सार्द्धवत्सरनक्तेन च चातुर्वार्षिकप्राजापत्य-समं एतत् सगुणाभिगन्तृविषयं सुवर्णस्तेये श्रीमहादेवपादैः सगुणविषयत्वेन-व्यवस्थितत्वात् । रेतःसेकात् पूर्वमित्यन्ये ।

यत्तु मनुवचनं,—

"खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने ।
प्राजापत्यं चरेत् कृच्छ्रमब्दमेकं समाहितः" ॥

इति तदज्ञानतो व्यभिचारिगुरुपत्नीगमनविषयं । अन्यानि लघु-प्रायश्चित्तानि अत्यन्ताभ्यस्तव्यभिचारि गुरुपत्न्यां बोद्धव्यानि । इति शूलपाणिः ।

तथा प्रायश्चित्तमनोहरे,—

मातृव्यभिचरितस्य यथा गुरुतल्पप्रायश्चित्तमुक्तं, तथा पुत्रव्यभिचरिताया-मातुरप्यत्र तत्प्रायश्चित्तम् ।

यथाह मनुः,—

"यत् पुंसः परदारे तु तच्चैनां कारयेत् व्रतम्" । इति ।

अत्र तु ज्ञानतो गुरुतल्पगमने यथोक्तं मरणं चतुर्विंशतिवार्षिकं वा । अज्ञानतो द्वादशवार्षिकं, तदशक्तौ धेनुसङ्कलनरीत्या षट्त्रिंशत्पयस्विधेनुत्रिंशतं-देयं । तदशक्तौ तत्त्रिगुणकार्षापणमूल्यं वा काञ्चनादिकं देयं । बालवृद्ध-स्त्रीणां पूर्वोक्तरीत्या अर्द्धादिकमूहनीयं । एतच्चातुर्वर्ण्यविषयं सर्वेषामेव-गौरवाविशेषात् । इति संक्षेपः ।

पूर्वोक्तप्रमाणजातानुकूला व्यवस्थेयं । यथा—ज्ञानतो गुर्वङ्गनागमने शूद्रस्य ब्राह्मणीगमने च प्रायश्चित्तानि गुरुतल्पगः पापमभिभाष्य तप्ते लोहमये सुप्यात् । ज्वलन्तीं लोहप्रतिमां सूर्म्मीं प्रतिमां वा आलिङ्ग्य म्रियेत । स्वयं वा शिश्न-वृषणावुत्कृत्य अञ्जलौ निधाय आमरणात् नैरृतीं दिशमातिष्ठेत् । चतु-र्विंशतिवार्षिकव्रतं कुर्य्यात् । गुर्वङ्गनयापि करणीयमेतत् । तदशक्तौ धेनुदानं विंशत्युत्तरसप्तशतसंख्याकम् । तदशक्तौ वराटकदानं पूर्ववत् । तत्तुल्य-स्वर्णादि वा । दक्षिणा तु द्विशतगावः । तदशक्तौ तत्त्रिगुणकार्षापणाः ।

अज्ञानतो गुर्वङ्गनागमने प्रायश्चित्तानि,—द्वादशवार्षिकव्रतं। वालवृद्धयोरर्द्धं। एतच्चानुवर्णविषयं। तदशक्तौ धेनुदानं। षष्ट्यधिकशतसंख्यकं तदशक्तौ-वराटकदानं पूर्ववत्। तन्मूल्यस्वर्णादि वा। दक्षिणा तु शतधेन्वात्मिका। तदशक्तौ तत्त्रिगुणकार्षापणाः।

इति गुर्वङ्गनाप्रायश्चित्तविवेचनम्।

---

## अथ पतितसंसर्गप्रायश्चित्तविवेचनम्।

तदर्थमादितः संसर्गनिरूपणम्। तत्र महापातकिसंसर्गस्य पातक-हेतुत्वमाह मनुः,—

"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह" ॥

ननु तैः सहेति निर्देशान्महापातकिसंसर्गस्यैव पातकहेतुत्वं लभ्यते न-पातकान्तरसंसर्गस्य, प्रायश्चित्तमपि महापातकिसंसर्ग एव मनुना दर्शितम्।

यथा मनुः,—

"एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः।
पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः॥
यो येन पतितेनैषां संसर्गं याति मानवः।
स तस्यैव व्रतं कुर्य्यात् तत्संसर्गविशुद्धये" ॥ इति।

अत्र चतुर्णामित्यनेन ब्रह्महत्यादिमहापातकचतुष्टयमुपसंहृत्य यो येन पतितेनेत्युक्तं महापातकपरमेव। उच्यते,—

"प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा।
न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः॥
एनस्विभिरनिर्णिक्तैर्नार्थं कश्चित् समाचरेत्।
कृतनिर्णेजकांश्चैव न जुगुप्सेत कर्हिचित्" ॥

इति मनुना सामान्यतः पापिष्ठसंसर्गस्य निषिद्धत्वात्। निषिद्धाचरणात्-पापोत्पत्तिः पापिष्ठसंसर्ग एव दर्शिता। प्रायश्चित्तमपि सामान्येन दर्शितम् यो येन पतितेनेति सामान्यनिर्देशात् चतुर्णामिति हिंसाऽभक्ष्यभक्षणस्तेयागम्यागमनाख्यप्रकारचतुष्टयपरं नतु ब्रह्महत्यादिविशेषार्थं लघीयसामपि हिंसाऽभक्ष्यभक्षणस्तेयागम्यागमनादीनां मनुना पूर्वमुक्तत्वात्। अपि च—

संसर्गपापश्रुत्या श्रुतिः, "कल्प्यमाना पापिष्ठसंसर्गी पापी भवती"ति-सामान्यश्रुतिरेव कल्पनीया लाघवात्। "होलाधिकरणन्याय" एवात्र जागर्त्ति। विष्णुनापि—सामान्येन स्मृतं। यश्च येन पापात्मना सह संसृजेत् स तस्यैव-प्रायश्चित्तं कुर्य्यात्।

गौतमोऽप्याह,—

"ब्रह्महसुरापगुरुतल्पगपितृमातृयोनिसम्बन्धागस्तेनाऽभक्ष्यभक्षकनास्तिक-निन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनश्च पतिताः पातकसंयोजकाश्च-तैश्चाब्दं समाचरन्। अत्र पतितात्यागीति सामान्येनैव निर्दिशति। तैश्चाब्दं समाचरन्निति द्वितीयसंसर्गिणोऽपि पतितत्वमुक्तं। नन्वेकग्राम-निवासादिना संसर्गेण पतितत्वं स्यात् न संसर्गविशेषाणां निषेधात्। निषिद्ध-पतितसंसर्गात् पततीति श्रुतिः कल्प्या, के ते संसर्गप्रकारा—इत्यत्राह,—

बृहस्पतिः,—

"एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणं।
याजनाध्यापनं योनिस्तथाच सहभोजनं॥
नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह।
उत्तमैरुत्तमैः सार्द्धं कर्त्तव्यस्तु समेन वा"॥

एकशय्याशयनैकपीठाद्युपवेशनैकपङ्क्तिभोजनपक्वान्नादिसम्बन्धिभाण्डमि-श्रणपक्वान्नमिश्रणाख्याः पञ्च लघुसंसर्गाः। तथा याजनपतितेन ऋत्विजा-यजमानस्य याजनं। पतितयजमानार्त्विज्यकरणं ऋत्विजोऽध्यापनं पतित-माणवकवेदाध्यापनमाचार्य्यस्य, पतितादाचार्य्याद्वा वेदाध्ययनं माणवकस्य।

योनिर्यौनिसम्बन्धः स च पतितपुरुषसम्भोगः स्त्रियाः, पतितस्त्रीसंभोगो वा-पुरुषस्य, तथा पतितकन्यापरिणयनं वरस्य, पतितवरपरिणयनं वा कन्यायाः। तथाच मनुः—

"नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद्ब्राह्मणः सह" ॥

जिकनकल्पतरुकारादयस्तु पतिताय वराय कन्यादानं दातुः, पतिता-द्दातुरादानं कन्याया वरस्य सर्वत्र व्यवहितयोनिसम्बन्धः। योनिसम्बन्धस्य-स्त्रीपुरुषमात्रनिष्पाद्यत्वात् नात्र दातृवरयोः साक्षाद्योनिसम्बन्धः। दान-प्रतिग्रहणलक्षणोऽप्येवं सम्बन्धो दातृसम्प्रदानयोर्यौन्यन्तर्भावात् यौन इत्युच्यते-प्रायश्चित्तगौरवार्थः, किन्त्वयमनार्षः प्रायश्चित्तविशेषाश्रवणादनुपादेयश्च,-पतितजाता कन्या पतितैवेति कल्प्यते। तत्परिणयनं पतितकन्यापरिणयन-मेव नात्र व्यवहितयौनसम्बन्धः। सह भोजनं स्वस्यान्यस्य परस्य वा एकपात्रे-एकदा भोजनं। नोच्छिष्टभोजनं उच्छिष्टेन सह उच्छिष्टभोजनास्यस्य-लघुत्वात्।

एते चत्वारो गुरुसंसर्गा भवन्ति। एवं मिलित्वा नव संसर्गाः। नन्वेक-यानालापगात्रस्पर्शनिःश्वाससहाध्ययनादिकमपि संसर्गान्तरमस्ति तत् कथं-नवविधत्वं।

यथा पराशरः,—

"आसनाच्छयनाद्यानात्-भाषणात्सहभोजनात्।
संक्रामन्ति हि पापानि तैलविन्दुरिवाम्भसि" ॥

भाषणमन्योन्यसंकथनं। सहभोजनमेकपंक्तिभोजनं लघुसंसर्गमात्रवर्ज्यात्।

यथा देवलः,—

"संलापस्पर्शनिःश्वाससहशय्यासनाशनात्।
याजनाध्यापनाद्यौनात्-पापं संक्रमते नृणां" ॥

सहाशनमेकपंक्तिभोजनं।

तथा छागलेयः,—

"आलापाद्गात्रसंस्पर्शान्निःश्वासात् सहभोजनात् ।
सहशय्यासनाध्यायात् पापं संक्रमते नृणां" ॥

सहाध्यायः पतितेन ब्रह्मचारिणा सहैकस्मात् गुरोरध्ययनं । सत्यं-नवदेत्यत्र प्रकारवाचिना धाप्रत्ययेन प्रकारान्तरं सूचितं । अन्यथा न वेति-ब्रूयात् । तेन तद्भोजनतत्संसृष्टान्नतत्संसृष्टपाकान्नभोजनतत्प्रतिग्रहादीना-मप्युपसंग्रहः । नन्वनेकवचनेषु पापसंक्रान्तिः श्रूयते, पूर्वदेशत्यागेन देशान्तर-सम्बन्धे संक्रान्तिशब्दस्य मुख्यत्वात् मूलपापकर्त्तुः पापविच्छेदे भूते किमर्थं-प्रायश्चित्तानुष्ठानमिति ।

तथाच हारीतः—

"हन्यादशुद्धः शुद्धन्तु शुद्धोऽशुद्धन्तु शोधयेत्" ॥
"अशुद्धस्य तमोभूतः शुद्धवासेन शुद्ध्यति" ।

तथाच मनुः,—

"अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्य्याऽपचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्विषम्" ॥

अपचारिणी व्यभिचारिणी, मार्ष्टीति प्रोञ्छयति संक्रामयतीत्यर्थः ।

तथा यमः,—

"दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ।
यो यस्यान्नमिहाश्नाति स तस्याश्नाति किल्विषम्" ॥

तस्य किल्विषमश्नातीत्यनेनापि पापाभावोऽवगम्यते । उच्यते पूर्वपाप-व्यक्तेराश्रयत्यागेन आश्रयान्तरसम्बन्धः सम्भवति । गुणस्य तद्रूपादर्शनेना-योग्यत्वात् किन्तु तत्तुल्यव्यक्तिसंबन्धे गौणोऽयं संक्रान्त्यादिशब्दः गुणस्येति गुणस्य-तद्रूपादर्शनेन स्वाश्रयत्यागपूर्वकाश्रयान्तरसम्बन्धादर्शनेन पापव्यक्तेराश्रया-न्तरसम्बन्धस्यायोग्यत्वादयं भावः, पापं दुरदृष्टं तावदात्मगुणः । गुणस्य द्रव्यं समवायिकारणं तद्विहाय तत्कार्य्यस्य गुणस्य कथं द्रव्यान्तरसम्बन्धः

समवायीकारणं विहाय कार्य्यस्य पृथक्स्थितेरसम्भवात् । किन्त्विति तत्पापतुल्य-पापान्तरसम्बन्धादित्यर्थः ।

तथाच देवलः,—

"बान्धवोऽपि पृथग्-भूत्वा तत्-पापं नाप्नुयात् क्वचित् ।
पृथग्जनोऽपि संयोगाद्व्रजते तुल्यदोषताम् ॥"

तत् पापं तज्जातीयपापमित्यर्थः । पृथग्जनोऽसम्बन्धिजनः, तुल्यदोषतां-तत्समानपापतामित्यर्थः, शुद्धोऽशुद्धन्तु शोधयेदिति यत्र ब्राह्मणादिसम्पर्क एव-पापक्षयहेतुस्तत्र बोध्यम् ।

यथा उशनाः,—

"कृतलक्षणोर्दर्शनस्पर्शनसम्भाषणानि वर्जयेदित्युक्त्वा सम्भाषणे ब्राह्मणसम्भाषणमित्यादि । कृतलक्षणो राज्ञा कृतपापचिह्नः । किञ्च यदि पापिष्ठस्यान्यस्य-संसर्गः पापक्षयहेतुः, तदेतत्प्रायश्चित्तद्वयमपि केनापि मुनिना प्रायश्चित्तरूप-तया पठितः स्यात् प्रत्युत निषेध एव श्रूयते" ।

तथाच मनुः,—

"प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा ।
न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः" ॥ इति ।

किञ्च "मिश्रितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेदिति" देवलवचनेन च-संसर्गाद् मूलपापकर्त्तुरपि पापस्थितिरवगम्यते । मूलपापकर्त्ता तावत् पतितः-स्वयमपि पततीत्यर्थः । इदानीं कियता कालेन कतमस्य संसर्गस्य पतित-साम्यापादानमिति निरूप्यते ।

तत्र देवलः,—

"पतितेन सहोषित्वा जानन् सम्वत्सरं नरः ।
मिश्रितस्तेन सोऽब्दान्ते स्वयञ्च पतितो भवेत् ॥
याजनं योनिसम्बन्धं स्वाध्यायः सहभोजनं ।
कृत्वा सद्यः पतन्त्येते पतितेन न संशयः" ॥

याणादिभिर्लघुसंसर्गैः प्रायश्चित्तैः संवत्सरेण पततीति याजनादिभिर्गुरुभिः सद्यः पततीत्यर्थः।

तथा बौधायनः,—

"संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनात् यौनात् सद्यो न शयनाशनात्" ॥

शयनासनादिना सद्यः पातनिषेधात् साकांक्षस्य संवत्सरेण पततीत्यस्य शयनादिसम्बन्धः। याजनादिपदं सहभोजनमप्युपलक्षयति।

तथा विष्णुः,—

"आसम्वत्सरात् पतति पतितेन सहाचरन्"।

"सहयानासनाभ्यां यौनात् स्रौवात् मौखात् सम्बन्धात् सद्य एव" यानासनाभ्यामिति लघुसंसर्गोपलक्षणं यौनादित्यादिना सहभोजनोपलक्षणं। स्रौवः स्रुवसम्बन्धो याजनं, मौखो मुखसम्बन्धोऽध्ययनमध्यापनञ्च।

तथा कूर्म्मपुराणे व्यासः,—

"ब्रह्महा मद्यपस्तेनो गुरुतल्पग एव वा।
महापातकिनस्त्वेते यश्च तैः सह संवसेत् ॥
संवत्सरं तु पतितैः संसर्गं कुरुते तु यः।
यानशय्यासनैर्नित्यं जानन् वै पतितो भवेत्" ॥

एतैर्वचनैर्याजनादिना सद्यः पातो यानादिना संवत्सरेणेत्यभिधीयते। मनुयाजनादिना संवत्सरेण पतति न यानादिनेत्याह।

मनुर्विष्णुश्च,—

"संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनाद्यौनात् न च यानासनाशनात्" ॥

यानाशनासनादुत्पन्नसंयोगमाचरन्नित्यर्थः।

यथा पैठीनसिः,—

"संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनान् नत्वेवं शयनाशनात्" ॥

तथा हारीतः,—

"संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनादेकशय्यैकभोजनात्" ॥

एकभोजनमेकपात्रे कालभेदेन भोजनं जलपानञ्च ।

तथा वृहस्पतिः,—

"षाण्मासिके तु संसर्गे याजनाध्यापनादिना ।
एकत्राशनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्" ॥

तथा,—

"संवत्सरेण संसर्गे योनियुक्ते विशेषतः ।
पूर्वोक्तेन विधानेन पतितव्रतमाचरेत्" ॥

अनेन याजनादिना षाण्मासिकसंसर्गे प्रायश्चित्तार्द्धं वदता संवत्सरेण सम्पूर्णप्रायश्चित्तमर्थादुक्तं । उत्तरवचने पुनः स्फुटीकृतं योनियुक्तपदेन याजनादीनामप्युपसंग्रहः । इति शूलपाणिः ।

अपिच स एव—"अत्र यानादीनां अनियतश्रवणाल्लाघवाच्चिभिर्लघुभिःसंसर्गैर्वत्सरेण पततीत्येकत्वश्रुतिः कल्पनीया । अनियतश्रवणादिति मनुवचनेयानासनाशनश्रवणं, कूर्म्मपुराणे यानशय्याशनश्रवणमित्यनियतं । सहयानासनाभ्यामित्यत्र सहशब्दादेककालत्वमवगम्यते" एककाले त्वेकपीठाद्युपवेशनंस्पर्शनिःश्वासालापलघुतरसंसर्गत्रयनियतं ।

अतस्तदप्यर्थादवगम्यते । एभिश्च त्रिभिर्लघुतरसंसर्गैरेको लघुसंसर्गःसमानः । अतस्तत्रापि लघुसंसर्गत्रयमेव । तत्रापि सहयानासनाभ्यामित्यत्रापीत्यर्थः । मन्वादिवचनेषु सहशब्दाभावात् कालभेदेन सततपतितो-

पशुत्वासनाद्युपवेशनं ग्राह्यं । पतस्त्रिभिर्लघुसंसर्गैर्वत्सरेण साम्यं, एतच्च ज्ञानतः,-ज्ञानन् संवत्सरमिति देवलवचनात्,

अज्ञानतो वत्सरद्वयेन एकैकशो ज्ञानात् वत्सरत्रयेण अज्ञानात् वत्सरषट्केन, संलापादीनां त्रयाणामेकैकयानादिसमानत्वात् ज्ञानतो वत्सरत्रयेण पातः। अज्ञानतो वत्सरषट्केन ज्ञानादेकैकशो वत्सरनवकेन अज्ञानात् एकैकशोऽष्टादशभिर्वत्सरैरित्यर्थः। ननु संलापादीनां कथं यानादिभ्यो लघुत्वं, उच्यते, लघुप्रायश्चित्तश्रवणात्, यथोशनाः, "कृतलक्षणैः दर्शनस्पर्शनसम्भाषणानि-वर्जयेत्", दर्शने ज्योतिषां दर्शनं स्पर्शने हृदयालम्बनं सम्भाषणे ब्राह्मणसम्भाषणं-पुनरुपस्पर्शनञ्चेति। कृतलक्षणैः पतितैः श्वपदादिचिह्नितैः दर्शनञ्च न-संसर्गः संसर्गप्रकरणेऽपाठात्। पतितस्पर्शनमत्र परम्परया ग्राह्यं साक्षात्-स्पर्शने स्नानश्रवणात्।

तथाच मनुः,—

"दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।
शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति"॥

पतितान्नभोजनपतितद्रव्यप्रतिग्रहयोश्च प्रत्येकं ज्ञानतः षड्भिर्मासैर-ज्ञानाद्वत्सरेण पतितत्वापादकत्वं।

यथा पतितानभिधायाह देवलः,—

"एभिः संसर्गमायाति यः कश्चित् काममोहितः।
षाण्मासानब्दमेकं वा ब्रह्महत्याव्रतं चरेत्॥

न चास्य ज्ञानाज्ञानकृतयौनसंसर्गविषयत्वं अविशेषश्रुतेः। यौनतुल्यत्वा-देतयोः।

तथाच, पतितान्नभोजनस्य वत्सरेण पातहेतुत्वमाह—
देवलः,—

"संवत्सरेण पतति पतितेन सहाचरन्।
भोजनासनशय्यादि कुर्वाणः सार्वकालिकम्"॥

भोजनं तदन्नभोजनं सार्वकालिकमविच्छिन्नं भोजने तथादर्शनात् पतितप्रतिग्रहेऽपि तथात्वमूहनीयं तयोः समानत्वात् ।

तथा बृहस्पतिः,—

"पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च ।
मासोपवासं कुर्वीत चान्द्रायणमथापि वा" ॥

मासोपवासो ज्ञानाभ्यासे तत्र पञ्चदशधेनवः । चान्द्रायणमज्ञानाभ्यासे-तेन सार्द्धं सप्त धेनवः गृहं गत्वेत्यनेन संवत्सरेणेति ।

यथा मनुः,—

"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति" ॥

तथा रजकादीनभिधायाह यमः,—

"भुक्त्वा चैषां स्त्रियो गत्वा पीत्वापः प्रतिगृह्य च ।
कृच्छ्रमब्दं चरेद्‌ज्ञानादज्ञानादैन्दवद्वयं' ॥

पतितान्नभक्षणप्रायश्चित्तात्—पतितस्पृष्टान्नभक्षणप्रायश्चित्तस्य अर्द्धेन ह्रास-दर्शनात् अर्द्धहानिः। तेन ज्ञानतः पतितस्पृष्टान्नभक्षणे वत्सरेण साम्यं अज्ञानतो-वत्सरद्वयेनेति ।

यथा प्रचेताः,—

"पतितान्नं तु यो भुंक्ते सप्ताहमुदकं वसेत् ।
पानीयपानतश्चैव कुशवारि पिबेत्त्र्यहं" ॥

सप्ताहोदकवासे धेनुद्वयं वर्ण्यते । एतत्सकृद्‌ज्ञानविषयं ।

सकृदज्ञानकृतपतितस्पृष्टान्नभक्षणे—

शङ्खः—"अमेध्यपतितचाण्डालपुक्कशरजस्वलावधूतकुष्ठिकुष्ठिकुनखिस्पृष्टा-न्नानि भुक्त्वा कृच्छ्रमाचरेत्" पातकिस्पृष्टपाकान्नभोजने तु संसर्गस्य किंचिद्व्यव-धानात् पादहानिः, तेनात्र ज्ञानतः सार्द्धवत्सरद्वयेन साम्यं । पातकिपाक-संकीर्णपाकान्नभोजने तु ततोऽपि व्यवहितत्वादपरपादहानिः ।

तेनात्र ज्ञानतः सार्द्धवत्सरेणाज्ञानतो वत्सरत्रयेण साम्यं। पतितान्नभक्षणे पतितसिद्धान्नभक्षणाच्चतुर्थभागः, एवं पतितपानीयपानेऽपि चाण्डालान्नभक्षणे तथा दर्शनात् ।

यथा विष्णुः,—

चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा पराक—इति। तत्राममात्रं उत्तरत्र सिद्धान्नदर्शनात् । पराके च द्वादशोपवासाः ।

तथा च प्रचेताः,—

"पतितान्नं तु यो भुंक्ते सप्ताहमुदकी वसेत् ।
पानीयपानतश्चैव कृशवारि पिबेत्त्र्यहं" ॥

त्रिरात्रोपवासे चतुर्विंशतिपणलभ्यं कार्षं देयं । एतदेव कुशवारिपाने किञ्चिदूनं देयं । पतितोच्छिष्टभक्षणे तु पतितान्नभोजनात् द्विगुणेन पापाधिक्यं ।

यथाङ्गिराः,—

"चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे ।
द्विजः शुध्येत् पराकेण शूद्रः कृच्छ्रेण शुध्यति" ॥

एतत् सकृदज्ञानविषयं । पराके पञ्चधेनवः, सकृदज्ञानकृतपतितान्नभोजने धेनुद्वयं प्रचेतावचने व्याख्यातं, तेन ज्ञानात् उच्छिष्टान्नभक्षणे मासत्रयेण पतितसाम्यं। अज्ञानतो मासषट्केन । उच्छिष्टान्नभक्षणवदुच्छिष्टप्रोञ्छनेऽपि व्यवस्था ।

"उच्छिष्टभक्षणश्चैव तथा तस्य च मार्जनं" ॥

इति देवलवचने साहचर्य्यदर्शनात् । अत्र च कृतानेकपातकपुरुषसंसर्गादेकैव पापव्यक्तिरुत्पद्यते न भिन्ना कल्पनागौरवापत्तेः पुरुषापराधस्य च संसर्गलक्षणस्य निमित्तकारणस्य तद्विशिष्टात्ममनोयोगस्याप्यसमवायिकारणस्यैकत्वात् । प्रायश्चित्तं तु गुरुसंसर्गस्यैव करणीयं गुरुणा प्रायश्चित्तेन लघुनःपापस्य क्षयाभिधानात् ।

तथाऽनेकमहापातकिपुरुषसंसर्गजनितपापस्याभिभेदेऽपि देशकालकर्त्रैक्ये-तन्त्रताया उक्तत्वात् तन्त्रेणैव प्रायश्चित्तं।

अत्र चेति क्वतं ब्रह्महत्यादिभेदेन महापातकजातीयं महापातकोपपातकादिभेदात् विजातीयं वा अनेकं येन तादृशपुरुषसंसर्गादित्यर्थः। इति गोविन्दानन्दः।

संसर्गनिरूपणानन्तरमिदानीं निरूप्यते तत्प्रायश्चित्तम्।

तत्र मनुः,—

"यो येन पतितेनैषां संसर्गं याति मानवः।
स तस्यैव व्रतं कुर्य्यात्तत्संसर्गविशुद्धये" ॥

पतितशब्दोऽत्र पापमात्रान्वितपुरुषपर इति पूर्वमेव व्याख्यातम्।

तथाच जावालः,—

"संसर्गी येन संसर्गं कुर्य्यात्तद्व्रतमाचरेत्"।

तेन नवविधपापान्वितानां मध्यात् यो येन पापीयसा संसृष्टः स तस्य-व्रतं कुर्य्यात् यद्यपि व्रतपदं नियतसंकल्पविशेषवाचकं मरणेऽपि मनुना प्रयुक्तं-यैर्यैर्व्रतैरपोह्येतत्युक्त्वा मरणस्यापि तेनोक्तत्वात्तथापि ब्रह्मवधादिसंसर्गे तत्र-मरणपरं तत्र पादन्यूनत्वादेरयोग्यत्वात्। किन्तु द्वादशवार्षिकादिपरमेव। यथा-विकृतौ भागव्यवस्थादर्शनात् प्रकृतौ शास्त्रार्थनिश्चयः। यथेति यथा विकृता-वग्निष्टोमे दक्षिणाविभागदर्शनात् प्रकृतौ दर्शपौर्णमासदक्षिणाविभागनिश्चयः।

तद्वदत्रापि विकृतौ संसर्गे पादन्यूनत्वादिदर्शनात् प्रकृतौ ब्रह्मवधादौ-विहितस्य द्वादशवार्षिकादेरेवातिदेशत्वं न मरणस्य पादन्यूनत्वासम्भवात्।

यद्वा विशेषदर्शनात् विशेषलाभे दृष्टान्तः यथा विकृतौ विशेषदर्शनात्-प्रकृतौ विशेषलाभस्तद्वदत्रापि व्यासवचने विशेषदर्शनात् मनुवचने विशेष-लाभ इत्यर्थः।

तथाच, व्यासः,—

यो येन संपिबेद्वर्षं सोऽपि तत्समतामियात्।
पादन्यूनं चरेत्सोऽपि तस्य तस्य व्रतं द्विजः ॥

यद्यपि स तस्यैव व्रतं कुर्य्यादित्यत्र व्रतशब्दात्सम्पूर्णव्रतमवगम्यते तथापि-व्यासवचनात्तस्य पादन्यूनव्रतपरत्वं । ननु मनुजावालादिवचनेषु तद्व्रतातिदेशस्यव्रतशब्दस्य सम्पूर्णव्रतवचनात् व्यासवचने पादन्यूनपदं द्वितीयसंसर्गिविषयमस्तु न वधप्रयोजकादिसंसर्गिविषये व्रतशब्दस्य पादन्यूनादिपरत्वस्यावश्यकत्वात् । तथा रोधादिना गोवधे व्रतपादादेरुक्तत्वात्तस्य संसर्गे पदार्द्धादिपरत्वमेव । तथा बालस्त्रीवृद्धविषये न्यूनव्रतविधानार्थत्वमस्य । किञ्च-यामादिलघुसंसर्गे दिनैकद्विकक्रते व्रतशतांशातिदेशाच्च । किञ्च यो-येनेत्यादिमन्वादिवाक्यानां प्रथमसंसर्गिण्येव सम्पूर्णव्रताभिधाने मरणातिदेशोऽपि किं न स्यात् । किञ्च सङ्करिणो मूलपापकर्त्तृत्वेन "भुक्तं यैस्तत्पक्वान्न"मित्यापस्तम्बेन प्रथमसंसर्गिण्येव न्यूनप्रायश्चित्तविधानात् कथमप्रथमसंसर्गिणि सम्पूर्णव्रतविधिः । किञ्च यो येनेति व्यासवचनस्य मन्वादिवाक्यवन्मूलपापकर्त्तृनुक्त्वा पठितत्वात् यो येनेत्यत्र पापकर्त्तृसंसर्गावगतेः । स तस्यैवेत्यनेन प्रकृतवाचिना तदभिधानात् कथं न प्रथमसंसर्गिणि पादोनत्वं, व्यासवाक्ये साम्योक्तिस्तु प्रायश्चित्तलाघवेनाप्युपपद्यते, अनुपातकस्य-महापातकसाम्यवत् । महापातकसंज्ञा च संसर्गस्य लघुत्वेऽप्युपपन्ना द्रुमच्छेदादीनामुपपातकत्वात् । ननु द्वितीयतृतीयसंसर्गिणि पापोत्पत्तौ प्रमाणं-नास्ति ।

अतएव वृद्धशातातपः,—

> अशुचिं संस्पृशेत् यस्तु एक एव स दूष्यति ।
> तत्स्पृष्टोऽन्यो न दूष्येत सर्वद्रव्येष्वयं विधिः ॥

तथा,—

> संस्थितानान्तु पात्राणां यद्येकमुपहन्यते ।
> तस्यैव शोधनं प्रोक्तं न तु तत्स्पर्शिनामपि ॥ इति ।

कथं वा तन्महापातकं संसर्गश्चापि तैः सहेत्यत्र मनुवचने तच्छब्दान्मूलपापकर्त्तृणामवगतेः । कथञ्चन चतुर्थसंसर्गिणि पापमिति उच्यते । यच्च येन-पापात्मनेति यो येन संपिबेदिति संसर्गी येन संसर्गमिति ।

विष्णुव्यासजाबालवचनैः सामान्येन पापिष्ठसंसर्गी पापो भवतीति प्रतिपादनात् संसर्गपापिष्ठस्यापि संसर्गी पापयुक्तो भवतीति एभिरेव प्रतिपादितं।

तथाच गौतमः,—

"तैश्चाब्दं समाचरन्निति अत्र तच्छब्देन पूर्वोक्तपतितात्यागिनोऽपि ग्रहणं। एवञ्च मनुवचने संसर्गस्यापि परामर्शः सिद्धः। अग्रे तु लघुतरसंसर्गे न तथा-वचनात्—एव, चतुःसंसर्गिणोऽपि पापं स्यादिति चेन्न व्यासादिवचने तृतीय-संसर्गिपर्य्यन्तं प्रायश्चित्तदर्शनात्।

यथा चाण्डालादिसङ्करे व्यासः,—

ये तदन्नाशिनो विप्राः कृच्छ्रं तेषां विधीयते।
तद्भोजिनोऽर्द्धकृच्छ्रेण तदन्नादाश्च पादतः॥

तथापस्तम्बः,—

"भुक्तं येस्तत्र पक्वान्नं कृच्छ्रं तेषां विनिर्दिशेत्।
तेषामपि च यैर्भुक्तमर्द्धं तेषां विधीयते॥
"तेषामपि च यैर्भुक्तं तेषां पादो विधीयते"।

अतो यो येनेति मनुवचनं संसर्गित्रयपरं, प्रायश्चित्तन्तु एतेष्वेव, अन्यत्र-प्रायश्चित्ताश्रवणात्। तथा देवलादिभिर्ज्ञानकृतेऽपि संसर्गे प्रायश्चित्ताभि-धानात् स्त्रीत्ववार्द्धक्यबाल्यैस्ततोऽपि ह्रासः कर्त्तव्यः। अत्र वर्णक्रमेणापि-ह्रासः कार्य्यः, पादह्रान्यन्यवर्णत इति सामान्येनाभिधानादिति जिकनः। तत्र मनुना संसर्गं याति मानवः, देवलेन जानन् संवत्सरं नरः, इति-सामान्येनाभिधानात् सर्ववर्णावगतेः पादह्रान्यन्यवर्णत" इति प्रकरणान्तरीय-त्वात्; अतः संसर्गिणि ब्राह्मणे शूद्रे च न प्रायश्चित्ते विशेषः।

तथा निरन्तरसंवत्सरसंसर्गे यत्प्रायश्चित्तमुक्तं तस्य च संवत्सरापूर्त्तौ भागह्रासः कार्य्यः।

तथाच बृहस्पतिः,—

"षाण्मासिके तु संयोगे याजनाध्यापनादिना।
एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्" ॥

अतो निरन्तरमासत्रयसंयोगे प्रायश्चित्तपादो निरन्तरमासनवकसंयोगे-पादत्रयमित्याद्यूहनीयं तथा पतितोत्पन्नत्वमपि संसर्गविशेषः ।

तत्र प्रायश्चित्तमाह वशिष्ठः ।

"पतितोत्पन्नः पतितो भवतीत्याहुरन्यत्र स्त्रियाः, सा हि परगामिनी-तामरिक्थामुपेयात् ।" अत्र पुंस एव पतितत्वं प्रतीयते न कन्यायाः,—

तथा पतितानुवृत्तौ याज्ञवल्क्यः,—

"कन्यां समुद्वहेदेषां सोपवासामकिञ्चनां" । इति ।

यथा हारीतः,—

"पतितस्य कुमारीं विवस्त्रामाप्लाव्यामहोरात्रोपोषितां प्रातः शुक्लेन वाससा-च्छाद्य नाहमेतेषां ममैवेति इति त्रिरुच्चैरभिदधानां तीर्थेषु गृहेषु वा उद्वहे-रन्"। स्त्रिया अपि पतितत्वं प्रायश्चित्तञ्चाह बौधायनः,—"अशुचिशुक्रोत्पन्नानां-तेषां शुद्धिमिच्छतां प्रायश्चित्तं पतनीयानां तृतीयोंऽशः स्त्रीणामंशस्तृतीयः, पतनीयानामिति", नरके पतन्तीति पतनीयाः कर्त्तर्यनीयः कृत्यलुटोर्बहुल-मिति पाणिनिस्मरणात् कर्मप्रवचनीयवत् । तेन पतितोत्पन्नानां शुद्धिमिच्छतां पतितानां प्रायश्चित्तस्य तृतीयभागः तत्प्रायश्चित्तं ज्ञेयं, युक्तञ्चेदं ज्ञानपूर्व्वके-संसर्गे महापराधेऽपि पादन्यूनत्वविधानात् सर्व्वथा ज्ञानानर्ह अपराधशून्ये-पतितात्मजनि तृतीयपादाभिधानमुपपन्नमेव, स्त्री च पतितोत्पन्ना तृतीय-भागस्य तृतीयभागं कुर्य्यात् । अत्र जिकनेनोक्तं यदा विशुद्धबीजोत्पन्नः-पतितस्त्रीजातः तदा पादन्यूनं तृतीयभागं कुर्य्यात् ।

"तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात्" ।

इति मनुवचनात् प्रोक्तप्रमाणानां सत्यपि विरोधे प्रतीयमाने तत्तत्कर्तॄणां-विभिन्नदेशकालसम्भूततया न तद्दोषावसरः । तथोत्कलदेशप्रचलितपण्डितसर्वस्वे-यथा —

अथ तत्संसर्गप्रायश्चित्तं,—

"संलापस्पर्शनिःश्वाससहशय्यासनाशनात् ।
याजनाध्यापनाद् यौनात् पापं संक्रमते नृणाम्" ॥

यौनात् योनिसम्बन्धात्।

अकामकृतसंसर्गे तु,—

"पञ्चाहे तु चरेत् कृच्छ्रं दशाहे तप्तकृच्छ्रकं।
पराकस्त्वर्द्धमासे स्यान्मासे चान्द्रायणं चरेत् ॥
मासत्रये तु कुर्वीत कृच्छ्रं चान्द्रायणद्वयं।
षाण्मासिके तु संसर्गे याजनाध्यापनादिना।
एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्" ॥

षड्वार्षिकं कुर्य्यादित्यर्थः ॥

अकामतस्तु,—

"संसर्गमाचरन् विप्रः पतितादिष्वकामतः।
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥
मासार्द्धमासमेकं वा मासत्रयमथापि वा।
अब्दार्द्धमब्दमेकं वा भवेदूर्ध्वं तु तत्समः" ॥

ऊर्द्धं तु तत्समः इति,— सम्वत्सरपर्य्यन्तसंसर्गे तु वक्ष्यमाणानि प्रायश्चित्तानि भवन्ति। संवत्सरादूर्ध्वं संसर्गे तु तत्समो भवति महापातकी भवतीत्यर्थः। द्वादशवार्षिकं कुर्य्यादित्यर्थः।

"त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत्।
चरेत् सान्तपनं कृच्छ्रं तृतीये पक्ष एव तु ॥
चतुर्थे दशरात्रं स्यात् पराकः पञ्चमे ततः।
षष्ठे चान्द्रायणं कुर्य्यात् सप्तमे चैन्दवद्वयं ॥
अष्टमे च तथा पक्षे षण्मासान् कृच्छ्रमाचरेत्।

स्त्रीणामपि संसर्गे प्रायश्चित्तं शौनकेनोक्तं।

प्रायशो निबन्धप्रमाणव्रातानुकूलव्यवस्थेयं, चतुर्णां महापातकिनां यथासंसर्गः। तत्र गुरुसंसर्गो यथा। पतितनार्य्याश्छेदाध्ययनं। पतित-

शिष्याय वेदाध्यापनं। पतितेन ऋत्विजा ज्योतिष्टोमादियजनं पतितस्य-ज्योतिष्टोमादिनिष्पादनरूपयाजनं। पतितेन पतितया वा परिणयनं। स्तेयादिपतितान्यब्राह्मणीगमनं। पतितान्नस्य पतितेन सहैकपात्रे भोजनं। प्रायश्चित्तानि ज्ञानतः सकृत्प्रथमसंसर्गिणोऽष्टादशवार्षिकव्रतं। तदशक्तौ-धेनुदानं चत्वारिंशदधिकपञ्चशतधेनुसंख्याकं। तदशक्तौ वराटकदानं विंशत्य-धिकषोड़शशतकार्षापणात्मकं। तन्मध्यस्वर्णादि वा। दक्षिणा तु पञ्चाश-दधिकशतधेन्वात्मिका। अशक्तौ पञ्चाशदधिकचतुःशतकार्षापणाः। अज्ञानतः-सकृत् प्रथमसंसर्गिणो नववार्षिकव्रतं। तदशक्तौ धेनुदानं सप्ततत्यधिकद्विशत-धेनुसंख्याकं। तदशक्तो वराटकदानं दशाधिकाष्टशतकार्षापणात्मकं। दक्षिणा-तु पञ्चसप्ततिधेन्वात्मिका। तदशक्तौ पञ्चविंशत्यधिकद्विशतकार्षापणाः। अज्ञानतो द्वितीयसंसर्गिणः सार्द्धचतुर्वार्षिकव्रतं। तदशक्तौ धेनुदानं पञ्च-त्रिंशदधिकैकशतधेनुसंख्यकं। तदशक्तौ वराटकदानं पञ्चोत्तरचतुःशत-कार्षापणात्मकं। दक्षिणातु अष्टत्रिंशद्धेन्वात्मिका। तदशक्तौ चतुर्दशाधिक-शतकार्षापणाः। ज्ञानतो द्वितीयसंसर्गिणो नववार्षिकव्रतं। तदशक्तौ धेनुदानं-सप्तत्यधिकद्विशतधेनुसंख्याकं। तदशक्तौ वराटकदानं दशाधिकाष्टशत-कार्षापणात्मकं। दक्षिणा तु पञ्चसप्ततिधेन्वात्मिका। तदशक्तौ पञ्चविंश-त्यधिकद्विशतकार्षापणाः।

ज्ञानतः तृतीयसंसर्गिणः षाड़्वार्षिकव्रतं। तदशक्तौ धेनुदानं अशीत्य-धिकशतधेनुसंख्याकं। तदशक्तौ वराटकदानं चत्वारिंशदुत्तरपञ्चशतकार्षा-पणात्मकं। दक्षिणा तु पञ्चाशद्धेन्वात्मिका। तदशक्तौ पञ्चाशदधिकशत-कार्षापणाः।

अज्ञानतस्तृतीयसंसर्गिणस्त्रिवार्षिकव्रतं। तदशक्तौ धेनुदानं नवतिधेनु-संख्याकं। तदशक्तौ वराटकदानं सप्तत्यधिकद्विशतकार्षापणात्मकं। दक्षि-णा तु पञ्चविंशद्धेन्वात्मिका। तदशक्तौ पञ्चसप्ततिकार्षापणाः।

ज्ञानाज्ञानतश्चतुर्थसंसर्गिणः प्रायश्चित्ताभावः। ब्रह्मघातिनां क्षत्रियवैश्य-शूद्राणां ज्ञानाज्ञानतः संसर्गे तु क्रमेण एतस्य द्विगुणं त्रिगुणं चतुर्गुणं ज्ञेयम्।

तत्र लघुसंसर्गो यथा। उपनयनं विना पतिताय वेदाध्यापनं, पति-

त्साक्षाद्वाध्ययनं। पतितयजमानस्य अष्टकादियज्ञयाजनं। पतितेन ऋत्विजा-ऽष्टकादियज्ञयजनं। पतितस्य ब्राह्मणीगमनं। पतितशूद्रागमनं। अपतितान्नस्य-पतितेन सहैकपात्रे भोजनं। पतितोच्छिष्टभोजनं। प्रायश्चित्तानि ज्ञानतः-षण्मासंसर्गे प्रथमसंसर्गिणोऽष्टादशवार्षिकव्रतं। तदशक्तौ धेनुदानं चत्वारिंश-दधिकपञ्चशतधेनुसंख्याकं। तदशक्तौ वराटकदानं विंशत्युत्तरषोडशशतकार्षा-पणात्मकं। तन्मूल्यस्वर्णादि वा। दक्षिणा तु पञ्चाशदधिकशतधेन्वात्मिका। अशक्तौ पञ्चाशदधिकचतुःशतकार्षापणाः। अज्ञानतः षण्मासंसर्गे प्रथम-संसर्गिणो नववार्षिकव्रतं। तदशक्तौ धेनुदानं—सप्तत्यधिकद्विशतधेन्वात्मकं। तदशक्तौ वराटकदानं दशाधिकाष्टशतकार्षापणसंख्याकं। दक्षिणा तु पञ्च-सप्ततिधेन्वात्मिका। तदशक्तौ पञ्चविंशत्यधिकद्विशतकार्षापणाः। ज्ञानतः-षण्मासंसर्गे द्वितीयसंसर्गिणो नववार्षिकव्रतं। तदशक्तौ धेनुदानं पूर्ववत्।

तदशक्तौ वराटकदानं पूर्ववत्। दक्षिणा तु तथैव, तदशक्तौ कार्षापण-संख्या पूर्ववत्। अज्ञानतः षण्मासंसर्गे द्वितीयसंसर्गिणः सार्द्धचतुर्वार्षिकव्रतं, तदशक्तौ धेनुदानं पूर्ववत्। तदशक्तौ वराटकदानं तादृशं। दक्षिणा तु तथैव। तदशक्तौ वराटककार्षापणसंख्या पूर्ववत्। ज्ञानतः षण्मासंसर्गे तृतीय-संसर्गिणः षाड्वार्षिकव्रतं। तदशक्तौ धेनुदानं पूर्ववत्। तदशक्तौ वराटकदानं-तादृशं। दक्षिणा तु तथैव। तदशक्तौ वराटककार्षापणसंख्या पूर्ववत्। अज्ञानतः षण्मासंसर्गे तृतीयसंसर्गिणस्त्रैवार्षिकव्रतं। अन्यत् सर्वं पूर्ववदशक्तौ। चतुर्थसंसर्गिणो ज्ञानाज्ञानतः प्रायश्चित्ताभावः।

महापातकिनां लघुतरसंसर्गो यथा—एकशय्याशनयानादिः, ततो-लघुतरालापस्पर्शनिःश्वासादिः। प्रायश्चित्तानि एभिश्च त्रिभिर्लघुतरसंसर्गै-रेकोलघुसंसर्गः। ज्ञानतस्त्रिभिर्लघुसंसर्गैर्वत्सरेण साम्यं। तेनाष्टादश-वार्षिकव्रतं तदशक्तौ धेनुदानं पूर्ववत्। अन्यत्सर्वं च पूर्ववदशक्तौ।

अज्ञानतो वत्सरद्वयेन। तदशक्तौ धेनुदानं तथा। तदशक्तौ वराटकदानं-तथा। दक्षिणा तु तथा।

ज्ञानतः एकैकशो वत्सरत्रयेण। तदशक्तौ धेनुदानं तथा। तदशक्तौ वरा-टकदानं तथा। दक्षिणा तथा।

अज्ञानाद्वत्सरषट्केन। तदशक्तौ धेनुदानं तथा। तदशक्तौ वराटकदानं तथा। दक्षिणा तथा।

संलापादीनां त्रयाणां एकैकयानादिसमानत्वात् ज्ञानतो वत्सरत्रयेण पातः। तदशक्तौ धेनुदानं तथा। तदशक्तौ वराटकदानं तथा। दक्षिणा तथा। संलापादीनां त्रयाणां एकैकयानादिसमानत्वादज्ञानाद्वर्षषट्केन पातः। तेनाष्टादशवार्षिकव्रतं, तदशक्तौ धेनुदानं तथा। तदशक्तौ वराटकदानं तथा, दक्षिणा तु तथा। ज्ञानादेकैकशो वत्सरनवकेन, तदशक्तौ धेनुदानं तथा, तदशक्तौ वराटकदानं तथा। दक्षिणा तथा। अज्ञानादेकैकशो ऽष्टादशवत्सरैः पातः। नवविधपापान्वितानां मध्यात् येन पापीयसा यः संसृष्टः स तस्य व्रतं पादहीनं कुर्य्यात्। एतच्च प्रथमसंसर्गिणां। द्वितीयसंसर्गिणां द्विपादहीनं, तृतीयसंसर्गिणां त्रिपादहीनं सर्वत्र ज्ञेयं। संसर्गाणामुक्तकालान्न्यूनाधिक्ये भागहारेण प्रायश्चित्तन्यूनाधिक्यं ज्ञेयं। तदशक्तौ धेनुदानं तथा। तदशक्तौ वराटकदानं तथा। दक्षिणा तथा। रघुनन्दनभट्टाचार्य्यमते कलौ लघुसंसर्गेषु प्रतिग्रहादिषु पातित्याभावात् तत्प्रायश्चित्ताभावः। संसर्गदोषः पापिष्ठित्याद्यादित्यपुराणवचनं सकलसंसर्गदोषनिवारणपरिचायकं, अतः तन्मते प्रायश्चित्ताभावस्तत्रैव बोध्यं। पतितोत्पन्नत्वमपि महापातकिसंसर्गविशेषः। प्रायश्चित्तानि यस्य पतितस्य यत्प्रायश्चित्तं तस्य पातित्यदशायां-जातस्य पुत्रस्य तत्तृतीयभागप्रायश्चित्तं।

तदानीं तज्जातायाः कन्यायाः पतितोत्पन्नपुत्रप्रायश्चित्ततृतीयभागप्रायश्चित्तं, अथवा कामतोऽकामतश्च निरुक्तपरिष्कृतसर्वस्वोद्धृतप्रमाणजातानुसारेणानुष्ठेया प्रायश्चित्तव्यवस्थेयं।

इति महापातकव्यवस्था समाप्ता॥

---

अथ क्रमप्राप्तातिपातकप्रायश्चित्तविवेचनमारभ्यते निम्नतः।

यथा प्रायश्चित्तविवेके—किमतिपातकं तदाह विष्णुः,—

"मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि" किं च ज्ञानतो-

ऽज्ञानतश्चाच मरणान्तिकमेव श्रूयते, यथा मातृगमनं दुहितृगमनं स्नुषागमन-मित्यतिपातकानि ।

"अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनं ।
न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथञ्चन ॥"

कथञ्चनेति ज्ञानतोऽज्ञानतश्च । अन्यथा तदनर्थकं स्यात् । मरणे तु-विशेषो वक्ष्यते,—तथा भविष्ये "अतिपातकयुक्तानां प्राणान्तिकमुदाहृतं" । सकृद्गमनेऽप्यत्र प्राणान्तिकं । यथा पूर्वन्त इत्यनुवृत्तौ, हारीतः "सद्योऽग्निप्रवेशादतिपातकिनः ।

संवर्त्तः,—

"मातरं यदि गच्छेत्तु स्नुषां वा पुरुषाधमः ।
न तस्य निष्कृतिः शक्या स्वकां दुहितरं तथा ॥"

तथा षड्‌विंशमतं—

"पितृभार्य्यां तु विज्ञाय सवर्णां योऽधिगच्छति ।
जननीञ्चाप्यविज्ञाय मृतः शुद्धिमवाप्नुयात् ॥"

अतोऽज्ञानतो मरणं स्पष्टमुक्तं ।

तथोत्कलदेशप्रचलितपण्डितसर्वस्वे—"अथातिपातकानि निर्णीयन्ते ।

तत्र कात्यायनः,—

"जनन्याश्च भगिन्याश्च स्वसुतायास्तथैव च ।
स्नुषाया गमने चैव विज्ञेयमतिपातकं ।
अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनं" ॥

जननी सपत्नमाता, स्वमातुर्महापातकान्तःपतितत्वात् । इदं तु-बुद्धिपूर्वविषयं । अबुद्धिपूर्वगमने तु सपत्नमात्रादौ नववार्षिकमिति देवलः,-इत्यतिपाकप्रायश्चित्तं ।"

निरुक्तप्रमाणव्रातानुकूलव्यवस्थेयं—ब्राह्मणस्य विमातृगमनं दुहित्रादि-गमनं स्नुषागमनं च ।

प्रायश्चित्तानि, अज्ञानतो नववार्षिकव्रतं । तदशक्तौ धेनुदानादिकं-सर्वं पूर्ववत् । ज्ञानत एतद्द्विगुणं अर्थात् अष्टादशाब्दव्रतं । कलौ मरणात्मक-प्रायश्चित्तस्य निषिद्धत्वात् । तदशक्तौ धेनुदानादिकं सर्वं पूर्ववत् । क्षत्रिय-वैश्यशूद्राणां विमातृदुहितृस्वसादिगमनं । प्रायश्चित्तानि अकामतो-नववार्षिकव्रतस्य द्विगुणं । तदशक्तौ धेनुदानादिकं सर्वं पूर्ववत् । कामतस्तु-तद्वैगुण्यं । विमातृदुहितृस्वसादीनामपि एतद्व्रतादिकं करणीयं, तदशक्तौ-धेनुदानादिकं सर्वं पूर्ववत् । इत्यतिपातकव्यवस्थासमाप्तिः ।

अथानुपातकविवेचनारम्भः ।

यथा प्रायश्चित्तविवेके—

तत्र महापातकतुल्यं पापमनुपातकं ।

वक्ष्यमाणमनुवचनात्, अनुपातकसंज्ञा अन्वर्थत्वात् अतोऽनु साद्दृश्ये-वर्त्तते तेन महापातकसदृशं पापमनुपातकमित्यर्थः ।

"तत्र महापातकसमं पापमाह मनुः,—

"अनृतं च समुत्कर्षे राजगामि च पैशूनं ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥
ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः ।
गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट् ॥
निःक्षेपस्यापहरणं नराश्वरजतस्य च ।
भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतं ॥
रेतःसेकः स्वयोन्यासु कुमारीष्वन्त्यजासु च ।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः" ॥

अनृतं च समुत्कर्ष इति, समुत्कर्षनिमित्ते वाचा क्रियया वा अन्यथा-प्रतिपादनं यथा शूद्रस्य ब्राह्मणोऽहमिति वचनं यज्ञोपवीतधारणञ्च अथवा-परस्य सम्यग्जातिविद्यासमुत्कर्षे सति नायं ब्राह्मणो न च किञ्चिदप्ययं-जानीत इत्यनृतवचनं ब्रह्महत्यासमं समत्वेन द्वादशवार्षिकप्रायश्चित्तनिमित्तं,-एतच्च ज्ञानात्यन्ताभ्यासतः ।

एवमुत्तरवचनद्वयेऽपि राजनि च निर्दोषस्य दोषाख्यापनं गुरोश्च-अन्मदातुः चकाराद्राचार्य्यादेश्चेत्यर्थः । निर्बन्धः पुनःपुनरभियोगः,-मृषाभियोग इत्यर्थः । ब्रह्मोज्झतेति असच्छास्त्राभियोगेनाधीतवेदविस्मरणं । वेदनिन्दा चार्थतो ग्रन्थतश्च । ग्रन्थत इति शब्दत इत्यर्थः । कौटसाक्ष्यं-साक्ष्ये मृषाभिधानं । सुहृद्वधो ब्राह्मणव्यतिरिक्तमित्रवधः । गर्हितान्न-मद्यजाद्य गर्हितान्नं लशुनादि तयोर्ज्ञानपूर्वकमभ्यासेन भक्षणं गर्हितान्न-मितिगर्हितयोरन्नयोरिति मनुवचने कर्मधारयसमासः तत्रान्नस्य गर्हितत्वं-मद्यजात्वमित्यनेन विहतं, गर्हितस्य लशुनादेरन्नाद्यस्य पुरीषादेर्भक्षणमिति-कुल्लूकभटः । इदं मया न भोक्तव्यमिति संकल्पितमनाद्यमिति मेधातिथिः । सुरापानसमं ब्रह्मोज्झत्वमिति वा पाठः । कल्पतरौ तु गर्हितानाद्ययो-रिति पाठं कृत्वा व्याख्यातं गर्हितं शास्त्रप्रतिषिद्धमपि लोकेऽत्यन्तनिन्दितं । अनाद्यं लशुनादि । निःक्षेपस्य ब्राह्मणसम्बन्धिनः सुवर्णव्यतिरिक्तस्य-नरादेरपहारो ब्राह्मणसुवर्णस्तेयसमः । स्वयोन्यासु सपिण्डासु मातृपितृयोनि-सम्बन्धासु पितृष्वसृमातृष्वसृषु अन्त्यजासु चाण्डालादिस्त्रीषु सख्युः सवर्णमित्र-स्त्रीषु पुत्रस्त्रीषु असवर्णपाणिगृहीतासु आत्मेतरपुत्रस्त्रीषु वा रेतोविसर्गो यस्तं-गुरुतल्पसमं जानीयुः । एतच्चाद्—यदुपपातकेषु दृश्यते तदज्ञानादिना । लघुविषयश्चेत्यादि व्यवस्थेयं । यत्र वशिष्ठवचनं ब्रह्मोज्झः कृच्छ्रं द्वादशरात्रं-चरित्वा पुनरुपयुञ्जीत वेदमाचार्य्यात् ।

विष्णुः,—समुत्कर्षानृते गुरोश्चालीकनिर्बन्धे तदाचारणे च मासं पयसा-वर्त्तेत अचारणं परदारगमनाभिशापः ।

वशिष्ठः,—गुरोश्चालीकनिर्बन्धे सचेलस्नातो गुरुं प्रसादयेत् । प्रसादात्-पूतो भवेदेतानि प्रमादादिकृते बोद्धव्यानि । आदिपदात् परप्रेरणादि-नेत्यर्थः ।

प्रायश्चित्तमाह मनुः,—

"हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत् ।
राजन्यवैश्यौ चेज्यानावात्रेयीमेव च स्त्रियं ।

वशिष्ठः,—

उक्ता चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा ॥

अपहृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधं" ॥

अनिर्णीतपुंस्त्वादिस्वरूपं ब्राह्मणगर्भं विनाश्य ब्रह्मवधोक्तमेव व्रतं कुर्य्यात्-न तु ब्राह्मणीवधप्रायश्चित्तं । अविज्ञाता हि गर्भाः पुमांसो भवन्तीति वशिष्ठ-वचनात् । यत्तु कैश्चिदप्यस्मिन् विषये प्राणान्तिकमुक्तं तत् क्षत्रियादि-जातिविषयं, तथा क्षत्रियं वैश्यं यज्ञस्थं आत्रेयीं ब्राह्मणीं हत्वैतदेव व्रतं ।

यथा यमः,—

हत्वा सवनगं वैश्यं राजानमपि दीक्षितं ।

हत्वा तु ब्रह्महत्यैव तथात्रेयीञ्च ब्राह्मणीं ॥

जन्मप्रभृतिसंस्कारैः संस्कृता ब्रह्मवच्च या ।

गर्भिणी वा तथा या स्यात्तामात्रेयीं विनिर्दिशेत् ॥"

पूर्वपदस्थं गर्भिणीविशेषणं न पृथक्, ब्रह्मवत् ब्राह्मणवदित्यर्थः ।

वशिष्ठः—"रजस्वलामृतुस्नातामात्रेयीमाहुरत्र ह्येतदपत्यं भवति" रजस्वलामित्यादि गर्भग्रहणयोग्योपलक्षणं अत्र ह्यपत्यं भवतीति हेतुवन्निगदात् ।

तथा विष्णुः ।—"यागस्थस्य क्षत्रियस्य वैश्यस्य रजस्वलायाश्चान्तर्वत्न्या-श्चात्रिगोत्रायाश्च विज्ञातस्य गर्भस्य शरणागतस्य घातनं ब्रह्महत्यासमा-नोति" तेन त्रिविधात्रेयी अत्रिगोत्रा रजस्वला गर्भिणी चोक्ता इति, सुव-र्णादिविषये साक्ष्ये त्वनृतमभिधाय गुरुं मृषाभिदोषेणाभियोज्य सुवर्ण-व्यतिरिक्तान्यासद्रव्यमपहृत्य स्त्रियाः स्वयोन्यादिकाया उपगमनरूपमोहूदी-करणेन वधमव्यवहार्य्यस्वरूपं कृत्वा एतदेव व्रतं कुर्य्यात् । स्त्रीशब्दोऽत्र-आत्रेयीव्यतिरिक्तगुणवच्चातुर्वर्ण्यस्त्रीपर इति कल्पतरुः ।

तथा विष्णुरपि,—

अनुपातकसंज्ञाप्रायश्चित्तं चाह,—

"यागस्थस्य क्षत्रियस्य वैश्यस्य रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाश्चा-विज्ञातगर्भस्य शरणागतस्य घातनं ब्रह्महत्यासमानानि, कौटसाक्ष्यं सुहृद्वध-

इत्येतौ सुरापानसमौ ब्राह्मणभूमिहरणं निक्षेपहरणं, सुवर्णस्तेयसमं पितृ-पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमं पितृष्वसृमातृ-स्वसृगमनञ्च श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं स्वसृसख्याः सगोत्राया-उत्तमवर्णाया अन्त्यजायाः कुमार्य्या रजस्वलायाः शरणागतायाः प्रव्रजिता-निक्षिप्तायाश्च। प्रायश्चित्तमत्र,—

यथा,—

"अनुपातकिनस्त्वेते महापातकिनो यथा।
अश्वमेधेन शुध्येयुस्तीर्थानुसरणेन वा" ॥

पितृपत्नी न माता तस्या गमनस्य महापातकत्वात्। किन्तु गम्यारमपेक्ष्य-हीनवर्णा ग्राह्या, उपाध्याय आचार्य्यः, उत्तमवर्णा क्षत्रियादेर्ब्राह्मणी न-शूद्रस्य महापकत्वात्, अन्त्यजा चाण्डाली, कुमारी ब्राह्मणकन्या, व्यक्तमपरं-अश्वमेधेन शुध्येयुरिति गुरुतल्पव्रतोपलक्षणं।

यथा मनुः,—

"गुरुतल्पव्रतं कुर्य्याद्रेतः सिक्त्वा स्वयोनिषु।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च" ॥

एतद् ज्ञानतोऽनुपातके ऽगम्यागमनव्यतिरिक्ते बोद्धव्यं, अर्थात् एतत् अश्व-मेधादिकं प्रायश्चित्तं ज्ञानकृते विष्णूक्तानुपातके पितृपितृव्यादिपत्नीरूपागम्या-गमनव्यतिरिक्ते यागस्थक्षत्रियादिवधकीटसाक्ष्यादौ बोद्धव्यमित्यर्थः।

अज्ञानतस्तदर्द्धं ज्ञानतोऽगम्यागमनरूपेऽनुपातके मरणमेवाज्ञानतः-सम्पूर्णव्रतं।

यथा यमः,—

"स्नुषा पितृस्वसा माता सखी मातृस्वसा सुता।
मातुलानी स्वसा श्वश्रूर्गत्वा सद्यः पतेत् द्विजः ॥
एतास्त्वान्याश्च सततं नियतं परिवर्जयेत्।
एतैरगम्यागमनैः सद्यः पतति वै द्विजः ॥

तथा स्कन्दति वै मोहात् गुरुतल्पेन युज्यते ।
शिश्नस्योत्कर्त्तनं कृत्वा प्राणत्यागेन शुध्यति" ॥"

मातृस्नुषादुहितृव्यतिरिक्ताया गमने ज्ञानत इदं प्रायश्चित्तं, मात्रादिगमनस्यातिपातकत्वेन ज्ञानाज्ञानाभ्याममेव मरणस्योक्तत्वात् । सखी मित्रपत्नी । अन्याश्चेति नारदाद्युक्तस्त्रीणां ग्रहणं ।

यथा नारदः,—

"माता पितृस्वसा श्वश्रूर्मातुलानी मातृस्वसा ।
पितृव्यसखीशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताऽचार्य्यभार्य्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गत्वा गुरुतल्पग-उच्यते ।
शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते ॥"

माता पूर्वमेव व्याख्याता सगोत्रा सपिण्डा ।

याज्ञवल्क्यः,—

"पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा ॥"

वधदण्डोऽयं न ब्राह्मणविषयः ।

यथा मनुः,—

"न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितं ।
राष्ट्रादेनं बहिष्कुर्य्यात् समग्रधनमक्षतं ॥"

दण्डस्यापि पापक्षयहेतुत्वं सुवर्णस्तेयप्रकरणे दर्शितं ॥

हारीतः,—गुरुतल्पगो सूर्म्मीं प्रकृतिमग्निवर्णां कृत्वा तामालिङ्ग्य-

मृत्युना पूतो भवति। एवमेव पितृव्यस्त्रीगमने श्वश्रूमातृस्वसृपितृस्वसृगमने-कन्या सगोत्रा स्त्रिया भगिनीगमने च चान्द्रायणं वेति। स्वयं त्राह्मणैरेवं-प्रायश्चित्तं कार्य्यं न तु दण्डरूपं चान्द्रायणं वेति आसामेव पञ्चपुरुषाधिक-गामिनीनां गमने बोधव्यं।

यथाऽस्मिन्नेव विषये संवर्त्तः,—

"गुरोर्दुहितरं गत्वा स्वसारं पितुरेव च।
मातुलस्य सुतां गत्वा चरेच्चान्द्रायणं व्रतं॥
मातृस्वसृसुतां गत्वा मातुलानीं सनाभिनीं।
एता गत्वा स्त्रियो मोहात् पराकेण विशुध्यति॥
सखिभार्य्यां समारुह्य स्वस्रीयां श्यालिमेव च।
अहोरात्रोषितो भूत्वा तत्पकृच्छ्रं समाचरेत्॥
पितृभार्य्यां समारुह्य मातृवर्जं नराधमः।
भगिनीं मातुराप्तां तु स्वसारं चान्यमातृजां॥
एतास्तिस्रः स्त्रियो गत्वा तप्तकृच्छ्रं समाचरेत्।
कुमारीगमने चैव व्रतमेतद्विनिर्दिशेत्॥"

एतानि स्वल्पातिस्वल्पप्रायश्चित्तानि मुन्यन्तरोक्तानि अज्ञानादारोपणमात्रे-सम्बन्धविप्रकर्षे वा सकृदभ्यासव्यभिचारिण्यां वा विषयभेदेन व्याख्येयानि।

शङ्खलिखितौ—

"गुरुतल्पगस्तप्तमायसं शयनमभिसंविशेत्। क्षुरेण वा शिश्नवृषणावुत्कृत्या-ञ्जलावाधाय नैर्ऋतीं दिशमवेक्षमाणो व्रजेत्। आशरीरनिपातात् पूतो भवति-एवं मातुलानीमातृष्वसृपितृष्वसृस्नुषादुहितृगमने आचार्य्यदुहितरि वेति"।

गोतमः—सखिस्वयोनिसगोत्राशिष्यभार्य्यासुषासु गवि चैव गुरुतल्प-समः। स्नुषा अनौरसपुत्रस्य भार्य्या औरसस्यासवर्णा वा, शिष्य उपनयन-पूर्वकं साङ्गकृत्स्नवेदमध्यापितः, स्वयोनिः सोदरभगिनी सगोत्राः पितृव्यादि-स्त्रियः।

भ्रातृभार्य्यागमनेऽपि गुरुतल्पव्रतमाह संवर्त्तः,—

"पितृव्यदारगमने भ्रातृभार्य्यागमे तथा ।
गुरुतल्पव्रतं कुर्य्यान्नान्या निष्कृतिरुच्यते ॥"

यत्तु याज्ञवल्क्यवचनं,—

अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणं चरेत् ।

इति । तदसवर्णव्यभिचारिभ्रातृजायाविषयं । तदेतेष्वगम्यागमनरूपेष्वनुपातकेषु ज्ञानतः प्राणान्तिकं प्रायश्चित्तं चतुर्वर्णानां, वधदण्डरूपं क्षत्रियादीनां-त्रयाणां, अज्ञानतो द्वादशवार्षिकव्रतं । सम्बन्धविप्रकर्षे व्यभिचारिणीविषये-वा लघुप्रायश्चित्तं चान्द्रायणादिकमूहनीयं । अकामतश्चण्डाल्यादिगमने-द्वादशवार्षिकव्रतमाहुर्मन्वादयः ।

"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति ॥"

इति मनुवचनं ।

तथाच यमोऽपि,—

"चाण्डालीं ब्राह्मणो गत्वा भुक्त्वा च प्रतिगृह्य च ।
अज्ञानात् पतितो विप्रो ज्ञानात्तु समतां व्रजेत् ॥"

अन्त्याः श्वपचादयः ।

यथाऽङ्गिराः,—

"चाण्डालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥"

चाण्डालान्त्यस्त्रियो गत्वा तदन्नमष्टचत्वारिंशदभ्यासतो भुक्त्वा तद्द्रव्यमपि-तावदभ्यासतः प्रतिगृह्य चाज्ञानतः पतति द्वादशवार्षिकव्रताधिकारी भवति । ज्ञानात्तु चाण्डालसमत्वमाप्नोति । विप्रग्रहणात् प्रतिग्रहसमभिव्याहाराच्च-ब्राह्मणविषयमित्येके, तन्न, अस्पृश्यत्वनिमित्तत्वात्तस्य सर्व्ववर्णापेक्षयैवा-विशिष्टत्वात् विप्रब्राह्मणपदमिह वर्णमात्रोपलक्षणं । अतएव विष्णुना,-

चाण्डालीगमने तत्साम्यमाप्नुयादिति सामान्येनैवोक्तं समत्वोपन्यासस्तु-चाण्डालीगमने ज्ञानतः प्राप्तद्विगुणत्वादब्दवार्षिकव्रतनिषेधार्थो न तु मरण-निषेधार्थस्तस्य विहितत्वात्।

तथा यमः,—

"रेतः सिक्त्वा कुमारीषु चाण्डालीषु सुतासु च।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते"॥

चाण्डालजातेरपि शुद्धिकारणत्वेन मरणस्योक्तत्वात्।

यथा मनुः,—

"गवार्थे ब्राह्मणार्थे वा प्राणत्यागोऽनुपस्कृतः।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां शुद्धिकारणं"॥

"ये तु मन्यन्ते चाण्डालसमत्वोपन्यासः सर्वप्रायश्चित्ताभावार्थः न हि-चाण्डालत्वजातिप्रायश्चित्तेनापगच्छति इति, ते परास्ताः यममनुवचन-विरोधात्। किं च समशब्देन तज्जातिप्राप्तिरुक्ता तदा तस्याः कर्मणा जात-त्वात् कथं कर्मणा न तदपगमः विश्वामित्रक्षत्रियत्ववत्। वस्तुतस्तु चाण्डाल-जातिप्राप्तिर्न सम्भवति पृथगवस्थितायाः समवायासम्भवात्।" यथैतस्य-विवृतिः प्रायेण ननु यदि तस्य तज्जातिता तदा कथं प्रायश्चित्तविधानं-सर्वधर्मबहिष्कृतत्वेन प्रायश्चित्तानधिकारादित्यत आह—चाण्डालजातेरपीति, अनुपस्कृतः अविकृतः न तु परप्रेरणेनेत्यर्थः। अभ्युपपत्तौ रक्षानिमित्त-मित्यर्थः। बाह्यानां चाण्डालादीनां सर्वप्रायश्चित्ताभाव इति यदुक्तं तत्राह—यममनुवचनविरोधात्, रेतः सिक्त्वेत्यादियमवचनं, गवार्थे इत्यादि मनु-वचनमित्यर्थः। नहीत्यादि यदुक्तं तद्दूषयति किञ्चेति, तदा तस्या जातेरगम्या-गमनरूपकर्मणा जातत्वात् कथं प्रायश्चित्तकर्मणा नापगमः, यथा विश्वामित्रस्य-क्षत्रियत्वजातेस्तपःकर्मणाऽपगम इत्यर्थः एतच्च प्रतिबन्धिमात्रं न तु सिद्धान्त-इत्याह वस्तुतस्त्विति, पृथगवस्थिताया जातेरिति समवायसम्बन्धेनैव जातिर्द्रव्ये-वर्त्तते, समवायस्तु पृथगवस्थितयोश्चाण्डालत्वपातकिशरीरयोर्न सम्भवति, अयुत-सिद्धानामाधार्य्याधारभूतानामिह प्रत्ययहेतुभूतसम्बन्धस्य समवायत्वात्,

विश्वामित्रस्य तु ब्रह्मवरदानात् जात्यन्तरोत्पत्तौ पूर्वदेहात् देहान्तरोत्पत्ति-र्द्दृष्टान्त् दधिवत् स्यात्, अतएव त्रिशङ्कोर्वशिष्ठपुत्रशापात् चाण्डालत्वोत्पत्तौ-सद्य एव रूपाकारविपर्य्ययः श्रूयते । यथा आदिकाण्डे रामायणे,—

"ऋषिपुत्राश्च तत्-श्रुत्वा घोराक्षरपदं वचः ।
शेपुस्तं नृपतिं क्रुद्धाश्चाण्डालः त्वं भविष्यति ॥
अथ रात्र्यां व्यतीतायां तस्यां राजा बभूव सः ।
चाण्डालदर्शनो राम ! सद्य एव दुराकृतिः ॥
अधो नीलाम्बरधरो रक्ताम्बरकृतोत्तरः ।
कृष्णोऽतिताम्रघोराक्षः करालो हरिपिङ्गलः" ॥

कृष्णोऽतिताम्रघोराक्षः करालो हरिपिङ्गल—इत्यादि—अतस्तत्रापि-समवायसम्बन्धोऽस्त्येवेति, अन्ये तु ब्राह्मणचरुजातत्वात् विश्वामित्रः पूर्वमेव-ब्राह्मणः क्षत्रियत्वं तस्य क्षत्रियाजातत्वात्, व्यवहारमात्रमित्याहुः । तदयुक्तं-यदि सर्वकालमेव विश्वामित्रस्य ब्राह्मण्यं तदा राजत्वकाले जातानां कन्यानां-कथं क्षत्रियेण परिणयनं कथं वा तज्जातपुत्राणां क्षत्रियत्वं कथं वा बहुसहस्र-संवत्सरं तपस्यायां श्रमः, किम्वा ब्रह्मणो वरदानेनेति तन्न किंचिदेतत् ।"

अपिच—

समशब्दस्य तदनभिधायकत्वाच्च तर्हि चाण्डाल एव स्यात् न तत्समः, अतः समशब्देन चाण्डालवत् कर्मानधिकारित्वमस्योक्तं । यद्यपि पतितत्वे-ऽपि तदस्ति तथापि तत्र प्रायश्चित्ताधिकारोऽस्ति अत्र प्रायश्चित्तेऽप्यनधिकार इति पतितत्ववैलक्षण्यं तदपि मरणेतरत्वेन विशेषणीयं उक्तमनुवचनादुक्त-याज्ञवल्क्यवचनाच्चेति ।

अकामतोऽपि गर्भोत्पादने तत्समत्वमेव ।

यथाऽपस्तम्बः,—

"चाण्डालमेदश्वपचकपालव्रतधारिणां ।
अकामतः स्त्रियं गत्वा पराकव्रतमाचरेत् ॥

कामतस्तु प्रसूतो वा तत्समो नात्र संशयः ।
अन्त्यजायां प्रसूतस्य प्रायश्चित्तं न विद्यते ॥
निर्वासनं कृताङ्कस्य तस्य कार्य्यं न संशयः ।"

अकामतोऽपीति, कामतस्त्विति, प्रसूतो वेत्यत्र वा शब्दादकामविषयोपसंहारः, कामतो गत्वा वा अकामतः कृतगर्भोत्पादनो वा इत्यर्थः । हेतुमाह अन्त्यजायामिति, तस्य किं स्यादित्यत आह—निर्वासनमिति राज्ञा कार्य्यमिति शेषः । इति तत्त्वार्थकौमुदी ।

"भेदश्वपचौ प्रतिलोमजौ पराकव्रतं मैथुनाभिसम्बन्धिना आरोहणमात्रात् । कापालिकव्रतमहं अत्रापि प्रायश्चित्तं न विद्यते इति मरणेतर चतुर्विंशतिवार्षिकादिनिषेधार्थौ तिन्दार्थौ वा ॥

यच्च ज्ञानतश्चान्द्रायणव्रतमुक्तं तद्रेतःसेकात् पूर्वं पूर्ववदभ्यस्तं वा ।
अभ्यस्तं चतुर्विंशतिश्चान्द्रायणानीत्यर्थः ।

यथा विष्णुः,—

"चाण्डालीगमने तत्साम्यमाप्नुयादज्ञानाच्चान्द्रायणं" ।

तथा संवर्त्तः,—

"चाण्डालीं पुक्कसीं म्लेच्छीं श्वपाकीं पतितां तथा ।
एता गत्वा द्विजो मोहाच्चरेच्चान्द्रायणं व्रतं ॥"

यच्च गौतमेनोक्तं,—

चाण्डालीगमने कृच्छ्राब्दोऽमत्या द्वादशरात्रः तच्च ज्ञानतो द्वित्रारोहणाभ्यासे कृच्छ्राब्दः । अज्ञानतः सकृदारोहणे द्वादशरात्रः पराकाख्यः, पराके पञ्च धेनवः । द्वादशरात्रः द्वादशरात्रोपवास इत्यर्थः । एवमन्यान्यपि स्वल्पप्रायश्चित्तानि बोध्यानि ।" इति शूलपाणिः । तथा प्रायश्चित्तमनोहरादौ मुरारिमिश्रादयः ।

यथा याज्ञवल्क्यः,—

"गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्बधः ।

ब्रह्महत्या समं ज्ञेयमधीतस्य च नाशनं" ॥

गुरूणामाधिक्येनाधिक्षेपः अनृताभिशंसनं । एतच्च लोकाविदितदोषाभिशंसनविषयं । वेदनिन्दानास्तिक्याभिनिवेशेन वेदकुत्सनं । सुहृन्मित्रं-तस्याब्राह्मणस्यापि बधः । अधीतस्य वेदस्यासच्छास्त्रविनोदेनालस्यादिना-वा नाशनं विस्मरणं । एतानि प्रत्येकं ब्रह्महत्यासमानीति विज्ञानेश्वरः ।

तथा स एव,—

"निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतं ।

रजस्वलामुखास्वादः सुरापानसमानि तु" ॥

निषिद्धं लशुनादिकं तस्य मतिपूर्वभक्षणं । जैह्म्यं कौटिल्यं अन्याभिसन्धानेनान्यथादित्वमन्यकर्तृकत्वं च । तथा समुत्कर्षनिमित्तं राजकुलादावचतुर्वेद एव चतुर्वेदोऽहमित्यनृतभाषणं । रजस्वलाया अकामवशेन वक्त्रासवसेवनमेतानि सुरापानसमानीति मिताक्षरायां योगिविज्ञानेश्वरः ।

तथा स एव,—

"अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा ।

निक्षेपस्य च सर्वं हि सुवर्णस्तेयसम्मितं" ॥

अश्वादीनां ब्राह्मणसम्बन्धिनां निक्षेपस्य च सुवर्णव्यतिरिक्तस्यापहरणमेतत्-सर्वं सुवर्णस्तेयसमं वेदितव्यं । इति मिताक्षरायां ।

तथा स एव,—

"सखीभार्य्याकुमारीषु स्वयोनिष्वन्त्यजासु च" ॥

सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतं" ॥

सखा मित्रं तस्य भार्य्या कुमार्य्युत्तमजातीया कन्या तासु । स्वयोनिः-भगिनी अन्त्यजा चाण्डाली सगोत्रा समानगोत्रा, सुतस्त्री स्नुषा एतासां गमनं-

प्रत्येकं गुरुतल्पसमं। एतच्च रेतःसेकादूर्द्धं वेदितव्यं। अर्वाङ्-निवृत्तौ तु न-गुरुतल्पेन समत्वं किन्त्वल्पमेव प्रायश्चित्तमिति" सः।

तथा स एव,—

"पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा॥
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः।
लिङ्गं छित्त्वा वधस्तत्र सकामायाः स्त्रिया अपि"॥

"पितृष्वस्रादयः प्रसिद्धास्ता गच्छन् गुरुतल्पगस्तस्य लिङ्गं छित्त्वा राज्ञा-वधः कर्त्तव्यो दण्डार्थः, प्रायश्चित्तं च तदेव। चशब्दाद्राज्ञीप्रव्रजितादीनां ग्रहणं। तेषां च महापातकोपपातकमध्यपाठान्महापातकान्नूनत्वमुपपातकाच्च गुरुत्वमवगम्यते। तदुक्तं,—

"महापातकतुल्यानि पापान्युक्तानि यानि तु।
तानि पातकसंज्ञानि तन्न्यूनमुपपातकमिति"॥

तथा चाङ्गिराः,—

"पातकेषु सहस्रं स्यान्महत्सु द्विगुणं तथा।
उपपापे तुरीयं स्यान्नरकं वर्षसंख्ययेति"॥

तथा वृहद्विष्णुना च दर्शितानि। यथा यागस्थक्षत्रियवधो वैश्यस्य च-रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य च-घातनं ब्रह्महत्यासमानि। कौटसाक्ष्यं सुहृद्वध इत्येतौ सुरापानसमौ। ब्राह्मणस्य भूमिहरणं सुवर्णस्तेयसमं। पितृव्यमातामहमातुलनृपपत्न्यभि-गमनं च स्वसुः सख्याः सगोत्राया उत्तमवर्णाया रजस्वलायाः शरणागतायाः-प्रव्रजिताया निक्षिप्तायाश्च गमनमित्येतानुपातकानीति" तद्व्याख्याकर्त्तारः। प्रायश्चित्तमत्र—

*यथाह्युर्य्याज्ञवल्क्यादयः,—*

"यागस्थक्षत्रविट्घाती चरेद्-ब्रह्महणां व्रतं ।
गर्भहा च यथा वर्णं यथात्रेयी निषूदकः" ॥

दीक्षणीयाद्युदवसानीयापर्य्यन्ते सोमयागप्रयोगे वर्त्तमानौ क्षत्रियवैश्यौ-यो व्यापादयत्यसौ ब्रह्महणि पुरुषे यद्व्रतमुपदिष्टं द्वादशवार्षिकादि तच्चरेत् । यद्यपि यागशब्दः सामान्यवचनस्तथाप्यत्र सोमयागमभिधत्ते । सवनगतौ-च राजन्यवैश्याविति विशिष्टेन सवनत्रयसंपाद्यस्य सोमयागस्यैव निर्दिष्टत्वात् । अत्र च गुरुलघुभूतानां द्वादशवार्षिकादिब्रह्महत्याव्रतानां जातिशक्तिगुणाद्य-पेक्षया व्यवस्था वेदितव्या । एवं गर्भवधादिष्वपि मरणान्तिकं तु नातिदिश्यते-व्रतशब्दणात्, अतः कामतो यागस्थक्षत्रियादिवधे व्रतस्यैव द्वैगुण्यं, एतच्च व्रतं-सम्पूर्णमेव कर्त्तव्यं । पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वेति प्रक्रम्यापस्तम्बेन-द्वादशवार्षिकाभिधानात् । गर्भञ्च विज्ञातु संभूतं हत्वा यथावर्णं यद्वर्णपुरुष-वधे यत्प्रायश्चित्तमुक्तं तद्वर्णगर्भवधे तच्चरेत् । एतच्चानुपजातस्त्रीपुंनपुंसक-व्यञ्जनगर्भविषयं हत्वा गर्भमविज्ञातमिति मानवे विशेषदर्शनात् । अत्र च-यद्यपि ब्राह्मणगर्भस्य ब्राह्मणत्वादेव तद्वधनिमित्तव्रतप्राप्तिस्तथापि स्त्रीत्व-स्यापि संभवात् स्त्रीशूद्रविट्क्षत्रवध इत्युपपातकत्वेन तत्प्रायश्चित्तप्राप्तिरपि-स्यादतः स्त्रीपुंनपुंसकत्वेनाविज्ञातेऽपि ब्राह्मणगर्भत्वमात्रप्रयुक्तं ब्रह्महत्या-व्रतं कुर्यादित्यर्थवदतिदेशवचनं । उपजाते स्त्रीपुंसादिविशेषव्यञ्जने यथा-यथमेव प्रायश्चित्तं । यथात्रेय्या निष्वदको व्यापादकः सोऽपि तथा व्रतं-चरेत् । हन्यमानात्रेयी वर्णानुरूपव्रतं चरेदित्यर्थः । आत्रेयीशब्देन ऋतु-मत्युच्यते । रजस्वलामृतुस्नातामात्रेयीमाहुरत्र ह्येतदपत्यं भवतीति वशिष्ठ-स्मरणात् । अत्रिगोत्रजा च । अत्रिगोत्रा वा नारीमिति विष्णुस्मरणात् । एतदुक्तं भवति ब्राह्मणगर्भवधे ब्राह्मण्यात्रेयीवधे च ब्रह्महत्या व्रतं ।

अत्र क्षत्रियगर्भवधे क्षत्रियात्रेयीवधे क्षत्रियहत्याव्रतमेवमन्यत्रापीति यथाह्याज्ञवल्क्य अनृतवचनादिष्वपि ।

यथाह मनु:,—

"उक्ता चैवानृतं साक्ष्ये प्रतिरभ्य गुरु तथा ।
अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधमिति ॥"

यत्र व्यवहारे असत्यवचनेन प्राणिनां वधप्राप्तिस्तद्विषयमेतत्। प्रायश्चित्तस्यातिगुरुत्वात्। प्रतिरम्भ: क्रोधावेश:। निक्षेपश्च ब्राह्मणसम्बन्धी स्त्री चाहिताग्निभार्य्या पतिव्रतात्वादिगुणयुक्तोच्यते सवनस्था च।

यथाहाऽङ्गिरा:,—

"आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम्।
ब्रह्महत्याव्रतं कुर्य्यादात्रेयीघ्नस्तथैव च।
सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतञ्चरेदिति"—

पराशरस्मरणात्।

एवञ्च सवनस्थाग्निहोत्रिण्यात्रेयीवधे ब्रह्महत्याप्रायश्चित्तातिदेशात्तद्व्यतिरिक्तस्त्रीवधस्य स्त्रीशूद्रविट्क्षत्रियवध इत्युपपातकमध्यपाठादुपपातकत्वमेव।

तथा,—

"सुरापानसमेषु तु निषिद्धभक्षणादिषु"। सुरापानप्रायश्चित्तार्द्धमित्युक्तं। तथा यानि चाश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथेत्यादिना सुवर्णस्तेयसमत्वेन प्रतिपादितानि तेष्वर्द्धमेव कार्य्यमेव।

यत् पुनश्चतुर्विंशतिमतवचनं,—

"रूप्यं हृत्वा द्विजो मोहाच्चरेच्चान्द्रायणव्रतं।
गद्याणदशकादूर्द्धमाशताद्द्विगुणं चरेत् ॥
धान्यानां हरणे कृच्छ्रं तिलानामैन्दवं स्मृतं।
रत्नानां हरणे विप्रश्चरेच्चान्द्रायणव्रतमिति ॥"

तदपि गद्याणसहस्राधिकरजतहरणे सुवर्णस्तेयसमप्रायश्चित्तप्रतिपादनार्थं न पुनस्तन्निवृत्त्यर्थं। यदपि रत्नापहारे चान्द्रायणमुक्तं तदपि गद्याण

महत्त्वाहीनमूल्यरत्नापहारे द्रष्टव्यं । ऊर्ड्ं पुनः सुवर्णस्तेयसमं । तथा यानि-पुनर्गुरुतल्पसमानि ।

"सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतमिति" ॥

प्रतिपादितानि यानि चातिदेशविषयभूतानि ।

"पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा ।
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः" ॥ इति ।

प्रतिपादितानि तथैकरात्रादूर्द्ध्वं कामतोऽभ्यस्तेषु यथाक्रमेण षड्वार्षिकं-नववार्षिकं च प्रायश्चित्तं विज्ञेयं । अस्मिन्नेव विषये कामतोत्यन्ताभ्यासे-मरणान्तिकं ।

तथा च वृहद्यमः,—

"रेतः सिक्ता कुमारीषु स्वयोनिष्वन्त्यजासु च ।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते ॥
अन्त्याश्चात,
चाण्डालः श्वपचः चत्ता सूतो वैदेहिकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥" इति ।

माङ्गिरोदर्शिता ज्ञातव्याः, न तु रजकचर्मकारश्चेत्यादिप्रतिपादिताः । तेषु-लघुप्रायश्चित्तस्योक्तत्वात् ।

तथा, —

"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छतीति" ॥

चाण्डालादिसाम्यं प्रतिपादयता मनुनापि कामतोऽत्यन्ताभ्यासे-मरणान्तिकं दर्शितं, तथाज्ञानचाण्डालीगमनाभ्यासे पतत्यतः पतित-

प्रायश्चित्तं द्वादशवार्षिकं कुर्य्यात्। कामतोऽत्यन्ताभ्यासे चाण्डालीः सम्यं-गच्छत्यतो द्वादशवार्षिकाधिकं मरणान्तिकं कुर्य्यात्। एतच्च बहुकालाभ्यास-विषयं। एकरात्राभ्यासे तु वर्षत्रयं।

यथाह मनुः,—

"यत्करोत्येकरात्रेण वृषलीसेवनाद्-द्विजः।
तद्भैक्ष्यभुक् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति" ॥

अत्र वृषलीशब्देन चाण्डाल्यभिधीयते।

"चाण्डाली बन्धकी वेश्या रजस्था या च कन्यका।
ऊढ़ा या च सगोत्रा स्याद्वृषल्यः पञ्च कीर्त्तिताः" ॥

इति स्मृत्यन्तरे वृषलीशब्दप्रयोगदर्शनात्। बन्धकी स्वैरिणी। कथं-पुनरत्राभ्यासागमः। उच्यते, यत्करोत्येकरात्रेणेत्यन्तसंयोगापवर्गवाचिन्या-स्तृतीयाया दर्शनात्। एकरात्रेण चात्यन्तसंयोगे। गमनस्याभ्यासं विनानुपपन्न इति गमनाभ्यासोऽवगम्यते, अतएवैकरात्राद्बहुकालाभ्यासविषयं प्रागुक्तं। द्वादशवर्षादिगुरुतल्पव्रतातिदेशिकं मरणान्तिकं च। यदा पुनर्ज्ञानतो-ऽज्ञानतो वा चाण्डाल्याद्याः सकृद्गच्छन्ति। तदा,—

"चाण्डालपुक्कसानां तु भुक्त्वा गत्वा च योषितं।
कृच्छ्राब्दमाचरेद् ज्ञानादज्ञानादैन्दवद्वयमिति" ॥

यथायुक्तं सम्वत्सरं कृच्छ्रानुष्ठानं। अमत्या चान्द्रायणं द्वयं यथाक्रमेण-द्रष्टव्यं। स्वयोनिष्वन्त्यजासु चेत्येकसमभिव्याहारान्नगिन्यादिष्वपीयमेव व्यवस्था-वेदितव्या। मरणान्तिकं चात्राग्निप्रवेशनं।

यत्तु वृहद्यमेनोक्तं,—

"चाण्डालीं पुक्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीं।
मातापित्रोः स्वसारं च निक्षिप्तां शरणागतां ॥
मातुलानीं प्रव्रजितां सगोत्रां नृपयोषितं।
शिष्यभार्य्यां गुरोर्भार्य्यां गत्वा चान्द्रायणं चरेदिति ॥"

यत्त्वङ्गिरोवचनं,—

"पतितान्त्यस्त्रियो गत्वा भुक्ता च प्रतिगृह्य च ।
मासोपवासं कुर्वीत चान्द्रायणमथापि वा ॥"

तदुभयमाताग्रुकतल्पातिदेशविषयेषु कामतः प्रवृत्तस्य रेतःसेकादर्वाङ्-निवृत्तौ द्रष्टव्यं । इति विज्ञानेश्वरः ।

तथा चादित्यपुराणे,—

"नटीं शैलूषिकीं चैव रजकीं वेणुजीविनीं ।
गत्वा चान्द्रायणं कुर्यात्तथा चर्मोपजीविनीं ।"

एतदपि सकृद्गमनविषयं,—

"रण्डाया गमने चैव चरेत् सान्तपनं व्रतं ।
सम्वत्सरेण भवति गुरुतल्पसमं हि तत् ॥
वेश्याया गमने विप्रः प्राजापत्यं समाचरेत् ।
नाभ्यासान्निष्कृतिर्दृष्टा शास्त्रे च परमर्षिभिः ॥
सम्वत्सरकृताभ्यासाद्गुरुतल्पव्रतं स्मृतं ।
यदि तत्र प्रजोत्पत्तिर्निष्कृतिर्न विधीयते ॥"

तथा कूटसाक्ष्यप्रायश्चित्तं । कूटसाक्षी कृच्छ्रपादहीनं चरित्वा पंचगव्यं पीत्वा ततः शुद्धिमवाप्नोतीति, मुरारिमिश्राः । प्रायेण निरुक्तप्रमाणानुकूलव्यवस्थेयं । समुत्कर्षे अनृतं, तत्तु समुत्कर्षनिमित्तं वाचा क्रियया वा अन्यथा प्रतिपादनं यथा शूद्रस्य ब्राह्मणोऽहमिति वचनं यज्ञोपवीतधारणञ्च । अथवा परस्य सम्यग्जातिविद्योत्कर्षे सति नायं ब्राह्मणो न किञ्चिदयं जानीतेइत्यनृतवचनं । राजगामिपैशुनं, तत्तु राजनि निर्दोषस्य दोषख्यापनं, गुरोरलीकनिर्बन्धः, स तु गुरोर्जन्मदातुर्मृषादोषाभियोगः । एतानि त्रीणि कामतः अत्यन्ताभ्यासे अज्ञानकृतब्रह्महत्यासमानि । यागस्थयोः क्षत्रियवैश्ययोर्वधः, गर्भिणीवधः, रजस्वलावधः, अत्रिगोत्रावधः । ब्राह्मणव्यतिरिक्ताविज्ञातगर्भवधः, शरणागतवधः, एतानि च अज्ञानकृतब्रह्महत्या

समानानि। प्रायश्चित्तानि, द्वादशवार्षिकव्रतं, एतच्च ज्ञानात्यन्ताभ्यासतः, तदशक्तौ धेनुदानं पूर्ववत्। तदशक्तौ वराटकदानं तथा। दक्षिणा तु शतगावः, तदशक्तौ त्रिशतकार्षापणाः। एतन्मध्यात् यदुपपातके दृश्यते तदज्ञानादिना-लघुविषयश्चेत्यादिव्यवस्थेयं, यच्च वशिष्ठवचनं ब्रह्मोज्झं कृच्छ्रं द्वादशरात्रं-चरित्वा पुनरुपयुञ्जीत वेदमाचार्य्यात्।

विष्णुः,—समुत्कर्षानृते गुरोश्चालीकनिर्बन्धे तदाक्रोशे च मासं पयसा-वर्त्तेत। आक्रोशं परदारगमनाभिशापः। वशिष्ठः गुरोश्चालीकनिर्बन्धे-सचेलस्नानतो गुरुं प्रसादयेत्। प्रसादात् पूतो भवति, एतानि प्रमादादि-कृते बोध्यानि।

ब्रह्मोज्झता। सा च असच्छास्त्राभियोगेन अधीतवेदस्मरणं। वेदनिन्दा-अर्थतो ग्रन्थतश्च। कौटसाक्ष्यं। सुहृद्वधः, स च ब्राह्मणव्यतिरिक्तमित्रवधः। गर्हितान्नजग्धिः। सा च ज्ञानतोऽत्यन्ताभ्यासेन भक्ष्यजातान्नभोजनं गर्हितान्न—जग्धिः। ज्ञानतोऽत्यन्ताभ्यासेन कृताकललशुनादिभोजनं एतानि षट्।

अज्ञानकृतसुरापानसमानि। तथा रण्डागमनप्रायश्चित्ते पण्डितसर्वस्वो-द्धृतवचनम्।

यथा,—

"रण्डाया गमने चैव चरेत् सान्तपनं व्रतं।
सम्वत्सरेण भवति गुरुतल्पसमो द्विजः" ॥

"इदं सार्व्वत्रिकं"।

प्रायश्चित्तानि—द्वादशवार्षिकव्रतं। तदशक्तौ धेनुदानं पूर्ववत्। तदशक्तौ-वराटकदानं तथा। तत्कभ्यसुवर्णादि वा। दक्षिणा तु शतधेनवः तदशक्तौ-शतकार्षापणाः। ब्राह्मणसम्बन्धिनिःक्षेपहरणं। नराश्वरजतभूमिवज्रमणी-नामभ्यासेन हरणं। एतानि असब्राह्मणस्वामिकाशीतिरक्तिकापरिमित-सुवर्णस्तेयसमानि।

प्रायश्चित्तानि—ज्ञानतो द्वादशवार्षिकव्रतं। अज्ञानतस्तदर्द्धं। तदशक्तौ-धेनुदानं पूर्ववत्। तदशक्तौ वराटकदानं तथा। तत्कभ्यसुवर्णादि वा। दक्षिणा तु तथा, तदशक्तौ तत्परिमितकार्षापणाः। सपिण्डस्त्रीगमनं।

ब्राह्मणकुमारीगमनं। चाण्डालादिस्त्रीगमनं। सवर्णमित्रस्त्रीगमनं। पुत्रस्यासवर्णस्त्रीगमनं। औरसेतरपुत्रभार्य्यागमनं। पितृस्वसृगमनं। मातृस्वसृगमनं। गन्धारमपेक्ष्य हीनवर्णपितृपत्नीगमनं। पितृव्यपत्नीगमनं। मातामहपत्नीगमनं। मातुलपत्नीगमनं। श्वश्रूगमनं। स्वसृगमनं। ज्येष्ठभ्रातृपत्नीगमनं। राजपत्नीगमनं। श्रोत्रियपत्नीगमनं। ऋत्विक्पत्नीगमनं। उपाध्यायपत्नीगमनं। शिष्यपत्नीगमनं। स्वसृसखीगमनं। असवर्णाजातदुहितृगमनं। आचार्य्यपत्नीगमनं। शरणागतागमनं। प्रव्रजितागमनं। धात्रीगमनं। साध्वीगमनं। निःक्षिप्तस्त्रीगमनं। वर्णोत्तमागमनं। एतानि गुरुतल्पगमनसमानि। इति चतुःप्रकाराण्यनुपातकानि मिलित्वा एकपञ्चाशत्संख्येयानि। प्रायश्चित्तानि—ज्ञानतो महापातकोक्तप्रकारेण मरणं। कलौ मरणान्तिकप्रायश्चित्ताभावात् तद्वैकल्पिकं चतुर्विंशतिवार्षिकव्रतं। तदशक्तौ धेनुदानं पूर्ववत्। तदशक्तौ वराटकदानं तथा। तन्नभ्यस्वर्णादि वा। दक्षिणा तु द्विशतधेनवः। तदशक्तौ षट्शतकार्षापणाः। अज्ञानतो द्वादशवार्षिकव्रतं, तदशक्तौ धेनुदानं पूर्ववत्। तदशक्तौ वराटकदानं तथा। तन्नभ्यस्वर्णादि वा। दक्षिणा तु शतगावः। तदशक्तौ कार्षापणास्तथा। पञ्चपुरुषाधिकगामिनीनामासां गमने चान्द्रायणं। तदशक्तौ धेनुदानं—अष्ट धेनवः, पञ्च धेनवो वा धेनुचतुष्टयं। तदशक्तौ वराटकदानं। चतुर्विंशतिकार्षापणाः वा पञ्चदश, द्वादश वा कार्षापणाः। दक्षिणा तु यथाशक्ति। अभ्यासव्यभिचारिण्याः सकृद्गमने अर्थात् सप्तमपुरुषगामिन्या गमने पराकः। तदशक्तौ धेनुदानं पञ्चधेनवो वा धेनुद्वयं तदशक्तौ वराटकदानंपञ्चदश वा षट्कार्षापणाः। दक्षिणा तु यथाशक्ति। अष्टमादिपुरुषगामिन्या गमने तप्तकृच्छ्रं। तदशक्तौ धेनुदानं धेनुचतुष्टयं वा धेनुद्वयं। तदशक्तौ वराटकदानं—द्वादश वा षट् कार्षापणाः। दक्षिणा तु यथाशक्ति। अज्ञानादारोहणमात्रे सम्बन्धविप्रकर्षे वा पराकस्तप्तकृच्छ्रो वा। ज्ञानतोमहापातकोक्तप्रकारेण मरणं। कलौ मरणान्तिकप्रायश्चित्ताभावात् तद्वैकल्पिकंचतुर्विंशतिवार्षिकव्रतं। तदशक्तौ धेनुदानं पूर्ववत्। तदशक्तौ वराटकदानंपूर्ववत् तन्नभ्यस्वर्णादि वा। दक्षिणा तु द्विशतगावः। तदशक्तौ षट्शत-

कार्षापणाः। अज्ञानतो द्वादशवार्षिकव्रतं। तदशक्तौ धेनुदानं पूर्ववत्। तदशक्तौ वराटकदानं तथा। तत्तश्च स्वर्णादि वा। दक्षिणा तु तथा। तदशक्तौ कार्षापणास्तथा। रजकाया: वेश्यायाश्च सकृद्गमने यथाक्रमं सान्तपनं-प्राजापत्यं च। संवत्सरावधि अत्यन्ताभ्यासे गुरुतल्पव्रतसमं प्रायश्चित्तमनुष्ठेयं, इत्यनुपातकव्यवस्था समाप्ता।

महापातकाद्यनुपातकान्तप्रायश्चित्तेषु दक्षिणाविषयकप्रत्येकधेनुमूल्यस्य-त्रिकार्षापणात्मकत्वं प्रदर्शितं धनिकविषये, तदन्यथा प्रत्येकधेनुमूल्यस्यैककार्षापणसंख्याकत्वं कविधेयं, दक्षिणाविषये दक्षिणायां केवलमेकधेनुमूल्यस्यै-ककार्षापणात्मकत्वं प्रदर्शनीयं परतः।

अथ क्रमप्राप्तोपपातकविवेचनं। तदर्थमुपपातकं निरूप्यते।

तत्र मनुः प्रायश्चित्तविवेके यथा,—

"गोवधोऽयाज्यसंयाज्यं पारदार्य्यात्मविक्रिया।
पितृमातृगुरुत्यागः स्वाध्यायाग्न्योः सुतस्य च॥
परिवित्तितानुजेन परिवेदनमेव च।
तयोर्दानं च कन्यायास्तयोरेव च याजनं॥
कन्याया दूषणञ्चैव वार्द्धुषित्वं व्रतच्युतिः।
तड़ागारामदाराणामपत्यस्य च विक्रयः॥
व्रात्यता बान्धवत्यागो भृतकाध्यापनं तथा।
भृताद्‌ध्ययनादानमपण्यानाञ्च विक्रयः॥
सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनं।
हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च॥
इन्धनार्थमशुष्काणां द्रुमाणामपपातनं।
आत्मार्थञ्च क्रियारम्भो निन्दितान्नादनं तथा॥

अनाहिताग्निता स्तेयमृणानाञ्चानपक्रिया ।
असच्छास्त्राभिगमनं कौशीलव्यस्य च क्रिया ॥
धान्यकुप्यापशुस्तेयं मद्यपस्त्रीनिषेवनं ।
स्त्रीशूद्रविट्-चत्रवधो नास्तिक्यं चोपपातकं ।"

अस्यार्थ—अयाज्यसंयाज्यमिति प्रतिग्रहाध्यापनमप्युपलक्षयति, त्यागो-योगक्षेमाकरणमनिमित्तं, स्वाध्यायत्यागोऽधीतवेदविस्मरणं, अग्नित्यागः आल-स्यादिना। सुतत्यागः पोषणविनयाधानाद्यकरणेन, चकाराद्भार्य्यात्यागोऽपि। परिवित्तिता कनिष्ठस्य भ्रातुर्द्दाराग्निहोत्रसंयोगे सति ज्येष्ठस्य भ्रातुर्द्दाराग्नि-होत्रसंयोगप्रागभावः। कनिष्ठस्य परिवेदनं। चकारात् कन्याया अपि तथा-भूतायाः परीवेदनीयत्वं। परिवित्तिपरिवेदकयोर्वैरत्वेन कन्यादानं। तयोरेव विवाहादौ ऋत्विक्कार्य्यमिति। कन्याया दूषणमकन्या इत्युक्तिः। अङ्गुल्या योनिविदारणं वा। वार्द्धुषित्वं ब्राह्मणक्षत्रिययोर्व्रताद्युतिरवकीर्णित्वं। दाराणामपरिणीतानामपि विक्रयः"।

विवृतिमस्य यथाश्रुतिरष्टति गोविन्दानन्दः।

अयाज्यसंयाज्यमिति, अयाज्या विलोमजाताः न पातकिनः तद्याजनादौ-तत्संसर्गप्रायश्चित्तस्योक्तत्वात्। विलोमजाता अपि चाण्डालाद्यन्त्यावसायि-व्यतिरिक्ताश्चण्डालान्त्यस्त्रियो गत्वा इत्यादिवचनैरन्त्यावसायिनां प्रायश्चित्त-भेदकथनात्। तेषां याज्यं याजनं भावे ष्यण् उपलक्षयति प्रतिग्रहाध्याप-नयोर्याजनतुल्यतया संसर्गे निरूपितत्वात्पारदार्य्यं अतिपातकमहापातकानु-पातकेतरच परदारगमनं, आत्मविक्रय इति आत्मदेवः, अधीतवेदविस्मरणं-आलस्यादिनेति प्रागुक्तं, सर्वदा ब्रह्मयज्ञत्याग इति कुल्लूकभट्टः, अग्निराहि-ताग्निः आदिशब्दात् राजसेवादीनां ग्रहणं, तथाभूताया इति। आदौ-परिणीतायाः कनिष्ठाया ज्येष्ठायाश्च परिवेत्तारावुपपातकिनावित्यर्थः।

यथा वशिष्ठः,—

अग्रे दिधिषुपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निर्विशेत्। दिधिषुपतिः-कृच्छ्रातिकृच्छ्रौ चरित्वा पुनर्निर्विशेत्।

तयोर्लक्षणमाह देवलः,—

"ज्येष्ठायां विद्यमानायां कन्यायामुह्यतेऽनुजा।
सा चाग्रे दिधिषुर्ज्ञेया पूर्वा तु दिधिषुः स्मृता" ॥

वरत्वेनेति नतु पोष्टृत्वेनेत्यर्थः।

यथा मनुः,—

"परिवेत्ता परिवित्तिश्च यया च परिविद्यते।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः" ॥

कन्याया इति न तु कन्यागमनं तस्यानुपातकत्वात्। ब्राह्मणक्षत्रिययोरिति वैश्यादीनां विहितत्वात्। दाराणामित्यपरिणीतानां वाग्दत्तानांपरिणीतानाञ्चेत्यर्थः।

अपत्यस्यानेकविधस्य व्रात्यता यथाकालमनुपनयनमसोमयाजित्वञ्च-बान्धवत्यागो बान्धवस्य सपिण्डादेरनिमित्तं त्यागः। भृतकाध्यापनं मूल्येन-वेतनादिना विद्यार्पणं। भृताच्च वेतनगृहीताद्वेदादिविद्याग्रहणं। अपण्यानां-लाक्षादीनां सकृत्, गोरसादीनामसकृत् ब्राह्मणेन विक्रयः, सर्वाकरेषु रत्ना-द्युत्पत्तिस्थानेषु विनियोगः। तैलादियन्त्रस्य महतजनायन्त्रस्य च प्रवर्त्तन-मिति शूलपाणिः।

"अनेकविधस्येति कन्यायाः पुत्रस्य च द्वादशविधस्येत्यर्थः।

न पतति वंशो येन तदपत्यमिति व्युत्पत्तेः। असोमेति एतच्च साग्नीना-मेव। भृतकाध्यापनमिति वेतनं प्रतिदिनं प्रतिमासं नियतद्रव्यग्रहणं पादि-पदादेतावद्‌ग्रन्थस्य एतावद्धननियमस्य संग्रहः। एतेन वेतनादिना मूल्येन-वेदादि वेदाध्यापनमित्यर्थः। अपण्यानामिति "सद्यः पततिमांसेन लाक्षया-लवणेन च। त्र्यहेण शूद्री भवति ब्राह्मणः क्षीरविक्रयादिति" वचनात्। सर्वाकरेष्विति अत्र आकरोत्पन्नद्रव्याणां स्तेयस्यावश्यम्भावात्, यत्र तु स्तेयं-नास्ति तत्र दोषो नास्तीति भावः"। इति गोविन्दानन्दः। धान्यादीनां यथा-कर्थाञ्चन्नाशनं। स्त्र्यार्जितधनात् जीवनं। परहिंसार्थं अर्थहोमादिकर्म्ममूलकर्म्म-

वशीकरणादिक्रिया। इन्धनार्थमार्द्रद्रुमाणां बहूनां छेदनं। आत्मार्थं पाकक्रिया न वैश्वदेवार्थं। गणादेरन्नं तस्कराद्यन्नभक्षणं, सामर्थ्येऽपि श्रौतस्मार्त्ताग्न्यपरिग्रहः। स्तेयं हेमनराश्वरजतभूमिनिक्षेपेतरद्रव्यहरणं। देवर्षिपितृसम्बन्धि-ऋणापरिशोधनं। असच्छास्त्राभिगमनं पाषण्डशास्त्राभ्यासः। कुशीलवस्य कर्म तौर्य्यत्रिकं तस्य सततानुष्ठानं। कूप्यस्य परद्रव्यस्य ताम्रकांस्यादेः स्तेयं। मद्यपस्य स्त्रिया मद्यपायाश्च स्त्रिया निषेवनं ब्राह्मणेन। इति प्रायश्चित्ततत्त्वे।

तथा— तत्र स्त्रियाश्च शूद्रवैश्यक्षत्रियब्राह्मणजातीयाया अदुष्टायाः शूद्रवैश्यक्षत्रियाणाञ्च वधः। नास्तिक्यं नास्तिपरलोक इति व्यवस्थितः।

"उपपातकमेकैकं एकैकमुपपातक"मिति याज्ञवल्क्यवचनात्।

एवञ्च—गोवधादिनास्तिक्यान्तान्यूनपञ्चाशत् उपपातकानि। विष्णुनाऽनृतवचनमुत्कर्षे राजगामि च पैशुनं। गुरोश्चालीकनिर्बन्धो वेदनिन्दाधीत्यत्यागश्चोऽन्यानि च मनूक्तानि इत्युक्त्वा उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नरा, इत्युपपातके दर्शितं। अत्र नृपादिसभासु परापकारव्यतिरेकेण आत्मन— उत्कर्षख्यापनम्।

तथा राज्ञः पुरतः परापकारव्यतिरेकेण दोषकीर्त्तनं। तथा श्रुतमात्रोपकारकगुरोर्मिथ्याभिशंसनं। तथा परिहासादिना वेदनिन्दा तथाऽसच्छास्त्राद्यभियोगेनाधीतवेदविस्मरणं च यद्यपि तदुपपातकं गुरूणां पुनरेतेषां मनुनानुपातके दर्शितत्वात्। अन्यानि चोपपातकानि स्मृत्यन्तरेऽनुसन्धेयानि। धान्यादीनामिति फलपाकान्तानां धान्यादीनां अपक्वदशायां नाश इत्यर्थः। स्त्र्यर्जितेति भार्य्यादीनां वेश्यात्वं कृत्वा तद्धनात्जीवनमिति कुल्लूकभट्टः। अभिचार इति अपराधाभावे सतीति बोद्धव्यं। मूलकर्म्मेति वशीकरणसाधनकर्मादिपदादुच्चाटनादिसाधनकर्मग्रहणं। गणेति यद्बहुभिर्मिलित्वा परिक्रियते परिवेश्यते वा तदन्नं। हेमेति हेमहरणस्य महापातकत्वात् नारदादिहरणस्यानुपातकत्वादित्यर्थः। देवर्षीति यथाक्रमं देवर्णं। पुत्रमुत्पादनं पित्र्यर्णं, वेदवेदाङ्गानामनध्ययनं ऋष्यृणं।

यथा मनुः,—

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः ॥
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ।"

धान्यकुप्यपशूनामित्यधिकमूल्यद्रव्योपलक्षणं तेषां स्तेयं सक्तचौर्य्यमित्यर्थः । प्रागुक्तस्तेयमत्यन्ताभ्यासेऽल्पद्रव्यविषयं मद्यपायाश्चेति चकारोऽत्र-विकल्पार्थः । स्त्रिया इति चातुर्वर्ण्यस्त्रिया—मात्रादिव्यतिरिक्ताया इत्यर्थः । न चात्र शूद्रविट्क्षत्रियग्रहणेन तदीयस्त्रीप्राप्तौ स्त्रीशब्दोपादानं ब्राह्मणीमात्र-परिग्रहार्थमितिवाच्यं क्षत्रियवत् ब्राह्मणीषु वैश्यवत् क्षत्रियासु शूद्रवत् वैश्यास्विति हारीतवचनैकवाक्यतयाऽल्पप्रायश्चित्तार्थं पृथगुपादानात्, प्रायश्चित्ताल्पत्वेऽपि पृथगुपन्यासस्य लोके निन्दितागयार्थतयोपपत्तेश्चेति, अदुष्टया इति व्यभिचरितावधेनोपपातकं । अतएव तद्वधेऽल्पप्रायश्चित्तं-वक्ष्यते । समुत्कर्षानृतादीनामनुपातकत्वं प्रागुक्तं, तेषां च उपपातकत्वं विष्णूक्तं-विरुद्धमाशङ्क्य व्यवस्थापयति विष्णुनेति, अत्रेति अत्र वचने इदं व्याख्यानं ज्ञेयमिति शेषः, श्रुतमात्रं यत् किञ्चित् अल्पाध्ययनं तदुपकारकस्य जन्मदातु-राचार्य्यादेश्चानुपातकत्वमित्यर्थः । इति तद्व्याख्याकारः ।

तथा तद्विषये याज्ञवल्क्यः—

"गोवधो व्रात्यता स्तेयमृणानां चानपाक्रिया ।
अनाहिताग्नितापण्यविक्रयः परिवेदनं ॥
भृताद्ध्ययनादानं भृतकाध्यापनं तथा ।
पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया ॥
स्त्रीशूद्रविट्-क्षत्रवधो निन्दितार्थोपजीवनं ।
नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥
धान्यकुप्यपशुस्तेयमयाज्यानां च याजनं ।
पितृमातृसुतत्यागस्तड़ागारामविक्रयः ॥

कन्यासंदूषणं चैव परिविन्दकयाजनं।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनं॥
आत्मनोऽर्थे क्रियारम्भे मद्यपस्त्रीनिषेवणम्।
स्वाध्यायाग्निसुतत्यागो वान्धवत्याग एव च।
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषध जीवनं॥
हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः।
शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणं॥
तथैवानाश्रमे वासः परान्नपरिपुष्टता।
असच्छास्त्राधिगमनमाकरेस्वधिकारिता॥
भार्य्याया विक्रयश्चैषामेकैकमुपपातकं।" इति।

तथा विज्ञानेश्वरः—गोवधे गोपिण्डव्यापादनं। कालेऽनुपनीतत्वं-व्रात्यता। ब्राह्मणसुवर्णतत्समव्यतिरिक्तपरद्रव्यापहरणं स्तेयं। गृहीतस्य-सुवर्णादेरप्रदानं ऋणानामनपाकरणं। तथा देवर्षिपितृणां सम्बन्धिनर्ण-स्यानपाकरणं च। सत्यधिकारेऽनाहिताग्नित्वं। तथा अपण्यस्य लवणादे-र्विक्रयः। सहोदरस्य ज्येष्ठस्य तिष्ठतः कनीयसो भ्रातुर्दाराग्निसंयोगः-परिवेदनं। पणपूर्वाध्यापकादध्ययनग्रहणं पणपूर्वाध्यापनं। परदारसेवनं-गुरुतत्समव्यतिरेकेण। परिवित्त्यं कनीयसि कृतविवाहे ज्येष्ठस्य विवाह-राहित्यं। वार्द्धुष्यं प्रतिषिद्धवृद्ध्युपजीवनं। लवणस्योत्पादनं। स्त्रिया वधः-ब्राह्मण्या अप्यात्रेयीव्यतिरेकेण।

शूद्रवधः अदीक्षितविट्क्षत्रियवधः। निन्दितार्थोपजीवनमराजस्यापिता-र्थोपजीवनं। नास्तिक्यं नास्तिपरलोक इत्याद्यभिनिवेशः। व्रतलोपो ब्रह्म-चारिणः स्त्रीप्रसङ्गः। सुतानामपत्यानां विक्रयः। धान्यं व्रीह्यादि, कुप्यमसार-द्रव्यं त्रपुसीसादि।

पशवो गवादयस्तेषामपहरणं। गोवधोव्रात्यता स्तेयमित्यनेन स्तेयग्रहणे-नैव सिद्धे पुनर्धान्यकुप्यादिस्तेयग्रहणं नित्यार्थं। अतो धान्यादिव्यतिरिक्तद्रव्य-

स्तेयेनावश्यमेतदेव प्रायश्चित्तमपि तु ततोऽन्यूनमपि भवत्येव। एतेन वान्धवत्यागग्रहणेनैव सिद्धे पुनः पित्रादित्यागग्रहणं व्याख्यातं। अयाज्यानां जातिकर्मदुष्टानां शूद्रव्रात्यादीनां याजनं। पितृमातृसुतानामपतितानां त्यागो गृहाबिष्कासनं। तड़ागारामस्य चोद्यानोपवनादेर्विक्रयः। कन्याया-दूषणमङ्गुल्यादिना योनिविदारणं न तु भोगः। तस्य सखीभार्य्याकुमारी-ष्विति गुरुतल्पसमत्वस्योक्तत्वात्। परिविन्दकयाजनं तस्य च कन्याप्रदानं-कौटिल्यं गोरोरन्यत्र। गुरुविषयस्य तु कौटिल्यस्य सुरापानसमत्वमुक्तं। पुनर्व्रतलोपग्रहणमशिष्टाप्रतिषिद्धेष्वपि श्रीहरिचरणकमलप्रेक्षणात् प्राक्-ताम्बूलादिकं न भक्षयामीत्येवंरूपेषु प्राप्तार्थं न तु स्नातकव्रतप्राप्तार्थं। तत्र-"स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति मनुना लघुप्रायश्चित्तस्य प्रति-पादितत्वात्। तथात्मार्थं च पाकलक्षणक्रियारम्भः। "अघं स केवलं भुंक्ते यः-पचत्यात्मकारणादि"ति तस्यैव प्रतिषिद्धत्वात्। मद्यपायाः स्त्रियाः जायाया-अपि निषेवणमुपभोगः। स्वाध्यायत्यागो व्याख्यातः, अग्नीनां श्रौतस्मार्त्तानां-त्यागः सति विभवे अपरिरक्षणं। पाकादिदृष्टप्रयोजनसिद्ध्यर्थमार्द्रद्रुमच्छेदो-न त्वाहवनीयपरीरक्षणार्थमपि।

स्त्रिया—हिंसया औषधेन च वर्त्तनं जीवनं स्त्रीहिंसौषधजीवनं तत्र-स्त्रीजीवनं नाम भार्य्यां पण्यभावेन प्रयोज्य तल्लब्धोपजीवनं स्त्रीधनेनोप-जीवनं हिंसया जीवनं प्राणिवधेन जीवनं। औषधजीवनं वशीकरणादिना। हिंस्रयन्त्रस्य तिलेक्षुपीड़ाकरस्य प्रवर्त्तनं। व्यसनानि मृगयादीन्याष्टादश। आत्मविक्रयो द्रव्यग्रहणेन परदास्य करणं, शूद्रसेवनं हीनेषु मैत्रीकरणं असदृ-सवर्णदारस्य केवलहीनवर्णदारोपयमनं साधारणस्त्रीसंभोगश्च। असहीना-श्रमित्वं सत्यधिकारे परान्नपरिपुष्टतापरपाकरतित्वं। असच्छास्त्रं चार्वाकादि-ग्रन्थस्याधिगमः। मर्वाकरेषु। सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाधिकारित्वं। भार्य्याया विक्रयः।

च शब्दाभ्यन्याद्युक्ताभिचरामतिपूर्वलशुनादिभक्षणादेर्ग्रहणं। एषां गोवधा-दीनां प्रत्येकमुपपातकसंज्ञा वेदितव्या। तथा वृहद्विष्णुः,—"अनृतवचनं समुत्-कर्षे राजगामि च पैशून्यं गुरोश्चालीकनिर्बन्धो वेदनिन्दा अधीतस्य त्यागोऽग्नि-

पितृमातृसुतदाराणां च । अभोज्यान्नभक्षणं परस्वापहरणं परदारानुगमन-मयाज्यानां च याजनं । व्रात्यता भृतकाध्यापनं भृतकाध्ययनादानं सर्वाकरे-ष्वधिकारो महायन्त्रप्रवर्त्तनं द्रुमगुल्मवल्लीलतौषधीनां हिंसया जीवनमभि-चारमूलकर्मसु ॰ प्रहत्तिरात्मार्थक्रियारम्भः अनाहिताग्नितादेवर्षिपितृणा-मृणस्यानपाक्रि॰ असच्छास्त्राधिगमनं नास्तिकता कुशीलता मद्यपस्त्री-निषेवणमित्युपपातकानि । एवमुपपातके सति निर्णीते प्रारभ्यते क्रमप्राप्त-विप्रादिस्वामिकसाक्षाद्गोवधप्रायश्चित्तमधस्तात् । यथा—तत्र मनुना "गोषु-ब्राह्मणसंस्थासु" इत्यनेन दण्डप्रकरणे ब्राह्मणस्वामिकत्वेन गोर्गुरुत्वमभिहितं-नारदेन च—"देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमं" इत्युक्तं अतस्तद्वधे-गुरुप्रायश्चित्तं युक्तं ।

तदाह मनु,—

"उपपातकसंयुक्तो गोघ्नो मासं यवान् पिवेत् ।
कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः ॥
चतुर्थकालमश्नीयादक्षारलवणं मितं ।
गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः ॥
दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्द्धं रजः पिवेत् ।
शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत् ॥
तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् ।
आसीनासु तथासीनो नियतो वीतमत्सरः ॥
आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः ।
पतितां पङ्कलग्नां वा सर्वप्राणैर्विमोचयेत् ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशं ।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥
आत्मनो यदि वाऽन्येषां गृहे क्षेत्रे तथा खले ।

भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकं ॥
अनेन विधिना यस्तु गोघ्नो गामनुगच्छति।
स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥
वृषभैकादशागाश्च दद्यात् सुचरितव्रतः।
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्" ॥

उपपातकसंयुक्तो गोघ्नो न तु यागादिविहितगोवधकर्त्ता। अतएव-सामान्यत उक्तं हारीतेन,—

"तथा पशुघाते प्राजापत्यं" इति यागाद्यर्थोऽपि गोवधः कलौ निषिद्धः। विवाहे गोवधस्तथेत्यादिब्रह्मपुराणवचनात्।

कृतवापः कृतसशिखमुण्डनो हतगवीचर्मणा कृतपरिधानोत्तरावगुण्ठनो-मासमेकं गोमूत्रेण अर्थात् प्रथममासं यवान् यवागूकृतान् पिबेत्। तच्च-र्माभावेऽन्यगवीचर्मणापीत्यर्थः। "गोमूत्रेण यवागूकृता" नीतिव्यासवचनात्। एवं सन् गोष्ठे वसेत्। अपरमासद्वये पूर्वदिने उपोष्य अपरदिने सायं स्वल्पं-भुञ्जीत। "मुनिभिर्द्विरशनं प्रोक्त"मिति श्रवणात् अक्षारलवणं अकृत्रिमलवणा-मितं स्वल्पं। मासत्रयधर्मोनाह।

दिवानुगच्छेदिति, अनुः सहार्थः। रजो गोधूलिमित्यर्थः वीरासनं-भित्त्याद्यनाश्रितोपवेशनं।

तथा विष्णुधर्म्मोत्तरे,—

"उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि।
एतद्वीरासनं नाम महापातकनाशनं" ॥

यद्यपि दिवोत्थाननिशोपवेशनयोर्मिलितयोरेव वीरासनत्वं। तथाप्यत्र-रात्रावित्युपादानान्निशोपवेशनस्यैव ग्रहणं आसीनास्तु तथासीन इत्युपादानाच्च। अभिशस्तामतिक्रान्तां भटैर्भयनिमित्तैः। सर्वप्राणैः सर्व्वसामर्थ्यैर्यथा-शक्ति। विमोचयेत्तदपसारयेत्।

अतएव विष्णुपुराणं,—

"श्रमं नयति यः क्षुद्रान् सर्वबन्धुरमत्सरः।
भीताश्वासनकृत् साधुः स्वर्गस्तस्याल्पकं फलं"॥

उष्णे रौद्रातिशये, वर्षति मेघे सतीत्यर्थः। भक्षयन्तीमिति शस्यादिकमितिशेषः। गां न कथयेत् निवारणाभिप्रायेण पिबन्तं स्तन्यमिति शेषः-यद्यप्येतद्द्वयं सर्वसाधारणं तथापि गोघ्नस्यातिशयेन मन्तव्यं। सुचरितव्रतः-सम्यक् चीर्णव्रतः दक्षिणार्थं वृषभसहितदश गा दद्यात्।

वृषभ-एकादशो यासां दशगवीनामित्यर्थः। तदभावे स्वल्पमपि सर्वस्वं-दक्षिणार्थं दद्यात्। तदभाव इति पूर्वोक्तदक्षिणाशक्तावित्यर्थः।

"गवामभावे दातव्यं गोमूल्यञ्च न संशयः"। इति।

संवर्त्तवचनात्,—

तत्र धेनुसंकलनं,—

यथा—त्रैमासिकव्रतं मासयवपानं प्रजापत्यद्वयतुल्यं यतो यमेनास्थ्यादि-भङ्गे मासार्द्धयवपानमुक्तं। तत्रैव गोभिलेन प्राजापत्यमुक्तं।

यथा भवदेवभट्टधृत—यमवचनं,—

"अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा।
पाटने कर्णशृङ्गाणां मासार्द्धं तु यवान् पिबेत्"॥

स्मृतिसागरे गोभिलः,—

"कर्णलाङ्गूलयोः च्छेदमस्थिभङ्गं विधाय च।
प्राजापत्यव्रतं कुर्युश्चत्वारो ब्राह्मणादयः"॥

अत्र यत् शूद्रस्य द्विजतुल्यं प्रायश्चित्तमुक्तं तदस्थिभङ्गादिगात्रपरं वैश्य-तुल्यशूद्रमात्रपरं वा। इति शूलपाणि-रघुनन्दन-गोविन्दानन्दाः।

अपिच—तदत्र त्रैमासिकव्रते मासैकवीरासनगवानुगमनेतिकर्त्तव्यता-युक्तयावकयवागूपानेन प्राजापत्यद्वयं मासद्वयचतुर्थकालभोजने त्रिंशदुपवासा-स्त्रिंशच्च नक्तभोजनानि भवन्ति।

त्रिंशता च निरन्तरोपवासैः पञ्चदशप्राजापत्यान्युक्तानि, मासोपवासपेनु-संकलने । अतैकान्तरितत्वादर्द्धक्लेशेनाष्टौ प्राजापत्यानि संपद्यन्ते ।

उपवासस्य नक्तत्रयेण संकलितत्वात्त्रिंशता नक्तैर्दशोपवासा भवन्ति । तैश्च-वीरासनादिबहुक्लेशयुक्तैः प्राजापत्यद्वयं । तेन मिलित्वा द्वादशप्राजापत्यानि-भवन्ति । तदशक्तौ पयस्विधेनुद्वादशकं देयं । तत्राप्यशक्तौ तन्मूल्यं षट्-त्रिंशत्पुराणलभ्यं काञ्चनादि देयं । दक्षिणा च वृषसमेतगोदशकं । तन्मूल्यं-पुराणपञ्चदशलभ्यं काञ्चनादि देयं । पञ्चदशकेति गोदशमूल्यं पुराणदशकं-वृषभमूल्यं पुराणपञ्चकं मिलित्वा पञ्चदशेत्यर्थः । अयं तु द्वादशप्राजापत्य-संकलनपक्षः । अथवा क्लेशातिशययुक्तत्रिंशदुपवासैः कृच्छ्रदशकं संकलय्य-त्रिंशता नक्ताशनैरपि तथाभूतैः कृच्छ्रपञ्चकं संकलय्य सप्तदशधेनवो भवन्ति-एषा व्यवस्था बहुसम्मतेति । एतच्च ब्राह्मणसम्बन्धिन्या बुद्धिपूर्वके शस्त्रघाता-दिना बधे वेदितव्यं । क्षत्रियादिसम्बन्धिगोबधे लघुप्रायश्चित्तान्तरश्रवणात्, तथा ब्राह्मणसम्बन्धे गोर्गुरुत्वस्य च पूर्वमुक्तत्वात् ।

तथाचात्र बृहस्पतिः,—

"शस्त्रादिना तु हत्वा गां मानवं व्रतमाचरेत् ।
रोधादिना त्वाङ्गिरसमापस्तम्बोक्तमेव वा ॥"

आदिशब्दात् मुष्टिलोष्ट्रलगुड़विषाग्नीनां प्रायिकमृत्युफलकानां ग्रहणं । रोधादिनेति यथाकथंचिन्निमित्तमात्रस्य बन्धनादेः । यत्तु यमेनाङ्गिरसा च-एतदेव त्रैमासिकव्रतं पञ्चकालभोजनयुक्तमभिहितं तद्गुरुत्वाद्गुणवद्ब्राह्मण-सम्बन्धि-गोबधविषयं । अज्ञानकृततथाविधब्राह्मणमात्रसम्बन्धिगोबधे तु-सम्वर्त्तः,—

"गोघ्नस्याथ प्रवक्ष्यामि निष्कृतिं तत्त्वतः शुभं ।
गोघ्नः कुर्वीत संस्थानं गोष्ठे गोरूपसन्निधौ ॥
तत्रैव शयनं चास्य मासार्द्धं क्षितिशायिनः ।
शक्तयावकभैक्ष्याशी पयो दधिमथः शकृत् ॥

एतानि क्रमशोऽश्नीयान्नरस्तत्पापमोचकः ।
शुध्येत सार्द्धमासेन नखरोमविवर्जितः ॥
स्नानं त्रिसवनं तस्य स भवेत् संयतेन्द्रियः ।
एतत्समाहितः कुर्य्यात् स नरो वीतमत्सरः ॥
गायत्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः ।
पूर्णे च सार्द्धमासे तु स विप्रान् भोजयेत् द्विजः ॥
भुक्तवत्सु च विप्रेषु गां वै दद्याद्विचक्षणः ।
गवामभावे दातव्यं गोमूल्यं तु न संशयः ।
अनेनैव विधानेन गोघ्नो मुच्येत किल्विषात् ॥

सरो दध्न उपरिभागः । अत्र च सार्द्धमासिकव्रते द्वादशधेनुसंकलित-त्रैमासिकव्रतार्द्धानुसारेण षड् धेनवो भवन्ति । एकवचनस्य श्रुतत्वात् गौरेका-तन्मूल्यं वा दक्षिणा । सार्द्धाष्टौ धेनवो वा एतद्भृतं गोस्वामिने गोमूल्यं दत्त्वा-कर्त्तव्यं ।

यथा ब्रह्मपुराणे,—

"आदौ गोपतये दत्त्वा गोमूल्यञ्च साधुकल्पितं ।
यथोत्पन्नेन तस्यास्तु चर्मणाछन्नविग्रहः ॥"

यथोत्पन्नेनाकृतसंस्कारेण इति शूलपाणिः ।

तथाऽत्र रघुनन्दनः,—

एवं च यत्प्रायश्चित्तविवेके मासयावकपानं क्वचिच्च द्वादशप्राजापत्यतुल्य-मुक्तं, तद्गोमूत्रमात्रसिद्धयावकपरं क्वचिच्च प्राजापत्यद्वयतुल्यं तत्सिद्धान्नान्तर-प्रक्षिप्तगोमूत्रपरमित्यविरोधः । मासद्वयचतुर्थकालभोजने त्रिंशदुपवासा-स्त्रिंशता नक्तैर्दशोपवासाः । तथाच शूलपाणिमहामहोपाध्यायैस्त्रिंशच्च निर-न्तरोपवासाः पञ्चदशप्राजापत्यतुल्याः मासोपवासधेनुसंकलने उक्ताः । अन्ते-कान्तरितत्वादिति कर्त्तव्यतायोगाच्च एकादशप्राजापत्यतुल्याः, नव त्रिंशत्-

नक्तभोजनं चतुःप्राजापत्यतुल्यं मिलित्वा त्रैमासिकव्रतं सप्तदशप्राजापत्यतुल्यं-तदभावे सप्तदशधेनवो देयाः । इति बहुसम्मता व्यवस्था ।

भवदेवभट्टसम्मता तु द्वादशधेनव इति । पूर्वोक्ता च दक्षिणा देया । तदशक्तावेकपञ्चाशत् षट्त्रिंशद् वा कार्षापणा देयाः । दक्षिणायान्तु वृषभमूल्यं-कार्षापणपञ्चकं गोदशकमूल्यं कार्षापणदशकमिति पञ्चदशकार्षापणाः,-एतच्च ज्ञानत इति । अज्ञानतोऽर्द्धं । ततो ब्राह्मणान् भोजयित्वा गौरेका दक्षिणा देया ।

"भुक्तवत्सु च विप्रेषु गां वै दद्याद्विचक्षणः ।
गवामभावे दातव्यं गोमूल्यश्च न संशयः" ॥

इति सम्वर्त्तवचनात् मूल्यं कार्षापणमेकं वा दद्यात् । एतच्च शस्त्रमुष्टि-लोष्ट्रलगुड़विषाश्मादिभिः प्रायिकमृत्युकलकैर्हनने बोध्यं ।

तथा वृहस्पतिः,—

"शस्त्रादिना तु गां हत्वा मानवं व्रतमाचरेत्" ।

स्त्रीशूद्रबालवृद्धानामर्द्धं । एकस्योभयपरत्वे पादः । एवञ्च ब्राह्मणादीनां-सगुणत्वनिर्गुणत्वादिना कालदेशादितारतम्येन च लघुगुरुप्रायश्चित्तान्तरं-बोध्यम् ।

"सद्विगुणसाहस्रमानन्त्यमञ्च यथाक्रमम् ।
दाने फलविशेषः स्याद्धिंसायां तद्वदेव हि" ॥

इति दक्षवचनात्,—

"सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
अधीते शतसाहस्रमनन्तं वेदपारगे" ॥

ब्राह्मणब्रुवश्चाङ्गिरसोक्तो यथा,

"गर्भाधानादिसंस्कारैर्युक्तश्च नियमव्रतैः ।
नाध्यापयति नाधीते स ज्ञेयो ब्राह्मणब्रुवः ॥ इति ।

क्षत्रियसम्बन्धिन्या गोर्वधे तु देवलः,—

"गोघ्नः षण्मासान् तच्चर्म्मणा परिहतो—गोग्रासाहारो गोव्रती यवाशी-गोभिरेव सञ्चरन् विप्रो मुच्यते"। गोग्रासाहारो गोग्रासाहर्त्ता कर्म्मण्यण्, इति-साधुः। अत्र षण्मासयवाहारेण द्वादशप्राजापत्यानि, तदशक्तौ द्वादशधेनवः। तदशक्तौ षट्त्रिंशत्कार्षापणा देया इति चत्वारः कल्पाः। सद्वषगोदशदक्षिणा-विशेषानुपदेशाद्देया पूर्व्वाक्ता। एतद्ज्ञानतोऽज्ञानतोऽर्द्धं। स्त्रीशूद्रादीनां-प्रायश्चित्तं पूर्व्ववत्। वैश्यसम्बन्धिन्या गोर्वधे तु याज्ञवल्क्यः,—

"पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः।
गोष्ठे वसेद्गोनुगामी गो प्रदानेन शुध्यति॥"

शातातपः,—

"पञ्चगव्येन गोघाती मासेकेन विशुध्यति।
गोमतीञ्चजपेद्दिद्यां गवां गोष्ठे च संवसेत्॥"

पञ्चगव्यमाह शातातपः,—

"गोशकृत्द्विगुणं मूत्रं सर्पिर्विद्याच्चतुर्गुणं।
क्षीरमष्टगुणं चैव पञ्चगव्ये तथादधि॥"

तथाऽष्टगुणं यमः,—

"आहृत्य प्रणवेनैव उत्थाप्य प्रणवेन च।
प्रणवेन समालोड्य प्रणवेनैव तत् पिबेत्॥"

उत्थाप्य मिश्रीकृत्य एतद्वैकल्पिकं द्रव्यपरिमाणान्तरं।
मन्त्रान्तरं च ग्रन्थगौरवभयान्नोक्तं।

गोमतीविद्यामाह प्रायश्चित्तकाण्डकल्पतरौ यमः,—

"गोमतीं कीर्त्तयिष्यामि सर्व्वपापप्रणाशिनीं।
तां तु मे गदतो विप्राः शृणुध्वं सुसमाहिताः॥

गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत्॥
अन्नमेव परं गावो देवानां हविरुत्तमं।
पावनं सर्वभूतानां चरन्ति च हवींषि च॥
हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि।
ऋषीणामग्निहोत्रेषु गावो होमप्रयोजिकाः॥
पावनं सर्वभूतानां गावः शरणमुत्तमं।
गावः पवित्रं परमं गावो मङ्गलमुत्तमं॥
गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः।
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च॥
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतं॥
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति"।

मन्त्रास्नानि मिताक्षरायां षट्त्रिंशन्मतम्।

"जपहोमादियत्किञ्चित् कृच्छ्रोक्तं सम्भवेन्न चेत्।
सर्वं व्याहृतिभिः कुर्य्याद् गायत्र्या प्रणवेन च"॥

गवां गोष्ठ इति श्रवणकुण्डलवत् तात्कालिकगोसत्त्वावबोधाय, गोमती-जपसहितमासपञ्चगव्यपानं प्राजापत्यपञ्चकतुल्यं। तदशक्तौ धेनुचतुष्टयं, दक्षिणा गोदानेन पञ्चधेनवः। एतदबुद्धिकृते, बुद्धिकृते त्वेतदेव द्विगुणं। स्त्रीशूद्रबालवृद्धानामर्द्धं एकस्योभयधर्मपरत्वे पादः।

शूद्रसम्बन्धिन्या गोर्वधे तु विश्वामित्रः,—

"कृच्छ्रांस्तु चतुरः कुर्य्याद्-गोवधे बुद्धिपूर्वके।
अमत्या तु द्वयं कार्य्यं तदर्द्धं बालवृद्धयोः।
स्त्रीशूद्रयोरेवमेतद्वधे चैव न संशयः"॥

अत्र स्थाने चत्वारि प्राजापत्यानि तदशक्तौ धेनुचतुष्टयं। तन्मूल्यं-द्वादशकार्षापणा वा। अज्ञानकृते प्राजापत्यद्वयं, तदशक्तौ धेनुद्वयं षट्कार्षापणा वा देयाः। स्त्रीशूद्रबालवृद्धानामर्द्धं। एकस्योभयधर्मपरत्वे पादः। व्यवस्था तु तदुपदेशकं वस्त्रादिना परितोष्य ग्राह्या। पत्रदाने तु शूद्रेणाज्ञानकृतशूद्रस्वामिकगवीवधजन्यपापक्षयाय प्राजापत्यव्रतं प्रायश्चित्तं करणीयं। तदशक्तावेकधेनुदाने तदशक्तौ कार्षापणं। दक्षिणा च यथाशक्ति दातव्या। एतत् सर्वं पूर्व्वदिने सशिखवपनं कारयित्वा घृतं प्राश्य उपोष्य करणीयं। प्रायश्चित्तानन्तरं पार्व्वणविधिना शुद्ध्यर्थं श्राद्धं कर्त्तव्यं। दशान्यूनब्राह्मणेभ्यो-भोज्यादिकं देयं। एतत् सर्वं गोस्वामिनां मूल्यादिना परितोष्य करणीयं। अमुकस्य मतमेतदेवमन्यत्राप्यूहेन लेख्यं। विशेषदक्षिणोक्तौ तु सैव लेख्या। केशरक्षणे तु प्रायश्चित्तद्वैगुण्यं, दक्षिणा च द्विगुणा। योषितां मुण्डने तु-अङ्गुलिद्वयपरिमितसर्व्वकेशाग्रच्छेदनं करणीयमिति लेख्यं। प्रायश्चित्तकरणे तु-अमुकपापक्षयकाम इदं काञ्चनमिति वाक्ये विशेषो बोध्यः। नारायणश्च स्मर्त्तव्यः।

"प्रातर्निशि तथा सन्ध्यामध्याह्नादिषु संस्मरन्।
"नारायणमवाप्नोति सद्यः पापक्षयं नरः"।

इति विष्णुपुराणे पापक्षयश्रुतेः।

अत्र स्त्रीणामर्द्धं प्रदातव्यमित्यादि लघुहारीतविष्णादिवचनैः प्राप्तं स्त्रीणामर्द्धं प्रायश्चित्तं पुनरुच्यमानं बालवृद्धस्त्रीशूद्रव्यतिरिक्तानां ब्राह्मणक्षत्रियविशां-प्रायश्चित्ततुल्यत्वं। अर्थात् तुल्यमेव प्रायश्चित्तं गोवधे ज्ञापयति। वस्तुतस्तु-न हि विष्ण्वादिवचनैः परिभाषितमिति ज्ञात्वा विश्वामित्रवचनं पुनरुक्तं भवति-मुनीनां परस्परनिरपेक्षत्वात् अन्यथाऽतिप्रसङ्गः स्यात्। किन्तु हीनवर्णस्य-उत्कृष्टवधे गुरुत्वात् पापाधिक्यं यौक्तिकमिति भविष्यपुराणादौ विहितं। तेन गोवधे ब्राह्मणक्षत्रियविशां तुल्यप्रायश्चित्तं। शूद्रबालवृद्धस्त्रीणामर्द्धमिति।

गर्भिणीवधे विशेषमाह। बृहस्पतिः,—

"गर्भिणीं कपिलां दोग्ध्रीं होमधेनुञ्च सुव्रतां।
रोधादिना घातयित्वा द्विगुणं गोव्रतञ्चरेत्॥

**अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीं।**
**हत्वा पूर्वविधानेन चरेदर्द्धव्रतं द्विजः" ॥**

पूर्वविधानेन मन्वाद्युक्तविधिना एतेन यत् सम्पूर्णव्रतमुक्तं तत्पुष्टिताकृष्यादियुक्तायां गवि बोद्धव्यं। गर्भिणीत्वादिगुणेन गोर्गुरुत्वाद्द्विगुणत्वंदर्शितम्।

तथा प्रचेताः—

"स्त्रीगर्भिणी-गोगर्भिणी-बालवधी च भ्रूणहा भवति"।

यत्तु,—गौतमेन, वैश्यं, हत्वा, त्रैवार्षिकं व्रतं चरेत्, ऋषभैकशतानि च गा-दद्यात् इत्यभिधाय। गाञ्च वैश्यवदिति गोवधे त्रैवार्षिकं प्रायश्चित्तमुक्तं-तदग्निहोत्रिणो वेदपारगस्य होमधेनोः कपिलाया गर्भिण्याश्च पुण्ये देशे काले-च बुद्धिपूर्वकवधे वेदितव्यं।

**"समद्विगुणसाहस्रमानन्त्यञ्च यथाक्रमं।**
**दाने फलविशेषः स्याद्धिंसायां तद्वदेव हि"॥ इति—**

दक्षवचनात्। यथा द्रव्यदेशकालाश्रमपात्रगुणेन दाने फलविशेषः,-तथा हिंसायामपीत्यर्थः। एवं मुख्यन्तरोक्तानि लघूनि यानि प्रायश्चित्तानि,-तानि गोरेवात्यन्तनिर्गुणतया व्याख्येयानि। प्रयोजकानुग्राहकानुमन्तृनिमित्त-विषयाणि वा।

अतिवृद्धा तृणच्छेदनासमर्था, अतिकृशा कृशत्वेन दोहन-वाहनायोग्या,-अतिबाला वर्षपर्य्यन्तं बाला तदतिक्रान्ता द्विवर्षीया।

तथाच वृद्धाङ्गिराः,—

**"वर्षमात्रा तु बाला स्यादतिबाला द्विवार्षिकी।**
**अतःपरं तु सा गौः स्यात्तरुणी दन्तबन्धने"॥**

रोधनेऽपि वा,—

**"भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतञ्चरेत्"।**

अतएव वक्ष्यते "द्विपादस्तु द्विहायने" इति संवर्त्तः। गर्भिणीवधे तु-विशेषमाह।

यमः,—

"गवां निपतने चैव गर्भनाशो यदा भवेत्।

एकैकं तु चरेत् कृच्छ्रं यथापूर्वं तथा परं" ॥

कृच्छ्रपदं व्रतपरं, द्विगुणं गोव्रतमित्येकवाक्यत्वात्।

"पादमुत्पन्नमात्रे तु द्वौ पादौ गात्रसम्भिते।

"पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम्।

अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेतःसमन्विते ॥

द्विगुणं गोव्रतं कुर्य्यात् प्रायश्चित्तं विशुद्धये"।

वचनद्वयमिदं भवदेवव्याख्यातं। यथा लगुडाद्यभिघातेन गोर्जीवति-गर्भमात्रपातो भवति। तदोत्पन्नगर्भमात्रपाते यथोक्तप्रायश्चित्तपादाचरणं। गात्रावयवोत्पत्तौ प्रायश्चित्तपादद्वयं। सकलगात्रसमुत्पत्तौ चैतन्याभावे-प्रायश्चित्तपादत्रयं। अर्थाच्चैतन्ययुक्तगर्भघाते कृत्स्नमेव प्रायश्चित्तमूहनीयं। मिताक्षरायां तु। गर्भिणीवधे यदा गर्भोऽपि निहतो भवति तदा प्रति-निमित्तं नैमित्तिकमावर्त्तत इति न्यायादविशेषेण द्विगुणव्रतप्राप्तौ षट्-त्रिंशन्मते विशेष उक्तः।

"षट्-उत्पन्नमात्रे तु द्वौ पादौ दृढ़तां गते।

पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनं ॥

अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेतःसमन्विते।

द्विगुणं गोव्रतं कुर्य्यादेषा गोघ्नस्य निष्कृतिः" ॥

विशेषमाह संवर्त्तः,—

"व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपि वा।

भिषङ्मिथ्योपचारैश्च द्विगुणं गोव्रतञ्चरेत्" ॥

एकप्रयत्ननिष्पन्ने बहूनां गवां बधे ब्रह्मबध इव प्रायश्चित्तगौरवमुक्तं। न तन्त्रता पापभेदाभावात्। एकप्रयत्नजन्यत्वेनैकमेव गुरुतरपापमिति-प्रायश्चित्तमपि तथा। बहूनामित्येकाधिकपरं। तदविवक्षायामपि गोद्वयबधे-

प्रयत्नाभेदेऽपि विशेषवचनाभावात् प्रायश्चित्तद्वैगुण्यं युक्तं। अपि शब्दात् गृहदाहादिना। क्रमकृते तु प्रायश्चित्तावृत्तिः स्यादेव।

यथा यमः,—

"गोघ्नव्रत विहितः कल्पः चान्द्रायणमथापि वा।
अभ्यासे तु तयोर्भूयस्ततः शुद्धिमवाप्नुयात्"॥

तयोर्गोवधतदन्योपपातकयोः प्रकृतिविकृतिरूपयोः।

संवर्त्तापस्तम्बौ,—

"एका चेद्बहुभिः क्वापि दैवाद्व्यापादिता भवेत्।
पादं पादं च हत्यायाश्चरेयुस्ते पृथक् पृथक्"॥

हत्यायास्तैमासिकव्रतस्येत्यर्थः। यत्र यद्विहितं व्रतं तत्र तस्य पादं प्रत्येकं कुर्य्युः। एका चेदित्युपलक्षणं, अतो बहुभिर्द्वयोर्बहूनाञ्च हनने प्रतिपुरुषं पादद्वयं त्रयं वा कल्पनीयमिति मिताक्षरा। वस्तुतस्तु एकाधिकानामेकैकपुरुषस्यैकप्रयत्नजन्यवधे व्यापन्नानां बहूनामिति पूर्वोक्तवचनात्। एकैकपुरुषस्य द्विपादं कृत्वा प्रायश्चित्तं प्रयत्नभेदे तु गोघ्नवदित्यनेन तन्ममताया अभावात् प्रत्येकं प्रतिपुरुषं द्विपादावृत्तिरिति। एतच्चाकामतो वधे द्रष्टव्यं, दैवादिति विशेषोपादानात्, कामकृते तु बहूनामपि प्रत्येकं कृतव्यापारसम्बन्धात् पूर्णप्रायश्चित्तं युक्तं ऋत्विजां फलमिव प्रतिपुरुषं कृतव्यापारसमवायात्।

"एकं घ्नतां बहूनां च यथोक्ताद् द्विगुणो दमः।"

इति प्रत्येकं दण्डद्वैगुण्यदर्शनाच्चेति मिताक्षरा, वस्तुतस्तु सर्वत्र पापे।

"स्यात्त्वकामकृते यस्तु द्विगुणं बुद्धिपूर्वके"।

इत्यङ्गिरोवचनेनाम्नानात् ज्ञाने द्वैगुण्यदर्शनादत्रापि ज्ञाने द्विपाद एव युक्तः सत्रे तु सप्तदशावरा ऋत्विकामाः सत्रमुपासीरन्निति श्रवणात्तथेति।

एकं घ्नतामिति परवचनन्तु गोवधातिरिक्तविषयं। गोवधे एका चेदित्युपदेशेन दण्डवत्प्रायश्चित्तमात्रं, अतएव प्रायश्चित्तविवेके एकं घ्नतां बहूनामिति

मनुष्यवधे उक्तं, बहुभिरित्युपादानात् द्वाभ्यां हनने तु प्रत्येकं सम्पूर्णप्रायश्चित्तं,-
अथैकहायनद्विहायनत्रिहायणगोवधप्रायश्चित्तं ।

तत्र प्रचेताः—

एकवर्षे गवि हते कृच्छ्रपादो विधीयते ।
अबुद्धिपूर्वं पुंसः स्याद्द्विपादस्तु द्विहायने ।
त्रिहायणे त्रिपादः स्यात् प्राजापत्यमतः परं ॥

इदमपि प्रायश्चित्तलाघवेन बुद्धिपूर्वकाधमशूद्रस्वामिकगोवधविषयं, अतः-
परं चतुर्हायणे इत्यर्थः, बुद्धिपूर्वके एतदेव द्विगुणमित्यर्थः ।
अथ रोधादिनिमित्तगोवधप्रायश्चित्तं अङ्गिराः,—

"रोधने बन्धने चापि योजने च गवां रुजः ।
उत्पाद्य मरणं वापि निमित्ती यत्र लिप्यते ॥
पादं चरेद्रोधवधे द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्याच्चरेत् सर्वं निपातने" ॥

निमित्ती लिप्यत,—इति यथाकथंचिन्मरणनिमित्ततारतम्येन ।
"यो भूय आरभते तस्मिन् फले विशेषः" इत्यापस्तम्बवचनात् पापविशेषेण-
लिप्यते । तद्विशेषात् प्रायश्चित्तविशेषमाह, पादं चरेदित्यादि ।

रोधः क्षीणाया गोराहारप्रचारनिर्गमविरोधः । अर्थात् क्षीणा गौः वाटा-
दिनिरुद्धत्वात्पलायनाद्यसमर्था आहाराद्यभावेन म्रियते तदा रोधस्य-
व्यवहितस्य मरणनिमित्तत्वात् प्रायश्चित्तपादः ।

बन्धनमयथाबन्धनमकामबन्धनञ्च । बन्धनस्य आसन्नत्वात्—द्वौ पादौ,
योजनं हलशकटादौ योजनं तत्रातिवाहादिना पादोनं ।

अत्रैव विषये च्यवनः ।—"प्राजापत्यद्वयं गोहत्याप्रायश्चित्तं रोधनबन्धन-
योक्तृवधे पादह्रासा नखानि लोमानि शिखावर्जं सशिखं वपनं त्रिसवनं गवानु-
गमनं सद्दशयनं सुमहत्तृणानि रथ्यासु चारये व्रतान्ते ब्राह्मणभोजनमिति ।"

रोधनबन्धनयोक्तृवधे—इत्यादेरयमर्थः, रोधनिमित्तकवधे प्राजापत्यस्य पादः-प्रायश्चित्तं नखच्छेदनमात्रं।

बन्धननिमित्तवधे प्राजापत्यस्य द्वौ पादौ नखानां लोम्नाञ्च च्छेदनं। योक्तृनिमित्ते च वधे प्राजापत्यपादत्रयं नखलोमशिखावर्जकेशच्छेदनं च,-दण्डादिप्रहारवधे सम्पूर्णप्राजापत्यं।—अर्थात् निपातने दण्डनिपातनेऽत्यन्ता-सन्नत्वात् सम्पूर्णप्रायश्चित्तं, न तु खड्गादिनिपातने "काष्ठमश्मानताड़ने" इति बृहस्पतिवचनात्। नखलोमकेशशिखाच्छेदनञ्च इति कल्पतरुः।

एतद्विषय एव मिताक्षरायुक्तं सम्वर्त्तवचनमित्येकवाक्यात्।

तद्यथा,—

"पादेऽङ्गलोमवपनं द्विपादे श्मश्रुणोऽपि च।
त्रिपादे च शिखावर्ज्जं सशिखन्तु निपातने" ॥

अत्र पादादित्वे किं मानमिति चेत्,—

पराशरवचनं,—

"रोधने तु चरेत् पादं बन्धने चार्द्धमेव हि।
योजने पादहीनं स्यात् प्राजापत्यं निपातने" ॥

"काष्ठमश्मानताड़ने" इति वार्हस्पत्यात्। दण्डोऽत्र हस्तप्रमाणो ग्राह्यः। तदधिके तु द्विगुणप्रायश्चित्तविधानात्।

यथाऽङ्गिराः,—

"अङ्गुष्ठमात्रः स्थौल्येन बाहुमात्रप्रमाणतः।
सार्द्रश्च सपलाशश्च दण्ड इत्यभिधीयते ॥
अस्मादूर्द्धप्रहारेण यदि गां विनिपातयेत्।
द्विगुणं तु भवेत्तत्र प्रायश्चित्तमिति स्थितिः"।

सपलाशः सपत्रः। एतद्वचनविषय एव चवनोक्तप्राजापत्यद्वयमिति, एतच्चाम्नानतः।

यथा वृहस्पतिः,—

"पादञ्चरेद्रोधवधे कृच्छ्रार्द्धं बन्धघातने।
अतिवाहे च पादोनं कृच्छ्रमज्ञानताड़ने"॥

अत्र कृच्छ्रपदप्राजापत्यपदश्रवणात् तस्यैव पादादिकमवगम्यते, न चयादृशे गोवधे यत्प्रायश्चित्तं तस्येति, अज्ञानञ्च चीणाया—मचीणत्वभ्रमः। तेनज्ञाने तु प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादादिकं।

यथा हारीतः,—

"नासाच्छेदनदाहेषु कर्णच्छेदनबन्धने।
अतिदोहातिवाहाभ्यां कृच्छ्रं चान्द्रायणञ्चरेत्"॥

हत्वेति शेषः। कृच्छ्रं व्रतं तेन चान्द्रायणव्रतमित्यर्थः। इति शूलपाणिमहामहोपाध्यायाः। भवदेवभट्टैस्तु निपातने कूपावटादिषु इति व्याख्यातं तदपि युक्तं, अन्यथा तत्र पातजनकभयादिदर्शकस्य प्रायश्चित्तस्यानध्यवसायापत्तेः।

"शस्त्रादिना तु हत्वा गां मानवं व्रतमाचरेत्"।

"रोधादिना त्वाङ्गिरसमापस्तम्बोक्तमेव चेति" वृहस्पत्युक्तस्य मुष्टिलोष्टलगुडविषाग्न्यादीनां प्रायिकमृत्युफलानां ग्रहणं रोधादिनेति। यथा कथंचिन्निमित्तमात्रस्य बन्धादेरिति शूलपाणिव्याख्यानाच्च तस्मान्निपातनपरमुभयपरं। एतच्च रात्रौ रक्षणार्थं रोधबन्धनव्यतिरिक्तविषयम्।

"सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः॥

इत्यङ्गिरोवचनात्। बन्धने मिताक्षरायां विशेषमाह व्यासः,—

"न नारिकेलैर्न च शालतालैर्न चापि मौञ्जैर्न च वज्रशृङ्खलैः।
एतैस्तु गावो न च बन्धनीया बद्धा तु तिष्ठेत् परशुं गृहीत्वा॥
कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्ज्जिते"। इति।

अथापालननिमित्त गोवधप्रायश्चित्तं।

तत्र पराशरः,—

"शीतानिलहता चैव उद्बन्धनमृतापि वा।
शून्यागाराद्युपेक्षायां प्राजापत्यं विनिर्दिशेत्॥
अपालनात् प्रणश्येत्तु गौश्चरन्ती कथञ्चन।
जलौघपल्वले मग्ना नागविद्युद्धतापिवा॥
श्वभ्रे वा पतिता कस्माच्छ्वापदैर्व्वापि भक्षिता।
प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमं॥
सशिखं वपनं कार्य्यं त्रिसन्ध्यमवगाहनं।
शृङ्गैर्वापि खुरैर्युक्तं लाङ्गूलश्रवणादिभिः॥
आर्द्रमेव हि तच्चर्म्म परिधाय स गां व्रजेत्।
तासां मध्ये वसेद्रात्रौ दिवा ताभिः समं व्रजेत्॥
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः।
प्रायश्चित्ते ततश्चीर्णे कुर्य्यात् ब्राह्मणभोजनं।
अनडुत्-सहितां गां च दद्याद्विप्राय दक्षिणां"॥

अत्र गोस्वामीत्यभिधानादुत्सृष्टवृषवत्सतरीषु स्वत्वाभावादपालननिमित्तकतद्बधे तदुत्स्रष्टुर्दोषो नास्तीति प्रतीयते, तत्स्वत्वाभावेनान्येषां-तच्छ्रवणमोपाधिकस्वत्वं निराकरोति, कल्पतरुधृतब्रह्मपुराणं,—

"अथ वृत्ते वृषोत्सर्गे दाता वक्रोक्तिभिः पदैः।
ब्राह्मणानाह यत्किञ्चिन्मयोत्सृष्टं तु निर्जनैः॥
तत्कश्चिदन्यो न नयेद्विभाज्यं च यथाक्रमं।
न वाह्यं न च तत्क्षीरं पातव्यं केनचित् क्वचित्"॥

वक्रोक्तिभिः काकूक्तिभिः स्वाम्यभावेनोत्सृष्टपशोः पालननियमाभावा-वाह्यादिभक्षणे मोक्षत्वमाह,—

याज्ञवल्क्यः,—

"महोक्षोत्सृष्टपशवः सूतिका गन्तुकादयः।

पालो येषां च ते मोच्या दैवराजपरिप्लुताः" ॥

महोक्षोऽनिर्वार्य्यः महाबलीवर्दः। उत्सृष्टपशवः देवतोद्देशेन पित्रादि-निष्ठफलोद्देशेन चक्राद्यङ्किताः स्वयम्पशवः। सूतिका अनिर्गतदशाहा। आगन्तुका-ग्रामान्तरादागता आदिशब्दादुशनसोक्ताश्च,—

यथा—

"अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः।

अदण्ड्याः काणकुण्ठाश्च वृषभः कृतलक्षणः" ॥

कुण्ठः खञ्जः, अत्र काणकुण्ठशब्दाभ्यामत्यन्ताक्षम उच्यते वृषभः कृत-लक्षणः। प्रागुक्तोत्सृष्टपशुः। एते सपाला विपाला वा सर्वथा मोच्याः।

तथाच मनुः—

"अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा।

सपालान् वा विपालान् वा अदण्ड्यान्मनुरब्रवीत्" ॥

तद्भिन्नानां येषां च पालोऽस्ति तेऽपि च मोच्याः। अर्थात् पालो-दण्डनीयः। दैवराजपरिप्लुताः। गर्जनादिश्रवणात्तेनादिदर्शनाद्वा पलायिताः-पशवो यदि क्षेत्रे चरन्ति, तदा न दोष इत्यर्थः।

पालकान्तरसत्वेतु मनुः,—

"दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे।

योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामीयात्" ॥

दिवा पशूनां पालहस्तन्यस्तानां योगक्षेमविषये दोषे जाते पालकस्य-गर्हणीयता, रात्रौ पुनः पालप्रत्यर्पितानां स्वामिनां दोषः, अन्यथा यदि-रात्रावपि पालहस्तगता भवन्ति, तदा दोषे उत्पन्ने पाल एव गर्हणीयतां-प्राप्नोति। इति कुल्लूकभट्टः।

स्मृतिसागरसारे वृहदङ्गिराः,—

"अनागतस्य चानेता आगतस्य च रक्षकः ।
रात्रावपि यदन्योऽस्ति तदा स्वामी न दोषभाक्" ॥

ननु दण्डप्रकरणोक्तमनुवचनं प्रायश्चित्ते कथमितिचेन्न, "दण्डवत् प्रायश्चित्तानि भवन्तीति स्मृतेः", तथा व्यवहाराच्च ।

एवञ्च,—

"यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य च ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमः" ॥

इति मनुवचने यत्र सारथेरकौशलात् यानमन्यथा गच्छति, तत्र हिंसायामसुशिक्षितसारथिनियोगात् स्वामी द्विशतं दण्डं दाप्य स्यादिति कुल्लूकभट्टव्याख्यानदर्शनात्, अयोग्यपालकसमर्पणे स्वामिनो दोषात्तस्यैव प्रायश्चित्तमुक्तं,—

"यावत् शस्यं विनश्येत्तु चेतो तावत् फलं लभेत् ।
पालस्ताड्योऽथ गोस्वामी पूर्वोक्तं दण्डमर्हति" ॥

इति याज्ञवल्क्यवचने गवादिदोषेण यावत् शस्यं विनश्यति तावदेव पालकात् प्राप्तव्यं, पालकाशक्तौ पालकस्ताड्यः पूर्वोक्तं दण्डादिकमर्हतीति दर्शनाच्च । गोवधप्रायश्चित्ते पालकद्रव्यासम्भवे स्वामिना द्रव्यं दत्त्वा प्रायश्चित्तं कारयितव्यं कर्त्तव्यं वा । म्लेच्छपालके स्वयं कर्त्तव्यं । सशिखवपनमित्यत्र नैमित्तिकेन सशिखवपनेन सदा बद्धशिखेन स्थितस्य,—

"गायत्र्या तु शिखां बध्वा नैरृत्यां ब्रह्मरन्ध्रतः ।
जुटिकां तु ततो बध्वा ततः कर्म समाचरेत्" ॥

इति ब्रह्मपुराणोक्तस्य च नित्यत्वस्य बाधो न दोषाय फलचमसेन सोमस्य बाधवत् गोदोहेन चमसस्य बाधवच्च ।

"सशिखं वपनं कार्य्यमास्नानाद्ब्रह्मचारिणा" । इति ।

कात्यायनकृतच्छन्दोगपरिशिष्टेऽप्येवं एतदेवश्रुतिमूलकत्वात् तद्भूतपारस्करीये पर्य्युप्तशिरसमिति सूत्रेऽपि तथैवार्थः, तद्भाष्यकृता हरिशर्मणापि-परिसर्वतोभावेनोप्तशिरसं मुण्डितशिरसमिति व्याख्यातं। न च,—

"एते लूनशिखास्तस्य दशनैरचिरोद्गतैः।
कुशाः काशा विराजन्ते वटवः सामगा इव"॥

इति विष्णुपुराणीयेन सामगा—इति विशेषणादन्येषां लूनशिखत्वमिति वाच्यं प्रागुक्तवचनात् सर्वेषां सशिखवपनप्राप्तेः विध्यन्तरकल्पनापत्तेः। तृण-सामगयोरौपम्यन्तु हरिणसुखहेतुत्वेनाप्युक्तं, तयोः सुखहेतुत्वञ्च भक्ष्यत्वेन गायकत्वेनेति शेषः। एवं प्राचीनावीतित्वादिना सदोपवीतिना भाव्यमित्यस्यापि-बाध—इति प्रसङ्गादुक्तं। ब्राह्मणस्य विशिषेणेति ब्राह्मणानुगमनं मुख्यं, एतेनापालनकृतगोबधे प्राजापत्यं करणीयमिति अत्रेतिकर्त्तव्यतापि प्राजापत्यतुल्येति पण्डितसर्वस्वे हलायुधः।

वृषभो गौश्च दक्षिणा ब्राह्मणभोजनं विशेषयति यज्ञपार्श्वः,-

"गर्भाधानादिकृत्येषु ब्राह्मणान् भोजयेद्दश"।

प्राजापत्यद्वयाशक्तौ धेनुद्वयं, तदशक्तौ षट्कार्षापणाः। एवं च वृषमूल्यं-पञ्चकार्षापणाः। गोमूल्यं कार्षापणैकः। शूलपाणिप्रभृतिभिस्तु इतिकर्त्तव्यतायां विशेषोऽनादृतः। एतच्च शूद्रस्वामिकेतरबधविषयं शूद्रस्वामिकस्याज्ञानात् साक्षाद्वधे यत्किञ्चिद्दक्षिणकृच्छ्रद्वयस्य निबद्धृभिर्व्यवस्थापितत्वेनापालनकृतबधे-तदधिकस्यायुक्तत्वादरं तत्तुल्यं कृच्छ्रद्वयं युक्तमुत्पश्यामः।

अत एवैतद्विषय—एव स्मृतिसागरे वृद्धदङ्गिराः।

"अरक्षिते तु कूपादौ हते व्याघ्रादिभक्षिते।
व्रतार्द्धमाचरेत्स्वामी रक्षिते नास्ति दूषणं"॥

व्रतार्द्धं कामकृतव्रतार्द्धं, नास्ति दूषणमिति यदि प्रमत्ता गौर्निवारयन्तं पालमतिक्रम्य गर्त्तकान्तारादौ म्रियते तदा नेत्यर्थः। अन्यत्र सत्येव पालके-सम्यक्पालनाभावेन खभ्रादौ पाताद्दोर्म्मरणे प्रायश्चित्तमाह,—

विष्णुः,—

"पल्वलौघट्टकव्याघ्रश्वापदादिनिपातने ।
अभ्रोदम्भनसर्पाद्यैर्मृते पादोनमाचरेत् ।
अपालने तु कृच्छ्रं स्याच्छून्यागाराद्युपप्लवे" ॥

ततो पादोनं प्राजापत्यस्यैव, उत्तरवचने कृच्छ्रश्रवणात् । हकास्तरक्षुः-व्याघ्रभेदः, श्वापदः श्वविशेषः एवमन्यान्यपि पादोनविधायकादिवचनान्ये-तद्विषयकाण्येव । यथा यमः,—

"अतिवाहातिदोहाभ्यां नासिकाभेदनेन च ।
नदीपर्वतसंरोधान्मृते पादोनमाचरेत् ॥

तथा,—

"दीर्घरज्जुकृते चैव प्रग्रहे युग्मयोजिते ।
हलयुग्ममृते चैव द्विपादं तत्र निर्दिशेत् ॥
घण्टाभरणदोषेण गवां यत्र विपद्-भवेत् ।
चरेदर्द्धव्रतं तत्र भूषणार्थं हि तत्कृतं ॥

अत्र पादोनादिकं प्राजापत्यस्येत्यर्थः ।

तथा,—

"पादश्चाप्राप्तके देयो वत्से स्वामिन्यरक्षिते" ।

अप्राप्तके अप्राप्तदम्यावस्थे बाले अर्थात् विहायनपर्य्यन्ते इति यावत् । एवंभूते वत्सेऽरक्षिते श्वभ्रपातादिना मृते सति स्वामिनि प्राजापत्यपादो देयः, अर्थात् स्वामिना प्राजापत्यपादः करणीयः ।

अत्र पादमात्रप्रायश्चित्तत्वात् बालत्वादिना नानुयज्ञः तत्राप्राप्तदम्यावस्थ-वत्सापालननिमित्तकवधजन्यपापक्षयकाम इति प्रयोज्यं ।

अत्र,—

"विभृयाद्वेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता ।
भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः" ॥

इति नारदोक्तैकगृहरूपतया स्थितानामविभक्तानां संसृष्टानाञ्चापालनाहो-
प्रणाशस्तैकतमकृतमकृतेन प्रायश्चित्तेन सर्वेषां पापनाशः।

"एकपाकेन वसतां पितृदेवद्विजार्चनं।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे" ॥

इति बृहस्पतिवचनेन,—

"भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते।
विभागे सति धर्मो हि भवेदेषां पृथक् पृथक् ॥

इति नारदवचनेन च एकत्र वासिनामेकतमकृतवैदिककर्ममात्रेण सर्वेषां-
फलभागित्वात्। अन्यथैकतमकृतपञ्चमहायज्ञैस्तादृशानां सर्वेषां पञ्चसूना
पापनाशो न स्यात्।

तदुक्तं मनुना,—

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणं।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनं ॥
पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः।
स्वगृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते" ॥

सूनादोषैः,—

"पञ्चसूना गृहस्थस्य चुल्लिपेषण्युपस्करः।
कण्डनी चोदकुम्भश्च युज्यते यास्तु वाहयन्" ॥ इति—

स्वोक्तेः। सूना हिंसास्थानानि चुल्ली पाकस्थानं पेषणी दृषदुपलादि।
उपस्करः सम्मार्जन्यादि। कण्डनी मुषलोदूखलादि, एताः सूनाः स्वस्वकार्ये-
प्रापयन् पापेन युज्यते पुरुष इत्यर्थः। अन्यथा च दम्पत्योर्मध्यगं धनमित्यनेन-
तत्र गवि पत्न्याः स्वामित्वात्तस्याऽपि प्रायश्चित्तान्तरं स्यात्।

ननु,—

"आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः।
शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा" ॥

इति वृहस्पतिवचनाज्जायापत्योर्विभागो न विद्यते ।

तथा पुण्यापुण्यफलेष्वित्यापस्तम्बवचनाच्च ।

एवम्भूतविषये भर्त्तृकृतादेव प्रायश्चित्तात्तयोः इति चेद्भ्रात्रादीनामेकपाकेन वसतामिति प्रागुक्तवचनद्वयात्तथेति तु साधारणधनदानेन प्रायश्चित्तं कृतं-तच्च सुतरां सर्वेषां पापक्षयः । अतएव विवादकल्पतरुप्रभृतिषु—

वृहस्पतिः,—

"वहूनां सम्मतो यस्तु दद्यादेकं धनं नरः ।
करणं कारयेद्वापि सर्व्वैरेव कृतं भवेत्" ॥

तथाच—

"पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" ।

इत्याद्युक्तं,—

पापक्षयायाश्वमेधिके पर्व्वणि युधिष्ठिरं—

प्रति व्यासवाक्यं,—

"अश्वमेधो हि राजेन्द्र ! पावनः सर्व्वपाप्मनां ।
तेनेष्ट्वा वै विपाप्मत्वं भविता नात्र संशयः" ॥

तत्रैव भगवद्वाक्यं—

"भीमसेनार्ज्जुनौ चैव तथा माद्रवतीसुतौ ।
इष्टवन्तो भविष्यन्ति त्वयीष्टवति पार्थिव ।" ! ॥

उपसंहारेऽपि—वैशम्पायनः,—

"गत्वा चावभृथे राजा विपाप्मा भ्रातृभिः सह ।
सम्भ्राज्यमानः शुशुभे महेन्द्रस्त्रिदशैरिव' ॥

अविभक्तानां पालकानामप्येकं प्रायश्चित्तं विभक्तानाञ्च पादं पादं एका चेदिति प्रागुक्तत्वात् । वहूनां गवामपालने तु द्विगुणं प्रायश्चित्तं, व्यापन्नानां वहूनामिति प्रागुक्तत्वात्तत्रापि विभक्तवहुकर्त्तृके तु द्विपादं प्रत्येकं प्रायश्चित्तमिति गोवधे लघुगुरुप्रायश्चित्तान्तराणि यथायोग्यं द्रव्यतत्स्वामिगुणत्वा-

ऽल्पनिर्गुणत्वदेशकालविशेषप्रयोजकादिभेदेन व्यवस्थेयानि, इति शूलपाणिरघुनन्दनगोविन्दानन्दाः ।

पठितं विष्णुना च,—

"उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः" ।

इत्यनेन चान्द्रायणं विहितं, तत्र पापस्य लघुत्वाच्चान्द्रायणपदं शिशुचान्द्रायणपरं । तत्पादोनधेनुचतुष्टयेन सङ्कलितं प्रायश्चित्तविवेकेनइत्येतद्विषय एव । चान्द्रायणमकुर्व्वाणाः कुर्य्युः कृच्छ्रचतुष्टयं । इति समूलकल्पेबोध्यम् ।

अपि चात्रोत्कलदेशप्रचलिते प्रायश्चित्तमनोहरे पण्डितसर्व्वस्वे च यथा ।

---

## अथ गोवधप्रायश्चित्तविधिर्लिख्यते ।

तत्र पराशरः,—

"गवां बन्धनयोक्त्रे तु भवेन्मृत्युरकामतः ।
अकामकृतपापस्य प्रायश्चित्तं कथं भवेत् ॥
वेदवेदाङ्गविदुषां धर्म्मशास्त्रं विजानतां ।
स्वकर्म्मरतविप्राणां स्वकं पापं निवेदयेत् ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि उपस्थानस्य लक्षणं ।
उपस्थितो हि न्यायेन व्रतादेशनमर्हति ॥
सद्यो निःसंशये पापे न भुञ्जीतानुपस्थितः ।
भुञ्जानो वर्द्धयेत् पापं पर्षद्-यत्र न विद्यते ॥
संशये तु न भोक्तव्यं यावत् कार्य्यविनिश्चयः ।
प्रमादश्च न कर्त्तव्यो यथैवासंशयस्तथा ॥
कृत्वा पापं न गूहेत गुह्यमानं विवर्द्धते ।
स्वल्पं वाथ प्रभूतं वा धर्म्मविद्भ्यो निवेदयेत् ॥

ते हि पापे कृते वैद्या हन्तारश्चैव पाप्मनां।
व्याधितस्य यथा वैद्या बुद्धिमन्तो रुजापहाः॥
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः।
मृदुरार्जवसंपन्नः शुद्धिं गच्छति मानवः॥
सचेलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः।
क्षत्रियो वाथ वैश्यो वा ततः पर्षदमाव्रजेत्॥
उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं व्रजेत्।
गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत्॥
चातुर्वैद्योऽविकल्पी च अङ्गविद्धर्मपाठकः।
प्रयश्चाश्रमिणो मुख्या परिषत्स्युर्दशावराः॥
राज्ञां चानुमते चैव प्रायश्चित्तं द्विजो वदेत्।
स्वयमेव न वक्तव्या प्रायश्चित्तस्य निष्कृतिः॥
ब्राह्मणांश्च व्यतिक्रम्य राजा यत् कर्त्तुमिच्छति।
तत्पापं शतधा भूत्वा राजनमुपगच्छति॥
प्रायश्चित्तं सदा दद्यात् देवतायतनाग्रतः।
आत्मानं पावयेत् पश्चाज्जपन् वै वेदमातरम्"॥

राजानुमतिः गुरुतरपापेषु न तु लघुतरेषु, इत्युपदर्शितं पूर्व्वतः।
विषयेऽस्मिन् प्रायश्चित्तविधिमाह—
याज्ञवल्क्यः,—

"पञ्चगव्यं पिबेत् गोघ्नो मासमासीत संयतः।
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति॥
कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वापि समाहितः।
दद्यात्त्रिरात्रं चोपोष्य वृषभैकादशास्तु गाः"॥

तथाच विज्ञानेश्वरः,—

"गां हन्तीति गोघ्नः मूलविभुजादित्वात् कप्रत्ययः" ।

आसौ मासं समाहित आसीत् किं कुर्व्वन् ?

यश्च—तानि गव्यानि गोमूत्र-गोमय-चीर-दधि-घृतानि यथाविधि मिश्रितानि पिबन् । आहारान्तरपरित्यागेन भोजनकार्य्ये तस्य विधानात् । तथा-गोष्ठेशयः, ग्रामगयनानुवादेन गोष्ठे विधानेन दिवा च स्वापप्रतिषेधाद्रात्रौ-गोशालायां शयानो गा अनुगच्छति । तदस्य व्रतमिति गोऽनुगामी । व्रते-र्णिनिः, अतश्च यासां गोष्ठे शेते सन्निधानात्ता एव गाः प्रातर्वनं विचरन्तीरनु-गच्छेत् । अनुगच्छेदिति वचनात् यदा ता गच्छन्ति, तदैव स्वयमनुगच्छेत्-यदाऽनुतिष्ठन्त्यासते वा तदा पश्चाद्गमनस्याशक्यकरणत्वात् स्वयमपि तिष्ठे-दासीत वेति गम्यते । अनुगमनविधानादेव ताभिः सायं गोष्ठं व्रजन्तीभिः-सह गोष्ठप्रवेशोऽप्यर्थसिद्धः । एवं कुर्व्वन् मासान्ते गोप्रदानेन एकां गां दत्त्वा-तावता शास्त्रार्थस्य सम्पन्नेर्गोहत्यायाः शुध्यतीतीत्येकं व्रतं । मासं गोष्ठेशयो-गोऽनुगामीत्यनुवर्त्तते । पञ्चगव्याहारस्य तु निवृत्तिः । कृच्छ्रविधानादेव । अतश्च—"मासं निरन्तरं कृच्छ्रं समाहितश्चरेदित्यपरं" अत एव जावालेन मासं-प्राजापत्यस्य पृथक् प्रायश्चित्तत्वमुक्तं ।

"प्राजापत्यं चरेन्मासं गोहन्ता चेदकामतः ।
गोहितो गोऽनुगामी स्यात् गोप्रदानेन शुध्यति" ॥ इति ।

अतिकृच्छ्रं वा तथैव समाचरेदित्यन्यत् । अथवा त्रिरात्रमुपवासं कृत्वा-वृषभ एकादशी यासां गवां ता दद्यादिति व्रतचतुष्टयं । तत्राकामकृते-जातिमात्रब्राह्मण-स्वामिक-गोमात्रवधे उपवासं कृत्वा वृषभैकादशगोदान-सहितस्त्रिरात्रोपवासो द्रष्टव्यः । विशिष्ट-स्वामिकाया विशिष्टगुणवत्याश्च-वधे गुरुप्रायश्चित्तस्य वक्ष्यमाणत्वात् । क्षत्रियसम्बन्धिन्यास्तु तादृग्विधे व्यापा-दने मासं पञ्चगव्याशित्वं प्रथमं प्रायश्चित्तम् । अत्र मासं पञ्चगव्याशन-स्यातिस्वल्पत्वात्तन्मासोपवासतुल्यत्वं । ततश्च षड्भिः षड्भिरुपवासै-रेकैकप्राजापत्यकल्पनया पञ्चकृच्छ्राणां प्रत्याम्नायेन पञ्चधेनवो मासान्ते च-

दीयमाना गौरेकेति षट् धेनवो भवन्तीति इयमेकादशगोदानसहितत्रिरात्र-व्रतात्लघीयस्त्वं । कथं पुनर्ब्राह्मणगवीनां गुरुत्वं । "देवब्राह्मणराज्ञां तु विज्ञेयं द्रव्यमुत्तममिति नारदेन तद्द्रव्यस्योत्तमत्वाभिधानात् ।" गोषु ब्राह्मणसंस्थास्विति दण्डभूयस्त्वदर्शनाच्च । वैश्यसम्बन्धिन्यास्तु तादृग्विधे-व्यापादने मासमतिकृच्छ्रं कुर्य्यात् । अतिकृच्छ्रे त्वाद्ये त्रिरात्रत्रये पाणिपूरान्न-भोजनमुक्तं । अन्त्ये त्रिरात्रेऽनशनं । अतोऽतिकृच्छ्रधर्म्मेण मासव्रते क्रियमाणे षड्रात्रमुपवासो भवति । चतुर्विंशत्यहे च पाणिपूरान्नभोजनं ततश्च कृच्छ्र-प्रत्याम्नायकल्पनया किञ्चिन्न्यूनं धेनुपञ्चकं भवतीति पूर्वस्मात् व्रतद्वयाल्लघिष्ठ-त्वेन वैश्यस्वामिकगोवधविषयता युक्ता । तादृश एव विषये शूद्रस्वमिक-गोहत्यायां मासं प्राजापत्यव्रतं, द्वितीयं तच्च च सार्द्धप्राजापत्यद्वयात्मकेन-प्रत्याम्नायेन किञ्चिदधिकं धेनुद्वयं भवतीति पूर्वेभ्यो लघुतमत्वाच्छूद्र-विषयतौचिता ।

अथैतत् प्रायश्चित्तचतुष्टयं साक्षात्कतनुग्राहकप्रयोजकाऽनुमन्तृषु गुरु-लघुभावतारतम्यापेक्षया पूर्वोक्त एव विषये योजनीयं । यत्तु वैष्णवं व्रतत्रयं यच्च काश्यपीयं । गां हत्वा तच्चर्म्मणा प्रावृतो मासं गोष्ठेशयस्त्रिषवणस्नायी-नित्यं पञ्चगव्याहार इति । यच्च शातातपीयं मासं पञ्चगव्याहार इति । तत्पञ्चकमपि याज्ञवल्कीयपञ्चगव्याहारसमानविषयं । यच्च शङ्खप्रचेतोभ्या-मुक्तं । गोघ्नः पञ्चगव्याहारः पञ्चविंशतिरात्रमुपवसेत् सशिखं वपनं कृत्वा-गोचर्म्मणा प्रावृतो गाश्चानुगच्छन् गोष्ठेशयो गां च दद्यादिति । एतच्च याज्ञ-वल्कीयमासातिकृच्छ्रव्रतसमानविषयं दद्याच्चिरात्रं चोपोष्यैत्येतद्विषयमेवात्यन्त-गुणिनो हन्तुर्वेदितव्यं । अत्रैव विषये पञ्चगव्याशनस्य तु द्वितीयं काश्यपीयं-मासं पञ्चगव्येनेति प्रतिपाद्य षष्ठे काले पयो भक्ष्यो वा गच्छन्तीष्वनुगच्छेत्तासु सुखोपविष्टासु चोपविशेन्नातिप्लवं गच्छेन्नातिविषमेणावतारयेन्नाल्पोदके पाययेद्-दन्ते ब्राह्मणान् भोजयित्वा तिलधेनुदद्यात् इति द्रष्टव्यं । अत्राप्यशक्तस्य-गोघ्नो मासं यवागूप्रसृतितण्डुलसृतां भुञ्जानो गोभ्यः प्रियं कुर्व्वन् शुध्यतीति-पैठीनसिनोक्तं वेदितव्यं । यत्तु सामन्तं । गोघ्नस्य गोप्रदानं गोष्ठेशयनं द्वादश-रात्रं पञ्चगव्याशनं गवानुगमनं चेति ।

यच्च सम्बर्त्तनोक्तं,—

"सक्तुयावकभैक्ष्याशी पयो दधि-घृतं सकृत् ।
एतानि क्रमशोऽश्नीयान्मासार्द्धं सुसमाहितः ॥
ब्राह्मणान् भोजयित्वा तु गां दद्यादात्मशुद्धये" । इति

यच्च वार्हस्पत्यं,—"द्वादशरात्रं पञ्चगव्याहार इति तत्त्रितयमपि याज्ञवल्कीयमासप्राजापत्येन समानविषयं" । मृतकल्पगोहत्याविषयं वा विषमप्रदेशवासेन जनितव्याधितो मरणविषयं वा वेदितव्यं । तदिदं सर्वं प्रागुक्तमकामविषयं । अकामकृतगोवधदोषमाह यमः, यथा—

"काष्ठलोष्ट्राश्मभिर्गावः शस्त्रैर्वा निहता यदि ।
प्रायश्चित्तं कथं तत्र शास्त्रे शास्त्रे विधीयते ॥
काष्ठे सान्तपनं कुर्य्यात् प्राजापत्यं तु लोष्ट्रके ।
तप्तकृच्छ्रं तु पाषाणे शस्त्रे चाप्यतिकृच्छ्रकं ॥
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनं ।
त्रिंशद्गा वृषभं चैकं दद्यात्तेभ्यश्च दक्षिणां" ॥ इति ।

प्रायश्चित्ताशक्तौ धेनुसंख्या यथा,—"सान्तपने धेनुद्वयं । तथा सति समुदायेन एकवृषभाधिकत्रिंशद्गोभिः सह मिलित्वा एकवृषभद्वात्रिंशद्धेनवो भवन्ति । प्राजापत्ये एका धेनुः । तप्तकृच्छ्रे धेनुद्वयं । अतिकृच्छ्रे धेनुचतुष्टयं । सर्व्वप्रायश्चित्तेषु त्रिंशद्गा वृषभमेकमिति सम्बन्धनीयं । वृषभमूल्यं पञ्चकार्षापणं । धेनुमूल्यं द्विकार्षापणमिति पण्डितसर्व्वस्वे । एतच्च पूर्व्वोक्तप्रायश्चित्तजातं ब्राह्मणस्य हन्तुर्वेदितव्यं । क्षत्रियादेस्तु हन्तुर्वृहद्विष्णुना विशेषोऽभिहितः,—

"विप्रे तु सकलं देयं पादोनं क्षत्रिये मतं ।
वैश्येऽर्द्धं शेषपादस्तु शूद्रजातिषु शस्यते" ॥ इति ।

यच्चाङ्गिरोवचनं,—

"पर्षद् या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा प्रोक्ता पर्षवच्च व्रतं स्मृतं" ॥ इति ।

तत् प्रातिलोम्येन वाग्दण्डपारुष्यादिविषयं।

बहुकर्तृके तु हनने सम्बर्त्तापस्तम्बौ विशेषमाहतुः ।

"एका चेद्बहुभिः काचित् दैवाद्व्यापादिता क्वचित्।

पादं पादं तु हत्यायाश्चरेयुस्ते पृथक् पृथक्" ॥ इति।

यादृग्विधगोहत्यायां यद्व्रतमुपदिष्टं तत् पादं प्रत्येकं कुर्य्युर्वचनात्। एका चेदित्युपलक्षणमित्यतो बहुभिर्द्वयोर्बह्वनाञ्च व्यापादनं प्रतिपुरुषं पादद्वयं पादोनं वा कल्पनीयं। तच्चाकामतो बधे द्रष्टव्यं। दैवादिति विशेषणोपादानात्। कामकारे तु बह्वनामपि प्रत्येकं कृत्स्नदोषसम्बन्धात् कृत्स्नव्रतसम्बन्धो युक्तः। मन्त्रिणामिव प्रतिपुरुषं कृत्स्नव्यापारसमवायात्।

एकं घ्नतां बह्वनान्तु यथोक्तद्विगुणो दमः" ।

इति प्रत्येकं दण्डद्वैगुण्यदर्शनाच्च। यदात्वेकेनैव बन्धनादिव्यापारेण बहवो गावो व्यापादितास्तत्र सम्बर्त्तापस्तम्बौ विशेषमाहतुः,—

"व्यापन्नानां बह्वनां तु रोधने बन्धने तथा।

भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतं चरेत्" ॥ इति।

बहुष्वपि व्यापन्नेषु न प्रतिनिमित्तं नैमित्तिकानुष्ठानं नापि तन्त्रेण, किन्तु वचनवलाद्द्विगुणमेव। तथाभिषगपि विरुद्धौषधदानेनैकस्या—प्यकामतो व्यापादने द्विगुणं गोव्रतं कुर्य्यात्। भिषग्व्यतिरिक्तस्य केवलमुपकारार्थं प्रवृत्तस्य त्वकामतः प्रतिकूलौषधदाने व्यास आह,—

"औषधं लवणञ्चैव पुण्यार्थमपि भोजनं।

अतिरिक्तं न दातव्यं काले स्वल्पं च दापयेत्।

अतिरिक्ते विपत्तिश्चेत् कृच्छ्रपादो विधीयते" ॥ इति।

पाठान्तरं तद्वचनस्यैवं। यथा,—

"औषधं लवणञ्चैव स्नेहं पिण्याकमेव च।

अतिरिक्तं न दातव्यं काले स्वल्पञ्च दापयेत्।

अतिरिक्ते विपन्नानां कृच्छ्रपादो विधीयते" ॥

यच्चापस्तम्बेनोक्तं,—

"पादमेकञ्चरेद्रोधे द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्याच्चरेत् सर्वं निपातने" ॥ इति ।

तद्व्यवहितव्यापारिणो निमित्तकर्त्तुर्विज्ञेयं न साक्षात् कर्त्तुः । साक्षात्-कर्त्तृनिमित्तिनोश्च भेदः तेनैव दर्शितः ।

यथा,—

"पाषाणैर्लगुडैर्वापि शस्त्रेणान्येन वा बलात् ।
निपातयन्ति ये गास्तु कृच्छ्रं कुर्य्युर्व्रतं हि ते ।
तथैव बाहुजङ्घोरुपार्श्वग्रीवाङ्घ्रिमोटनैः" ॥ इति ।

एतदुक्तं भवति । पाषाणखड्गादिभिर्ग्रीवामोटनादिना वा ये ऽङ्गानि पातयन्ति-ते साक्षात्कर्त्तारस्तेष्वेव कृच्छ्रं प्रायश्चित्तं । ये तु व्यवहितरोधबन्धादिव्यापार-योगिनस्ते निमित्तिनस्तेषां न कृच्छ्रव्रतसम्बन्धः । किन्तु तदवयवैरेव पाद-द्विपादादिभिरिति । तत्र च रोधादिना व्यवहितव्यापारत्वाविशेषेऽपि-वचनात् क्वचित् पादः क्वचिद्द्विपादः पादोनं क्वचिदिति युक्तं ।

अथाह पराशरः,—

"गवां बन्धनयोक्त्रैस्तु भवेन्मृत्युरकामतः ।
अकामकृतपापस्य प्राजापत्यं विनिर्द्दिशेत् ॥
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्-ब्राह्मणभोजनं ।
अनडुत्सहितां गां च दद्यात् विप्राय दक्षिणां ।" इति ।

अयं च प्राजापत्यो यदि रोधादिकं कृत्वा तज्जन्यप्रमादपरिजिहीर्षया-प्रत्यवेक्षमाण आस्ते तदा द्रष्टव्यः । अकामकृतपापस्येति विशेषणोपादानात् । यदा तु न प्रमादसंसरणं करोति तदा,—

"पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्याच्चरेत् सर्वं निपातने" ॥

इत्यङ्गिरसोक्तं त्रैमासिकपादं किञ्चिदधिकं वा विंशत्यहर्गोवधव्रतं कुर्य्यात् ।

आपस्तम्बेनापि विशेष उक्तः,—

"अतिदोहातिवाहाभ्यां नासिकाच्छेदने तथा।

नदीपर्व्वतसंरोधे मृते पादोन माचरेत्" ॥ इति।

लक्षणमात्रोपयोगिनि तु दाहे न दोषः,—

"अन्याचाङ्कनलक्ष्माभ्यां वाहने मोचने तथा।

सायं संयमनार्थञ्च न दुष्येद्रोधबन्धने" ॥

इति पराशरस्मरणात्। अङ्कनं त्रिशूलादिना स्थिरचिह्नकरणं। लक्ष्म-व्याघ्रादिनिवृत्त्यर्थं कर्णकर्त्तनादि। कामकृते तु द्विगुणं प्रायश्चित्तमिति सम्वर्त्ता-पस्तम्बौ। यदा पुनरीदृग्विधामविशिष्टविप्रस्वामिकामविशिष्टां गां कामतः-प्रमापयति। तदा मनुना मासं यवागूपानं। मासद्वयं हविष्येण चतुर्थ-कालभोजनं मासत्रयं वृषभैकादशगोदानयुक्तं शाकादिना वर्त्तनमिति व्रत-त्रितयमाम्नातं। मनुवचनान्युक्तविषयकाणि कथितपूर्व्वतया नोद्धृतान्यत्र।

एतच्चित्रतययाज्ञवल्कीयमासप्राजापत्यमासपञ्चगव्याशनवृषभैकदशगोदान-युक्तत्रिरात्रोपवासरूपव्रतत्रितयविषयं यथाक्रमेण द्रष्टव्यं। यत्त्वङ्गिरसा मानवेति-कर्त्तव्यतायुक्तं त्रैमासिकमभिधायाधिकमभिहितं।

"अक्षारलवणं रूक्षं षष्ठे कालेऽस्य भोजनं।

गोमतीं वा जपेद्विद्यामोङ्कारं वेदमेव च।

व्रतवद्धारयेद्दण्डं समन्त्रां चैव मेखलां" ॥ इति।

तथा तन्मानवविषयं। एवं पुष्टितारुण्यादिकिञ्चिद्गुणातिशययोगिन्यां द्रष्टव्यं,—

"अतिबालामतिकृशामतिवृद्धाञ्च रोगिणीं।

हत्वा पूर्व्वविधानेन चरेदर्द्धं व्रतं द्विजः" ॥

इति पुष्टितारुण्यादिरहितायां गव्यर्द्धप्रायश्चित्तदर्शनात्। यदा तु-याज्ञवल्कीयमासातिकृच्छ्रव्रतनिमित्तभूतां गामविशिष्टस्वामिकां जातिमात्र-योगिनीं कामतो व्यापादयति।

तदा,—

"विहितं यदकामानां कामात्तद्द्विगुणं चरेदिति"—

न्यायेन पूर्व्वोक्तमेवाकामविहितं मासातिकृच्छ्रव्रतं द्विगुणं कुर्य्यात्। यत्तु यमेनाङ्गिरसोमितिकर्त्तव्यतामभिधाय,—

"गोसहस्रं शतं वापि दद्यात्सुरचितव्रतः ।
अविद्यमाने सर्व्वस्वं वेदविद्भ्यो निवेदयेदिति" ॥

गोसहस्रयुक्तं गोशतयुक्तं च द्वैमासिकं व्रतद्वयमभिहितं। तत्र यदा-सवनस्थश्रोत्रियातिदुर्गतबहुकुटुम्बब्राह्मणसम्बन्धिनीं कपिलां कर्म्माङ्गभूतां-गर्भिणीं बहुक्षीरत्वगुणादिगुणशालिनीं निर्गुणो धनवान् सप्रयत्नं खड्गादिना-व्यापादयति तदा गोसहस्रयुक्तं द्वैमासिकं कुर्य्यात्,—

"गर्भिणीं कपिलां दोग्ध्रीं होमधेनुञ्च सुव्रतां ।
खड्गादिना घातयित्वा द्विगुणं व्रतमाचरेत्" ॥

इति विशिष्टायां गवि वार्द्धक्ये प्रायश्चित्तदर्शनात्। अतएव प्रचेतसा-स्त्रीगर्भिणी-गोगर्भिणी-बालहत्यावधेषु भ्रूणहा भवतीति ईदृग्विधमेव। गोवधमभिसन्धाय ब्रह्महत्याव्रतमतिदिष्टं। द्वितीयं तु याम्यं गोशतदानयुक्तं-द्वैमासिकं व्रतं कात्यायनीयव्रतविषये धनवतो द्रष्टव्यं। यत्तु गौतमेन। वृषभैकगोशतदानसमुचितं त्रैवार्षिकं प्राकृतं ब्रह्मचर्य्यं वैश्यवधेऽभिधाय-गोवधेऽतिदिष्टं। गां च हत्वा वैश्यवदिति। एतच्च त्रैवार्षिकव्रतप्रत्याम्नाय-भूतनवतिधेनुभिः सार्द्धं वृषभैकशता गावो नवन्यूनं द्विशतं भवतीति-गोसहस्रयुक्तद्वैमासिकव्रतान्न्यूनत्वात् पूर्व्वोक्तविषये—एव कामतो बधे। यद्वा-तत्रैव विषये गर्भरहिताया: कामतो बधे द्रष्टव्यं तादृग्विधाया एव गर्भ-रहितायास्त्वकामतो हननेऽपि कात्यायनीयमेव त्रैवार्षिकं कल्प्यं।

इति विज्ञानेश्वरः। तथा,—

"मुष्कमोषकरो विप्रो गोवधस्य व्रतं चरेत् ।
प्रयोजकस्तु कुर्व्वीत व्रतस्यार्द्धं विशुद्धये ॥

हले वा शकटे चैव वाहयेद्यो गवां स्वयं ।
प्राजापत्यद्वयं कुर्य्याद्द्विगुणं योषितां गवां ॥
वृषभं तु समुत्सृज्य कपिलां वापि कामतः ।
योजयित्वा हले कुर्य्यात् व्रतं चान्द्रायणद्वयं" ॥

तथा,—

"दोहने वाहने चैव योजने शकटे तथा ।
स्तम्भशृङ्खलपाशैश्च मृते पादोनमाचरेत् ॥
हले च शकटे चैव दुर्बलं योऽभियोजयेत् ।
प्राणत्यागे समुत्पन्ने तत प्राप्नोति गोवधम्" ॥

मुष्कमोषकरो वीजनाशकरः । याज्ञवल्क्योक्तदण्डविधौ मृत्युलिङ्गच्छेदयोस्तुल्यत्वाभिधानात् प्रायश्चित्तेऽपि तथेति स्वरसः, गोवधं गोवधोक्तप्रायश्चित्तं ।

तथा,—

"प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन् ।
गवाशिनेषु विक्रीतस्ततः प्राप्नोति गोर्वधम् ॥
वेश्मद्वारे निवासेषु यो नरः खातमिच्छति ।
स्वकार्य्यगृहखातेषु प्रायश्चित्तं विनिर्द्दिशेत्" ॥

प्रायश्चित्तं गोवधप्रायश्चित्तं यथापापं यथाशक्ति च विदध्यादित्यर्थः ।

तथा,—

"गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः ।
न वारयन्ति तां तेषां सर्वेषां पातकं भवेत्" ॥

पातकं गोवधजन्यपातकमित्यर्थ इति । गोभिलापस्तम्बपराशरादयः ।

कृच्छ्रव्रतमपि विशेषयति वृहस्पतिः,—

"शस्त्रादिना तु हत्वा गां मानवं कृच्छ्रमाचरेत् ।
रोधादिना चाङ्गिरसमापस्तम्बोक्तमेव वा ।

पादस्वरेद्रोधवधे कृच्छ्रार्द्धं बन्धघातने ।
अतिवाहे च पादोनं कृच्छ्रमज्ञानताड़ने" ॥

घातन इति दण्डादिनेत्यर्थः ।

कामकृते रोधादिना गोवधे आङ्गीरसमापस्तम्बीयं वा प्रायश्चित्तमिति-लक्ष्मीधरः ।

तथाऽस्थ्यादिभङ्गे मरणाभावेऽपि क्वचित् प्रायश्चित्तमुक्तमापस्तम्बेन,—

"अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा ।
पाटनं दन्तशृङ्गाणां मासार्द्धं तु यवान् पिवेदिति" ॥

यत्त्वाङ्गीरसं,—

"शृङ्गदन्तास्थिभङ्गे वा चर्मनिर्मोचनेऽपि वा ।
दशरात्रं पिवेद्यच्चं स्वस्थाऽपि यदि गौर्भवेत्" ॥

वज्रशब्दवाच्यं चीरादिवर्त्तनमुक्तं तदशक्तविषयं । इदञ्च प्रायश्चित्तं-गोस्वामिने व्यापन्नगोसदृशीं गां दत्त्वैव कार्य्यं ।

यथाह पराशरः,—

"प्रमापणे प्राणभृतां दद्यात्तत् प्रतिरूपकं ।
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीद्यमः" ॥ इति ।

मनुरपि,—

"यो यस्य हिंस्यात् द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समममिति" ॥

तथा पालनाकरणादिनोपेक्षायां क्वचित् प्रायश्चित्तविशेषो व्यासेनोक्तः ।

"जलौघपल्वले मग्ना मेघविद्युद्धताऽपि वा ।
श्वभ्रे वा पतिताऽकस्माच्छ्वापदेनाऽपि भक्षिता ॥
प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमं ।

शीतवातहता वा स्यादुदकाग्निहताऽपि वा।
शून्यागार उपेक्षायां प्राजापत्यं विनिर्दिशेत्" ॥ इति।

इदं तु कार्य्यान्तरविरहेऽप्युपेक्षायां वेदितव्यं। कार्य्यान्तरव्यापृतयोपेक्षायां त्वर्द्धं।

"पल्वलौघ-मृगव्याघ्र-श्वापदादिनिपातने।
श्वभ्रप्रपातसर्पाद्यैर्मृते कृच्छ्रार्द्धमाचरेत्।
अपालत्वात्तु कृच्छ्रं स्याच्छून्यागार उपप्लवे" ॥

इति विष्णुस्मरणात्। तथा स्त्रीवृद्धबालकादीनां त्वर्द्धं। अनुपनीतस्य-बालस्य पाद इति च मिताक्षरायां। स्त्रीणां पराशरेण विशेषोऽभिहितः।

"वपनं नैव नारीणां नानुव्रज्या जपादिकं।
न गोष्ठे शयनं तासां नो वसीरन् गवाजिनं ॥
सर्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुलिद्वयं।
सर्वत्रैव हि नारीणां शिरसो मुण्डनं स्मृतं" ॥ इति।

पुरुषेषु च विशेषः सम्वर्त्तेन दर्शितः,—

"पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च।
त्रिपादे तु शिखावर्ज्जं सशिखं तु निपातने" ॥ इति।

पादप्रायश्चित्तार्हस्य कण्ठादधस्तनाङ्गरोम्णामेव वपनं। "अर्द्धप्रायश्चित्तार्हस्य तु श्मश्रूणामपि। पादोनप्रायश्चित्तार्हस्य पुनः शिरोगतानामपि शिखावर्ज्जितानां। पादचतुष्टयार्हस्य तु सशिखस्य सकलकेशजातस्येति। एवमेतद्दिगवलम्बनेनान्येषामपि स्मृतिवचसां विषयो निरूपणीयः"।

तथा केशरक्षणे तु पराशरः,—

"केशानां रक्षणार्थाय द्विगुणं गोव्रतं चरेत्।
द्विगुणे व्रत आदिष्टे दक्षिणा द्विगुणा भवेत् ॥

राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
अकृत्वा वपनं तस्य प्रायश्चित्तं विनिर्द्दिशेत् ॥
यस्य न द्विगुणं दानं केशश्च परिरक्षितः ।
तत्पापं तस्य तिष्ठेत वक्ता च नरकं व्रजेत्" ॥ इति—

गोवधप्रायश्चित्तविवेचनं निबन्धग्रन्थद्वये ।

तथा सत्यपि व्यापादने क्वचिदुपकारार्थप्रवृत्तौ वचनाद्दोषाभावः । यथा—तत्र पराशरः,—

"धुर्य्येषु वहमानेषु दण्डेनाभिहतेषु च ।
काष्ठेन लोष्ट्रकेनापि पाषाणेन तु ताड़ितः" ॥

लेष्टुना वापीति पाठान्तरं ।

"मूर्च्छितः पतितश्चापि मृतो वा सद्य एव वा ।
एवं गतानां धुर्य्याणां प्रवक्ष्यामि यथाविधि ॥
उत्थितस्तु पदं गच्छेत् पञ्च सप्त दशापिवा ।
ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयं ।
पूर्व्वव्याधिविनष्टानां प्रायश्चित्तं न विद्यते" ॥

यदि व्याधिप्रयुक्तानां वृषाणां हलयोजनमात्रेण स्वल्पतरदण्डाभिघातेन वा मूर्च्छया पतनं भवति अनन्तरं गमनग्रासादौ कृते मरणं भवति तदा-गतागमग्रासग्रहणतोयपानैस्तदानीन्तनमरणे हेतुभावं विनिश्चित्य पूर्व्वव्याधि-विनष्टत्वं ज्ञायते, इति प्रायश्चित्ताभावः ।

तथाच सम्वर्त्तः,—

"निशि बन्धनरोधेषु व्याघ्रसर्पहतेषु च ।
अग्निविद्युन्निपातेषु प्रायश्चित्तं न विद्यते ॥
यन्त्रणे गोचिकित्सार्थं मूढ़गर्भविमोचने ।
यत्ने कृते विपत्तिः स्यान्नस पापेन लिप्यते" ॥

यच्चर्च व्याघ्रादिनिर्घातनार्थं संदंशाङ्कुशादिप्रवेशनं। मूढगर्भः चलन्मृत-गर्भः, मुहुर्वैचित्त्ये इत्यनेन तथार्थदर्शनात्।

तथा—

"औषधं स्नेहमाहारं ददद्गोब्राह्मणे द्विजः।
दीयमाने विपत्तिश्चेन्न स पापेन लिप्यते॥
ग्रामघाते शरौघेण वेश्मभङ्गान्निपातने।
दाहच्छेदशिरोभेदप्रयोगैरुपकुर्वतां।
द्विजानां गोहितार्थं च प्रायश्चित्तं न विद्यते"॥

द्विजानां गवां च हितार्थं।

अत्र पराशरोऽप्याह,—

"अतिवृष्टिहतानाञ्च प्रायश्चित्तं न विद्यते।
कूपखाते च धर्मार्थं गृहदाहे खलेषु च॥
ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते"।

इदन्तु बन्धनरहितस्यैव पशोः कथञ्चित् गृहादिदाहेन मृतविषयं। इतरथापस्तम्बेनोक्तं।

"कान्तारेष्वथ दुर्गेषु गृहदाहे खलेषु च।
यदि तत्र विपत्तिः स्यात् पाद एको विधीयते"॥ इति।

तथैवं,—

"गोपालको गवां गोष्ठे धूमं यस्तु न कारयेत्।
मक्षिकालीननरके मक्षिकाभिः स भक्ष्यते"॥

इति देवीपुराणानुसारादग्निं प्रज्वाल्य तत्रैव स्थितस्य दैवात्तदग्निना-मरणे दोषाभावः। तत्रास्थितस्य तु अपालननिमित्तगोवधजन्यदोषः। चिकित्सायामत्र पापाभावो यथावदुपचारो बोध्यः। न पुनः सन्निपाताभि-भूतस्योदकपानादिना। अतएव मनुः,—

"चिकित्सायां च सर्व्वेषां मिथ्या प्रचरतां दमः"।

काश्यपोऽपि प्रायश्चित्तमाह। "दोग्ध्रीदमनादिदोषाद्यापादादाम-घण्टाभरणयोजनात्। तैलपानौषधविनियोगाद्व्यापन्नानां प्रायश्चित्तं, ब्राह्मणेभ्यो-विनिवेद्य सशिखवपनं कृत्वा प्राजापत्यकृच्छ्रमाचरेत्। चीर्णान्ते गां दक्षिणां-ब्राह्मणाय दद्यात्, धेनुं तिलधेनुं वेति। अत्र गोधेनुतिलधेनुदानानां शक्त्य-पेक्षाविकल्पः"।

तिलधेनुमाह रत्नपुराणे ब्रह्मपुराणं,—.

"तिलधेनुं प्रवक्ष्यामि सर्व्वपापप्रणाशिनीं।
यां दत्त्वा पापकर्म्माऽपि मुच्यते नरकान्नरः॥
चतुर्भिः सेतिकाभिश्च प्रस्थ-एकः प्रकीर्त्तितः।
ते षोड़श भवेद्धेनुश्चतुर्भिर्वत्सको भवेत्॥
इक्षुदण्डमयाः पादा दन्ताः पुष्पमयास्तथा।
नासा गन्धमयी तस्या जिह्वा गुड़मयी तथा॥
पृष्ठे ताम्रमयी सा स्याद्घण्टाभरणभूषिता।
इक्षुशृङ्गौं कल्पयित्वा च स्वर्णशृङ्गौ प्रकल्पयेत्॥
कांस्योपदोहां रौप्यखुरां पूर्वधेनुविधानतः।
तिलधेनुं ततो दत्त्वा द्वादश्यां नियतः शुचिः।
आत्मानं तारयेद्दुर्गान्नरकात् कामभाग्-भवेत्"॥

सेतिकाः कुड़वः। स च द्वादशप्रसृतिपरिमितः। चतुर्भिरिति प्रस्थैरिति-शेषः। कांस्योपदोहां कांस्यक्रोड़ां। एतच्च गोः शक्तिमनपेक्ष्यैव दमनादितो-मरणे बोध्यं। यत्तु व्यासेन,—

"घण्टाभरणदोषेण विपत्तिर्यदि गोर्भवेत्।
कृच्छ्रार्द्धमाचरेत्तत्र भूषणार्थं हि तत्कृतं॥
विरेकवमनाभ्यां च संघाते योजने तथा।
लतासङ्कुखपाशेन मृते पादोनमाचरेत्"॥

वृत्युक्तं। तेन्तृगोरक्षणप्रवेशेन लतादिवन्धनपङ्कादिदोषमरणे ज्ञेयं।
पुनर्व्यासः,—

"औषधे तु न दोषोऽस्ति स्वेच्छया पिबते यदि।
अन्यथा दीयमाने तु प्रायश्चित्तं न संशयः" ॥

अन्यथा प्रायश्चित्तं विनाऽतिरिक्तौषधे। तेनानिच्छया स्वल्पदाने दोषाभावास्तथा व्यवहारः। तथा भवदेवभट्टहरिनाथोपाध्यायधृतं सम्वर्त्तवचनं,—

"शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च।
यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते"।

अत्र षण्मासोत्तरमरणे तद्दोषोपशमनाय प्रायश्चित्तं नास्ति, तदभ्यन्तरमरणे-वधप्रायश्चित्तं भवति। एवञ्च शृङ्गभङ्गादिनिमित्तकपापे पृथक् प्रायश्चित्तं न-कर्त्तव्यं। वधप्रायश्चित्तेनैव गुरुणा प्रसङ्गात्तदपगमसिद्धेः। षण्मासोत्तरं तु शृङ्ग-भङ्गादिनिमित्तपूर्व्वोक्तं मासार्द्धयवपानं प्राजापत्यं वा कर्त्तव्यमिति।

तथा सम्वर्त्तः,—

"देवद्रोण्यां विहारे च कूपेष्वायतनेषु च।
एषु गोषु विपन्नासु प्रायश्चित्तं न विद्यते" ॥

देवद्रोणी स्वयम्भुलिङ्गाद्यवस्थानगह्वरं। विहारो गोमैथुनं, आयतनं-सीमानिबन्धस्थानं। अत्र कूपायतनकर्त्तुरेव प्रायश्चित्ताभावो न तु गोस्वामिनः। सर्व्वत्रैवापालने तस्य दोषश्रुतेः।

तथा गोभिलः,—

"विक्रयेद्गां विनिमयेद्धत्त्वा गोमांसखादके।
व्रतं चान्द्रायणं कुर्य्याद्वधे साक्षाद्वधी भवेत्" ॥

तथा क्षुद्रपशूनां दुःखादीनुपक्रम्य,—

"लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः" ॥

मध्यमो मध्यमसाहसो दण्डः। स तु चत्वारिंशदधिकपञ्चशतपणकात्मकत्वेनैवोक्तः। यथा,—

"साशीतिपणसाहस्रो दण्ड-उत्तमसाहसः।

तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धं मध्यमः स्मृतः" ॥

मूल्यमिति पशुस्वामिने च मूल्यं। महापशूनां गवाश्वादीनां, एतेषु-पूर्ववचनैतद्वचनोक्तेषु। गोमांसखादके यवनादौ। अत्र गवामपण्यत्वेन उपपातकत्वादपि चान्द्रायणं युक्तं।

तथाच गौतमः,—"पशवश्च हिंसासंयोग" इति।

अस्यार्थः—यत्र विक्रीताः सन्तः पशवो हिंस्यन्ते तत्र तेषामपण्यत्वमिति-प्रायश्चित्तविवेके। अपण्यानाञ्च विक्रयं मनुनोपपातकगणे पठितं।

विष्णुनाच,—

"उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः"।

इत्यनेन चान्द्रायणं विहितं। तत्र पापस्य लघुचान्द्रायणपदं शिशुचान्द्रायणपरं। तत्पादोनधेनुचतुष्टयेन सङ्कलितं प्रायश्चित्तविवेकेन। इति।

एतद्विषय एव,—

"चान्द्रायणमकुर्व्वाणाः कुर्य्युः कृच्छ्रचतुष्टयं"।

इति समूलकत्वे बोध्यं। बधे त्वज्ञानबधोक्तं सार्द्धधेन्वष्टकं। एतदपि-गुरुत्वात् ब्राह्मणस्वामिकविषयं। तेनान्यत्र गोमांसखादकसम्बन्धिविक्रयादि-मात्रे त्वज्ञानकृतं तत्तत्स्वामिकवधप्रायश्चित्तार्द्धं बधे सम्पूर्णमिति।

रहःकृत्येषु प्रकीर्णोपपातकानुपातकमहापातकेषु गायत्र्याः शतसहस्रा-युतलक्षजपः। तथाच मिताक्षरायां,—गायत्रीमधिकृत्य शङ्खेनोक्तं,—

"शतं जप्ता तु सा देवी सर्व्वपापप्रणाशिनी।

सहस्रं जप्ता च तथा पातकेभ्यः प्रमोचिनी।

दशसाहस्रजापेन सर्व्वकल्मषनाशिनी" ॥

इति गोवधप्रायश्चित्तविवेचनं समाप्तम्।

---

प्रदर्श्यतेऽत्र व्यवस्था प्रायेण निरुक्तप्रमाणानुगता।

यथा,—

ब्राह्मण-क्षत्रिय-वैश्यकर्त्तृकज्ञानकृत-ब्राह्मण-स्वामिकगवीवधः। प्रायश्चित्तानि, त्रैमासिकव्रतं। तद्यथा—कृतशिखवपनो व्यापादितायाः गोश्चर्मणाकृत-परिधानोत्तरावगुण्ठनो मासमेकं गोमूत्रेण यवागूकृतान् यवान् पिबन् गोष्ठे वसेत्। तिष्ठन्तीषु गोष्वनुतिष्ठेत् व्रजन्तीषु तास्वनुव्रजेत्। आसीनासु तास्वासीनः। वीतमत्सरः। आतुरामभिशस्तां पतितां पङ्कलग्नां भयनिमित्तचौर-व्याघ्रादिभिराक्रान्ताञ्च गां सर्व्वशक्तिभिर्विमोचयेत्। शीतवर्षाशनिषु मारुते भृशं वाति वा गोस्त्राणमकृत्वा आत्मत्राणं न कुर्य्यात्। आत्मनोऽन्येषां वा गृह-क्षेत्रखलेषु भक्षयन्तीं पिबन्तं वत्सञ्च निवारणाभिप्रायेण न कथयेत्। एतद्विधा-नेन यो गामनुगच्छति स गोहत्याकृतपापात् प्रमुच्यते। एकं वृषं दश गाश्च दक्षिणां दद्यात्। एतदशक्तौ वेदविद्भ्यः सर्व्वस्वं दद्यात्।

एतच्चतुर्थ्यायाद्यादिविषयं। स्त्रीशूद्रबालवृद्धानामर्द्धं।

एतदशक्तौ धेनुदानं,—द्वादशधेनवो भवदेवभट्टसम्मताः।

सप्तदशधेनवो बहुसम्मताः। तदशक्तौ वराटकदानं,—षट्त्रिंशत्कार्षा-पणात्मकं। तन्मध्यस्वर्णादिकं, वा सप्तदशधेनुस्थले एकपञ्चाशत्कार्षापणाः। दक्षिणा एकवृषः। दश गावः। अशक्तौ पञ्चदशकार्षापणाः। सप्तदश-धेनुस्थलेऽपि तथा।

ब्राह्मणक्षत्रियवैश्यकर्त्तृकब्राह्मणस्वामिकाज्ञानकृतगवीवधः।

प्रायश्चित्तानि सार्द्धमासिकव्रतं। तद्यथा गोष्ठे गोसमीपे गोघ्नः स्थितिं कुर्य्यात्। नखरोमविवर्ज्जितस्त्रिषवनस्नानं चरेत्। जितेन्द्रियो वीतमत्सरश्च भवेत्। यथाशक्ति गायत्रीञ्च जपेत्। सार्द्धमासे पूर्णे सति विप्रान् भोजयेत्। गां तन्मूल्यं वा दक्षिणां दद्यात्। अनेन विधानेन गोघ्नः पापान्मुच्यते। एतद्व्रतं गोस्वामिने तत्प्रतिरूपं गवान्तरं यथोक्तमूल्यं वा दत्त्वा कर्त्तव्यं। स्त्रीशूद्रबालवृद्धानामर्द्धं प्रायश्चित्तं। तदशक्तौ धेनुदानं षड्धेनवो भवदेवभट्ट-सम्मताः। नवधेनवो बहुसम्मताः। तदशक्तौ वराटकदानं—अष्टकार्षापणात्मकं। तन्मध्यस्वर्णादिकं वा। सार्द्धपञ्चविंशतिकार्षापणाः बहुसम्मताः; सार्द्धाष्ट-

धेनुसंकलमात् । दक्षिणा एका गौः । अशक्तौ एककार्षापणः । आर्त्तमते-सार्द्धसप्तकार्षापणाः । ज्ञानकृतशूद्रकर्त्तृकब्राह्मणस्वामिकगवीवधः । प्रायश्चित्तानि—त्रैमासिकव्रतार्द्धं । अज्ञानतस्तदर्द्धं । तदशक्तौ धेनुदानं षड्धेनवो-भवदेवभट्टसम्मताः । नवधेनवो बहुसम्मताः । तदशक्तौ वराटकदानं—अष्टा-दशकार्षापणात्मकं । सार्द्धपञ्चविंशतिकार्षापणाः बहुसम्मताः । तन्मूल्य-स्वर्णादि वा—दक्षिणा एका गौः, अशक्तौ एककार्षापणः ।

अज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्त्तृकक्षत्रियस्वामिकगवीवधः ।

प्रायश्चित्तानि,—

षाण्मासिकव्रतं । तद्यथा षण्मासान् तच्चर्म्मणा परिवृतो गोग्रासाहारी-गोव्रतो यवाशी गोभिरेव सञ्चरन् तत्पापाद्विमुच्यते । तदशक्तौ धेनुदानं—द्वादशधेनवः । तदशक्तौ वराटकदानं षट्त्रिंशत्कार्षापणाः । तन्मूल्यस्वर्णादि-वा दक्षिणा तु यथाशक्त्यनुष्ठेया ।

ब्राह्मणक्षत्रियवैश्यकर्त्तृकज्ञानकृतक्षत्रियस्वामिकगवीवधः । प्रायश्चित्तानि,—षाण्मासिकव्रतार्द्धं । तदशक्तौ धेनुदानं षड्धेनुसंख्याकं । तदशक्तौ वराटक-दानं अष्टादशकार्षापणयथसंख्याकं तन्मूल्यस्वर्णादि वा । दक्षिणा यथा—शक्त्यनुष्ठेया । शूद्रकर्त्तृकज्ञानकृतक्षत्रियस्वामिकगवीवधः । प्रायश्चित्तानि,-षाण्मासिकव्रतार्द्धं । तदशक्तौ धेनुदानं । षड्धेन्वात्मकं । तदशक्तौ वराटक-दानं अष्टादशकार्षापणसंख्याकं । तन्मूल्यस्वर्णादि वा । दक्षिणा यथाशक्त्यनुष्ठेया ।

तत्कर्त्तृकाज्ञानकृततत्स्वामिकगवीवधः । प्रायश्चित्तानि—एतद्व्रतार्द्धं । स्त्रीशूद्रबालवृद्धानां सर्व्वत्रार्द्धं । तदशक्तौ धेनुदानं—त्रिधेन्वात्मकं । तदशक्तौ-वराटकदानं नवकार्षापणसंख्याकं । तन्मूल्यस्वर्णादि वा दक्षिणा यथा-शक्त्यनुष्ठेया ॥

ब्राह्मणक्षत्रियवैश्यकर्त्तृकज्ञानकृतवैश्यस्वामिकगवीवधः । प्रायश्चित्तानि,—द्विगुणं मासव्रतं । मासव्रतं यथा, मासैकं पञ्चगव्यपानं । गोष्ठे वासः, गवानु-गमनं, गोमतीजपः । तदशक्तौ धेनुदानं दशधेन्वात्मकं । तदशक्तौ वराटक-दानं त्रिंशत्कार्षापणसंख्याकं । तन्मूल्यस्वर्णादि वा दक्षिणा यथाशक्त्यनुष्ठेया ।

तत्कर्त्तृकाज्ञानकृततत्स्वामिकगवीवधः । प्रायश्चित्तानि । एतदर्द्धं ।

तदशक्तौ धेनुदानं पञ्चधेन्वात्मकं। तदशक्तौ वराटकदानं पञ्चदशकार्षापण-संख्याकं। तन्मूल्यस्वर्णादि वा। दक्षिणा तु यथाशक्त्यनुष्ठेया।

ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतशूद्रस्वामिकगवीवधः। प्रायश्चित्तानि-चतुःप्राजापत्यात्मकानि। तदशक्तौ धेनुदानं चतुर्धेनुसंख्याकं। तदशक्तौ-वराटकदानं द्वादशकार्षापणात्मकं तन्मूल्यस्वर्णादि वा। दक्षिणा तु यथाशक्त्य-नुष्ठेया।

ब्राह्मणक्षत्रियवैश्यकर्तृकाज्ञानकृतशूद्रस्वामिकगवीवधः। प्रायश्चित्तानि,—द्विप्राजापत्यात्मकानि, स्त्रीशूद्रबालवृद्धानां सर्व्वत्राद्धं। एकस्य स्त्रीत्व-शूद्रत्वाद्युभयधर्म्मवत्त्वे प्रायश्चित्तपादः। तदशक्तौ धेनुदानं धेनुद्वयसंख्यकं। तदशक्तौ वराटकदानं षट्कार्षापणात्मकं। तन्मूल्यस्वर्णादि वा। दक्षिणा तु यथाशक्त्यनुष्ठेया।

ब्राह्मण-स्वामिक-गर्भिणी-कपिला दोग्ध्री-होमधेनुसुव्रतानां गवां ब्राह्मण-क्षत्रियवैश्यकर्तृकज्ञानकृतवधः। प्रायश्चित्तानि द्विगुणं त्रैमासिकव्रतं। अज्ञानत-स्तदर्द्धं। तदशक्तौ धेनुदानं चतुर्विंशतिधेनुसंख्यकमिति भवदेवभट्टमतं। चतु-स्त्रिंशद्धेनवो बहुसम्मताः। तदशक्तौ वराटकदानं द्विसप्ततिकार्षापणात्मकं। द्वाधिकशतकार्षापणाः बहुसम्मताः। दक्षिणा तु वृषभद्वयं विंशतिगावश्च। अशक्तौ तु त्रिंशत्कार्षापणात्मिका सा।

ब्राह्मण-स्वामिक गर्भिणी-कपिला दोग्ध्री होमधेनुसुव्रतानां गवां शूद्र-कर्तृकज्ञानकृतवधः। प्रायश्चित्तानि त्रैमासिकव्रतं। अज्ञानतस्तदर्द्धं। तदशक्तौ-धेनुदानं द्वादशधेनुसंख्यकं। सप्तदशधेनवो बहुसम्मताः। तदशक्तौ वराटक-दानं षट्त्रिंशत्कार्षापणात्मकं। एकपञ्चाशत्-कार्षापणा बहुसम्मताः। दक्षिणा त्वेको वृषो दशगावश्च। अशक्तौ पञ्चदशकार्षापणाः।

क्षत्रिय-स्वामिक गर्भिणी-कपिलादोग्ध्री होमधेनुसुव्रतानां गवां ब्राह्मण-क्षत्रियवैश्यकर्तृकज्ञानकृतवधः। प्रायश्चित्तानि द्विगुणं पाण्मासिकव्रतं। अज्ञानतस्तदर्द्धं। तदशक्तौ धेनुदानं चतुर्विंशतिधेनुसंख्यकं। तदशक्तौ वराटक-दानं द्विसप्ततिकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

क्षत्रिय-स्वामिक-गर्भिणी-कपिलादोग्ध्री-होमधेनुसुव्रतानां गवां शूद्र-

कर्त्तृकज्ञानकृतवधः। प्रायश्चित्तानि षाण्मासिकव्रतं। अज्ञानतस्तदर्द्धं। तदशक्तौ धेनुदानं द्वादशधेनुसंख्याकं। तदशक्तौ वराटकदानं षट्त्रिंशत्कार्षापणात्मकं। दक्षिणा तु विधेया यथाशक्ति।

वैश्य-स्वामिक गर्भिणी-कपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां ब्राह्मण-क्षत्रिय-वैश्यकर्त्तृकज्ञानकृतवधः। प्रायश्चित्तानि चतुर्गुणं मासिकव्रतं। अज्ञानतस्तदर्द्धं। तदशक्तौ धेनुदानं विंशतिधेनुसंख्यकं। तदशक्तौ वराटकदानं षष्टि-कार्षापणात्मकं। दक्षिणा तु विधेया यथाशक्ति।

वैश्य स्वामिक-गर्भिणी कपिलादोग्ध्री-होमसुधेनुसुव्रतानां गवां शूद्रकर्त्तृक-ज्ञानकृतवधः। प्रायश्चित्तानि द्विगुणं मासिकव्रतं। अज्ञानतस्तदर्द्धं। तदशक्तौ-धेनुदानं दशधेनुसंख्यकं। तदशक्तौ वराटकदानं त्रिंशत्कार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

शूद्र स्वामिकगर्भिणी-कपिलादोग्ध्री-होमधेनु-सुव्रतानां गवां ब्राह्मण-क्षत्रिय-वैश्य-कर्त्तृकज्ञानकृतवधः। प्रायश्चित्तानि अष्टप्राजापत्यानि। अज्ञानतस्तदर्द्धं। तदशक्तौ धेनुदानं अष्टधेनुसंख्यकं। तदशक्तौ वराटकदानं चतुर्विं-शति कार्षापणात्मकं। दक्षिणा तु विधेया यथाशक्ति।

शूद्र-स्वामिक-गर्भिणी-कपिलादोग्ध्री होमधेनुसुव्रतानां गवां शूद्रकर्त्तृक-ज्ञानकृतवधः। प्रायश्चित्तानि चतुःप्राजापत्यानि। अज्ञानतस्तदर्द्धं। तदशक्तौ-धेनुदानं चतुर्धेनुसंख्यकं। तदशक्तौ वराटकदानं द्वादशकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

• ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्त्तृकाधमशूद्रस्वामिकगवीवधः। प्रायश्चित्तानि-प्राजापत्यद्वयं। अज्ञानतस्तदर्द्धं। तदशक्तौ धेनुदानं धेनुद्वयात्मकं। तदशक्तौ-वराटकदानं षट्कार्षापणसंख्याकं। दक्षिणा तु यथाशक्त्यनुष्ठेया।

ज्ञानकृतशूद्रकर्त्तृकाधमशूद्रस्वामिकगवीवधः। प्रायश्चित्तानि प्राजापत्य-मेकं। अज्ञानतस्तदर्द्धं। तदशक्तौ धेनुदानं एकधेन्वात्मकं। तदशक्तौ-वराटकदानं त्रिकार्षापणात्मकं। दक्षिणा तु शक्त्यनुरूपा।

अधमशूद्र स्वामिक-गर्भिणीकपिलादोग्ध्री-होमधेनुसुव्रतानां गवां ब्राह्मण क्षत्रियवैश्यकर्त्तृकज्ञानकृतवधः। प्रायश्चित्तानि चतुःप्राजापत्यानि। अज्ञानत-

स्तदर्द्धं। तदशक्तौ धेनुदानं चतुःसंख्यकधेन्वात्मकं। तदशक्तौ वराटकदानं-द्वादशकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

अधमशूद्र-स्वामिक-गर्भिणी-कपिलादोग्ध्री-होमधेनुसुव्रतानां गवां शूद्र-कर्त्तृकज्ञानकृतवधः। प्रायश्चित्तानि प्राजापत्यद्वयं, अज्ञानतस्तदर्द्धं। तदशक्तौ-धेनुदानं धेनुद्वयात्मकं। तदशक्तौ वराटकदानं षट्कार्षापणात्मकं। दक्षिणा-तु विधेया यथाशक्ति।

ब्राह्मण-स्वामिकाया-गोरुत्पन्नमात्रगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्त्तृकज्ञान-कृतवधः। प्रायश्चित्तानि त्रैमासिकव्रतपादः। अज्ञानतस्तदर्द्धं। तदशक्तौ-धेनुदानं पञ्चधेनुसंख्यकं। तदशक्तौ वराटकदानं सपादद्वादशकार्षापणात्मकं, सपादधेनुचतुष्टयसंकलनात्। दक्षिणा तु सपादत्रिकार्षापणात्मिका।

ब्राह्मण-स्वामिकाया-गोर्गात्रसम्भितगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्त्तृकज्ञान-कृतवधः। प्रायश्चित्तानि त्रैमासिकव्रतपादद्वयं। अज्ञानतस्तदर्द्धं। स्त्री-शूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं नवधेनुसंख्याकं। तदशक्तौ वराटक-दानं सार्द्धपञ्चविंशतिकार्षापणात्मकं सार्द्धाष्टधेनुसंकलनात्। दक्षिणा तु-सार्द्धसप्तकार्षापणात्मिका।

ब्राह्मण-स्वामिकाया-गोर्निष्पन्नसकलगात्रचैतन्यरहितगर्भस्य ब्राह्मणक्षत्रिय-वैश्यकर्त्तृकज्ञानकृतवधः। प्रायश्चित्तानि त्रैमासिकव्रतपादत्रयं। अज्ञानत-स्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। चैतन्ययुक्तगर्भवधे कृत्स्नमेव प्रायश्चित्तं। तदशक्तौ धेनुदानं त्रयोदशधेनुसंख्यकं। तदशक्तौ वराटकदानं पादोनाष्ट-त्रिंशत्कार्षापणात्मकं पादोनत्रयोदशधेनुसङ्कलनात्। दक्षिणा तु सपादै-कादशकार्षापणात्मिका।

क्षत्रियस्वामिकाया गोर्गात्रसम्भितगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्त्तृकज्ञान-कृतवधः। प्रायश्चित्तानि षाण्मासिकव्रतपादद्वयं। अज्ञानत-स्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं षड्धेनुसंख्याकं। तदशक्तौ-वराटकदानं अष्टादशकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

क्षत्रियस्वामिकाया-गोर्निष्पन्नसकलगात्रचैतन्यरहितगर्भस्य ब्राह्मणक्षत्रिय-वैश्यकर्त्तृकज्ञानकृतवधः। प्रायश्चित्तानि षाण्मासिकव्रतपादत्रयं। अज्ञान-

तस्तदर्द्धं। स्त्रीशूद्रवालवृद्धानामर्द्धं। चैतन्ययुक्तगर्भवधे ज्ञात्वैव प्रायश्चित्तं। तदशक्तौ धेनुदानं नवधेनुसंख्याकं। तदशक्तौ वराटकदानं सप्तविंशतिकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

वैश्यस्वामिकाया गोरुत्पन्नमात्रगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकाज्ञानकृतवधः। प्रायश्चित्तानि द्विगुणमासव्रतस्य पादः। अज्ञानतस्तदर्द्धं तदशक्तौ-धेनुदानं त्रिधेन्वात्मकं। तदशक्तौ वराटकदानं सार्द्धसप्तकार्षापणात्मकं, सार्द्धद्वयधेनुसङ्कलनात्। दक्षिणा तु यथाशक्ति विधेया।

वैश्यस्वामिकाया गोर्गोसम्मितगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकाज्ञानकृतवधः। प्रायश्चित्तानि—द्विगुणमासव्रतस्य पादद्वयं। अज्ञानतस्तदर्द्धं। स्त्री-शूद्रवालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं पञ्चधेनुसंख्याकं। तदशक्तौ वराटक-दानं—पञ्चदशकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

वैश्यस्वामिकाया-गोर्निष्पन्नसकलगात्रचैतन्यरहितगर्भस्य ब्राह्मणक्षत्रिय-वैश्यकर्तृकाज्ञानकृतवधः। प्रायश्चित्तानि द्विगुणमासव्रतस्य पादत्रयं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रवालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं अष्टधेन्वात्मकं। तदशक्तौ वराटकदानं सार्द्धद्वाविंशतिकार्षापणात्मकं, सार्द्धसप्तधेनुसङ्कलनात्। दक्षिणा तु यथाशक्ति विधेया।

शूद्रस्वामिकाया गोरुत्पन्नगर्भस्य अर्थात् गर्भग्रहणदिनात्सावनमास-द्वयानतिक्रान्तगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकाज्ञानकृतवधः। प्रायश्चित्तानि—प्राजापत्यमेकं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रवालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं-एकधेन्वात्मकं। तदशक्तौ वराटकदानं—त्रिकार्षापणात्मकं। दक्षिणा तु-यथाशक्ति विधेया।

शूद्रस्वामिकाया-गोर्गोसम्मितगर्भस्य अर्थात् मासद्वयोपरि सावन मासद्वयानतिक्रान्तगात्रावयवोत्पन्नगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकाज्ञान-कृतवधः। प्रायश्चित्तानि प्राजापत्यद्वयं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रवाल-वृद्धानामर्द्धं। तदशक्तौ धेनुदानं धेनुद्वयात्मकं। तदशक्तौ वराटकदानं-षट्कार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

शूद्रस्वामिकाया-गोर्निष्पन्नसकलगात्रचैतन्यरहितगर्भस्य अर्थात् चतुर्थ-

मासोपरि सार्द्धमासद्वयानतिक्रान्तगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्त्तृकज्ञानकृत-वधः । प्रायश्चित्तानि प्राजापत्यत्रयं । अज्ञानतस्तदर्द्धं । स्त्रीशूद्रबालवृद्धानामर्द्धं । चैतन्ययुक्तगर्भवधे कृत्स्नमेव प्रायश्चित्तं । तदशक्तौ धेनुदानं धेनुत्रयात्मकं । तदशक्तौ वराटकदानं नवकार्षापणात्मकं । दक्षिणा तु यथाशक्ति विधेया ।

ब्राह्मणस्वामिकानामतिवृद्धातिकृशातिबालातिरोगिणीनां गवां ब्राह्मण-क्षत्रियवैश्यकर्त्तृकज्ञानकृतवधः । प्रायश्चित्तानि—त्रैमासिकव्रतार्द्धं । अज्ञान-तस्तदर्द्धं । स्त्रीशूद्रबालवृद्धानामर्द्धं, तदशक्तौ धेनुदानं नवधेन्वात्मकं । तदशक्तौ-वराटकदानं,—सार्द्धपञ्चविंशतिकार्षापणात्मकं, सार्द्धाष्टधेनुसङ्कलनात् । दक्षिणा तु सार्द्धसप्तकार्षापणात्मिका ।

क्षत्रियस्वामिकानामतिवृद्धातिकृशातिबालातिरोगिणीनां गवां ब्राह्मण क्षत्रियवैश्यकर्त्तृकज्ञानकृतवधः । प्रायश्चित्तानि षाण्मासिकव्रतार्द्धं । अज्ञान-तस्तदर्द्धं स्त्रीशूद्रबालवृद्धानामर्द्धं, तदशक्तौ धेनुदानं षड्धेन्वात्मकं । तदशक्तौ-वराटकदानं अष्टादशकार्षापणसंख्याकं । दक्षिणा तु यथाशक्ति विधेया ।

वैश्यस्वामिकानामतिवृद्धातिकृशातिबालातिरोगिणीनां गवां ब्राह्मण-क्षत्रियवैश्यकर्त्तृकज्ञानकृतवधः । प्रायश्चित्तानि एकमासव्रतं । अज्ञानतस्तदर्द्धं-स्त्रीशूद्रबालवृद्धानामर्द्धं, तदशक्तौ धेनुदानं पञ्चधेन्वात्मकं, तदशक्तौ वराटक-दानं पञ्चदशकार्षापणात्मकं । दक्षिणा तु यथाशक्ति प्रदेया ।

शूद्रस्वामिकानामतिवृद्धातिकृशातिबालातिरोगिणीनां गवां ब्राह्मणक्षत्रिय-वैश्यकर्त्तृकज्ञानकृतवधः । प्रायश्चित्तानि प्राजापत्यद्वयं, अज्ञानतस्तदर्द्धं । स्त्रीशूद्रबालवृद्धानामर्द्धं । तदशक्तौ धेनुदानं धेनुद्वयात्मकं, तदशक्तौ वराटक-दानं षट्कार्षापणात्मकं । दक्षिणा तु यथाशक्ति प्रदेया ।

ब्राह्मणस्वामिकानां बह्वीनां गवां ब्राह्मणक्षत्रियवैश्यकर्त्तृकप्रयत्ननिष्पन्न-ज्ञानकृतवधः । प्रायश्चित्तानि द्विगुणत्रैमासिकव्रतं । अज्ञानतस्तदर्द्धं, स्त्रीशूद्र-बालवृद्धानामर्द्धं । तदशक्तौ धेनुदानं चतुस्त्रिंशद्धेनुसंख्याकं । तदशक्तौ वराटक-दानं द्विसप्ततिकार्षापणात्मकं । दक्षिणा तु रूपकद्वयसहितविंशतिधेन्वात्मिका । तदशक्तौ त्रिंशत्कार्षापणाः ।

क्षत्रियस्वामिकानां बह्वीनां गवां ब्राह्मणक्षत्रियवैश्यकर्त्तृकैकप्रयत्ननिष्पन्न

ज्ञानकृतवध:। प्रायश्चित्तानि—द्विगुणप्राजापत्यमासिकव्रतं अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं, तदशक्तौ धेनुदानं चतुर्विंशतिधेन्वात्मकं, तदशक्तौ-वराटकदानं द्विसप्ततिकार्षापणात्मकं। दक्षिणा तु यथाशक्ति प्रदेया।

वैश्यस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्नज्ञानकृतवध:। प्रायश्चित्तानि चतुर्गुणमासव्रतं। अज्ञानतस्तदर्द्धं, स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं विंशतिधेनुसंख्याकं, तदशक्तौ वराटकदानं षष्टिकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

शूद्रस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्ननिष्पन्नज्ञानकृतवध:। प्रायश्चित्तानि अष्टप्राजापत्यानि। अज्ञानतस्तदर्द्धं, स्त्रीशूद्रबालवृद्धानामर्द्धं। स्त्रीत्वाद्युभयधर्म्मवत्त्वे पाद:। प्रयत्नभेदे प्रायश्चित्तावृत्ति:। तदशक्तौ धेनुदानं अष्टधेनुसंख्याकं। तदशक्तौ वराटकदानं—चतुर्विंशति कार्षापणात्मकं, दक्षिणा तु यथाशक्ति विधेया॥

ज्ञानकृतबहुकर्तृकब्राह्मणस्वामिकैकगवीवध:। प्रायश्चित्तानि प्रत्येकं-त्रैमासिकव्रतपाद:। अज्ञानतस्तदर्द्धं, तदशक्तौ धेनुदानं पञ्चधेनुसंख्यकं। तदशक्तौ वराटकदानं सपादद्वादशकार्षापणात्मकं सपादधेनुचतुष्टयसङ्कलनात्। दक्षिणा तु सपादत्रिकार्षापणात्मिका॥

ज्ञानकृतबहुकर्तृकक्षत्रियस्वामिकैकगवीवध:। प्रायश्चित्तानि प्रत्येकं-द्विगुणमासव्रतपाद:। अज्ञानतस्तदर्द्धं, तदशक्तौ धेनुदानं धेनुत्रयसंख्यकं। तदशक्तौ वराटकदानं, नवकार्षापणात्मकं, दक्षिणा तु यथाशक्ति विधेया।

ज्ञानकृतबहुकर्तृकवैश्यस्वामिकैकगवीवध:। प्रायश्चित्तानि प्रत्येकं द्विगुणमासव्रतपाद:। अज्ञानतस्तदर्द्धं, तदशक्तौ धेनुदानं धेनुत्रयसंख्याकं। तदशक्तौ-वराटकदानं सार्द्धसप्तकार्षापणात्मकं, सार्द्धधेनुद्वयसंकलनात्। दक्षिणा तु-यथाशक्ति विधेया।

ज्ञानकृतबहुकर्तृकशूद्रस्वामिकैकगवीवध:। प्रायश्चित्तानि प्रत्येकं प्राजापत्यं। अज्ञानतस्तदर्द्धं, तदशक्तौ धेनुदानं एकधेन्वात्मकं। तदशक्तौ वराटकदानं त्रिकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

द्वाभ्यामेकगवीवध:। प्रायश्चित्तानि, यत्-यत्-स्वामिकाया गोवधे यत्-

यत् प्रायश्चित्तमुक्तं प्रत्येकं सम्पूर्णं तत्तत् प्रायश्चित्तं। द्वाभ्यामेकप्रयत्ननिष्पन्न-बहुगवीबधः। प्रायश्चित्तानि यद्यत्स्वामिकाया गोर्वधे यत् यत् प्रायश्चित्तं-प्रत्येकं तत्तत् द्वैगुण्यं।

एकप्रयत्ननिष्पन्नबहुकर्त्तृकबहुगवीबधः। प्रायश्चित्तानि प्रत्येकं तत्तदुक्त-व्रतद्विपादप्रायश्चित्तावृत्तिः।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्त्तृकब्राह्मणस्वामिकैकहायनगवीबधः। प्राय-श्चित्तानि—त्रैमासिकव्रतपादः अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं पञ्चधेनुसंख्यकं। तदशक्तौ वराटकदानं—सपादद्वादश-कार्षापणात्मकं सपादधेनुचतुष्टयसङ्कलनात्। दक्षिणा तु सपादत्रिकार्षा-पणात्मिका।

ज्ञानकृतब्राह्मण-क्षत्रियवैश्य-कर्त्तृकब्राह्मणस्वामिकद्विहायनगवीबधः। प्राय-श्चित्तानि त्रैमासिकव्रतार्द्धं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ-धेनुदानं नवधेनुसंख्याकं। तदशक्तौ वराटकदानं सार्द्धपञ्चविंशतिकार्षा-पणात्मकं, सार्द्धाष्टधेनुसङ्कलनात्। दक्षिणा तु सार्द्धसप्तकार्षापणात्मिका।

ज्ञानकृतब्राह्मण-क्षत्रिय-वैश्य-कर्त्तृकब्राह्मणस्वामिकत्रिहायणगवीबधः। प्रायश्चित्तानि षाण्मासिकव्रतपादः। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धाना-मर्द्धं। तदशक्तौ धेनुदानं—त्रयोदशधेनुसंख्यकं। तदशक्तौ वराटकदानं,-सपादाष्टत्रिंशत्कार्षापणात्मकं, पादोनत्रयोदशधेनुसङ्कलनात्। दक्षिणा तु-सपादैकादशकार्षापणात्मिका।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्त्तृकक्षत्रियस्वामिकैकहायनगवीबधः। प्राय-श्चित्तानि षाण्मासिकव्रतपादः। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं धेनुत्रयसंख्यकं। तदशक्तौ वराटकदानं नवकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्त्तृकक्षत्रियस्वामिकद्विहायनगवीबधः। प्राय-श्चित्तानि षाण्मासिकव्रतपादद्वयं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं—षट्धेनुसंख्यकं। तदशक्तौ वराटकदानं अष्टादशकार्षा-पणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकक्षत्रियस्वामिकत्रिहायणगवीवधः। प्रायश्चित्तानि—पादन्यूनषाण्मासिकव्रतं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं नवधेनुसंख्यकं। तदशक्तौ वराटकदानं-सप्तविंशतिकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकवैश्यस्वामिकैकहायनगवीवधः। प्रायश्चित्तानि मासैकव्रतार्द्धं। अज्ञानतस्तदर्द्धं। तदशक्तौ धेनुदानं—धेनुत्रयसंख्याकं। तदशक्तौ वराटकदानं सार्द्धसप्तकार्षापणात्मकं, सार्द्धधेनुद्वयसंकलनात्। दक्षिणा तु यथाशक्ति विधेया।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकवैश्यस्वामिकद्विहायनगवीवधः। प्रायश्चित्तानि मासव्रतं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं-पञ्चधेनुसंख्यकं। तदशक्तौ वराटकदानं पञ्चकार्षापणात्मकं, दक्षिणा तु-यथाशक्ति विधेया।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकवैश्यस्वामिकत्रिहायणगवीवधः। प्रायश्चित्तानि पादोनं द्विगुणमासव्रतं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं अष्टधेनुसंख्यकं। तदशक्तौ वराटकदानं—सार्द्धद्वाविंशतिकार्षापणात्मकं, सार्द्धसप्तधेनुसङ्कलनात्। दक्षिणा तु यथाशक्ति विधेया।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकैकहायनगवीवधः। प्रायश्चित्तानि प्राजापत्यमेकं। अज्ञानतस्तदर्द्धं। तदशक्तौ धेनुदानं—एकधेनुसंख्यकं। तदशक्तौ वराटकदानं त्रिकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकद्विहायनगवीवधः। प्रायश्चित्तानि—प्राजापत्यद्वयं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ-धेनुदानं धेनुद्वयसंख्यकं। तदशक्तौ वराटकदानं षट्कार्षापणात्मकं। दक्षिणा-तु यथाशक्ति विधेया।

ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकत्रिहायणगवीवधः। प्रायश्चित्तानि प्राजापत्यत्रयं। अज्ञानतस्तदर्द्धं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ-धेनुदानं—धेनुत्रयसंख्यकं। तदशक्तौ वराटकदानं नवकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

स्त्रीणाया गोरस्त्रीणत्वभ्रमेणाहारप्रचारनिर्गमरोधनिमित्तवधः। प्रायश्चित्तानि प्राजापत्यपादः। तदशक्तौ धेनुदानं एकधेनुसंख्यकं। तदशक्तौ-वराटकदानं त्रिकार्षापणात्मकं धेनुपादसङ्कलनात्। दक्षिणा तु यथाशक्ति-विधेया।

स्त्रैण्यज्ञाने प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादः। इदं तु सर्व्व-स्वामिकायाः सर्व्ववयस्काया गोः सर्व्वकर्त्तृकवधे बोद्धव्यं। तदशक्तौ धेनुदानं-धेनुद्वयसंख्यकं। तदशक्तौ वराटकदानं पादार्द्धोनपञ्चकार्षापणात्मकं, पादा-र्द्धोनधेनुद्वयसङ्कलनात्। दक्षिणा तु यथाशक्ति विधेया।

स्त्रीणाया गोरस्त्रीणत्वभ्रमेणाकालबन्धनायथाबन्धननिमित्तवधः। प्राय-श्चित्तानि प्राजापत्यपादद्वयं। तदशक्तौ धेनुदानं एकधेनुसंख्यकं। तदशक्तौ-वराटकदानं सार्द्धैककार्षापणात्मकं, धेन्वर्द्धसङ्कलनात्। दक्षिणा तु यथाशक्ति-विधेया।

स्त्रैण्यज्ञाने तु प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादद्वयं। एतदपि-सर्व्वस्वामिकाया सर्व्ववयस्काया गोः सर्वकर्त्तृकवधे बोद्धव्यं। तदशक्तौ धेनुदानं-चतुर्धेनुसंख्याकं। तदशक्तौ वराटकदानं पादोनैकादशकार्षापणात्मकं,-पादोनधेनुचतुष्टयसङ्कलनात्। दक्षिणा तु यथाशक्ति विधेया।

स्त्रीणाया गोरस्त्रीणत्वभ्रमेण हलशकटादियोजननिमित्तवधः। प्रायश्चि-त्तानि प्राजापत्यपादत्रयं। तदशक्तौ धेनुदानं एकधेनुसंख्यकं। तदशक्तौ-वराटकदानं पादोनद्विकार्षापणात्मकं, पादोनधेनुसंकलनात्। दक्षिणा तु-यथाशक्ति विधेया।

स्त्रैण्यज्ञाने तु चान्द्रायणपादत्रयं। तदशक्तौ धेनुदानं षड्धेनुसंख्याकं। तदशक्तौ वराटकदानं चतुर्द्दशपणसहितषोड़शकार्षापणात्मकं। दक्षिणा तु-यथाशक्ति विधेया।

स्त्रीणाया गोरस्त्रीणत्वभ्रमेण कूपावटादिषु भयादिना निपातनेन शास्त्रीय-दण्डनिपातनेन च बधः। प्रायश्चित्तानि प्राजापत्यं, तदशक्तौ धेनुदानं-एकधेनुसंख्यकं। तदशक्तौ वराटकदानं। स्त्रैण्यज्ञाने प्रायिकमरणं ज्ञात्वा-प्रवृत्तस्य चान्द्रायणं। एतदपि सर्व्वस्वामिकादिविषयं। यद्यत्स्वामिक-

यद्यत्कर्तृकयद्यद्गवीवधे यद्यत्प्रायश्चित्तमुक्तं अप्रवृत्तप्रवर्त्तकरूपप्रयोजकस्य तत्तत्प्रायश्चित्तस्य पादत्रयं। प्रवृत्तप्रवर्त्तकरूपप्रयोजकस्य पादद्वयं। स्वयप्रवृत्तरूपानुग्राहकस्य पादत्रयं। वधाप्रतिरोधकरूपानुग्राहकस्य पादद्वयं। तदशक्तौ धेनुदानं—अष्टधेनुसंख्यकं। तदशक्तौ वराटकदानं, सार्द्धद्वाविंशतिकार्षापणात्मकं सार्द्धसप्तधेनुसङ्कलनात्। दक्षिणा तु यथाशक्ति विधेया।

ब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रेतर-स्वामिकगवापालननिमित्तवधः। प्रायश्चित्तानि सेतिकर्त्तव्यताकप्राजापत्यं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ-धेनुदानं धेनुद्वयात्मकं। तदशक्तौ वराटकदानं षट्कार्षापणात्मकं। दक्षिणा तु एकवृषभसहितैकधेन्वात्मिका। अशक्तौ षट्कार्षापणाः। इति,-कर्त्तव्यता तु पूर्व्वतः प्रदर्शिता।

ब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकगवापालननिमित्तवधः। प्रायश्चित्तानि प्राजापत्यद्वयं। स्त्रीशूद्रबालवृद्धानामर्द्धं। तदशक्तौ धेनुदानं धेनुद्वयसंख्यकं। तदशक्तौ वराटकदानं षट्कार्षापणात्मकं। दक्षिणा तु यथाशक्ति-विधेया।

ब्राह्मणक्षत्रियवैश्यशूद्रकर्तृकशूद्रेतरस्वामिकाप्राप्तदम्यावस्थगोवत्सापालन-निमित्तवधः। अप्राप्तदम्यावस्था तु त्रिहायणपर्य्यन्तं। प्रायश्चित्तानि सेतिकर्त्तव्यताकप्राजापत्यपादः। तदशक्तौ धेनुदानं एकधेनुसंख्यकं। तदशक्तौ-वराटकदानं सार्द्धकार्षापणात्मकं। दक्षिणा तु सार्द्धकार्षापणात्मिका।

उत्सृष्टवृषवत्सतर्य्योर्वधः। प्रायश्चित्तानि भूतपूर्व्वस्वामिकगवीवध-प्रायश्चित्तद्विगुणं। पूर्व्वास्वाम्यज्ञाने ब्राह्मणस्वामिकगवीवधद्विगुणप्रायश्चित्तं।

गवां शृङ्गभङ्गास्थिभङ्गचर्म्मनिर्म्मोचनलाङ्गूलच्छेदनं। प्रायश्चित्तानि दशरात्रं यवव्रतं। मासार्द्धयवपानं, प्राजापत्यं वा। तदशक्तौ धेनुदानं एकधेनुसंख्यकं। तदशक्तौ वराटकदानं त्रिकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया। यवव्रतं प्राक् प्रदर्शितं।

शृङ्गभङ्गादिना षण्मासाभ्यन्तरे गोर्मरणे न्यूनं वधप्रायश्चित्तं कर्त्तव्यं।

गुरुणा मासेन वा तेन प्रायश्चित्तेन शृङ्गभङ्गादिप्रायश्चित्तसिद्धिः। षण्मासोत्तरमरणे शृङ्गभङ्गादिप्रायश्चित्तमात्रं कर्त्तव्यं।

गवां मुष्कमोचः। प्रायश्चित्तानि यत्कर्त्तृक-यत्स्वामिक-गोवधे यत्-प्रायश्चित्तमुक्तं तत्कर्त्तृकतत्स्वामिकगोमुष्कमोचे तत्प्रायश्चित्तं मृत्युलिङ्ग-च्छेदयोस्तुल्यत्वाभिधानात्। अत्र प्रयोजकभेदस्यार्द्धं पादोनञ्च।

वृषस्य स्वयं ब्राह्मणकर्त्तृकहलशकटादियोजनं। प्रायश्चित्तानि प्राजा-पत्यद्वयं। तदशक्तौ धेनुदानं धेनुद्वयसंख्यकं।

योषिद्गवां ब्राह्मणकर्त्तृकहलशकटादियोजनं,—प्रायश्चित्तानि, प्राजापत्य-चतुष्टयं। ब्राह्मणेतरेषां प्राजापत्यद्वयं। तदशक्तौ धेनुदानं धेनुचतुष्टय-संख्यकं। तदशक्तौ वराटकदानं द्वादश—कार्षापणात्मकं। दक्षिणा तु-यथाशक्ति विधेया।

उत्सृष्टवृषस्य कपिलायाश्च ब्राह्मणकर्त्तृकहलशकटादियोजनं प्राय-श्चित्तानि—यतिचान्द्रायणद्वयं। ब्राह्मणेतरेषां यतिचान्द्रायणैकं। तदशक्तौ-धेनुदानं—सार्द्धसप्तधेन्वसम्भवात् षट्धेनुदानं। तदशक्तौ वराटकदानं। सार्द्धद्वाविंशतिकार्षापणात्मकं। दक्षिणा तु यथाशक्ति विधेया।

गोमांसखादके गोविक्रयविनिमयादिः। प्रायश्चित्तानि, विक्रयादिमात्रे-ऽज्ञानकृततत्तत्स्वामिकगोवधप्रायश्चित्तार्द्धं। गोमांसखादककर्त्तृकतद्गोवधे-तु अज्ञानकृततत्तत्कर्त्तृकतत्तत्स्वामिकगोवधोक्त सम्पूर्णप्रायश्चित्तं। इति गोवध-प्रायश्चित्तव्यवस्था।

सौकर्य्याय महापातकादिसकलपापावशेषे तत्तत्पापप्रायश्चित्तप्रमाणानु-गतव्यवस्थाप्रदर्शनस्य मनःस्थत्वेऽपि ग्रन्थगौरवभिया परिहृतमेतदत्रैव। रीत्या-नया ग्रन्थेऽत्र भविष्यल्लिखितपापप्रायश्चित्तबोधकप्रमाणव्रातसामर्थ्यबलादूह-नीया व्यवस्थेतादृशी परतः। इति।

---

## अथ क्षत्रियावधप्रायश्चित्तं।

यथा—मनुराह तद्विषये,—

"तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोड़शः॥

अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः।
वृषभैकसहस्रा गा दद्यात्सुद्ध्यर्थमात्मनः॥
त्र्यब्दं चरेद्वा नियतो जटी स ब्रह्मणो व्रतं।
वसन्दूरतरे ग्रामाद्वृक्षमूले निकेतनः॥
एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः।
प्रमाप्य वैश्यं वृत्तस्थं दद्याद्वैकशतं गवां॥
एतदेव व्रतं कृच्छ्रं षण्मासान् शूद्रहा चरेत्।
वृषभैकादश वापि दद्याद्विप्राय गाः सिताः" ॥

"एकशतं एकाधिकशतमित्यर्थः। ब्रह्महत्याप्रायश्चित्तस्य शवशिरोध्वजधारणादिसर्व्वाङ्गोपेतस्य द्वादशवार्षिकस्य यच्चतुर्थोऽंशस्त्रीणि वर्षाणि प्रायश्चित्तं-तद्वृत्तस्थक्षत्रियवधे कामकृते कार्य्यं, एवं वृत्तस्थवैश्यवधे सार्द्धवार्षिकं, वृत्तस्थ-शूद्रवधे च नवमासिकमिति। वृत्तस्थपदमत्र निर्गुणेतरपरं। अकामतो-वृत्तस्थक्षत्रियवधे वृषभाधिकगोसहस्रदानं त्रैवार्षिकब्रह्महत्याव्रतं वा। ननु-त्रैवार्षिकव्रतं पञ्चचत्वारिंशद्धेनवः। अतः कथं विषमशिष्टयोरिच्छाविकल्पः। न च गोमूल्याद्धेनुमूल्यं त्रिगुणेनाधिकं तथात्वयन्तवैषम्या"द्देनुं दद्यादुगाथवा" इति याज्ञवल्क्याच्च, कथञ्च कामतस्त्रैवार्षिकोक्तेरकामतोऽपि त्रैवार्षिकं तदर्द्ध-स्यैव युक्तत्वात्, सत्यं, व्यवस्थितविकल्पोऽयं, अतिविपुलधनस्य गोसहस्रदानं,-निर्द्धनस्य त्रैवार्षिकं।

अतएव भविष्ये ब्रह्मवधे महादेवपादैरुक्तं,—

"द्रव्यतश्च विशेषेण शक्तिं वीक्ष्य महामते!।
द्रव्यंतश्च यदाशक्तस्तदा तस्य तपो भवेत्॥
वेदाभ्यासविहीनो वै धनवानग्निवर्ज्जितः।
प्रायश्चित्तं तदा कुर्य्यादिदं पापविशुद्धये।
धनं वा जीवनायालं गृहं वासपरिच्छदं" ॥ इति।

अतएवात्ममितसुवर्णदानं द्वादशवार्षिकापैकल्पिकमुक्तं।

ब्रह्मवधे याज्ञवल्क्येन, यथा,—

"आत्मतुल्यं सुवर्णं वा दद्याद्विप्राय तुष्टिकृत्"।

इत्यतएव व्रतान्ते दक्षिणायां गोसहस्रदानं विपुलधनविषयमेव"।

यथा शङ्खलिखितौ।

"अमतिपूर्वकं चतुर्षु वर्णेषु प्रमाप्य द्वादशवत्सरान् षट्त्रिंशदेकम्। व्रतान्यादिशेत्तेषामन्ते गोसहस्रं ततोऽर्द्धं, तस्यार्द्धमस्यार्द्धञ्च दद्यात् सर्व्वेषामनुपूर्व्वेण षट्त्रिंशदेकञ्चेति, अत्यन्तसगुणक्षत्रियादिविषयं। कामतस्तु क्षत्रियवधे-शवशिरोध्वजादिसर्व्वाङ्गोपेतं त्रैवार्षिकव्रतं।

अकामतस्तु जटिलग्रामदूरनिवासित्ववृक्षमूलनिकेतनत्वव्यतिरिक्तशव-शिरोध्वजधारणादिसर्व्वाङ्गरहितं त्रैवार्षिकव्रतं कुर्य्यात्। अथवा वैरनिर्य्यातनार्थिना गोसहस्रदानं कार्य्यं। वैरनिर्य्यातनं जन्मान्तरेऽसौ तमवश्यं हन्ति-गोसहस्रादिप्रायश्चित्तकृते तु हन्तासौ जन्मान्तरेण हन्यते। अतो वैरनिर्य्यातनं-न भवतीत्यर्थः। यथाऽऽपस्तम्बोऽत्र "क्षत्रियं हत्वा गवां सहस्रं वैरनिर्य्यातनार्थं दद्यात्, शतं वैश्यं दश शूद्रमिति ऋषभश्चात्राधिकः।"

विशेषमाह याज्ञवल्क्यः,—

"योगस्थक्षत्रविड्घाते चरेद्ब्रह्महणोव्रतं।
गर्भहा च यथा वर्णं तथात्रेयीनिसूदनः"।

तथाच यमः,—

"हत्वा सवनगं वैश्यं राजन्यमपि दीक्षितं।
हत्वा तु ब्रह्महण्येव तथात्रेयीं च ब्राह्मणीं"॥

एतेन यज्ञस्थक्षत्रियवैश्ययोः सम्पूर्णप्रायश्चित्तं व्यवस्थितं। तदेव द्विगुणं। नृपतिक्षत्रियवधे यथाह विष्णुः, "नृपतिवधे व्रतमेव द्विगुणं कुर्य्यादिति।"

यथाच ब्रह्मपुराणे,—

"यज्ञसंस्थौ तु पितरौ राजानञ्चाप्यनागसं।
हत्वा चरेद्व्रतं तस्तु चतुर्विंशतिवत्सरान्"॥

यज्ञस्थौ क्षत्रियवैश्यौ पितरौ च।

तथापस्तम्बः,—

"निपात्य क्षत्रियञ्चैव त्रिभिः कृच्छ्रैर्विशुध्यति।
वैश्यहत्यां तु संप्राप्य कथञ्चित् काममोहितः॥
कृच्छ्रातिकृच्छ्रे कुर्व्वीत स नरः संयतेन्द्रियः।
कुर्य्याच्छूद्रवधं प्राप्य तप्तकृच्छ्रं समाहितः"॥

तथा शातातपः,—

"राजन्यवैश्यशूद्राणां षट्त्रिण्येकं चरेद्वधे।
वर्षाणि ब्रह्मचर्य्यञ्च विशुद्ध्यर्थं क्रमेण तु"॥

एवमादीन्यन्यान्युत्कर्षापकर्षप्रतिपादकवचनानि ब्राह्मणादिजातत्ववृत्तस्थत्ववेदाग्न्यादियुक्तत्वायुक्तत्वकामाकामकृतत्वव्यवस्थया व्याख्येयानि। एतच्च सवर्णोत्तमवर्णकृतक्षत्रियादिवधविषयं।

अधमवर्णकृते तु,—

"अधमानान्तु वर्णानामुत्कृष्टहनने गुरु !।
दोषो गुरुतरो ज्ञेयः क्षत्रादीनां न संशयः"॥

इति भविष्यपुराणवचनादुत्तमोत्तमक्रमेणाधमाधमानां द्वैगुण्यादिकमूहनीयं।

कामकृते क्षत्रियवधे त्रैवार्षिकं महाव्रतं, तदशक्तौ पञ्चचत्वरिंशद्धेनवो देयाः। तथा कृते वैश्यवधे सार्द्धवार्षिकं, तदशक्तौ त्रयोविंशतिधेनवः, तथा-शूद्रवधे नवमासिकं, तदशक्तौ द्वादशधेनवो देयाः, तन्मूल्यं वा। बालवृद्धस्त्रीणामर्द्धं देयमिति। इत्येतत् शूलपाणिप्रभृतिधर्म्मशास्त्रनिबन्धकर्त्तृमतं।

इति क्षत्रियादिवधप्रायश्चित्तविवेचनं।

## अथ प्रतिलोमजादिवधप्रायश्चित्तविचारः ।

तत्र प्रायश्चित्तविवेके, याज्ञवल्क्यः,—

"चान्द्रायणं चरेत् सर्व्वानपकृष्टान्निहत्य तु ।
शूद्रोऽधिकारहीनोऽपि मासेनानेन शुध्यति" ॥

अपकृष्टाः प्रतिलोमजाः मागधा अयोगवादयः । एतच्च ज्ञानतः सर्व्वेषा-मन्योन्यापकृष्टवधे बुद्धिपूर्व्वके चान्द्रायणमिति, शङ्खलिखितवचनात् ।

अमतिपूर्व्वकवधे त्वङ्गिराः,—

"र.र्व्वान्त्यजानां गमने भोजने संप्रमापणे ।
पराकेण विशुद्धिः स्यादित्याङ्गिरसभाषितम्" ॥

एतच्च सर्व्ववर्णसाधारणमिति ।

अतएव,—

"शूद्रोऽधिकारहीनोऽपि मासेनानेन शुध्यति" ।

इत्युक्तं, अन्त्यजाश्च रजकनटादयो मनूक्ताः । अन्त्यजागमने च रेतःसेकात्-पूर्व्वं ज्ञेयं । भोजने च सकृत् ज्ञानत इति प्रसङ्गादागतमिदं ।

तथाच—पण्डितसर्व्वस्वे विशेषोऽत्र,—

तथा,—

"चण्डालो निहतः कश्चित् ब्राह्मणेन कथञ्चन ।
अहोरात्रोपवासेन प्राणायामेन शुध्यति" ॥
प्राजापत्यं चरेत् कृच्छ्रं गोद्वयञ्चापि दक्षिणां ।
क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेण च ।
चण्डाले निधनं प्राप्ते कृच्छ्रार्द्धेन विशुध्यति" ॥

इति प्रतिलोमजादिवधप्रायश्चित्तविवेचनम् ।

### अथ स्त्रीवधप्रायश्चित्त विचारः—

तत्र ब्रह्महत्यानुवृत्तौ हारीतः,—

"षड्वर्षाणि राजन्ये, त्रीणि वैश्ये, एकं शूद्रे, क्षत्रियवध्वामपीषु, वैश्यवत्-

क्षत्रियासु, शूद्रवदितरासु; तेन ब्राह्मणीवधे षाड्वार्षिकं महाव्रतं, क्षत्रिया वधे त्रैवार्षिकं, वैश्यावधे शूद्रावधे वार्षिकं।"

तथाच यमः,—

"हत्वा सवनगं वैश्यं राजन्यं वापि दीक्षितं।
हत्वा तु ब्रह्महत्यैव तथात्रेयीं च ब्राह्मणीं" ॥

"आहिताग्निपत्नीं ब्राह्मणीं, तथात्रेयीं च ब्राह्मणीं संपूर्णमेव ब्रह्महत्याप्रायश्चित्तमाहाङ्गिराः,—

"आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दितां।
ब्रह्महत्याव्रतं कुर्य्यादात्रेयीघ्नस्तथैव च" ॥

"आत्रेयी चात्रिगोत्रा ऋतुस्नाता गर्भिणी चोच्यते प्रागेवोक्तं। यत्र-यद्वर्णात्रेयी तत्र तद्वर्णवधोक्तं प्रायश्चित्तं कार्य्यं। कक्षीकरोति याज्ञवल्क्योऽपि विवरणमेतत्;—"

"यागस्थक्षत्रविड्घाते चरेद्ब्रह्महणो व्रतं।
गर्भहा च यथावर्णं तथात्रेयीनिसूदनः" ॥

एतेन ब्राह्मणीवधे षाड्वार्षिकव्रतं। तदशक्तौ धेनूनां नवतिर्देया, क्षत्रियावधे तु त्रैवार्षिकं, अशक्तौ पञ्चचत्वारिंशद्धेनवो देयाः। वैश्याशूद्रावधे वार्षिकं, तदशक्तौ पञ्चदशधेनवः तन्मूल्यं वा, एतच्च कामतोऽकामतस्तदर्द्धं। एतच्चोत्तमवर्णेन समवर्णेन च करणीयं। अधमेन तु उत्तमवर्णाया द्विगुणादिकं कार्य्यं। स्त्रीबालवृद्धानामर्द्धं। कामतो गुणहीनब्राह्मणपत्नीमात्रवधे शूद्रे-सम्वत्सरं। वृषभैकादशा गाश्च दद्यादित्यभिधायाह गौतमः। अनात्रेय्याश्चैव-मिति अत्र गोदानमुत्कृष्टधेनुरूपं वेदितव्यं। वृषभदानञ्च गोदानाधिकफल-मित्यन्यत्र दर्शितं। इति महामहोपाध्याय शूलपाणिमतं।

विशेषमाहुः कार्क्कमिश्राः—प्रायश्चित्तमनोहरे। यथा याज्ञवल्क्यः,—

"अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्।

अकामतः स्त्रियं हत्वा ब्राह्मणीं द्विगुणं चरेत्।
कामतो द्विगुणं प्रोक्तं प्रदुष्टायां न किञ्चन"॥

न किञ्चनेत्यनेन स्वल्पप्रायश्चित्तमुक्तं। न तु सर्वथा प्रायश्चित्ताभावः। वैश्यवदिति वैश्यवधप्रायश्चित्तं। वशिष्ठः,—

"अनात्रेयीं राजन्यहिंसायां राजन्यां, वैश्यहिंसायां वैश्यां, शूद्रहिंसायां शूद्रां हत्वा सम्वत्सरं वार्षिकं व्रतं चरेदित्यध्याहारः। तथा यमः,—

"क्रोधादुक्त्वा ह्यगम्यत्वं स्वभार्य्यायां नरः क्वचित्।
प्रायश्चित्तं चरेत् कृच्छ्रं तस्य पापविशुद्धये"॥

इति स्त्रीवधप्रायश्चित्तविवेचनं॥

अथ व्यभिचरितस्त्रीवधप्रायश्चित्तविचारः।

तत्र याज्ञवल्क्यः,—

"अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्"। इति।

प्रकर्षेण दुष्टा प्रदुष्टा या न भवति असावप्रदुष्टा। सकृत्सवर्णव्यभिचरितेत्यर्थः। न तु अदुष्टा तत्र बहुतरप्रायश्चित्तस्योक्तत्वात्।

यत्पुनर्बृहस्पतिनोक्तं,—

"अदुष्टाञ्च स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्"। इति।

तदधमब्राह्मणीवधविषयमिति। ततः सकृत् सवर्णव्यभिचरितब्राह्मणीवधे शूद्रहत्याव्रतं षाण्मासिकं कार्य्यं, क्षत्रियादिस्त्रीणां वधे तु एतदेव पादहीनं कुर्य्यात्, एतच्चाकामतः, कामतो वार्षिकादि"। भूयोव्यभिचरितायां—अधमवर्णव्यभिचरितायाञ्च वधे मनुः,—

"धौनकार्म्मुकवस्ताद्दीन् पृथक्दद्याद्विशुद्धये।
चतुर्णामपि वर्णानां नारीं हत्वानवस्थिताम्"॥

तथा याज्ञवल्क्यः,—

"दुर्वृत्तब्रह्मक्षत्रविट्शूद्रयोषाः प्रमाप्यतु ।
दृतिं धनुर्वस्तमविं क्रमाद्दद्याद्विशुद्धये" ॥

"अनवस्थिता-दुर्वृत्ता-दुश्चारिणीवधे छागमविं जीनं सकार्मुकमिति-आवालिवचनात्, जीनं चर्मपटं दृतिरपि कार्मुकं धनुः । वस्तः छागः-अविर्मेषः एतदकामतः, कामतस्त्वेतदेव द्विगुणं ।

तथा व्यासः,—

"अकामतः स्त्रियं हत्वा ब्राह्मणीं वैश्यवच्चरेत् ।
कामतो द्विगुणं प्रोक्तं प्रदुष्टायां न किञ्चन" ॥

"एतच्चोत्तमवर्णव्यभिचरिताविषयं चण्डालादिदुष्टायामित्यर्थः । अतः-सकृत् सवनव्यभिचरितब्राह्मणीवधे ब्राह्मणस्याकामतः षाण्मासिकव्रतं, तदशक्तौ अष्टौ धेनवः तन्मूल्यं वा । बालवृद्धानामर्द्धादिकं प्रयोजकादीनां-पादपादहानिः" इति शूलपाण्यादिविवेकः ।

इति व्यभिचरितस्त्रीवधप्रायश्चित्तविवेचनं ।

---

अथ गर्भवधप्रायश्चित्तविचारः ।

यथा प्रायश्चित्तविवेके,—"तत्र पुंस्त्वेन ज्ञाते पुरुषवधप्रायश्चित्तं, स्त्रीत्वेन-ज्ञाते स्त्रीवधप्रायश्चित्तं, अविज्ञाते तु पुंवधप्रायश्चित्तमाह मनुः,—

"हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत् ।
राजन्यवैश्यौ चेज्यानावात्रेयीमेवच स्त्रियं" ॥

"एतदेवेति ब्रह्महत्याव्रतमित्यर्थः, ब्राह्मणगर्भविषयमिदं तस्यैव प्रकृतत्वात् । क्षत्रियादिगर्भवधे तु यद्वर्णगर्भस्तद्वधप्रायश्चित्तं कार्य्यं ।

यथा याज्ञवल्क्यः, —

"यागस्थक्षत्रविड्घाते चरेद्ब्रह्महणो व्रतं ।
गर्भहा च यथावर्णं तथात्रेयीनिसूदकः" ॥

व्रतपदोपादानात् ज्ञानत इदं, अज्ञानतस्तदर्द्धं। तेन ज्ञानकृते ब्राह्मण-गर्भवधे द्वादशवार्षिकं।

क्षत्रियगर्भवधे त्रैवार्षिकं। वैश्यगर्भवधे सार्द्धवार्षिकं। शूद्रगर्भवधे नव-मासिकं। धेनुसंकलनमप्यूहनीयं। इति महामहोपाध्यायशूलपाणिः। तथा गर्भिणीगर्भविमोचनप्रायश्चित्तं पण्डितसर्वस्वे,—

"मृतगर्भस्य संस्कर्त्ता अतिकृच्छ्रं समाचरेत्।
अन्यस्तु कृच्छ्रत्रितयं कृच्छ्रैकं दाहवाहकाः" ॥

अन्यस्तु पत्युरन्य इति।

इति गर्भवधप्रायश्चित्तविवेचनं।

---

अथ गजाश्वादिवधप्रायश्चित्तविचारः।

"यद्यपि गजाश्वादिवधः संकरीकरणपापमिदं, तथापि हिंसासाजात्या-दुपपातकप्रकरणे एतत् प्रायश्चित्तं निरूप्यते, तत्र सामान्यतः पशुघाते प्राजा-पत्यमाह, हारीतः,—

"वृथा पशुघाते प्राजापत्यं वृथेति ग्रहणाद् यागाद्यर्थे प्रायश्चित्ताभावः-हिंसायां दानस्य मुख्यप्रायश्चित्तत्वात्"। दाने विशेषमाह मनुः,—

"वासो दद्यात् हयं हत्वा पञ्चनीलान् वृषान् गजं।
अजमेषावनड्वाहं खरं हत्वैकहायनं" ॥

अजमेषखरान् हत्वा एकहायनं वृषं दद्यादित्यर्थः। यत्तु हारीत-वचनं "वाजिरासभवधे कृच्छ्रं चान्द्रायणं चरेदिति तदत्युत्तमवाजिरासभ-वधविषयं। एतत् ज्ञानतोऽज्ञानतस्तदर्द्धं।

"हयच्छागाविक्रोष्ट्रेषु गर्दभेषु च मारणात्।
प्राजापत्यार्द्धमेवेह प्रायश्चित्तं विधीयते" ॥

विशेषमाह कश्यपः,—

मृगमहिषवराहकुञ्जरगण्डकतरक्षुऋक्षवानरसिंहव्याघ्रपृषतचमरहरिणा-

टीमामन्येषाञ्च वधे रात्रोपोषितश्चीर्णान्ते घृतं दद्यात् । एतत् चाज्ञानतः-सकृद्विषयमिति धर्म्मप्रदीपः ।

ज्ञाने तु सम्वर्त्तः,—

"हस्तिनं तुरगं हत्वा महिषोष्ट्रं कपिं तथा ।
एतत् सर्व्वेषु कुर्व्वीत सप्तरात्रमभोजनं" ॥

"अत्र च षडुपवाससंकलितप्राजापत्यात् किञ्चिदाधिक्यात् सपादधेनुः-एतत् सकृत् ।"

तथाच विशेषमाह जावालः,—

"हस्तिनं तुरगं हत्वा हरिणं गां तथैव च ।
महासान्तपनं कुर्य्यात् गोभूकन्यानृतेषु च" ॥

महासान्तपनं सप्ताहसाध्यमत्र धेनुद्वयं, एतच्चाभ्यासविषयं" । वानरादि-वधेऽपि कामत आह सुमन्तुः, "वानरसिंहमार्ज्जारमण्डूकवधे प्राजापत्यं, मार्ज्जारादिष्वभ्यासतः" । "दंष्ट्रिणां वधे प्राजापत्यं, दंष्ट्रिणो वराहभल्लुकादयः" ।

हिंसाप्रायश्चित्तेषु दानस्य मुख्यत्वाद्विशेषमाह,—

मनुः,—

"क्रव्यादांस्तु मृगान् हत्वा धेनुं दद्यात् पयस्विनीं ।
अक्रव्यादान् वत्सतरीमुष्ट्रं हत्वा च कृष्णलं" ॥

"एतच्चाज्ञानतः सकृद्विषयं । क्रव्यादा व्याघ्रादयः । कृष्णलं कृष्णल-परिमितस्वर्णमित्यर्थः । कृष्णलदानं चेदमत्यन्तापकृष्टोष्ट्रविषयं" इति शूल-पाणिमतं ।

तथात्र पण्डितसर्व्वस्वे पराशरः,—

"हंससारसक्रौञ्चांश्च चक्रवाकञ्च कुक्कुटं ।
हत्वा मयूरमेषौ च अहोरात्रेण शुध्यति ॥
बलाकाटिट्टिभांश्चैव शुकपारावतावपि ।
अविश्चापि निपात्यैव शुध्यते नक्तभोजनात् ॥

गृध्रश्येनकपोतांश्च यष्टितित्तिरिहंसकान् ।
हत्वा वारिशुभे सन्ध्ये प्राणायामेन शुध्यति ॥
कारण्डवचकोराणां कलिङ्गकुक्कुरस्य च ।
भरद्वाजस्य हन्ता च शुध्यते शिवपूजया ॥
भेरुण्डस्यैव भासस्य शतपत्रस्य पक्षिणः ।
सर्व्वेषाञ्चैव हननादहोरात्रेण शुध्यति ॥
हत्वा मूषिकमार्जारसर्पगण्डूकदर्द्दुरान् ।
कृषरं भोजयेद्विप्रं लौहदण्डश्च दक्षिणा ॥
हन्ता शशकगोधानां शल्लकीकूर्म्मयोरपि ।
पृदाकुकलविङ्कानामहोरात्रेण शुध्यति ॥
वृकजम्बूकभल्लूकान् हत्वा च वानरानपि ।
तिलप्रस्थं द्विजे दद्याद्वायुभक्षो दिनत्रयं ॥
गजस्य महिषस्यापि कुरङ्गस्य निपातने ।
प्रायश्चित्तमहोरात्रं त्रिसन्ध्यमवगाहनं ॥
तुरङ्गस्य च सिंहस्य चित्रव्याघ्रस्य घातने ।
शुध्यते सप्तरात्रेण ब्राह्मणानाञ्च तर्पणात् ॥
वराहस्य रुरोश्चैव गवयस्य च घातने ।
अफालकृष्टमश्नीयादहोरात्रेण शुध्यति ॥
एवं चतुष्पदानाञ्च सर्व्वेषां वनचारिणां ।
अहोरात्रेण शुध्येत जपन् वै जातवेदसः" ॥

इति । गजाश्वादिवधप्रायश्चित्तविवेचनं ।

अथाजाव्यादिवधप्रायश्चित्तविचारः ।

तत्र कश्यपः,—

"अजाविकवधे त्रिरात्रं चीर्णे विरञ्जं दद्यात् वा" ।

"एतदज्ञानतः अत्यन्तधार्म्मिकब्राह्मणकर्तृके तद्वधे वेदितव्य" ।

इति धर्म्मप्रदीपः ।

ज्ञानतस्तु च्यवनः,—

"ग्राम्यपशुवधे प्राजापत्यं चरेत् हिरण्यं दक्षिणा, मृगवधे प्राजापत्यार्द्ध-तिलद्रोणञ्च दद्यात् ।"

"एतद्दानं शक्तस्य हिंसायां दानमेव मुख्यं प्रायश्चित्तमित्युक्तत्वात् शक्तस्य-तु मनुना "अजमेषावनड्वाहं खरं हत्वा एकहायनं इत्येकहायनवृषदानमुक्तं ।"

तथा दद्यादित्यनुवृत्तौ शङ्खलिखितौ,—"अजाविकवधे धेनुमिति तदेतयो-र्विकल्पः ।

एतयोरेकहायनवृषवधे धेनुदानयोरित्यर्थः" ।

दानाशक्तस्याभ्यासात्यन्ताभ्यासयोस्तु ग्राम्यारण्यानां पशूनां हिंसासंकीर्ण-करणमित्युक्ता विष्णुः,—

"सङ्कीर्णकरणं कृत्वा मासमश्नीत यावकं ।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं तु कारयेत्" ॥

ग्राम्यारण्यपशुविवेके पैठीनसिः,—

"ग्राम्यारण्याश्चतुर्द्दश: गौरविरजोऽश्वोऽश्वतरो गर्द्दभो मनुष्यश्चेति सप्त-ग्राम्याः पशवः । महिषवानरऋक्षसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः,-गोमनुष्यहिंसाया उपपातकत्वात्तदितरपशुहिंसायामेतद्दृष्टव्यं । अश्वायां गर्द्दभेन-जातोऽश्वतरः । इति प्रायश्चित्तविवेककारमतं । नात्र केषामपि विरोधः ।

इत्यजाद्यादिवधप्रायश्चित्तविवेचनं ।

---

अथ मार्ज्जारादिवधप्रायश्चित्तविचारः ।

यथा प्रायश्चित्तविवेके, याज्ञवल्क्यः,—

"मार्ज्जारगोधनकुलमण्डूकश्वपतत्रिणः ।
हत्वात्र्यहं पिबेत् क्षीरं कृच्छ्रं वा पादिकं चरेत्" ॥

तथा च विष्णुः,—

"मार्ज्जार-सर्प-नकुल-प्लवशृगाल-मृगेष्वपि।
प्रमादाद्धनने कार्य्यः कृच्छ्रपादो विधीयते"॥

मार्ज्जारादिवधानुवृत्तो यमः,—

"पयः पिबेत् त्रिरात्रं तु योजनं वाध्वनो व्रजेत्।
उपस्पृशेत् स्रवन्त्यां वा सूक्तं वाब्दैवतं जपेत्"॥

"अस्यार्थः आहारस्थाने त्र्यहं चीरं वा पिबेत्। रोगादिना तत्पाने-चासमर्थस्त्रिरात्रमेकं वा योजनमध्वनो गच्छेत्, तत्राप्यशक्तो त्रिरात्रं नद्यां-स्नायात्, तत्राप्यशक्तस्त्रिरात्रमापोहिष्ठेत्येतत् सूक्तं जपेत्। एतच्चैकविषे-वेदितव्यं प्रायश्चित्तलाघवात्।"

तथात्र विष्णुरप्याह,—

"हत्वा मूषिकमार्ज्जारनकुलमण्डूकडुण्डुभाजगराणामन्यतममुपोषितः-कृषरान् भोजयित्वा लौहदण्डञ्च दक्षिणायै दद्यात्।"

अतैव पराशरः,

"हत्वा मूषिकमार्ज्जारसर्पाजगरडुण्डुभान्।
कृषरान् भोजयेद्विप्रान् लौहदण्डश्च दक्षिणा"॥

"उपवासश्चार्थात् कामतो द्वैगुण्यं" कामाभ्यासे तु वशिष्ठः,—मार्ज्जार-मण्डूकनकुलमर्दहरमूषिकं हत्वा कृच्छ्रं द्वादशरात्रं चरेत् किञ्चिद्दद्यात्"।
सर्पोऽत्र कृष्णसर्पेतरो डुण्डुभादिः कृष्णसर्पे दानस्य मुख्यत्वात्। दहरो-मूषिकविशेषः छुछुन्दरीत्येके। व्यक्तमपरं।

"दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्।
एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये"॥

इति मनुवचनादस्य मुख्यत्वाभिधानात् सर्पपण्डयोर्विशेषमाह,—

स एव,—

**"अभ्रीं कार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः ।**
**पलालभारकं षण्ड' सैसकञ्चैव मासकं" ॥**

"एतजज्ञानतः तीक्ष्णप्रान्ता कीलिका अभ्री अर्थात् वृक्षमूलाद्युत्पाटन-समर्थः खनित्रविशेषः कार्ष्णायसी लौहमयीं ।

एतत् कृष्णसर्पवधे पैठीनसिः,—

"वराहे घृतकुम्भं दद्यात् कृष्णसर्पे लौहदण्डमिति" ।

"षण्डश्च पश्वादिसमभिव्याहारात्तज्जातीय एव स च स्त्रीव्यञ्जकः-पुंव्यञ्जको वा नपुंसकं वा" ।

**"स्त्रीलिङ्गस्तु भवेत्षण्डः संस्कारानर्हकः पुमान्" ।**

इति लक्षणात् । अत्र त्रिरात्रमुपोष्य एतद्द्वयं दद्यात् ।

यथाहारीतः,—

"त्रिरात्रोपोषितः षण्डवधे पलालभारकं सीसकमाषकञ्च ब्राह्मणाय-दद्यात् ।"

मार्ज्जारादिवधे यथाह मनुः,—

**"मार्ज्जारनकुलौ हत्वा चासं मण्डूकमेव च ।**
**श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत्" ॥**

शूद्रहत्यायाश्च स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यञ्चोपपातकमिति मनुनैवो-पपातकत्वमुक्तं ।

उपपातके च गोवधव्रतमुक्त्वा,—

**"एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः" ।**

इत्यनेन मनुनैव गोवधव्रतमतिदिष्टं ।

अत्र त्रैवर्णिकस्य तुल्यं प्रायश्चित्तं शूद्रस्य त्वर्द्धमित्युक्तं गोवधप्रायश्चित्तेऽतो-ऽत्रापि तथैव व्यवस्थेयमिति ।

वस्तुतस्तु शूद्रवधे मनूक्तं षाण्मासिकं चान्द्रायणतुल्यमत्यन्तचिरकालकृत-युगपदनेकमार्जारादिवधविषयं ।

विष्णुयमवचनसमानार्थं मनुनातिदिष्टं ।

यथा विष्णुः,—

"उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः" ॥ इति ।

तथा यमः,—

"कोकिलशुककपोतकपिञ्जलटिट्टिभखञ्जरीटानां पुरुषभारवधे" ।

इति शूलपाणिगोविन्दानन्दौ ।

इति मार्ज्जारवधप्रायश्चित्तविवेचनम् ।

---

अथ विशेषपक्षिवधप्रायश्चित्तविचारः ।

यथा प्रायश्चित्तविवेके तत्र सम्बर्त्तः,—

"टिट्टिभान् जालपादांश्च मद्गुं कुक्कुटमेव च ।
एतान् हत्वा द्विजः कुर्य्यादिनमेकमभोजनं" ॥

तथाच जावालः,

"हंसं हत्वा बलाकांश्च शुकं टिट्टिभसारकं ।
तित्तिरं श्येनगोमायुं क्रौञ्चमाटीमहः स्मृतं" ॥

तथा काश्यपः,—

"काक-बलाका-हंस-सारस कारण्डव-चक्रवाक-कुरव-गृध्र-श्येनखञ्जरीट-टिट्टिभोलूकशुकशारिकातित्तिरिमयूरकाककालञ्जकमद्गुकलविङ्कपोतपारावतादीनां वधे प्रायश्चित्तमहोरात्रोपितः । सर्व्ववीजानि दद्यात् ।

एतान्यज्ञानविषयाणि,—

ज्ञाने तु सम्बर्त्तः,—

"मत्वा हंसबलाकाश्च श्वाविकुक्कुटवर्हिणः ।
वानरं श्येनभासो च हत्वा त्र्यहं क्षिपेत्-द्विजः" ॥

एतत् सकृद्वधे ।

तथा,—

"कृमिकीटवयोहत्या मद्यानुगतभोजनं।
फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहं" ॥

"मद्यानुगतभोजनं मद्यपानसमये यत्समीपे स्थापितं फलमूलादि तद्-भोजनमित्यर्थः। इत्यनेन मनुना पक्षिवधस्य मलिनीकरणत्वमुक्त्वा—

"मलिनीकरणीये च तप्तः स्याद्यावकैस्त्र्यहमित्युक्तम्।

"एतच्चोक्तेतरपक्षिणां कामतः सकृद्वधे वेदितव्यं। तत्र चैकपुराणं देयं। वयांसि पक्षिणः एतच्च व्रतं दानाशक्तस्य ज्ञेयं"। उक्तेतरपक्षिणां प्रागुक्त-हंसादीतरपक्षिणामपि कामतो वधे ज्ञेयमिति गोविन्दानन्दः।

यथा भविष्यपुराणं,—

"हिंसात्मकानां सर्व्वेषां कीर्त्तितानां मनीषिभिः।
प्रायश्चित्तकदम्बानां दानं प्रथममुच्यते" ॥

अशक्तस्य तु विशेषमाह मनुः,—

"हत्वा हंसं बलाकाञ्च वकं वर्हिणमेव च।
वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गां" ॥

"अत्र केचित्, गोर्महत्वान्मिलितवधे गोदानमाहुः, तदसत् हारीत-विष्णुभ्यां विरोधात्।

तत्र हारीतः,—मर्कटश्येनभासजालपादवर्हिणामेकतमवधे ब्राह्मणाय-गां दद्यात्।

तथा विष्णुः,—

"हंसबलाकामद्गुश्येनभासचक्रवाकशाखा। मृगाणामन्यतमं हत्वा ब्राह्म-णाय गां दद्यात्" ॥

तथा मनुः,—

"घृतकुम्भं वराहन्तु तिलद्रोणं तु तित्तिरिं।
शुकं द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायणं" ॥

तथा शङ्खलिखितौ,—

"क्रौञ्चशुकचक्रवाकमयूरश्येनशठप्रवधे वत्सतरीं दद्यात् । प्रजावधे-धेनुं एतानि च ज्ञानविषयाणि । इति प्रायश्चित्तविवेककारादिमतं ।

इति विशेष पक्षिवधप्रायश्चित्तविवेचनं ।

अथ मत्स्यादिजलचरवधप्रायश्चित्तविचारः ।

यथा प्रायश्चित्तविवेके शङ्खः;—

**"हत्वा द्विजं तथा सर्पं जलेशयविलेशयौ ।**
**सप्तरात्रं तु कुर्वीत व्रतं ब्रह्महणस्तु यत् ।"**

"एतदज्ञानतः सकृद्वधे । अत्र चाहिकवनवासव्रतोक्तपञ्चदशगवेनुव्यव-स्थया मासिक सपादधेनुमूल्यं पणेन पुराणद्वयं, सप्ताहेन पुराणमेकं ।"

तथा कश्यपः मण्डूकमकरमत्स्यशिशुमारादीनां वधेष्वेकरात्रं चीर्णान्ते-लवणं दद्यात् । लवणपरिमाणञ्च घातकशक्त्यपेक्षं । एतत् कामतः सकृत् । अभ्यासाभ्यासाभ्यामशाम् यथाक्रमं तप्तकृच्छ्रं कृच्छ्रातिकृच्छ्रमिति वेदितव्यं । इति शूलपाण्यादिमतं ।

इति मत्स्यादिजलचरवधप्रायश्चित्तविवेचनं ।

---

अथ सास्थानस्थिवधप्रायश्चित्तविवेचनं ।

यथा मनुविष्णू,—

**"अस्थिमतां तु सत्वानां सहस्रस्य प्रमापणे ।**
**पूर्णे चानस्थनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥"**

अस्थिमतां कृकलासादीनां सहस्रमारणे अनस्थ्नां पिपीलिकादीनां शकट-परिमितानां वधे मनुक्तशूद्रहत्याव्रतं पाण्मासिकमज्ञाने, ज्ञाने त्वाब्दिकं कार्य्यं। सास्थ्यनस्थिप्रमापणे यमः,—"अत ऊर्द्धं कृमिकीटपिपीलिकापतङ्गभ्रमरदंशम-शकमक्षिकादीनामनोऽस्थिमतां सहस्रं हत्वा शूद्रवधः कोकिलशुकशूद्रवधः । अत्र च सास्थानस्थिसमुमानतेव कोकिलादीनां पुरुषभारपरिमाणवत्र शूद्रवधः स्यादिति विशेषः ।" तथाच मनुः,—

"किञ्चिदेव तु विप्राय दद्यादस्थिमतां बधे ।
अनस्थां चैव हिंसायां प्राणायामेन शुध्यति ॥"

"एतच्च एकैकबधे बोध्यं ।"

यथा गौतमः,—

"अस्थिमतां सहस्रं हत्वा अनस्थिमतां अनडुद्भारे च । अपिचास्थिमतामेकैकस्मिन् किञ्चिद्दद्यात् ।"

एकैकस्मिन्नपि हते किञ्चिद्दद्यादिति सम्बन्धः । चकारादनस्थिमतामपि किञ्चित्पदं पणपरं । यथा सुमन्तुः,—

"यूकामशकमक्षिकामत्कुणपुत्तकीमाल्वाहजलौकोगण्डुपदानामन्यतमेषां अनस्थिमताञ्चबधे पणो देय" इति ।

मत्कुणादयः कीटभेदाः गण्डपदः किञ्चुलुकः तथाऽन्नादिजातप्राणिबधे विशेषमाह मनुः,—

"अन्नाद्यजानां सत्वानां रसजानाञ्च सर्वशः ।
फलपुष्पोद्भवानाञ्च घृतप्राशो विशोधनं ॥"

अन्नाद्याः सक्त्वादयः रसाः गुडादयः फलानि वदर्य्यादीनि पुष्पाणि मधूकादीनि एभ्यो जातानां प्राणिनामज्ञानतो बधे घृतप्राशनपूर्वकमुपवसेदित्यर्थः । तथाच "अनस्थ्नाञ्चैव हिंसायां प्राणायामेन शुध्यति" इति मनूक्तमेतदितरवधे ज्ञेयं ।

ये पुनर्विष्णुमनुभ्यां क्रमिकीटादिघातस्य मलावहत्वमभिधाय त्यहयावकतप्तकृच्छ्रातिकृच्छ्रा उक्तास्ते च ज्ञानतोऽभ्यासविशेषतश्चबोध्याः" इति शूलपाण्यादिमतं ।

इति सास्थानस्थिबधप्रायश्चित्तविवेचनं ।

अथ वृक्षच्छेदनप्रायश्चित्तविचारः ।

यथाह तत्र यमः,—

"वृक्षलतागुल्मच्छेदने तप्तकृच्छ्रं फलवतां प्राजापत्यं, तप्तकृच्छ्रव्रतं शङ्खलिखितोक्तमष्टदिवससाध्यमत्र पुराणद्वयं, प्राजापत्यं तु द्वादशाहसाध्यं ।

यत्तु मनुवचनं,—

"फलदानाञ्च वृक्षाणां च्छेदने जप्यमृक्शतं ।
तृणवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधां ॥"

"तत्फलपरिमाणापकर्षविषयं । अर्थात् अल्पफलधारिणां वृक्षाणां-तद्विषयमित्यर्थः । अतएव यमवचने फलवतामित्यत्र मतुपातिशय उक्तः ।"

तथाच शङ्खः,—

"क्षत्रियस्तु रणे नष्टः प्रौढः प्राणपरायणः ।
सम्वत्सरं व्रतं कुर्य्याच्छित्वा वृक्षं फलप्रदं ।"

"एतदत्यन्तोत्कृष्टफलदवृक्षाणामभ्यासच्छेदने" । "नष्टः पलायितः" । प्रौढ़ः शूरः वृक्षं च्छित्वा सम्वत्सरव्रतं कुर्य्यात् ।

तथा —

नीलं वस्त्रं परीधाय भुक्त्वा स्नानार्हकस्तथा
त्रिरात्रं तु व्रतं कुर्य्याच्छित्वा गुल्मलतास्तथा ।"

"व्रतं ब्रह्महत्याया एव एतत् मह्ददपकृष्टविषयं त्रिरात्रमहाव्रतं षट्पणा देयाः" । स्थानविशेषजातानामुपजीव्यानाञ्च च्छेदने दण्डद्वैगुण्यमाह — याज्ञवल्क्यः,—

"चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षाय विश्रुते ॥
गुल्मगुच्छक्षुपलताप्रतानौषधवीरुधां ।
पूर्वस्मृतादर्द्धदण्डाः स्थानेषूक्तेषु कर्त्तने ॥
प्ररोहं शाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणाञ्च विंशतिर्द्विगुणा दमाः" ॥

"द्विगुणा विंशतिर्द्विगुणाः अर्द्धदण्डा विंशतेरर्द्धदण्डा इत्यर्थः । चैत्यः-प्रान्तरदेशस्थः विश्रुते ख्याते छिन्ने इत्यर्थः । गुल्माः कुन्दादयः, गुच्छाः शरादयः, क्षुपाः शाकोटादयः, लताः वासन्तिकादयः, पुष्पप्रधानाः फलप्रधानाः-प्रतानाः, साङ्कोटाः कुष्माण्डादयः । वीरुधः फलप्रधानाः, निरङ्कोटा जोतिष्णत्यादयः, औषधयः फलपाकान्ताः, धान्यादयः प्ररोहशाखिनां वटादीनां उपजीव्यद्रुमाणां यान् उपजीव्य लोको वर्त्तते ते उपजीव्यद्रुमाः तेषां शाखाच्छेदे-विंशतिपणाः स्कन्धच्छेदे तद्द्विगुणाः । सर्व्वच्छेदे तत्त्रिगुणाः ।"

"तदत्र दण्डवत् प्रायश्चित्तानि भवन्तीति वचनात्तद्द्विगुणादिकं यथोक्तमेव-करणीयमिति शास्त्रीयसिद्धान्तः ।"

यत्तु विष्णुपुराणवचनं,—

"छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे ।
पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति" ॥

"तन्निन्दातिशयाद्द्विगुणप्रायश्चित्तप्रतिपादनार्थं वीरुत्संस्थेऽमावास्यायामित्यर्थः । अत्र प्रायश्चित्तविशेषाश्रवणात् ब्रह्महत्यासाम्यात् यथोक्तगायत्रीजपः शतावर्त्तः करणीय इत्येके ।" कृष्याद्यर्थच्छेदने तु न दोष-इत्याह वशिष्ठः,—

"फलपुष्पोपगान् पादपान् न हन्यात् कर्षणार्थञ्चोपहन्यात् गार्हस्थ्याङ्गे च ।"

"अस्यार्थः लाङ्गलाद्यर्थं यज्ञपात्राद्यर्थञ्च वृक्षादिच्छेदने दोषाभावः । अत्र च द्रुमवत् गुल्मलतौषधादीनां हिंसेत्यनेन स्थावरहिंसायाः विष्णुना-उपपातकमध्ये पठितत्वादुपपातके च त्रैवर्णिकस्य तुल्यमेव प्रायश्चित्तं-शूद्रस्यार्द्धमुक्तं, तत्प्रायश्चित्तं चान्द्रायणात्मकं । "उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः ।" इत्यनेन विष्णुनैव चान्द्रायणस्य विहितत्वात् तदत्यन्तवेष्टितोत्कृष्टफलपुष्पोपभोगवृक्षादिच्छेदने ज्ञेयं" इति शूलपाण्यादयः ।

इति वृक्षच्छेदनप्रायश्चित्तविवेचनं ।

---

**अथ मण्डपोद्यानादिदेवागारभेदनप्रायश्चित्तविचारः ।**

यथा तत्र प्रायश्चित्तविवेके कश्यपः ;—

"वापीकूपारामसेतुसभातड़ागयज्ञवप्रदेवायतनभेदने प्रायश्चित्तं ब्राह्मणेभ्यो-निवेद्य चतस्र आज्याहुतीर्जुहुयात्। इदं विष्णुरिति प्रथमां, मामस्तोक—इति—द्वितीयां, विष्णोः कर्म्माणीति तृतीयां, पादोऽस्याश्च्यामिति चतुर्थीं,-यां देवतामुच्छादयति तस्यै देवतायै ब्राह्मणान् भोजयेत्"। अत्र वाप्यादिषु-सकृदल्पोपघाते। अभ्यासे महोपघाते च प्राजापत्यादिकमूह्यं। देवतायाम्-स्वल्पमृण्मयपूजितोज्झितदेवताप्रतिमाभेदने इतरदेवताभेदने तु यद्यपिनोक्तं-तथापि दण्डदर्शनेन कल्पनीयं। तत्र विष्णुः,—

"अभक्ष्यस्याविक्रेयस्य विक्रयी प्रतिमादेर्भेदकश्चोत्तमसाहसं दण्डनीयः। उत्तमसाहसश्च विष्णूक्त एव यथा,"—

"पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।
मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः" ॥

तथाच शङ्खलिखितौ,—

"प्रतिमारामकूपसंक्रमध्वजसेतुनिपातनभङ्गेषु तत्तत्समुत्थानं प्रतिमा-संस्कारोऽष्टशतञ्च"।

"निपातितानां समुत्थानं भग्नानां च प्रतिक्रिया"। अष्टशतपरिमाणं-दण्डश्चोभयत्रापीत्यर्थः।

तथाच मनुः,—

"संक्रमध्वजयष्टीनां प्रतिमानाञ्च भेदकः।
प्रतिकुर्य्याच्च तत्सर्व्वं पञ्च दद्याच्छतानि च" ॥

तथा कात्यायनः,—

"हरेश्छिन्द्याद्देहेष्वापि देवानां प्रतिमां यदि।
तद्गृहं चैव यो भिन्द्यात् प्राप्नुयात् पूर्व्वसाहसं"॥

अतो "दण्डवत् प्रायश्चित्तानि भवन्तीत्यभिधानात् उत्कृष्टापकृष्टप्रतिमा—भेदनानुरूपदण्डव्यवस्थया प्रायश्चित्तमूहनीयं" ।

"उभयत्र भङ्गे निपातने चेत्यर्थः । उत्कृष्टेति उत्कृष्टप्रतिमाया-अत्यन्तभेदनिपातयोरतिशयत्वे उत्तमसाहसो दण्डः । अल्पत्वेऽष्टशतदण्डः । अपकृष्टप्रतिमाया भेदनिपातयोरतिशयत्वे पञ्चशतं, अल्पत्वे सार्द्धशतद्वय-मित्यर्थः । व्यवस्थयाऽनया प्रायश्चित्तमनुष्ठेयमिति सिद्धान्तः ।" इति प्रायश्चित्त-विवेककारादीनां ।

अथाभिचारप्रायश्चित्तविचारः ।

"अभिचारः परहिंसार्थं होमजपादिकर्म्म" ।

तत्र मनुः,—

"व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म्म च ।
अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्विशुध्यति ॥"

"हीनोऽधार्म्मिकोऽहीनो धार्म्मिकः तद्विषयमित्यर्थः । त्रिभिः कृच्छ्रैः-प्राजापत्यसान्तपनातिकृच्छ्रैरित्यर्थः । अत्र व्रात्यं याजयतः प्राजापत्यं, तथा-मूल्येन परस्यान्त्येष्टिं दहनवहनादिकं कुर्व्वतः सान्तपनं । तथाभिचारतोऽति-कृच्छ्रमिति यथासंख्यं सम्बन्धः । एतत्सकृदाचरणे, अभ्यासे त्वावृत्तिः, अति-कृच्छ्रं धेनुत्रयमिति हिंसाप्रायश्चित्तमिति" शूलपाण्यादयः ।

इत्याभिचारप्रायश्चित्तविवेचनं ।

अथाभक्ष्यभक्षणप्रायश्चित्तविचारः ।

"तत्र षड्विधमभक्ष्यमुक्तं भविष्यपुराणे,"—

"जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितं ।
संसर्गाश्रयदुष्टञ्च शहृल्लेखं स्वभावतः ॥
लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।
वार्त्ताकौं नालिकाऽलावू उपेयाज्जातिदूषितं ॥

न भक्षयेत् क्रियादुष्टं यद्दुष्टं पतितैः पृथक् ।
कालदुष्टं तु विज्ञेयं ह्यस्तनं चिरसंस्थितं ॥
सुरालशुनसंस्पृष्टं पेयूषादिसमन्वितं ।
संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत् ॥
शूद्रोच्छिष्टं तु विज्ञेयं पूर्व्वं शूद्रे प्रदर्शितं ।
विचिकित्सा तु हृदये यस्मिन्नेव प्रजायते ॥
शद्दल्लेखं तु विज्ञेयं पुरीषं तु स्वभावतः ।
रसदुष्टं विकाराद्धि रसस्येति प्रदर्शितं ।
पायसक्षीरपूपादि तस्मिन्नेव दिने यथा" ॥

"उपेयाज्जानीयात् । वार्त्ताकी श्वेतवार्त्ताकी । "कुविन्दां श्वेतवार्त्ताकीं-कुष्माण्डञ्च न भक्षयेदिति देवलवचनात्" । नालिका श्वेतकलम्बी, ह्यस्तनं गत-दिवसीयं । शूद्रप्रदर्शितं स्थालीस्थमपि । कुविन्दां, घोण्टाकां, करकं, छत्राकं-कवकमिति पाठान्तरं, उभयत्रार्थः समानः । गृञ्जनं पलाण्डुभेदः पश्चिमदेश-प्रसिद्धः । पेयूषं अनिर्गतदशाहगवीदुग्धं आदिपदात् तद्दध्यादीनां ग्रहणं । तैः संसृष्टं, घोण्टाकां शृगालकोलिरिति प्रसिद्धं । शद्दल्लेखं शकृत्तुल्यमित्यर्थः ।"

"तस्मिन्नेव दिने—इति कालदूषिताङ्गेदप्रदर्शनार्थं" ।

तथा अङ्गिराः,—

"द्विविधं गर्हितं प्रोक्तं नित्यमन्नं मनीषिभिः ।
जातितो गर्हितं चैव तथैवाश्रयगर्हितं ॥"

"द्वैविध्यमिदं क्रियादोषादीनां पञ्चानामाश्रयदोष एवान्तर्भावादित्यभिप्रायेण । तत्र गर्हितत्वं संघातान्नगृहपर्य्युषितान्नशूद्रपतितापनीतशूद्र-वेश्मस्थक्षीरादि" ।

परान्नभक्षणनिन्दायां मनुः,—

"उपासते ये गृहस्थाः परपाकमबुद्धयः ।
तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनां ॥"

तथा याज्ञवल्क्यः,—

"परपाकरुचिर्नस्यादनिन्द्यामन्त्रणादृते।
दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति" ॥

यथा यमः,—

"दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति।
यो यस्यान्नमिहाश्नाति स तस्याश्नाति किल्बिषं" ॥

कालविशेषेण दोषभूयस्त्वमाह शातातपः,—

"वनस्पतिगते सोमे परान्नं येऽपि भुञ्जते।
तेषां मासकृतो होमो दातारमधिगच्छति" ॥

"वनस्पतिगते सोमे इत्यमावास्यायामित्यर्थः। होम—इति इष्टापूर्त्तोपलक्षणं"। इति शूलपाणिगोविन्दानन्दौ।

इति अभक्ष्यभक्षणप्रायश्चित्तविवेचनं।

अथ सामान्याभक्ष्यभक्षणप्रायश्चित्तविचारः।

तत्र विष्णुः;—

"अभोज्यानामपेयानामभक्ष्याणाञ्च भक्षणे।
कृच्छ्रपादं विशुद्ध्यर्थं चरेयुः चिप्रशोधनं" ॥

"अभोज्याभक्ष्ययोः पक्वापक्वरूपतया भेदः, एतदत्यन्तलघुविषयं। कृच्छ्रपादे द्वादशपणा देयाः, कृच्छ्रपादोऽत्र प्राजापत्यपादः, न तु कृच्छ्रपादव्रतं- चतुरहः साध्यमिति भावः।"

तथाच सम्वर्त्तः,—

"अभोज्यभोजनं कृत्वा ब्रह्मक्षत्रविशां गणः।
गोमूत्रयावकाहारः सप्तरात्रेण शुध्यति" ॥

"सप्तरात्रगोमूत्रयावकाहारेण धेनुपादद्वयं बोद्धव्यं। एतच्च—गुरुविषयं।

तथा बृहस्पतिः,—

"अलेह्यानामपेयानामभक्ष्याणाञ्च भक्षणे।
रेतोमूत्रपुरीषाणां शुद्धिः चान्द्रायणं चरेत्॥

"एतत् गुरुतरविषयं। सामान्यप्रायश्चित्तमिदं विशेषप्रायश्चित्तानिर्देशे-वोध्यं।" इति शूलपाण्यादयः।

इति सामान्याभक्ष्यभक्षणप्रायश्चित्तविवेचनं।

अथ विशेषाभक्ष्यभक्षणप्रायश्चित्तविचारः।

"तत्र प्रथमं शूद्रान्नभक्षणप्रायश्चित्तं निरूप्यते।

तत्र निन्दायां भविष्यपुराणं,—

"शूद्रान्नं शूद्रसम्पर्कः शूद्रेण च सहासनं।
शूद्राद्विद्यागमः कश्चित् ज्वलन्तमपि पातयेत्"॥

तथा हारीतः,—

"शूद्रान्नेन तु भुक्तेन उदरस्थेन यो मृतः।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति"॥

तथा वशिष्ठः,—

"शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति।
यस्यान्नं तस्य ते पुत्राः न स स्वर्गार्हको भवेत्"॥

तथा मनुः,—

"राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसं।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्त्तिनः"॥

इत्यभिधायाह पुनः स एव,—

"भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहं।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च"॥

"तेनाज्ञानतः सकृत् शूद्रान्नभोजने त्रिरात्रमभोजनं। तदशक्तौ चतुर्विंशतिपणलभ्यं काञ्चनादि देयं। ज्ञानतः सकृदशने प्राजापत्यं।" सकृत्-पदमिदं न निरुक्तप्रमाणोद्भावितं, अतः पदस्यास्य व्याख्याकर्त्तोद्भावितया न सर्वैरङ्गीकरणीयमेतदिति सिद्धान्तः।

परत एवमूहनीयं।

तथाच शङ्खवचनं,—

"शूद्रान्नं ब्राह्मणो भुक्त्वा तथा रङ्गावतारिणः।
चिकित्सकस्य क्रूरस्य तथा स्त्रीमृगजीविनः॥
चाण्डालान्नं भूमिपान्नमजजीविश्वजीविनां।
शौण्डिकान्नं सूतिकान्नं भुक्त्वा मासं व्रती भवेत्"॥

"व्रती यावकेन। अत्र धेनुद्वयं देयमेतदभ्यासे। आमान्नभक्षणे तूक्तप्रायश्चित्ततुरीयभागः। चाण्डालान्नभक्षणे तथा दर्शनात्।"

यथा विष्णुः,—"चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा-पराक-इति"।

आपदि पराशरः,—

"आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि।
मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत्"॥

प्रायश्चित्ते सत्यपि अनुष्ठिते न भवेच्चेन्मनस्तापस्तदा प्रायश्चित्तं निष्फलमित्यवगन्तव्यं। तदर्थं तदनुष्ठानस्य विहितत्वात्। अतः पापाचरणेन स्वतोऽप्यपि भवेन्मनस्तापस्तदा तत्र प्रायश्चित्तं सफलमिति निष्कर्षः याज्ञवल्क्यादि-सम्मतः। तत्तद्वचनं प्रदर्शितव्यं परिशेषे।

आपद्यामान्ने दोषाभावमाह मनुः,—

"नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः।
आददीताममेवास्मादवृत्तावेकरात्रकं"॥

"अश्राद्धिन इति श्राद्धभोजनानर्हत्वात् । यतोऽयमश्राद्धी अतोऽस्य पक्वान्नं न भुञ्जीतेत्यर्थः ।"

यथा ब्राह्मे,—

"राज्ञां पर्व्वणि वैश्यानामश्नीयान्मङ्गले गवां ।
वासो भूरत्नहेमान्नं सच्छूद्रस्य गृहे तथा" ॥ इति ।

अनापद्यपि तत्रादोष इत्यत्र याज्ञवल्क्यः,—

"शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्" ॥

गोपालो यस्यैव गां पालयति तस्यैव भोज्यान्न इति भर्तृयज्ञः ।

तथा देवलः,—

"स्वदासो नापितो गोपः कुम्भकारः कृषीवलः ।
ब्राह्मणैरपि भोज्यान्नाः पञ्चैते शूद्रयोनयः" ॥

तथाऽनापद्यपि भोज्यविशेषमाह सुमन्तुः,—

"गोरसञ्चैव सक्तूंश्च तैलं पिण्याकमेव च ।
अपूपान् भोजयेच्छूद्रात् यच्चान्यत् पयसा कृतं" ॥

एतानि शूद्राद्यादनिवृत्तेनैव भक्ष्याणि । इत्यत्र शूलपाण्यादिसम्मतिः ।

इति विशेषाभक्ष्यभक्षणप्रायश्चित्तविवेचनम् ।

---

अथ रजकाद्यन्त्यजान्नभक्षणप्रायश्चित्तविचारः ।

तत्रापस्तम्बः,—

"रजके चैव शैलूषे वेणुचर्म्मोपजीविनि ।
एतेषां यस्तु भुञ्जीत द्विजश्चान्द्रायणं चरेत् ॥"

ज्ञानाभ्यासविषयमेतत् । अत्र कैवर्त्तादयोऽपि ग्राह्याः ।

यथाह वौधायनः, –

"वहूनामेकधर्म्माणामेकस्यापि यदुच्यते ।
सर्व्वेषामेव तत्कुर्य्यादेकरूपा हि ते स्मृताः" ॥

तथाच यमः,—

"भुक्ता चैषां स्त्रियो गत्वा पीत्वापः प्रतिगृह्य च ।
कृच्छ्राब्दमाचरेत् ज्ञानादज्ञानादैन्दवद्वयं" ॥

कृच्छ्राब्दे त्रिंशद्देनवः । एतद्रजकादीनामष्टधा भोजनाभ्यासे ।
अथ क्षत्रियादीनां पादपादहानिः ।"

तथा संवर्त्तः,—

"अन्त्यजान्नं यदा भुंक्ते शूद्रो मोहात् कथञ्चन ।
एकरात्रोषितो भूत्वा दानं दत्त्वा विशुध्यति" ॥

उच्छिष्टाशने तूशनाः,—

"अन्त्यानां भुक्तशेषस्तु भक्षितो यैर्द्विजातिभिः ।
चान्द्रं कृच्छ्रं तदर्द्धं च क्रमात्तेषां विशोधनं" ॥

कृच्छ्रं तप्तकृच्छ्रमिदं सकृदज्ञानविषयं । इति शूलपाण्यादयः ।

इति रजकाद्यन्त्यजान्नभक्षणप्रायश्चित्तविवेचनम् ।

अथ कापालिकान्नभक्षणप्रायश्चित्तविचारः ।

तत्राङ्गिराः,—

"कापालिकान्नभोक्तृणां तन्नारीगामिनां तथा ।
ज्ञानात् कृच्छ्रार्द्धमुद्दिष्टमज्ञानादैन्दवद्वयं" ॥

अत्रापि पूर्ववत् व्यवस्था । इति प्रायश्चित्तविवेककारादयः ।

इति कापालिकान्नभक्षणप्रायश्चित्तविचारः ।

---

अथ चाण्डालाद्यन्नभक्षणप्रायश्चित्तविचारः ।

तत्राङ्गिराः

"अन्त्यावसायिनामन्नमश्नीयात् यस्तु कामतः ।
स तु चान्द्रायणं कुर्य्यात्तप्तकृच्छ्रमथापि वा ॥
चाण्डालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥"

कामतः सकृद्भोजने चान्द्रायणं तत्राष्टौ धेनवः । अकामतस्तप्तकृच्छ्रं अत्र धेनुचतुष्टयं । अत्र चान्द्रायणं चतुरभ्यासे द्विरभ्यस्ते तप्तकृच्छ्रमिति- धर्म्मदीपव्याख्यानम् ।"

तथा पतिताद्यन्नभोजने प्रायश्चित्तविशेषः, तत्र बृहस्पतिः,—

"पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च ।
मासोपवासं कुर्व्वीत चान्द्रायणमथापि वा ।"

चान्द्रायणमिदमज्ञानाभ्यासे ज्ञानाभ्यासे मासोपवासः । चान्द्रायणे सार्द्ध- सप्तधेनवः, मासोपवासे पञ्चदशधेनवः । एतेन ज्ञानतः सकृद्भोजने चान्द्रा- यणमेवावतिष्ठते । अर्थात् अज्ञानकृतद्वैगुण्यं ज्ञानकृतेऽतोऽज्ञानाभ्याससकृद्- ज्ञानकृतयोस्तुल्यत्वमिति भावः ।

तथा वशिष्ठः,—

एतदेव चाण्डालपतितान्नभोजनेषु, ततः पुनरुपनयनं । एतच्चोपनयनं चान्द्रायणसमं । एतदपि ज्ञानाभ्यासविषयं । कृच्छ्रार्द्धपादे सार्द्धसप्तधेनवः । पुनरुपनयनेनास्य किञ्चिद्गुरुत्वात् द्विरभ्यास इति भावः ।" इति शूलपाणिमतं न समीचीनं, वचने तु द्विरभ्यासोक्त्यादर्शनात् । अतएव- बहुवाराभ्यासविषयकमेतद्वचनमिति परामर्शः ।

आमान्नभक्षणे तूशनाः,—

"पतिताद्द्रव्यमादाय भुक्त्वा च ब्राह्मणः क्वचित् ।
कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं चरेद् द्विजः ॥"

"एतद्ज्ञानाभ्यासे, अज्ञानाभ्यासे चार्द्ध, अतिकृच्छ्रे धेनुत्रयं।" समुत्सर्ग-वमनम् ।

तथा सुमन्तुः,—

"अभिशस्तपतितपौनर्भवभ्रूणघ्न-पुंश्चल्यशुचि-शस्त्रकार-तैलिक-चाक्रिक-ध्वजिक-सुवर्णकारालेख्यकषण्डतन्तुवायकबन्धकगणगणिकान्नानि-चाभोज्यानि-शौकरिकव्याधनिषादरजकवरुडकैवर्त्तचर्म्मकारा अभोज्यान्ना-अप्रतिग्राह्याश्च-तदन्नाशनप्रतिग्रहयोश्चान्द्रायणं चरेत्"। एतद् ज्ञानाभ्यासे, अज्ञाना-भ्यासे तदर्द्धं। वरुड़: काष्ठभूरादिभेद:। इति शूलपाणि:। अशुचिरशौचं। आलेख्यकश्चित्रकर:। कबन्धक: वणिग्भेद:। शौकरिक: शूकरपोषणेन यो-जीवति स:। निषाद: पारशवो मनूक्त:। वरुड़: कोठरा: इति प्रसिद्ध:। इतिशूलपाण्यादय:।

इति चाण्डालाद्यन्नभक्षणप्रायश्चित्तविवेचनं ।

---

अथ चण्डालपतितस्पृष्टान्नभक्षणप्रायश्चित्तविचार: ।

तत्र यथा प्रायश्चित्तविवेके शङ्ख:, —

"अमेध्यचाण्डालपतितपुक्कसरजस्वलावधूतकुणिकुष्ठिस्पृष्टानि भुक्त्वा कृच्छ्रं-चरेत्।" अमेध्यं मद्यभाण्डादि। पुक्कस: क्षत्रियायां शूद्राज्जात:। स्वभावत:-पाणिविकल: कुणि:, कृच्छ्रं प्राजापत्यं तदशक्तौ धेनुरेका, एतद् ज्ञानत:-कुष्ठ्यादिष्वभ्यासे ज्ञेयं"।

तथा ब्रह्मपुराणं,—

"चाण्डाल-पतितामेध्यै: कुनखै: कुष्ठिना तथा।
उदक्या-सूतिकास्पृष्टं भुंक्त्वा मासं वने वसेत्"॥

"चतुर्विंशतिदिनसाध्यमहाव्रतस्य प्राजापत्यतुल्यता, ततश्चेतिकर्त्तव्यता-शून्यमासवनवासप्राजापत्ययो: साम्यमेव एतत् सकृदशने, अभ्यासेत्वाहत्तिरूह-नीयाज्ञानतश्च रजकादीनान्तु चाण्डालान्नभक्षणप्रायश्चित्तादर्द्धं प्रायश्चित्त-

मापस्तम्बादिवचनात्। तदनुसारेण रजकादिसृष्टान्नभक्षणे धेनोर्दानमज्ञाने, ज्ञानतश्च धेनुरेकैव। इति प्रायश्चित्तविवेककारादयः।

इति चाण्डालपतितसृष्टान्नभक्षणप्रायश्चित्तविवेचनं।

---

अथ पतितस्पर्शेऽकृतस्नानस्य भोजने प्रायश्चित्तविचारः।

तत्र पैठीनसिः,—

"महापातकिसंस्पर्शे स्नानमेव विधीयते।
संस्पृष्टस्तु यदा भुंक्ते तप्तकृच्छ्रं तदा चरेत्"॥

"एतद्वचनं रजकान्त्यजस्पर्शविषयं"।

तथा,—

"स्नानार्हस्तु यदा स्नानमकृत्वाऽश्नाति वै द्विजः।
अहोरात्रोषितः स्नातः पञ्चगव्येन शुध्यति"॥

"तप्तकृच्छ्रं पापलाघवाच्चतुरहःसाध्यं याज्ञवल्क्योक्तं ग्राह्यं, तदशक्तौ-सपादधेनुमूल्यं दातव्यं, एतद्ज्ञानतोऽज्ञानतस्तदर्द्धमत्यन्ताभ्यासे तु-चान्द्रायणेन चैकेन सर्वपापक्षयो भवेदिति चान्द्रायणं कुर्यात्। गार्ग्य-ब्रह्मपुराणादिषु साहचर्यदर्शनाच्चाण्डालादिस्पर्शेऽप्येतद्वेदितव्यं। इति-शूलपाण्यादयः।

पतितस्पर्शेऽकृतस्नानस्य भोजने प्रायश्चित्तविवेचनं।

अथ गवादिमांसभक्षणप्रायश्चित्तविचारः।

तत्र सुमन्तुः,—

"गोमांसभक्षणे प्राजापत्यं चरेत्।"

इदमज्ञानतः सकृद्भक्षणविषयं। एतत् प्रायश्चित्तान्ते पुनरुपनयनमाह,—विष्णुः,—"ग्रामकुक्कुटनरगोमांसभक्षणे च सर्वेष्वेव द्विजातीनां प्रायश्चित्तान्ते पुनः संस्कारं कुर्य्यादिति"।

तथा पराशरः,—

"अगम्यागमने चैव मद्यगोमांसभक्षणे ।
शुद्ध्यै चान्द्रायणं कुर्य्यान्नदीं गत्वा समुद्रगाम् ॥
चान्द्रायणे ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम् ।
अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्" ॥

इदं ज्ञानतोऽभ्यासे ।

तथा शङ्खः,—

"गामश्वं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखं तथा ।
क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरं व्रतम्" ॥

एतच्चिरकालाभ्यासे सम्वत्सरब्रह्महत्याव्रतं पञ्चदशधेनवः पुनरुपनयनञ्च ।

यथा विष्णुः,—"विड्वराहग्राम्यकुक्कुटनरगोमांसभक्षणे सर्वेष्वेव द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात्" ।

तथा हंसादीनां मांसभक्षणे प्रायश्चित्तमाह ।

शङ्खः,—

"हंसं मद्गुञ्च काकोलं काकं वा खञ्जरीटकम् ।
मत्स्यादांश्च तथा मत्स्यान् वलाकांशुकशारिके ॥
चक्रवाकं प्लवं कोलं मण्डूकं भुजगं तथा ।
मासमेतद्-व्रतं कुर्य्यात् भूयश्च तन्न भक्षयेत्" ॥

"एतत्तु कामतोऽभ्यासापेक्षं, मासयावकव्रतं धेनुद्वयं, अकामतोऽभ्यासेचाहं । तथा ज्ञानतः सकृदशने विष्णुः,—

"कलविङ्कहंसमद्गुचक्रवाकरज्जुवालसारसदात्यूहशुकसारिभासवलाकाकोकिलखञ्जरीटाशने त्रिरात्रमुपवसेत्" ।

मद्गुः जलचरपक्षिविशेषः, काकोलः द्रोणकाकः, मत्स्यादः श्येनादिः, प्लवः-पक्षिभेदः, कोलो ग्राम्यशूकरः, कलविङ्कः चटकः, रज्जुवालः, दीर्घपुच्छभेदः,

भासो वनकुक्कुटः, गृध्र इति केचित्। तथा चतुर्दश्यादितिथिषु मांस-भक्षणनिषेधे—

विष्णुपुराणम्,—

"चतुर्द्दश्यष्टमी चैव अमावस्याथ पूर्णिमा।
पर्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव च॥
स्त्रीतैलमांससम्भोगी पर्वस्वेतेषु वै पुमान्।
विण्मूत्रप्राशनं नाम प्रयाति नरकं मृतः॥
अशेष पर्वस्वेतेषु तस्मात् संयमिभिर्नरैः।
भाव्यं सच्छास्त्रवेदेज्याध्यानजप्य परैः सदा"॥

तत्र भाव्यं अवश्यं भावनीयमित्यर्थः।

तथा दक्षः,—

"षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्दशी।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे"॥

तथा,—

"षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितं तथा।
क्षुरकर्म चतुर्दश्यां तथा पर्वणि मैथुनम्"॥

'एतच्च स्नातकविषयम्'।

अतएव पर्वमैथुनविषये मनुः,—

"अमावस्याष्टमी चैव पौर्णमासी चतुर्दशी।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः"॥

अत्र प्रायश्चित्ते मनुः,—

"वेदोदितानां नित्यानां कर्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्"॥

अभ्यासे तु प्राजापत्यं चान्द्रायणं वा इति आपस्तम्बवचनात् । इति-शूलपाणिरघुनन्दनादयः ।

इति गवादिमांसभक्षणप्रायश्चित्तविवेचनम् ।

अथ लशुनादिभक्षणप्रायश्चित्तविचारः ।

तत्र याज्ञवल्क्यः,—

"पलाण्डुं विड्वराहञ्च छत्राकं ग्राम्यकुक्कुटम् ।
लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत्" ॥

एतज्ज्ञानतः सकृत् । अत्र च पुनरुपनयनं कार्य्यमित्यत्र ।

विष्णुः,—"मलानां मद्यानां वाऽन्यतमस्य प्राशने चान्द्रायणं कुर्य्यात्" । लशुनपलाण्डुगृञ्जनतद्गन्धिविड्वराहग्राम्यकुक्कुटगोमांसभक्षणे च सर्वेष्वेतेषु-च द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात् ।

अज्ञानादाह यमः,—

"पलाण्डुं कवकञ्चैव गृञ्जनं लशुनं तथा ।
चत्वार्य्यज्ञानतो जग्ध्वा तप्तकृच्छ्रं चरेद्द्विजः" ॥

विशेषोऽत्र प्रायश्चित्तमनोहरे । यथा—"तप्तकृच्छ्रे धेनुद्वयं इदमकाम-विषयं । कामकृतविषयमाह स एव,—

"छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
गृञ्जनं कवकं भुक्त्वा द्विजश्चान्द्रायणं चरेत्" ॥

तथा मनुः,—

"छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः" ॥

पतेदिति पतितप्रायश्चित्तं कर्त्तव्यं । एतत् बुद्धिपूर्वकाभ्यासविषयम् । अबुद्धिपूर्वकाभ्यासविषये बुद्धिपूर्वकसकृद्विषये च स एवाह, —

"अमत्या तान् सकृत्जग्ध्वा कृच्छ्रं सान्तपनं चरेत्" ।

तथा सुमन्तुः,—

"लशुनगृञ्जनपलाण्डुभक्षणे गायत्र्यष्टसहस्रेण मूर्द्ध्नि सम्यक्नयेदिति-मस्तके जलविन्दून्नयेदित्यर्थः" । अत्रैव हारीतः,—

"पलाण्डुलशुन-गृञ्जन-छत्राककुम्भाण्डप्राशने च चान्द्रायणेऽष्टौ धेनवः । तप्तकृच्छ्रे पादोनधेनुचतुष्टयं" ।

एतत्—सदृशेऽपि प्रायश्चित्तमाह देवलः,—

"पलाण्डुसदृशं यस्मात् गन्धवर्णरसादिभिः ।
अभोज्यं तत् भवेत् सर्व्वं भुक्त्वा चान्द्रायणं चरेत ॥
लशुनादिषु ये तुल्या गन्धवर्णरसादिभिः ।
अभक्ष्यास्ते द्विजातीनां भुक्त्वा सान्तपनं चरेत्" ॥

अत्र चान्द्रायणं पूर्व्वोक्तविषयमेव । धेनुद्वयसंकलितसान्तपनन्तु ज्ञानतोऽशक्तस्य" ।

तथा सूतकमृतकान्नभक्षणे प्रदर्शयति प्रायश्चित्तं पराशरः,—

"अज्ञानात् भुञ्जते विप्राः सूतके मृतकेऽपि वा ।
प्रायश्चित्तं कथं तत्र चातुर्वर्ण्ये विधीयते ॥
गायत्र्यष्टसहस्रेण शुद्धिः स्याच्छूद्रसूतके ।
विशः पञ्चशतेनैव क्षत्रियस्य शतेन च ॥
ब्राह्मणस्य यदा भुंक्ते प्राणायामेन शुध्यति ।
अथवा वामदेव्येन साम्नैव तेन शुध्यति" ॥

एतच्चापुत्वादापन्नस्य सकृदज्ञानतः । अष्टसहस्रं अष्टोत्तरसहस्रम् ।

तथा ब्रह्मपुराणे—

"मृतके सूतके चाथ ग्रस्तयोश्चन्द्रसूर्य्ययोः ।
छायायां कुञ्जरस्याथ भुक्त्वा तु नरकं व्रजेत्" ॥

"भुक्त्वा प्रमादात् विप्रस्तु सम्यक् चान्द्रायणं चरेत्"। दानपक्षे धेनुचतुष्टयं चान्द्रायणे। इति प्रायश्चित्तविवेककारादयः।

इति लशुनादिभक्षणप्रायश्चित्तविवेचनं।

---

अथ हस्तदत्तशूद्रादत्तघृतादिभक्षणप्रायश्चित्तविचारः।

तत्र निन्दायां वशिष्ठः,—

"हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च।
दातारं नोपतिष्ठन्ते भोक्ता भुंक्ते च किल्विषं॥
तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा।
प्रदद्यान्न तु हस्तेन नायसेन कदाचन॥
आयसेन तु पात्रेण यदन्नन्तु प्रदीयते।
भोक्ता विष्ठासमं भुंक्ते दाता तु नरकं व्रजेत्"॥

तथा पराशरः,—

"माक्षिकं गोरसं स्नेहं लवणं घृतमेव च।
हस्तदत्तानि भोक्ता चेद्दिनमेकमभोजनम्"॥

तथा प्रायश्चित्ते यमः,—

"माक्षिकं फाणितं शाकं गोरसं लवणं घृतम्।
हस्तदत्तानि भुक्त्वा तु भोक्ता सान्तपनं चरेत्"॥

सान्तपनञ्च द्वादशमाध्यं अनेकपुराणं देयं एतत् ज्ञानतोऽज्ञानतोऽर्द्धं- एतच्छूद्रादत्तेऽपि ब्रह्मपुराणे साहचर्य्यदर्शनात्।

तथा शूद्रहस्तदत्तभोजनप्रायश्चित्ते वृद्धयाज्ञवल्क्यः,—

"ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्।
उभये ते अभोज्यान्ने भुंक्त्वा चान्द्रायणं चरेत्"॥

तथा क्रतुः,—

"शूद्रहस्तेन यो भुंक्ते पानीयन्तु पिवेद्द्विजः ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति" ॥

अपिधानाकृतापोशानाकृतमौनभोजनप्रायश्चित्ते—संवर्त्तः,—

"आपोशानमकृत्वा तु यो भुंक्ते नापदि द्विजः ।
भुञ्जानश्च यदा ब्रूयात् गायत्र्यष्टशतं जपेत्" ॥

आपोशानं प्रथमगण्डूषजलपानं, अष्टशतं अष्टोत्तरशतं । तथाऽनाचान्तस्य पानभोजनप्रायश्चित्ते,—

सम्वर्त्तः,—

"अनाचान्तः पिवेद्-यस्तु भक्षयेद्वापि किञ्चन ।
गायत्र्यष्टसहस्रं तु जप्यं कृत्वा विशुद्ध्यति ॥
आचामेच्चर्वणे नित्यं मुक्ता ताम्बूलचर्व्वणम् ।
ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥
दन्तलग्ने फले मूले भुक्तस्नेहे तथैव च ।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः" ॥

तथा लघुहारीतवचनं,—

"कषायकटुताम्बूले भुक्तस्नेहानुलेपने ।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत्" ॥

अनाचान्तः कषायकटुताम्बूलेक्षुव्यतिरिक्तं द्रव्यं सकृद्भक्षयित्वा दुग्ध-मधुनारिकेलजलादिकञ्च सकृत्-पीत्वा अष्टोत्तरसहस्रसङ्ख्यां गायत्रीं जपेत् । अभ्यासे त्वेवं द्विगुणादि । अर्थात् अनाचान्तः अकृतद्विराचमनं । "भुक्त्वाचामस्तु-प्रयतोऽपि द्विराचामेदिति वशिष्ठवचनात्" । तथाऽऽचामेदित्यत्र आचमनं-द्विराचमनं । "द्विराचामेद्वासः परिधाय ओष्ठौ च संस्पृश्य यत्रालोमकाविति" वशिष्ठवचनात् ।

तथोपवीतच्छेदनप्रायश्चित्ते कामरूपीयनिबन्धे स्मृतिसागरे आपस्तम्बः,—

"ब्राह्मणेन यदा दैवात् छिन्नं यज्ञोपवीतकं ।
मनस्तापेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः" ॥

"प्राणायामत्रयं कृत्वा निराहारः क्षिपेद्दिनं" ।

वृहन्मनुः,—

"उपवीतं ब्राह्मणस्य च्छिन्नं शूद्रेण कामतः ।
अन्यदादाय मन्त्रेण जपन्नुपवसेद्दिनम्" ॥

अनादेशे गायत्रीमिति वचनात् । अनादिष्टे शतमिति वचनाच्छतावृत्ति गायत्रीजपं कृत्वा उपवसेत् । तथा ऋष्यशृङ्गः,—

"चाण्डालैः स्वपचैर्वापि छिन्नं यज्ञोपवीतकम् ।
मुनिभिस्तु विनिर्द्दिष्टं महाशान्तपनद्वयम्" ॥

तथा वृहस्पतिः,—

"शूद्रेण तु यदा छिन्नमुपवीतं द्विजन्मनः ।
दण्डे त्रिंशत्-पणं दत्त्वा प्राजापत्येन शुद्ध्यति" ॥

प्राजापत्यं धेनुदानसमं तत्तुल्यं कार्षापणत्रयं ।

तथा हारीतः,—

"चाण्डालपुक्कशम्लेच्छान्त्यजकापालिकैस्तथा ।
छिन्नयज्ञोपवीतो यः सोऽतिकृच्छ्रेण शुद्ध्यति" ॥

अतिकृच्छ्रे द्वे धेनू । तथा यज्ञोपवीतरहितस्य भोजन—

प्रायश्चित्ते लघुहारीतः,—

"विना यज्ञोपवीतेन भुंक्ते च ब्राह्मणो यदि ।
स्नानं कृत्वा जपं कृत्वा उपवासेन शुद्ध्यति" ॥

"अज्ञानादेशे गायत्रीति वचनादनिर्दिष्टे व्रतमिति वचनाच्च व्रतावृत्ति गायत्रीजपं कृत्वोपवसेत् । स्नानं भोजनोत्तरमेव जपोपवासौ च परे-ऽहनीत्यर्थः ।

अन्यच्च यथा रेतोमूत्रपुरीषभक्षणप्रायश्चित्ते बृहस्पतिः ।

"अलेह्यानामपेयानामभक्ष्याणाञ्च भक्षणे ।
रेतोमूत्रपुरीषाणां शुद्धैः चान्द्रायणं चरेत्" ॥

तथा याज्ञवल्क्यः,—

"अज्ञानात्तु सुरां पीत्वा रेतो विण्मूत्रमेव च ।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः" ॥

सुरां मुख्येतरां । गौडीं माध्वीं च । तथा च गौतमः,—

"अमत्यपाने पयोघृतमुदकं वायुं त्र्यहं । प्रत्यहानि पिबेत् स-तप्तकृच्छ्रः ततः पुनः संस्कारः । मूत्रपुरीषरेतसां प्राशने चैवं । अत्र-चान्द्रायणतप्तकृच्छ्रयोर्ज्ञानाज्ञानाभ्यां व्यवस्था संस्कारस्तूभयत्रैव ।

चान्द्रायणे धेन्वष्टकम् । तथा मन्वन्तः,—

"विण्मूत्रभक्षणे विप्रः प्राजापत्यं समाचरेत्" ।

एतद्बलात्कारविषयं एवं च अमत्या क्षपणं त्र्यहं ।

"मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो विण्मूत्रमेव च" ।

इति मनुक्तमप्येतत्समानविषयं । तथा विण्मूत्रदूषितफलादौ-प्रायश्चित्तमाह—

लघुविष्णुः,—

"मृद्वारिकुसुमादींश्च फलकन्देसुमूलकान् ।
विण्मूत्रदूषितान् प्राश्याचरेत् कृच्छ्रञ्च पादतः ।
सन्निकृष्टेऽर्द्धमेव स्यात् कृच्छ्रं स्याद्य विशोधनम्" ॥

दूषितत्वं संसर्गमात्रं, सन्निकृष्टत्वं तु महान् संसर्गः,' तेन लघुगुरुप्रायश्चित्तं

एतच्च रसास्वादानुपलम्भपक्षेऽज्ञानतः सकृद्विषयं। ज्ञानतो द्वैगुण्यं। तथा रसाद्युपलम्भे तु कामतो व्यासः,—

"संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः।
भुक्त्वा स्वभावदुष्टञ्च तप्तकृच्छ्रं समाचरेत्"॥

तप्तकृच्छ्रं गौतमोक्तं द्वादशाहसाध्यं। तेन पादोनधेनुचतुष्टयं दातव्यं। अज्ञानत उपलम्भेऽर्द्धं।

तथा मृल्लोष्ट्र-भक्षणप्रायश्चित्ते भविष्यपुराणं,—

यथा—

"अङ्गुल्या दन्तकाष्ठञ्च प्रत्यक्षलवणं तथा।
मृत्तिका-भक्षणञ्चैव तुल्यं गोमांस-भक्षणम्"॥

प्रत्यक्षलवणं चात्र क्षारलवणं

"सैन्धवं लवणञ्चैव यच्च सामुद्रिकं भवेत्।
पवित्रे परमे ह्येते प्रत्यक्षेऽपि च नित्यशः"॥

इति वायुपुराणवचनात्।

अतएव,—

"भुक्त्वा तु क्षारलवणं त्रिरात्रं तु वने वसेत्"।

इति ब्रह्मपुराणोक्तं। प्रायश्चित्ते चात्र प्रचेताः,—मृल्लोष्ट्रखादनेऽहोरात्र-मभोजनाच्छुचिः। एतत् सकृत्।

यत्तूशनसोक्तं मृल्लोष्ट्रप्राशने तप्तकृच्छ्रं। तच्चिराभ्यासे तप्तकृच्छ्रंचतुरह-साध्यः। तत्र सपादधेनुः। इति शूलपाण्यादयः।

इति हस्तदत्तशूद्रादत्तघृतादिभक्षणप्रायश्चित्तविवेचनं।

अथास्थ्यादिदूषितान्नादिभोजनप्रभृतिप्रायश्चित्तविचारः। तथा ब्रह्मपुराणे,—

"अस्थ्यादि दूषितञ्चान्नं भुञ्जानस्य यदा भवेत्।
स्नात्वार्कमर्चयित्वा तु घृतं प्राश्य विशुद्ध्यति"॥

"अस्थिशब्दोऽत्राभक्ष्यास्थिमात्रवचनः ।" अतएव हारीतः,—

"मत्स्यकण्टकशम्बूकशङ्खशुक्तिकपर्दकान् ।
पीत्वा नवोदकञ्चैव पञ्चगव्येन शुद्ध्यति" ॥

घृतप्राशनरूपव्रतं तेन घृतं प्राश्योपवसेत् ।" तथा हारीतः —"कृमिकीटपिपीलिकाजलौकःपतङ्गास्थिप्राशने गोमूत्रगोमयाहारस्त्रिरात्रेण प्रयतो भवेत् । एतज्ज्ञानाभ्यासे अस्य च पावनार्थं प्राशनमात्रात् त्रिरात्रोपवाससमं सार्द्धपुराणमेव देयं ।"

तथा पराशरः,—

"अस्थिकण्टकशम्बूकशङ्खशुक्तिकपर्दकान् ।
पीत्वा नवाम्बु चापोष्य पञ्चगव्येन शुध्यति" ॥

नवाम्बु दशाहादर्वाग्वर्त्ति । तथा

"मत्स्यकण्टकशम्बूकशङ्खशुक्तिकपर्दकान् ।
मुखे प्राप्ते त्वहोरात्रं पाते स्नानं विधीयते" ॥
केशकीटावपन्नञ्च नीलीकाष्ठोपदूषितं ।
स्नाय्वस्थि-चर्म्मसंस्पृष्टं भुक्त्वा तूपवसेदहः" ॥

तथा देवलः,—

"विशुद्धमपि चाहारं मक्षिकाकृमिजन्तुभिः ।
केशलोमनखैर्वापि दूषितं परिवर्ज्जयेत् ॥
दूषितं केशकीटैश्च मार्ज्जारैर्मूषिकैस्तथा ।
मक्षिकामशकैश्चैव त्रिरात्रं तु व्रती भवेत्" ॥

कामकृतविषयमेतत् । तथा सुमन्तुः,—"नखरोमरुधिरप्राशने कुशत्रिरात्रोदकप्राशनं । इदं च विहितमकामकृतानभ्यासवतां" । इति ।

तथा भोजनकाले गुदस्रावप्रायश्चित्ते आपस्तम्बः,—

"रेतो-मूत्र-पुरीषाणामुत्सर्गश्चेत्-प्रमादतः ।
तत्रादौ च प्रकर्त्तव्या तेन शुद्धिर्मृदम्बुभिः" ॥

एतदप्य-निगीर्णग्रासे ।—

तथापस्तम्बः,—

"भुञ्जानस्य तु विप्रस्य कदाचित् स्रवते गुदं ।
उच्छिष्टमशुचित्वं च प्रायश्चित्तं कथं भवेत् ॥
आदौ कृत्वा तु शौचं वै ततः पश्चादुपस्पृशेत् ।
अहो-रात्रो-षितो भूत्वा पञ्चगव्येन शुध्यति" ॥

उपस्पृशेदाचामेत् ।—उच्छिष्टमिति भावे क्तः उच्छिष्टत्वमित्यर्थः ।

तथा वृद्धशातातपः,—

"निगिरन् यदि मेहेत भुक्ते वा मेहने कृते ।
अहोरात्रो-षितो भूत्वा जुहुयात् सर्पिषाहुतीः" ॥

एतदुभयं सकृन्निगीर्ण-ग्रासे । उपस्पृशेत् स्नायात् उपवसेदपरदिने सङ्कल्पं-कृत्वेत्यर्थः ।"

अभ्यस्तग्रासाशने वृद्धशातातपः,—

"मूत्रोच्चारसमुत्सर्गं मोहाद्भुंक्तेऽथवा पिबेत् ।
त्रिरात्रं तत्र कुर्वीत इति शातातपोऽब्रवीत्" ॥

तथा भोजनकाले समुपस्थितसूतकाद्यशौचे प्रायश्चित्तमाह वृद्धशातातपः,—

"यदा भोजनकाले तु अशुचि-र्भवति द्विजः ।
भूमौ निक्षिप्य तद्ग्रासं स्नात्वा विप्रो विशुद्ध्यति ॥
भक्षयित्वा तु तद्ग्रासमहोरात्रेण शुद्ध्यति ।
अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुद्ध्यति" ॥

"अशुचिः सूतकादिनेत्यर्थः,—" । तथा परिहितनीलीवस्त्रस्य भोजने—प्रायश्चित्तमाह शङ्खः,— '

"नीलीवस्त्रं परिधाय भुक्त्वा स्नानार्हकस्तथा।
त्रिरात्रं तु व्रतं कुर्य्याच्छित्त्वा गुल्मलतां तथा"॥

इदमज्ञानतो, ज्ञानतस्तु द्विगुणं। स्नानार्हकः तैलाभ्यङ्गादिनिमित्तेन-स्नानार्हः अकृतस्नान इत्यर्थः।"

तथा स्वकीयोच्छिष्टप्राशने प्रायश्चित्तमाह-शातातपः,—

"उच्छिष्टमगुरोरभोज्यं स्वयमुच्छिष्टोपहतञ्च"।

गुरुः पित्रादिः। अतएव ब्रह्मपुराणे,—

"माता-पितृभ्यां संभुक्तं शेषं वा ब्रह्मचारिणा"।

भोक्तव्यमिति शेषः।

तथापस्तम्बः।—पितुर्ज्येष्ठस्य तु भ्रातुरुच्छिष्टं भोज्यं। स्वोच्छिष्ट-भोजने प्रायश्चित्तं। प्रायश्चित्तं विष्णुवचनात्,—कृच्छ्रपादः।

यथा—

"अभोज्यानामपेयानामभक्ष्याणाञ्च भक्षणे।
कृच्छ्रपादं विशुद्ध्यर्थं चरेयुः क्षिप्र-शोधनम्"॥

"एतदज्ञानतः सकृत्। अभ्यासेतु द्विगुणादिकमूहनीयं।"

तथाऽत्रापवादमाहाङ्गिराः,—

"ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कथञ्चन।
न तत्र दोषं मन्यन्ते नित्यमेव मनीषिणः"॥

विवाहपरमेतत्।

तथा हृद्व्यासः,—

"माता वा भगिनी वाथ भार्य्या वा प्रवसूयोषितः।
न ताभिः सह भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्"॥

माता विमाता।

तथा ब्रह्मपुराणं,—

"ब्राह्मण्या हि तथा सार्द्धं क्वचित् भुञ्जीत चाध्वनि।
अधो-वर्णस्त्रिया सार्द्धं भुक्त्वा पतति तत्क्षणात्"॥

तथा कुत्सितपंक्तिभोजने प्रायश्चित्तमाहाङ्गिराः,—

"यस्तु पंक्तिषु भुञ्जीत कुत्सितासु विशेषतः।
अहोरात्रोषितः स्नात्वा पंचगव्येन शुद्ध्यति"॥

"निन्दितब्राह्मणाद्युपवेशनेन कुत्सितासु जलादिना पंक्तिभेदमन्तरेणाज्ञानकृतविषयमिदं। ब्राह्मणः क्षत्रियपंक्त्यां तूपविश्या-संस्पृशन् यदा भुंक्ते-तदा नक्तमाचरेत्। वैश्यपंक्त्यामेकरात्रं। शूद्रपंक्त्यां द्वादशमाचरेदिति विष्णुपुराणात्। अत्रासंस्पृशन्नित्यस्य सर्व्वत्र सम्बन्धः।

तथा ब्रह्मपुराणं,—

"एकपंक्तिनिविष्टानां दुष्कृतं यद्दुरात्मनाम्।
सर्वेषां तत्समं तावत्-यावत्-पंक्तिर्न भिद्यते"॥
"भस्मस्तम्भजलद्वारमार्गैः पंक्तिञ्च भेदयेत्"।

अज्ञानकृतविषयमिति, ज्ञाने तु द्वैगुण्यं। असंस्पृशन् जलादिना पंक्तिभेदनेन संसर्गमकुर्व्वन्नित्यर्थः।"

अनिन्दित-पंक्तिष्वपि सहभोजने एकस्योत्थानेऽप्यश्नतां प्रायश्चित्तमाह—शङ्खः,—

"एक-पंक्त्युपविष्टानां विप्राणां सहभोजने।
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत्"॥
"मोहाद्भुञ्जीत यः पंक्त्यामुच्छिष्टं सहभोजनं।
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं शान्तपनं तथा"॥

"सान्तपनं द्व्यहसाध्यम्। अत्र पुराणैकं देयमज्ञानतः सकृत्।"

तथा चाण्डालकूपभाण्डोदकपानप्रायश्चित्ते आपस्तम्बः,—

"चाण्डालकूपभाण्डेषु यस्त्वज्ञानाज्जलं पिबेत्।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते॥
चरेत्सान्तपनं विप्रः प्राजापत्यं तु भूमिपः।
तदर्द्धं तु चरेद्वैश्यः पादं शूद्रस्य निर्दिशेत्"॥

"सान्तपने धेनुद्वयमिदमभ्यासतः"।

अनभ्यासे तु देवलः।,—

चाण्डालकूपभाण्डेषु यस्त्व-ज्ञानाज्जलं पिबेत्।
स तु त्र्यहेण शुद्ध्येत शूद्रस्त्वे-केन शुद्ध्यति"॥

तथाऽन्यखानितचाण्डालपरिगृहीतकूपादावङ्गिराः,—

"चाण्डालपरिगृहीतं यो ह्यज्ञानादुदकं पिबेत्।
तस्य शुद्धिं विजानीयात्-प्राजापत्येन नित्यशः"॥

एतदभ्यासे। आपदि त्वापस्तम्बः,—

"श्वपाकचाण्डालपरिग्रहेषु पीत्वा जलं शुद्ध्यति पञ्चगव्यैः"॥

पञ्चगव्यपानं पूर्व्वद्युरुपोष्येत्यर्थः।

तथापस्तम्बः,—

'अन्त्यजैः खानिताः कूपास्तड़ागानि तथैव च।
एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुध्यति"॥

"पञ्चगव्यपानमुपवासपूर्वं व्रतरूपत्वात्, एतदज्ञानतः, ज्ञानतो द्वैगुण्यं"।

यत्तु वृहच्छातातपवचनं,—

"अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते"॥

इति तदत्यन्तापद्विषयं।

तथा विण्मूत्रसंसृष्टकूपजलपाने प्रायश्चित्तमाहाङ्गिराः,—

"कूपे विण्मूत्रसंस्पृष्टे पीत्वा तोयं द्विजोत्तमः ।
त्रिरात्रेण विशुद्धेत्तु कुम्भे सान्तपनं स्मृतम्" ॥

तत्र धेनुद्वयं । स्नाने तु लघुविष्णुः,—

"आपो मूत्रपुरीषाद्यैर्दूषिताः प्राशयेद्-यदि ।
तदा सान्तपनं प्रोक्तं व्रतं कायविशुद्धये" ॥

"एतत् कूपादिस्वल्पजलाशये रसाद्यनुपलब्धौ कुम्भे त्वेतदेव द्विगुण-मुक्तहेतोः" ।

विष्णुः,—

"जलाशयेष्वथाल्पेषु स्थावरेषु महीतले ।
कूपवत्-कथिता शुद्धिर्महत्सु च न दूषणम्" ॥

अल्पेषु जलाशयेषु पल्वलवाप्यादिषु स्थावरेषु स्थिरेषु नत्वल्पेष्वपि स्रोतो-जलेष्वित्यर्थः ।

अतएव हारीतः,—

"अक्षोभ्यानामपां नास्ति प्रस्रुतानाञ्च दूषणम् ।
स्तोकानामुद्धृतानाञ्च दोषैर्दुष्टत्वमिष्यते ॥

प्रस्रुतानां स्रोतोजलानामित्यर्थः । महत्स्वप्यशुचिसंसर्गशङ्कया तीर्थ-समीपे तोयग्रहणवर्जनमाह देवलः,—

"तत्राक्षोभ्यतड़ागानि नदी वापी सरांसि च ।
कश्मलाशुचियुक्तानि तीर्थतः परिवर्जयेत्" ॥

महाजलाशयस्यापि तीर्थप्रदेशे विण्मूत्रसंसर्गश्चेत् तदा तज्जलमपि-वर्ज्जयेदित्याह । महत्स्वप्यशुचिसंसर्गशङ्कयेति । तीर्थमवतरणप्रदेशः ।

तथा शवदूषितकूपजलपानप्रायश्चित्ते विष्णुः,—

"हतपञ्चनखात् कूपात् अत्यन्तोपहताच्चोदकं पीत्वा ब्राह्मण-

त्रिरात्रमुपवसेत् द्व्यहं राजन्यः एकाहं वैश्यः शूद्रो नक्तं सर्व्वे चान्ते व्रतस्य पञ्चगव्यं पिबेयुः । अत्यन्तोपहतममेध्यादिना ।

तथा लघुहारीतः,—

"यस्तु कूपात् पिबेत्तोयं ब्राह्मणः शवदूषितात् ।
उपवासत्रयं कृत्वा पञ्चगव्येन शुध्यति ।"

एतत् द्वयं ज्ञाने, अज्ञानेऽर्द्धं । ज्ञानत एव क्लिन्नत्वेन विशेषमाहापस्तम्बः,—

"अन्तःस्थितेषु क्लिन्नेषु सर्व्वपञ्चनखेषु च ।
पिबेदपो यः कूपेषु षड्रात्रेण स शुध्यति ॥
अक्लिन्नेषु त्रिरात्रं स्याच्छूद्राणां दिनमेव तु ॥"

"पञ्चनखेष्वभक्ष्येषु एतच्च मानुषेतरक्लिन्नशवे ज्ञेयं ।
अपरं च—"यदि चान्यानि मन्वन्तरोक्तानि अभक्ष्यभक्षणे अपेयपाने-
गुरुलघुप्रायश्चित्तानि, तानि कामाकाममकृदभ्यासापेक्षया—
योज्यानि द्रव्याणामानन्त्यात् प्रतिव्यक्तिषु अभक्ष्यत्वमभि—
धातुमशक्यमिति तत् स्मृत्यन्तरादेवावगन्तव्यं । शिष्टवाक्याच्च" ।

यथाह शङ्खः,—

"भक्ष्याभक्ष्याण्यनेकानि ब्राह्मणस्य विशेषतः ।
तत्र शिष्टा यथा ब्रूयुस्तथा कार्य्यो विनिश्चयः ।" इति ।

प्रमाणमिदमन्येषामुपलक्षकं ।

तथाऽप्रजातान्नभोजनप्रायश्चित्तं आपस्तम्बः,—

"नाप्रजातायां तु कन्यायामश्नीयात्तस्य वै गृहे ।
मोहाद्वा यदि भुञ्जीत कृच्छ्रं सान्तपनं चरेत् ॥"

"श्वशुरो जामातृगृहे पुत्रोत्पत्तिपर्य्यन्तं न भुञ्जीत इत्यर्थः ।"

तथा विधवादीनामामिषभक्षणप्रायश्चित्ते यमः,—

"अज्ञानात्-यदि वा ज्ञानादामिषं यदि भक्षयेत् ।
विधवा ब्राह्मणी चैव ब्रह्मचारी विशेषतः ॥

विधवा चातिकृच्छ्रेण ब्रह्मचारी च कृच्छ्रतः ।
विधवा स्वर्णदानेन ब्रह्मचारी द्विभोजनात् ॥"

तथा वृहस्पतिः,—

"मधु मांसं यदाश्नीयाद्ब्रह्मचारी कथञ्चन ।
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ॥"

इति महामहोपाध्यायशूलपाण्यादयः ।

इत्यस्यादिदूषितान्नादिभोजनप्रभृतिविवेचनं ।

अथोपपातकान्तर्भूतागम्यागमनप्रायश्चित्तविचारः । तत्र सवर्णाऽस्वजन-स्त्रीगमनप्रायश्चित्ते वर्षाणीत्यनुवृत्तौ गौतमः,—

"द्वे परदारे त्रीणि श्रोत्रियस्य द्रव्यलाभे चोत्सर्गो यथास्थानं वा गमयेत् ।" श्रोत्रियस्य सवर्णां भार्य्यां गत्वा त्रीणि वर्षाणि प्राकृतं ब्रह्मचर्य्यं चरेत् । अतो द्वे वर्षे अश्रोत्रियनिर्गुणब्राह्मणभार्य्यायां । यदि तु परदारेषु किञ्चि-द्द्रव्यं प्राप्तं तदा तस्य परित्यागः करणीयः । यया वा दत्तं तस्या एव-दद्यात् ।"

तथा गमनं कृत्वेत्यनुवृत्तौ यमः, —

"द्वे परभार्य्यासु त्रीणि श्रोत्रियपत्नीषु" एतत् कामतः सकृत् गमने-यथापस्तम्बः । "सवर्णायामनन्यपूर्व्वायां सकृत् सन्निपाते पादः पततीत्युपदिशति एवमभ्यासे द्विपादः अत्यन्ताभ्यासे त्रिपादः चतुर्थे-सर्व्वमिति ।"

अस्यार्थः । "पुरुषान्तराव्यभिचरितसवर्णागामिनः पुरुषस्य सकृत्-सन्निपाते पादः, पततीत्युपदिशति यस्मात् पापात् पततीत्युपदिशति-मुनिस्तस्य पापस्य पादश्चतुर्थांशो भवतीत्यर्थः ।

एवं द्वितीयाभ्यासे चापरपादः । तृतीयाभ्यासेऽपरपादः, चतुर्थे सम्पूर्णं भवति । तेनाथासकृदगमने त्रैवार्षिकं ।

तृतीये नववार्षिकं । चतुर्थे सम्पूर्णद्वादशवार्षिकमित्युक्तं ।"

जिकनस्तु ।—"सवर्णायामनन्यपूर्व्वायां सकृत् पुरुषान्तरसन्निपाते-

ब्रह्मग्रेतोविसर्गरूपे अपरस्याभिगन्तुः स्वजातिविहितप्रायश्चित्तस्य पादः पतति ह्रसतीत्यर्थः। एवमपरपुरुषगमने अपरपादह्रासः। एवमपर-पुरुषाभिगमने अपरपादह्रासः। चतुर्थे स्वैरिण्यभिगमनप्रायश्चित्तमेव स्वजा-त्युक्तं कार्य्यमित्यर्थः।

स्वैरिणीत्वञ्च पुरुषचतुष्टयगमनात्, एकपुंसश्चतुर्वाभिगमनाद्वा न विशेषः-उत्तरोत्तराभ्यासस्य हीनत्वापादकत्वात्।

ब्राह्मणीविषयाणि चैतानि वचनानि अन्यस्यामल्पप्रायश्चित्तविधानात्।

तथा शङ्खलिखितौ,—

"अन्यथा वैश्यायामवकीर्णः सम्वत्सरं त्रिषवनमनुतिष्ठेत्। क्षत्रि-यायां द्वे वर्षे, ब्राह्मण्यां त्रीणि, वैश्यावच्छूद्रायां।" अन्यथेति स्वैरिणीत्वभाव-इत्यर्थः। स्वैरिणीप्रायश्चित्तस्य संहितायां पूर्व्वमुक्तत्वात्। तत्र ब्राह्मणस्य ब्राह्मण्यां श्रोत्रियस्य भार्य्यायां त्रैवार्षिकम्। क्षत्रियस्य क्षत्रियभार्य्यायां द्वैवार्षिकं, वैश्यस्य वैश्यभार्य्यायां वार्षिकं। शूद्रस्य पञ्चयज्ञानुष्ठायिश्राय-वृत्तशूद्रभार्य्यायां वार्षिकमेव।

यथा मनुः,—

"शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनां।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनं।"

"अन्यशूद्रागमने षाण्मासिकं, यत्तु बौधायनवचनं पुंसां ब्राह्मणादीनां सम्वत्सरं ब्रह्मचर्य्यं। शूद्रं कटाग्निना दहेदिति। तत् ब्राह्मणस्यात्यन्त-निर्गुणब्राह्मणपत्नीगामिनः साम्वत्सरिकमेव विधत्ते। क्षत्रियस्य निर्गुण-क्षत्रियपत्नीगमने तदेव। वैश्यशूद्रयोरपि साम्वत्सरिकमेव। शङ्ख-लिखितसमानार्थं। शूद्रन्तु दर्पात् महत्तशूद्रपत्नीगामिनं कटादिना दहेत्।

अतएव परस्त्रीसंग्रहणे बृहस्पतिः,—

"उत्कृत्य लिङ्गवृषणौ भ्रामयेद्‌ गर्द्दभेन तु"। इति—

अतो ब्राह्मणस्य सकृद्गमनतोऽस्वजनश्रोत्रियब्राह्मणपत्नीगमने त्रैवार्षिकं-व्रतं तदशक्तौ पञ्चचत्वारिंशद्धेनवो दातव्याः। वारचतुष्टयगमने द्वादश-

वार्षिकमज्ञानतस्तदर्द्धमिति।" तथा क्षत्रियादिस्त्रीणामानुलोम्येन गमने प्रायश्चित्तं। तत्र यदेव सवर्णपुत्रगमनप्रायश्चित्तं तदेव पादपादहीनं-कार्य्यं।

यथा स्त्रीव्यभिचारे बृहत्प्रचेताः,—

"आनुलोम्येन विहितं कृच्छ्रं पादावरोपितं।

इति कृच्छ्रं महाव्रतं तच्च सजातीयगमने, यदुक्तं तदुक्तमेवाधमाया गमने-पादपादहीनं कार्य्यमित्यर्थः।

तेन ब्राह्मणस्य क्षत्रियागमने द्विवार्षिकं पादहीनं, वैश्यागमने वार्षिकं पादद्वयहीनं षाण्मासिकव्रतमिति यावत्। विशिष्टशूद्रागमनेऽप्येवं। अधम-शूद्रागमने षाण्मासिकं पादत्रितयहीनं सार्द्धमासिकमित्यर्थः।

एवं क्षत्रियस्य वैश्यागमने नवमासिकं सच्छूद्रागमनेऽप्येवं। अधम-शूद्रागमने षाण्मासिकपादद्वयहीनं त्रैमासिकं, वैश्यस्य सच्छूद्रागमने-वार्षिकमेव वैश्यवद्भावात्, अधमशूद्रागमने सार्द्धचातुर्मासिकं।

तथा शूद्रादीनां प्रतिलोमस्त्रीगमनप्रायश्चित्ते वशिष्ठः,—

"शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणदलैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत्।

ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां खरमारोप्य-महापथमनुव्राजयेत्, पूता भवतीति विज्ञायते। वैश्यश्चेत् ब्राह्मणी-मभिगच्छेत् लोहितदलैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत्। ब्राह्मण्याः शिरसि-वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते। राजन्यश्चेद् ब्राह्मणीमभिगच्छेत् शरपत्रैर्वेष्टयित्वा-राजन्यमग्नौ प्रास्येत्। ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुसंव्राजयेत्—पूता भवतीति विज्ञायते। एवं वैश्यो राजन्यायां शूद्रश्च राजन्यवैश्ययोरिति महापथमनुसम्व्राज-येदिति राजमार्गेण पुनरावर्त्तयेत्त्रिःसारयेदिति"॥

एतत् ज्ञानतः। अज्ञानतो मरणैकान्तिकचतुर्विंशतिवार्षिकस्यार्द्धं द्वादशवार्षिकं।

तथाच वृहत्प्रचेताः,—

"शूद्रस्य ब्राह्मणीं मोहाद्गच्छतः शुद्धिमिच्छतः।
पूर्णमेतद्व्रतं देयं मता यस्माद्धितस्य सा॥
पादह्रान्यान्यवर्णेषु गच्छतः सार्व्ववर्णिकं।
प्रायश्चित्तमिदं देयमगम्यागमने क्रमात्॥"

"एतेन वैश्यस्याज्ञानतो ब्राह्मणीगमने नववार्षिकं, क्षत्रियस्याज्ञानतो-ब्राह्मणीगमने षाड्वार्षिकमेवेति। अत धेनुमूल्यव्यवस्था सुव्यक्ता।

यद्यपि शूद्रस्य ब्राह्मणीगमनं महापातकत्वेनोक्तं, तथा क्षत्रियवैश्ययोः-ब्राह्मणीगमनमनुपातकत्वेन, तथापि अनुलोमस्त्रीगमनं तावदुपपातक-मेव। तत्प्रसङ्गादसवर्णत्वेन प्रतिलोमस्त्रीगमनप्रायश्चित्तमप्युक्तमतो-न वैषम्यमिति। तथा समीक्षमवर्णद्विविपुरुषव्यभिचरितसवर्णासवर्ण-स्त्रीगमनप्रायश्चित्ते तु एकपुरुषव्यभिचरितस्त्रीगमने पतितस्त्रीसंसर्ग-प्रायश्चित्तमेव।"

तत्र विप्रस्य सवर्णानुलोमस्त्रीगमने सम्बर्त्तः,—

"शूद्रां तु ब्राह्मणो-गत्वा मासार्द्धं माममेव वा।
गोमूत्रयावकाहारस्तिष्ठेत्तत्पापशुद्धये॥"

"सकृद्गमने मासार्द्धं, अभ्यासे मासं, मासैकगोमूत्रयावकाहारे धेनुद्वयं।"

"तथा, क्षत्रियां वाथ वैश्यां वा गच्छेत् यः काममोहितः।
तस्य सान्तपनं कृच्छ्रं भवेत्तत्पापमोचनं॥"

सान्तपने धेनुद्वयं।

तथा—

"विप्रामस्वजनां गत्वा प्राजापत्यं समाचरेत्।"

एतच्च निवृत्तधर्म्मकर्म्मणः पत्नीगमने वेदितव्यं।

यथा वशिष्ठः,—

"ब्राह्मणश्चेदप्रेक्षापूर्व्वकं ब्राह्मणदारानभिगच्छेत्

निहत्तधर्म्मकर्म्मणः कृच्छ्रोऽनिहत्तधर्म्मकर्म्मणोऽतिकृच्छ्रः । एवं राजन्य-वैश्ययोः । क्षत्रियवैश्ययोरप्येवंभूतस्वजातीयभार्य्यागमने कृच्छ्रातिकृच्छ्रौ ।

एषु द्वित्रिपुरुषव्यभिचारेणाभ्यासानभ्यासाभ्यां च विशेष ऊहनीयः । एतेन पुरुषत्रयव्यभिचरितब्राह्मण्यां सकृद्गमने प्राजापत्यं । तथा प्रतिलोमब्राह्मणी-गमने स एव । द्विपुरुषव्यभिचारितायाः प्रातिलोम्येन गमने स एव सम्वर्त्त-एव" ।

"कथञ्चित-ब्राह्मणीं गच्छेत-क्षत्रियो वैश्य एव वा ।
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति ॥
शूद्रस्तु ब्राह्मणीं गत्वा कथञ्चित्-काममोहितः ।
गोमूत्रयावकाहारो मासेकेन विशुध्यति" ॥

तथा हारीतः,—अभिप्लुतानुपेत्य परदारान् अधोवर्णान् वा इदमापः-प्रवहतेत्यन्तर्जलेऽष्टशतं जप्त्वा तिलाढकं ब्राह्मणाय दद्यात् ।

एतद्द्विप्रेतरवर्णस्य सवर्णानुलोमस्त्रीगमनविषयं, विप्रे तु सम्वर्त्तेन प्राय-श्चित्तविशेषस्योक्तत्वात् । एवं वैश्यस्य क्षत्रियागमने शूद्रस्य च क्षत्रियावैश्या-गमने पादपादह्रान्या ऊह्यमिति ।

"अभिप्लुतान् पुरुषत्रयव्यभिचरितान्" ।

तथा,—चातुर्वर्ण्य-स्वैरिणीगमनप्रायश्चित्ते शङ्खलिखितौ,—

"स्वैरिण्यां वृषल्यां प्रसृतोऽवकीर्णः सचेल स्नात—उदकुम्भं ब्राह्मणाय दद्यात् । वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत् । क्षत्रियायां त्रिरात्रोपोषितो यवाढ़कं दद्यात्, ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यात् । प्रकीर्णास्वेवमस्वतन्त्रासु स्वैरिणी चतुःपुरुषगामिनी प्रकीर्णा केनचिदनवरुद्धा-अस्वतन्त्रा अनवरुद्धा द्विविधा, तद्वेवं स्वैरिणीतरयोरिदं प्रायश्चित्तमित्यर्थः । कल्पतरुकारस्यापि अयमेव स्वरसः ।

प्रसृत इत्यनेन स्वैरिण्यामपत्योत्पादनेऽपीतदेव प्रायश्चित्तं ।

एतद्विप्रेतरवर्णत्रयस्य सवर्णानुलोमप्रतिलोमस्त्रीगमनविषयम्" ।

विप्रे त्वस्मिन्नेव विषये यमः,—

"ब्राह्मणो ब्राह्मणीं गत्वा द्विजे दद्यान्मृगाजिनं ।
क्षत्रियायां धनुर्दद्यात् वैश्यायामायसीं शिलां ॥
शूद्रां गत्वा तथा विप्र उदकुम्भं द्विजातये ।
त्रिरात्रोपोषितः स्नात्वा दद्यात्-सम्मार्जनीं तथा" ॥

तच्च त्रिरात्रोपोषित इति सर्वत्र सम्बध्यते । एतत् समोत्तमवर्णमात्र-व्यभिचरितस्वैरिण्या गमने ज्ञेयं। शूद्राद्यजादिगामिन्यास्तु महापातकश्रवणात्-अभिगन्तुर्महापातकप्रायश्चित्तमेव ।

तथा याज्ञवल्क्यः,—

"नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् ।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्" ॥

तथा वृहस्पतिरपि,—

"हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा भवेत्"। इति ।

तथा चातुर्वर्ण्यबन्धकीगमनप्रायश्चित्ते प्रचेताः,—

"बन्धकीगमने उपस्पृश्य प्राणायामं कुर्य्यात् ।

ब्राह्मणीबन्धकीगमने कमण्डलुं दद्यात् । क्षत्रियबन्धकीं गत्वाऽऽयुधं । वैश्यबन्धकीं गत्वा प्रतोदं । उत्तरोत्तरवर्णत्रयोपादानात् स्नानपुरःसरः प्राणायामः शूद्रबन्धकीविषयः, एतत् सवर्णानुलोमप्रतिलोमविषयं विशेषाश्रवणात् । बन्धकी च स्वभर्तृव्यतिरिक्तपञ्चपुरुषगामिनी, स्वैरिणी चतुःपुरुषगामिनी" ।

तथा महाभारतीयादिपर्वणि,—

"पाण्डुस्तु पुनरेवैनां पुत्रलाभान्महायशाः ।
वक्तुमैच्छद्धर्मपत्नीं कुन्तीत्वेनमथाब्रवीत् ॥
नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत ।
अतःपरं स्वैरिणी स्यात्पञ्चमे बन्धकी तथा ॥"

अत्यन्ताभ्यस्तबन्धकीगमने प्राजापत्यं ।

यथोशना:,—

"यत्रोक्तं यत्र वा नोक्तमिह पातकनाशनं ।
प्राजापत्येन कृच्छ्रेण शुद्ध्यते नात्र संशयः ॥"

तथा वेश्यागमनप्रायश्चित्ते सम्बर्त्तः,—

"पशुवेश्यागमने प्राजापत्यं । तेन वेश्योपगमने प्राजापत्यं । तदशक्तौ-धेनुरेका देया । एतत् सकृद्गमने, अभ्यासे तु, "चान्द्रायणेन चैकेन सर्व्वपाप-क्षयो भवेत् ।" इत्यापस्तम्बवचनाच्चान्द्रायणं ।

तथा रजस्वलाभिगमनप्रायश्चित्ते शङ्खलिखितौ,—

"रजस्वलावधूतागमने त्रिरात्रोपवासो घृतप्राशनञ्च कुर्य्यात् । अवधूता । उन्मत्ता ।"

याज्ञवल्क्यः,—

"त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां शुचिर्भवेत् ।"

त्रिरात्राशक्तौ चतुर्विंशतिपणाः देयाः । एतत्कामतः सकृद्गमने,-अभ्यासे तु द्वैगुण्यादिकं ।

यथा मनुः,—

"अमानुषीषु पुरुष उदक्यायामयोनिषु ।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् ॥"

"सान्तपने धेनुद्वयं मनुनोक्तत्वात् । अमानुषीषु वड़वाद्यासु अयोनिषु-स्त्रिया अपि योनीतरस्थानेषु ।" यत्तु,—शातातप आह,—

अनुदकमूत्रपुरीषकरणे सचेलस्नानं महाव्याहृतिहोमश्च रजस्वलाभि-गमने चैतदेव । तत्प्रमादतो गमने रेतःसेकात् प्राक् ।

यच्च ब्रह्महत्यानुवृत्तौ शङ्खः,—

"पादैकं शूद्रहत्यायामुदक्यागमने तथा ।
गोवधे च तथा कुर्य्यात् परस्त्रीगमने तथा ॥"

तद्बुद्धिपूर्व्वक-सानुबन्धात्यन्ताभ्यासे वेदितव्यमिति धर्म्मप्रदीपः ।

तयर्त्तौ भार्य्यानभिगमनप्रायश्चित्ते विष्णुः,—

"पर्व्वानारोग्यवर्जमृतावगच्छन् पत्नीं त्रिरात्रमुपवसेत्।"

तथाच बृहस्पतिः,—

"ऋतौ भार्य्यां न गच्छेद्यः सोऽपि कृच्छार्द्धमाचरेत्॥"

एतदप्रोषितस्य नीरुजः स्नानदिनात् प्रभृति द्वादशदिनाभ्यन्तरे-पर्व्वव्यतिरिक्ते सकृज्ज्ञाने वेदितव्यं, कृच्छार्द्धशक्तौ चतुर्विंशतिपणा देयाः।

तथा, सम्वर्त्तः,—

"ऋतौ नोपैति यो भार्य्यां नियतां ब्रह्मचारिणीं।
नियमातिक्रमात्तस्य प्राणायामशतं स्मृतं॥"

एतदज्ञानविषयं, ज्ञानाभ्यासे प्राजापत्यं।

तथा पर्व्वसु स्त्रीगमनप्रायश्चित्ते वराहपुराणं,—

"षष्ठाष्टमीममावास्यामुभे पक्षे चतुर्द्दशी।
मैथुनं नैव सेवेत द्वादशीञ्च मम प्रियां॥"

तथा विष्णुपुराणं,—

"चतुर्द्दश्यष्टमी चैव अमावस्याथ पूर्णिमा।
पर्व्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव च॥
स्त्रीतैलमांससम्भोगी पर्व्वस्वेतेषु यो नरः।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः"॥

तथाच मनुः,—

"अमावास्याष्टमीं चैव पौर्णमासीं चतुर्द्दशीं।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥"

तथा प्रायश्चित्ते मनुः,—

"वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनं॥"

"स्नातको गृहस्थः। अभ्यासे कृच्छ्रमत्यन्ताभ्यासे चान्द्रायणमनिर्दिष्ट-पापोक्तं ज्ञेयं। तथा श्राद्धदिनमैथुनप्रायश्चित्ते विष्णुपुराणं,—

"श्राद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियोज्य च।
व्यवायी रेतसो गर्त्ते मज्जयत्यात्मनः पितॄन्॥"

"अत्रापि स्नातकव्रतलोपत्वादभोजनमेव प्रायश्चित्तं।"

तथा दिवामैथुनप्रायश्चित्ते शङ्खः,—

"दिवा तु मैथुनं गत्वा नग्नः स्नात्वा तथाम्भसि।
नग्नां परस्त्रियं दृष्ट्वा दिनमेकं व्रती भवेत्"॥

एतत् सकृदभ्यासे त्वावृत्तिः, व्रतो यावत्क्तेन नग्नपरस्त्रीदर्शने कामतो-ज्ञेयम्।

तथा हारीतः,—

"अजीर्णवाम्तस्नस्नुकर्मायोनिपशुदिवामैथुनगमने च"। "अयोनि-पशुदिवाशब्दानां प्रत्येकं मैथुनगमनशब्देन सम्बन्धः। मैथुनप्राप्तावित्यर्थः।

तथा मनुः,—

"मैथुनन्तु समासेव्य गोयानेऽप्सु दिवापि वा।
स्नात्वा वस्त्रैर्जपित्वाऽप्याः प्राणायामेन शुध्यति"॥

यानि वस्त्राणि परिधाय मैथुनं कृतं तैर्वस्त्रैःसह स्नात्वा आप्याः 'देवीराप'-इति ऋचो जपित्वेत्यर्थः।

तथा यमः,—

"यदि गोभिः समायुक्तं यानमारुह्य वै द्विजः।
मैथुनं सेवते तत्र तस्य स्वायम्भुवोऽब्रवीत्'॥
त्रिरात्रक्षपणं कृत्वा सचेलं स्नानमाचरेत्"॥

तथा मनुः,—

"मैथुनं यः समासाद्य पुंसि योषिति वा द्विजः।
गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्"॥

अथ गुरुलघुकल्पना सगुणनिर्गुणादिविषयतया व्यवस्थातव्या ।
तथा—स्वधर्मपत्नीमुखमैथुनप्रायश्चित्ते,—
"यस्तु पुनर्ब्राह्मणो धर्मपत्नीमुखमैथुनं सेवते स दुष्यतीति वैवस्वतः,—
तथा
"यस्तु पाणिगृहीताया मुखे कुर्व्वीत मैथुनं ।
तस्येह निष्कृतिर्नास्तीत्याह पारस्करो मुनिः ॥"
इदं सार्व्वत्रिकम् ।
तथाच याज्ञवल्क्यः,—
"प्राणायामं जले स्नात्वा खरयानोष्ट्रयानगः ।
नग्नः स्नात्वा च सुप्त्वा च गत्वा चैव दिवानिशम्" ॥
अज्ञानादिष्टे गतमिति वचनात् प्राणायामगतं ज्ञेयं तदेतेषां विकल्पः ।
तथा स्त्रीव्यभिचारप्रायश्चित्ते मनुः,—
"विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि ।
यत् पुंसः परदारेषु तच्चैनां चारयेद्व्रतं" ॥

"निरुन्ध्यादिति अङ्गसंस्काररहितां मलिनां भूमिशायिनीं प्राणधारण-निमित्तमात्राहारां परिभूतां कृत्वा अपृथक्वेश्मनि ऋतुपर्य्यन्तं भर्त्ता स्थापयेत्" ।

तथा च याज्ञवल्क्यः,—
"हृताधिकारां मलिनां पिण्डमात्रोपजिविनीं ।
परिभूतामधःशय्यां वासयेद्-व्यभिचारिणीं ॥
व्यभिचारे ऋतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्त्तृवधादौ तु तथा महति पातके" ॥

यस्मिन् व्यभिचारे गर्भो भवति तत्र परित्याग एव । यदा सगर्भे-व्यभिचरति तदा गर्भे निःसृते प्रायश्चित्तं कुर्य्यात् ।

यथा ऋष्यशृङ्गः,—

"अन्तर्वत्नी तु युवतिः कामिता यान्ययोनिना ।
प्रायश्चित्तं नैव कुर्य्यात् यावद्गर्भो न निःसृतः ॥
न प्रभावं गृहे कुर्य्यान्न चाङ्गादिप्रसाधनं ।
न शयीत समं भर्त्रा न वा भुञ्जीत बान्धवैः" ॥
"प्रायश्चित्तं सृते गर्भे विधिं कृत्वाब्दिकं चरेत् ।
हिरण्यमथवा धेनुं दद्यात्-विप्राय दक्षिणाम्" ॥

"अन्ययोनिना असम्बन्धिना आब्दिकमिति प्रदर्शनार्थं, यत् पुंसः-परदारेष्वित्यनेन त्रैवार्षिकविषये त्रैवार्षिकं, द्विवार्षिकविषये द्विवार्षिकं, एकवार्षिकविषये एकवार्षिकमित्येवमादि प्रायश्चित्तमुक्तं ।"

तथाच बृहस्पतिः,—

"यत् पुंसः परदारेषु समानेषु व्रतं स्मृतम् ।
व्यभिचारे तु भर्त्तुः स्त्री तदशेषं समाचरेत्" ॥

"समानेषु सवर्णेषु समानग्रहणं हीनवर्णव्यभिचारेऽधिकप्रायश्चित्तदानार्थं-न तूत्तमाधमव्यभिचारे प्रायश्चित्तनिषेधार्थं। अशेषमिति स्त्रीत्वादर्द्धं नास्तीति,-तेन त्रैवार्षिकाशक्तौ पञ्चचत्वारिंशद्धेनवो देयाः, तदशक्तौ पञ्चत्रिंशदुत्तरपुराणशतमूल्यं काञ्चनं देयं ।"

तथा महापातकिगमनेऽङ्गिराः,—

"व्रतं यच्चोदितं पुंसां पतितस्त्रीनिषेवणात् ।
तच्चापि कारयेन्मूढ़ां पतितासेवनात् स्त्रियं" ॥

तथाऽनिच्छन्त्या बलात्कारोपभोगे तु बृहस्पतिराह,—

"अनिच्छन्ती तु या भुक्ता गुप्तां तां कारयेद् गृहे ।
मलिनाङ्गीमधःशय्यां पिण्डमात्रोपजीविनीं" ॥

"कारयेन्निष्कृतिं कृच्छ्रं पराकं वा समङ्गतां ।
हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा भवेत्" ॥

"समङ्गतामिति समानजातीयामित्यर्थः ।

अत्र सकृद्गमने प्राजापत्यं, द्विरभ्यासे पराकः । त्रिरभ्यासे चान्द्रायणं" । यथोशनाः,—

"व्यभिचारिणीं भार्य्यां कुचेलपिण्डभूतां निहताधिकारां चान्द्रायणं-पराकं प्राजापत्यं वा कारयेत् यदि तु क्षत्रियवैश्यशूद्रैरनिच्छन्ती ब्राह्मण्युपभुक्ता पश्चात्तदनुरक्ता भवेत्, तद्विषयं इदमतिवचनमिति धर्मप्रदीपः ।"

अतएवानिच्छन्तीगमनमात्रे स्वल्पप्रायश्चित्तमाह सम्बर्त्तः,—

"बलात् प्रमथ्य भुक्ता चेत् दह्यमानेन चेतसा ।
प्राजापत्येन शुद्धिः स्यात्तस्याः पावनं परं ॥
यदि तु ब्राह्मणी गच्छेत् क्षत्रियं वैश्यमेव वा ।
गोमूत्रयावकैर्मासात्तदर्द्धाच्च विशुध्यति ॥
ब्राह्मण्याः शूद्रसम्पर्के कथञ्चित् समुपागते ।
चान्द्रायणेन शुद्धिः स्यात्तस्याः पावनं स्मृतं" ॥

"अत्र बलाद्रजकादिगते ज्ञाने शूद्रगमनप्रायश्चित्तादधिकं धेनुचतुष्टयं-बोद्धव्यं विषमशिष्टत्वात् मार्हमासेन षड्धेनवः ।" विषमशिष्टत्वादिति-मासादर्द्धाच्चेति विषमशिष्टत्वात् ।

यच्च मनुः,—

"सा चेत्-पुनः प्रदुष्येत्तु सदृशेनोपयन्त्रिता ।
कृच्छ्रं चान्द्रायणञ्चैव तदस्याः पावनं स्मृतम्" ॥

तदप्यनिच्छन्त्या एव चतुर्थाभ्यासविषयं ।

यत्तु ऋष्यशृङ्गवचनं,—

"बलेन कामिता नारी सवर्णेन कथञ्चन ।
प्रायश्चित्तं त्रिरात्रं वै तस्याः शुद्ध्यर्थमादिशेत्" ॥

कामिता स्यात्तथान्यैर्य्या सा कृच्छ्राब्दं समाचरेदिति" ॥

तदपि सवर्णेन बलाद्भुक्ताया रेतःसेकात्पूर्वं त्रिरात्रं अन्त्यैश्चाण्डालादिभिश्च-बलाद्भुक्ताया रेतःसेकपर्य्यन्तगमने कृच्छ्राब्दमिति धर्म्मप्रदीपः,—

अनिच्छन्तीविषय एव बलात्कारगमने रेतःसेकात् प्राक् चान्द्रायण-माह—सम्वर्त्तः,—

"चाण्डालं पुक्कसं म्लेच्छं श्वपाकं पतितं तथा।
एतान् गत्वा स्त्रियः श्रेष्ठाः कुर्य्युश्चान्द्रायणं परम् ॥"

"यानि चान्यानि गुरुलघुप्रायश्चित्तानि तानि एवंविधविषय एव यथा-योग्यं व्यवस्थेयानि।"

परित्यागमाह अङ्गिराः,—

"चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा तथा।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥"

"जुङ्गितः कुत्सितः हीनवर्ण इत्यर्थः। गुरुशिष्यौ स्वामिसम्बन्धिनौ-एतत् सर्व्वं स्वेच्छागमनविषयम्।"

---

तथान्त्यजस्त्रीगमनप्रायश्चित्ते सम्वर्त्तः,—

"नटीं शैलूषिकीञ्चैव रजकीं वेणुजीविनीम्।
गत्वा चान्द्रायणं कुर्य्यात्तथा चर्म्मोपजीविनीं ॥"

एतदज्ञानतः सकृद्गमनविषयं। तेन अज्ञानतः सकृद्गमने चान्द्रायणं-तदशक्तौ षष्टौ धेनवः। शैलूषश्च। "वृत्त्यन्वेषी नटानान्तु स तु शैलूषकः स्मृतः"-इति ब्रह्मपुराणोक्तः।

ज्ञानतः सकृद्गमने सम्वर्त्तः,—

"रजकव्याधशैलूषवेणुचर्म्मोपजीविनाम्।
कामतस्तु यदा गच्छेच्चरेच्चान्द्रायणद्वयम्" ॥ इति।

"तद्बुद्धिपूर्व्वकद्विरभ्यासविषये कृच्छ्राब्दं, अज्ञाने चान्द्रायणद्वयं विदधाति ।"

यच्च यमवचनं,—

"रजकश्चर्म्मकारश्च नटो वरुड़ एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥
एतेषां च स्त्रियो गत्वा भुक्त्वा च प्रति गृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति" ॥

भिल्लो गण्डवारः, वरुड़ः कोष्ठभूर इति प्रसिद्धः, तत् शूद्राभ्रमसंसृष्टत-रजकादिस्त्रीषु चतुर्विंशतिधाभ्यस्तगमने पतितत्वात्द्वादशवार्षिकव्रत-प्रायश्चित्तं विदधाति चतुर्विंशतिधागमनैश्चतुर्विंशतिश्चान्द्रायणानि भवन्ति-चतुर्विंशत्या तु चान्द्रायणैर्द्वादशवार्षिकव्रतस्य समानत्वात् चतुर्विंशतिधाभ्या-सकृते ज्ञानतो रजकादिस्त्रीगमने तत्समानत्वात्द्विगुणद्वादशवार्षिकरूप-प्रायश्चित्ते कृतेऽपि अव्यवहार्य्यतेत्यर्थः इति शूलपाणिमतं । तच्च खण्डितं-पूर्वैतः । प्रायश्चित्ताभावपरत्वे तु तत्संसर्गिणः प्रायश्चित्तव्यवस्था न स्यात्-अतोऽज्ञानतः सकृद्रजकादिस्त्रीगमने चान्द्रायणं । तदशक्तौ धेन्वष्टकं देयं ।"

तथा कापालिकस्त्रीगमनप्रायश्चित्ते—आपस्तम्बः,—

"कापालिकान्नभोक्तॄणां तन्नारीगामिनां तथा ।
ज्ञानात्कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम् ॥"

"अत्र ज्ञाने त्रिंशद्धेनवः, अज्ञाने पञ्चदशधेनवः । इदमुपलक्षकं वेद वहिर्भूतसाम्प्रदायिकानां ।" इति शूलपाणिः ।

इत्यगम्यागमनादिप्रायश्चित्तविवेचनं ।

—o—

अथ तिर्य्यग्योनिगमनप्रायश्चित्तविचारः ।

तत्र शङ्खलिखितौ,

"तिर्य्यग्योनिषु गोवर्ज्जं मचेलः स्नात्वा तु यवसभारं गोभ्यो दद्यात् ।"

इदमज्ञानतः सकृद्गमने। तथा संवर्त्तः,—

"पशुवेश्याभिगमने प्राजापत्यं विधीयते"।

"इदमभ्यासतः वेश्यायां सकृदेव, प्राजापत्याशक्तौ धेनुरेका देया।"

यत्तु जाबालवचनं,—

"इतरेषां पशूनां तु कृच्छ्रपादो विशोधनं"।

तद्द्वितीयाभ्यासविषयं एवं यानि अन्यानि मुन्यन्तरोक्तगुरुलघुप्रायश्चित्तानि-तानि अभ्यासे रेतःसेकात् पूर्व्वं गमने योज्यानि।"

तथा गोगमनप्रायश्चित्ते विष्णुः,—

"गोव्रतं गोगमने च, इदं च गोव्रतं—गोवधोक्तं मासिकं विष्णूक्त-मिदं सकृद्गमने, अत्र धेनुचतुष्टयं देयम्"।

शङ्खलिखितौ,—

"गोष्ववकीर्णः संवत्सरं प्राजापत्यं चरेत्।" "इदमभ्यासेऽत्र त्रिंश-द्वेनवः।" तथा गोतमः,—

"गवि तु गुरुतल्पसमः' । "अनेन द्वादशवार्षिकमत्यन्ताभ्यासे। निरन्तर-वर्षाभ्यासे मरणान्तिकं। यानि स्मृत्यन्तरोक्तानि लघुप्रायश्चित्तानि, तानि गवां-ग्रहणमात्रविषयाणि"। इति शूलपाणिप्रभृतयः।

इत्यगम्यागमनान्तर्भूततिर्य्यग्योनिगमनप्रायश्चित्तविवेचनं।

अथ व्रात्यप्रायश्चित्तविचारः,—

तत्र मनुविष्णू,—

"येषां द्विजानां सावित्री नानुतिष्ठेद्‌यथाविधि।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्॥"

"प्राजापत्यत्रये धेनुत्रयं, एतत् पितृमातृरहितस्य निःस्वजनस्य सावित्री-पाते। आलस्यानवधानादिना तु सावित्रीपाते।

याज्ञवल्क्यः,—

"आषोड़शाच्च द्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल-औपनायनिकः परः॥

अत-ऊर्द्ध पतन्त्येते सर्व्वधर्म्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥"

आङ्वाच मर्य्यादावचनत्वं तेन ब्राह्मणस्य षोड़शवर्षस्य मर्य्यादाभूतत्वात्-पञ्चदशाब्दपर्य्यन्तं कालः। एवं राजन्यवैश्ययोरेकविंशतित्रयोविंशतिवर्ष-यावत् कालद्वयं, एतत्रानन्तरं यमवचने स्फुटीभविष्यति अत्रैव विषये-व्रात्यस्तोमं वैकल्पिकं दिनत्रयाधिकमासचतुष्टयं समाप्योद्दालकव्रतमाह—वशिष्ठः,—

"पतितसावित्रीक उद्दालकव्रतं चरेत्। द्वौ मासौ यावकेन वर्त्तयेत् मासं-पयसा अर्द्धमासमामिक्षया अष्टरात्रं घृतेन षड्रात्रमयाचितं त्रिरात्रमब्भक्षः-अहोरात्रमुपवसेत् अश्वमेधावभृथं वा गच्छेत् व्रात्यस्तोमेन वा यजेत, आमिक्षा-च "आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगत"-इत्यभिधानोक्ता,—अत्र द्विमासयावकव्रते धेनुचतुष्टयं, मासैकक्षीरपाने सपादधेनुत्रितयं, पक्षमा-मिक्षाशने त्वेकधेनुः, क्षीरादामिक्षायाः कठिनत्वेन बलहेतुत्वात्, अष्टरात्र-घृतपाने अर्द्धधेनुः, त्र्यहाव्भक्षणे एकाहोरात्रोपवासाभ्यां मिलित्वा अर्द्ध-धेनुः एवं सपादनवधेनवः स्युः, अस्य चोत्कृष्टगोदानसहितचान्द्रायण-तुल्यत्वेनैतद्विषयं।

एवं शङ्खलिखितौ,—

"व्रात्यश्चान्द्रायणं चरेत्, गोदानं च कुर्य्यादिति।"

देशोपप्लवादिना पतितसावित्रीके यमः,—

"पतिता यस्य सावित्री दशवर्षाणि पञ्च च।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः॥
प्रायश्चित्तं भवेत्तेषां प्रोवाच वदतां वरः।
विवस्वतः सुतः श्रीमान् यमो धर्म्मार्थतत्त्ववित्॥
सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः।
हविष्यं भोजयेदन्नं ब्राह्मणान् सप्त पञ्च वा॥

एकविंशतिरात्रं तु पिबेत् प्रसृति यावकं ।
ततो यावकशुद्धस्य तस्योपनयनं स्मृतं ॥"

"अत्रैकविंशतिरात्रे यावकप्रसृतिपाने मासपयःपानतुल्यत्वात् सपाद-धेनुत्रयमेव"। तथाऽस्मिन्नेव विषये अतिक्रान्ते काले व्रात्याधिकारे हारीतः,—

"तेषां प्रायश्चित्तं मासं पयोभक्षा गामनुगच्छेयुश्चीर्णप्रायश्चित्तं तमिष्टव्रते-रुपनयेयुः यथा प्रकृति ऋतुच्छन्दोविशेषात् ऋतुर्वसन्तग्रीष्मशिशिरात्मकः-छन्दो वेदः स्ववेदोक्तविधिना इत्यर्थः, यद्यपि यमोक्तमेकविंशतिरात्रं, अत्र तु-मासस्तथापि क्षीरपरिमाणानुपदेशात् यथेष्टमेव पानं, यावकपानन्तु प्रसृति-परिमितं, अतस्तुल्यत्वाद्विकल्पः, अतएवास्येतिकर्त्तव्यतया किञ्चिद्गुरुत्वात्-यथोक्तविषयत्वमेवेति"शूलपाणिः ।

अपिच यथाह याज्ञवल्क्यः,--

"उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।
पयसा वापि मासेन पराकेणाथवा पुनः" ॥

तथा मिताक्षरायां विज्ञानेश्वरः,—

"एवमुक्तेन गोवधव्रतेन मासं पञ्चगव्याशनादिनान्येषां व्रात्यतादीना-मुपपातकानां शुद्धिर्भवेत् । चान्द्रायणेन वा वक्ष्यमाणलक्षणेन मासं पयो-व्रतेन वा पराकेण वा शुद्धिर्भवेत् । अत्रातिदेशसामर्थ्यात् गोचर्म्मवसनः-गोपरिचर्य्यादिभिर्गोवधासाधारणैः कतिपयैर्न्यूनत्वमवगम्यते । एतच्च व्रत-चतुष्टयमकामकारे शक्त्यापेक्षया विकल्पितं द्रष्टव्यं । कामकारे तु,—

"एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः ।
अवकीर्णिवर्ज्यं शुद्ध्यर्थं चान्द्रायणमथापि वा" ॥

इति मनूक्तं—त्रैमासिकं द्रष्टव्यं । अतएव वचनादयं प्रायश्चित्तातिदेशः-सर्व्वेषामुपपातकगणपठितानामुक्तप्रायश्चित्तानां चावकीर्णिवर्ज्जितानामविशेषेण-वेदितव्यं । अतो व्रात्यादिषु अस्मिन् शास्त्रे शास्त्रान्तरे वा दृष्टैः प्रायश्चित्तैः-सहोपपातकशुद्धिः स्यादेवमित्यादिना प्रतिपादितव्रतचतुष्टयस्य समविषमता-कल्पनेन विकल्पो विषयविभागो वाश्रयणीयः । तानि स्मृत्यन्तरदृष्टप्राय-

श्चित्तानि पाठक्रमेण व्रात्यादिषु योजयिष्यामः। तत्र व्रात्यतायां-मनुनेदमुक्तं,—

"येषां द्विजानां सावित्री नानूच्येत यथाविधि।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथा विध्युपनाययेदिति॥"

यच्च यमेनोक्तं,—

"सावित्री पतिता यस्य दशवर्षाणि पञ्च च।
सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः॥
एकविंशतिरात्रं च पिबेत् प्रसृतियावकं।
हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च च॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतमिति।"

तदुभयमपि याज्ञवल्कीय मासपयोव्रतविषयं। यत्तु वशिष्ठेनोक्तं,—

"पतितसावित्रीक उद्दालकव्रतं चरेत्, द्वौ मासौ यावकेन वर्त्तयेन्मासं-पयसा पक्षमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षो-ऽहोरात्रमुपवसेदश्वमेधावभृथं गच्छेद्व्रात्यस्तोमेन वा यजेतेति।"

अत्रेयं व्यवस्था—यस्योपनेतृत्वाभावेन तत्कालातिक्रमस्तस्य याज्ञवल्कीय-व्रतानामन्यतमं शक्त्यपेक्षया भवति। अनापद्यतिक्रमे तु मानवं त्रैमासिकं। तत्रैव पञ्चदशवर्षादूर्द्धमपि कियत्कालातिक्रमे तूद्दालकव्रतं व्रात्यस्तोमो वेति।

येषां तु पित्रादयोऽप्यनुपनीतास्तेषामापस्तम्बोक्तं। यस्य पिता-पितामहावनुपनीतौ स्यातां तस्य सम्वत्सरं त्रैविद्यकं ब्रह्मचर्य्यं। यस्य-प्रपितामहादेर्नानुस्मर्य्येत तस्योपनयनं तस्य द्वादशवर्षाणि त्रैविद्यकं-ब्रह्मचर्य्यमिति शूलपाणिविज्ञानेश्वरादयः।

इति व्रात्यप्रायश्चित्तविवेचनं।

अथावकीर्णिप्रायश्चित्तविचारः।

"अत्र अवकीर्णो मेदनेन चरव्रतः।"

यथा याज्ञवल्क्यः,—

"अवकीर्णी भवेद्गत्वा ब्रह्मचारी च योषितं ।" इति ।

तथा प्रायश्चित्तेऽङ्गिराः—

"अवकीर्णनिमित्तन्तु ब्रह्महत्याव्रतं चरेत् ।
स्वचर्म्मवासाः षण्मासांस्तथा मुच्येत किल्बिषात् ॥"

"अवकीर्ण-मवकीर्णता भावे क्तः । अत्र सार्द्ध सप्तधेनवः इदं प्रमाद-सम्पन्ने ।"

एतद्विषय-एव याज्ञवल्क्यः,—

"अवकीर्णी-भवेद्गत्वा ब्रह्मचारी च योषितं ।
गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति ॥
प्रयत्नात् स्त्रियमुत्साद्य प्रवृत्ते त्वब्रवीन्मनुः ।
"एतस्मिन्नेनसि प्राप्ते संवेष्ट्य गर्द्दभाजिनं ॥
सप्तागारं चरेद्भैक्ष्यं स्वकर्म्म परिकीर्त्तयन् ।
तेभ्यो लब्धेन भैक्ष्येण वर्त्तयेत्त्वेककालिकं ।
उपस्पृशंस्त्रिसवनमब्देन स विशुद्ध्यति ॥"

एतद्विषय—एवाभ्यासे शातातपः।—"अथातोऽवकीर्णिप्रायश्चित्तं व्याख्यास्यामो ब्रह्मचारी यद्यवकीर्य्येत्, चतुर्थकालमब्दं भैक्ष्यं चरेदेवं पूतो भवतीति"। तथा पैठीनसिरपि,—

"अवकीर्णी गर्द्दभाजिनं वसेत् । सम्वत्सरं प्राजापत्यं चरेत् ।"

तथा शङ्खलिखिताभ्यान्तु विकल्प एवोक्तः,—

तद्यथा—"सप्तरात्रेणावकीर्य्येत भैक्ष्याग्निकार्य्ये अकुर्व्वन् सद्यः-कामाद्युत्सर्गे रेतसोऽन्यत्र स्वप्नात्तत्र प्रायश्चित्तं महाव्याहृतिभिर्जुहुयात्, ओङ्कारपूर्व्विकाभिः सम्वत्सरं वा नक्तं भैक्ष्यं चरेत्, चतुर्थकालमित-भुग्गायत्रीं सम्वत्सरान्तुगां जपेदिति ।"

गायत्रीमपि सम्वत्सरं जपेदित्यर्थः, महाव्याहृतिहोमस्य लघुत्वादाति-

देशिकावकीर्णित्वेन भैक्ष्याग्नित्यागे स्त्रियं विना कामादेतस्यागे च व्यवतिष्ठते ।" इति शूलपाण्यादयः ।

इत्यवकीर्णिप्रायश्चित्तविवेचनं ।

अथासत्याभिधानप्रायश्चित्तविचारः ।

तत्र सकृदसत्यभाषणे कृष्णानुस्मरणं प्रायश्चित्तं, यथा विष्णुपुराणे,—

"कृते पापेऽनुतापस्तु यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरेः संस्मरणं परं ॥"

अत्यन्ताभ्यासे—

"निन्दितेभ्यो धनादानं वाणिज्यं कुषीदजीवनं ।
असत्यभाषणं शूद्रसेवन" मित्यपात्रीकरणं कृत्वा-

तप्तकृच्छ्रेण शुद्ध्यति । तप्तकृच्छ्रे धेनुचतुष्टयं ।

अति बहुतरकालाभ्यासे मनुः,—

' सङ्करापात्रकृत्यासु मासं शोधनमैन्दवं ॥"
"साक्षिणोऽसत्याभिधान' उक्ता चैवानृतं साक्ष्ये ॥" इति

इति मनु वचनात् । ज्ञानतो द्वादशवार्षिकमित्युक्तं प्राक् । अत्र पापलाघवाद्दार्पिकं ।'

चातुर्वर्ण्यवधे साक्ष्ये तु अनृतभाषणेऽनुपातकत्वाभावात् लघुप्रायश्चित्तमाह—याज्ञवल्क्यः:—

"वर्णानां हि वधो यत्र तत्र साक्ष्येऽनृतं वदेत् ।
तत्पावनाय निर्व्वाप्यश्चरुः सारस्वतो द्विजैः ॥"

यत्पुनर्मनुः,—

"शूद्रविट्क्षत्रविप्राणां यत्र तूक्तो भवेद्वधः ।
तत्र वक्तव्यमनृतं तद्धिसत्याद्विशिष्यते ॥"

"तत्प्रशंसापरं यतस्तेनापि प्रायश्चित्तस्योक्तत्वात्" ।

यथा मनुः,—

"वाग्दैवतैश्च चरुभिर्यजेरंस्ते सरस्वतीं ।
अनृतस्यैनसस्तस्य कुर्व्वाणा निष्कृतिं परां ॥"

"एतत्त्रैवर्णिकपरं ।"

शूद्रे तु विष्णुः,—

"तत्पावनाय कुष्माण्डैर्भिर्द्विजोऽग्निं जुहुयात् ।
शूद्रश्चैकाह्निकं गोदशकस्य ग्रासं दद्यात् ॥"

विषयविशेषेऽपवादमाह—हारीतः,—

"सोमविक्रयकन्याविवाहभयमैथुनवालसत्नपनं गोब्राह्मणहितञ्च कुर्व्वन्-मिथ्या न लिप्यत—इति । सत्नपनं प्रतारणं । तथा च यमः,—

"न नर्म्मयुक्तं वचनं हिनस्ति न स्वैरवाक्यं न च मैथुनार्थे ।
प्राणात्यये सर्व्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥"

"तथा सोमविक्रयस्य गर्हितत्वात् अनुकूलानृताभिधाने क्रेतुर्न दोषः । तथा उत्तमकुलजकन्याविवाहे वालप्रतारणवाक्ये सुहृदोरन्योन्यपरिहासाभिधाने तथोपांशुवचने मैथुनार्थे अलीकभावदर्शने चेत्यर्थः" । इति । शूलपाण्यादयः ।

इत्यसत्याभिधानप्रायश्चित्तविवेचनं ।

अथ व्रणकृम्युत्पत्तिप्रायश्चित्तविचारः ।

तत्र भविष्यपुराणं,—

"ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे ।
कृमिरुत्पद्यते यस्य निष्कृतिं वच्मि तस्य तु ॥
गवां मूत्रपुरीषेण त्रिसन्ध्यं स्नानमाचरेत् ।
दधिक्षीरघृतं पीत्वा कृमिदष्टो विशुद्ध्यति ॥
अधोनाभ्याः प्रदष्टस्य प्रमादाद्विनतात्मज ! ।
एतत् विनिर्द्दिशेत् प्राज्ञः प्रायश्चित्तं खगाधिप ! ॥

नाभिकण्ठान्तरे वीर ! यदा चोत्पद्यते क्रमिः ।
षड्रात्रन्तु तदा प्रोक्तं प्रायश्चित्तं मनीषिभिः ॥
यदा दंशन्ति शिरसि क्रमयो विनतात्मज ! ।
कृच्छ्रं तदा चरेत् प्राज्ञः शुद्धये कश्यपात्मज ! ॥"

"दधिक्षीरघृतपानश्चात्र त्रिरात्रमाचरणीयं ।"

यथा बौधायनः,—

"ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे ।
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं ।
त्र्यहं स्नात्वा च पीत्वा च कृमिदष्टः शुचिर्भवेत् ॥"

"इदञ्च नाभ्यधोदेशदंशविषयं ।"

एतद्विषय-एव शातातपः,—

"ब्राह्मणस्य व्रणद्वारे यदा सम्पद्यते क्रमिः ।
प्रायश्चित्तं तदा कुर्य्यादिति शातातपोऽब्रवीत ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं ।
त्र्यहं स्नात्वा च पीत्वा च क्रमिदष्टः शुचिर्भवेत् ॥"

"ब्राह्मणपदमुपलक्षणार्थं, भविष्योक्तकृच्छ्रपदं तप्तकृच्छ्रपरं ।"

यथा च्यवनः,—

"क्रमिदंशने स्नापनं सुप्रभा दक्षिणा एतदपि शिरोदंशविषयं ।" अत्र सप्ताहसाध्यमनुक्तस्नापनद्रव्यदानयोः समुच्चयः, तेनास्य प्राजापत्याद्गुरुत्वं, यतो भविष्यपुराणोक्तं कृच्छ्रपदं तप्तकृच्छ्रपरं, अत्र च पादोनधेनुचतुष्टयं तेन विकल्पः । किञ्च शिरस-उत्तमाङ्गत्वात्-कण्ठनाभिस्थलोक्तकृच्छ्रसमानषड्रात्रापेक्षया प्रायश्चित्तगौरवमुचितमिव ।" इति ।

तथा एकादश्यादिव्रतभङ्गप्रायश्चित्ते वायुपुराणे,—

"लोभान्मोहात् प्रमादाद्वा व्रतभङ्गो यदा भवेत् ।
उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनं ॥
प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ॥"
"वाशब्दः समुच्चये तेन मुण्डनं च कुर्य्यादित्यर्थः ।"

इति प्रायश्चित्तविवेककारकृष्णमिश्रप्रभृतयः ।

इत्यसत्याभिधानादिप्रायश्चित्तविवेचनं ।

इति समासमुपपातकविवेचनं ।

अथ जातिभ्रंशकरप्रायश्चित्तविचारः ।

तत्र मनुः,—

"ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोः ।
जैह्म्यञ्च मैथुनं पुंसि जातिभ्रंशकरं स्मृतं ॥
जातिभ्रंशकरं कर्म्म कृत्वान्यतममिच्छया ।
चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥"

"रुजः कृत्वा पीड़ाकरणं, अघ्रेयः लशुनादि, जैह्म्यं मित्रे कुटिलत्वं, पुंसि-मैथुनं पुरुषे ग्राम्यधर्म्मकरणं । तत्र कामतः सान्तपनं तत्र धेनुद्वयं, अकामतः-प्राजापत्यं तत्र धेनुरेका, एतच्चाभ्यासे बोद्धव्यं ।"

रुजः कृत्वेति विशेषमाह मनुः,—

"अवगुर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने ।
कृच्छ्रातिकृच्छ्रं कुर्व्वीत विप्रस्योत्पाद्य शोणितं ॥"

तथा याज्ञवल्क्यः,—

"विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते ॥"

"अत्र दण्डशब्दः शस्त्रमपि लक्षयति, अतिकृच्छ्रे धेनुत्रयं, कृच्छ्रातिकृच्छ्रे-धेनुपञ्चकं" ।

तथा यमः,—

"कृच्छ्रातिकृच्छ्रं कुर्व्वीत चान्द्रायणमथाचरेत्।
दश संख्याश्च गा दद्यादङ्गच्छेदो यदा भवेत्॥"

"अत्र च द्विजाङ्गच्छेदे व्रतत्रयस्य गोदानानाञ्च समुच्चयः।"

विशेषमाह बृहस्पतिः,—

"काष्ठादिना ताड़यित्वा त्वग्भेदे कृच्छ्रमाचरेत्।
अस्थिभेदे तु कृच्छ्रन्तु पराकं चाङ्गकर्त्तने॥"

इति शूलपाण्यादयः।

इति जातिभ्रंशकरप्रायश्चित्तविवेचनं।

अथ सङ्करीकरणापात्रीकरणमलावहपापप्रायश्चित्तविचारः। तत्र मनुः,—

"खरोष्ट्राश्वमृगेभानामजाविकवधस्तथा।
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च॥
निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनं।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणं॥
कृमिकीटवयोहत्या मद्यानुगतभोजनं।
फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहं॥"

"मद्यानुगतभोजनं मद्यपानममये यदुपस्थापितं फलमूलादि अधैर्य्यं गीतश्रवणादि अल्पेऽप्यपचये अत्यन्तवक्तव्यमिति कल्पतरुः,—

"सङ्करापात्रकृत्यासु मासं शोधनमैन्दवं।
मलिनीकरणीयेषु तप्तः स्यात् यावकस्त्र्यहं॥"

"सङ्करीकरणापात्रीकरणयोश्चान्द्रायणमत्यन्ताभ्यासविषयं, मलिनीकरणेऽत्र्यहं यावकं कामतः सकृद्विषयमिति"।

तथाच विष्णुः,—

"ग्राम्यारण्यपशूनां च हिंसा संकीर्णकारणं।
संकीर्णकरणं कृत्वा मासमश्नीत यावकं॥

कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं तु कारयेत्।
निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनं॥
असत्यं शूद्रसेवनमित्यपात्रीकरणं।
"अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति।
शीतकृच्छ्रेण वा भूमिं महासान्तपनेन वा॥"

"पक्षिणां जलचराणाञ्च घातनं कृमिकीटघातनं मद्यानुगतभोजनमिति-मलावहानि।"

"मलिनीकरणीये तु तप्तकृच्छ्रं समाचरेत्।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तविशोधनं॥"

अत्र संकीर्णकरणे सकृत्करणे मासयावकं, अभ्यासे कृच्छ्रातिकृच्छ्रं-अत्यन्ताभ्यासे चान्द्रायणं।

अपात्रीकरणे च सकृत्करणे तप्तकृच्छ्रं चतुरहसाध्यं शीतकृच्छ्रं वा शीतकृच्छ्रे तप्तकृच्छ्रेतिकर्त्तव्यतैव, किन्तु तदेव द्रव्यमत्र शीतलमिति विशेषः, अभ्यासे तु महासान्तपनं अत्यन्ताभ्यासे तु चान्द्रायणं, मलावहे तु सकृदाचरणे त्र्यहं यावकं, अभ्यासे तप्तकृच्छ्रं, अत्यन्ताभ्यासे तु कृच्छ्रातिकृच्छ्रमिति-यथायोग्यमूह्यं। एषु चतुर्षु यत्र यत्र प्रायश्चित्तविशेषो नोक्तस्तत्रैव एव-बोद्धव्यः।

इतिशूलपाण्यादयः।
इति संकरीकरणादिप्रायश्चित्तविवेचनं
अथप्रकीर्णप्रायश्चित्तविचारः।

तत्र मनुविष्णुविश्वामित्राः,—

"अनुक्तनिष्कृतीनां तु पापानामपनुत्तये।
शक्तिञ्चावेक्ष्य पापञ्च प्रायश्चित्तं प्रकल्पयेत्॥"

"अनुक्तनिष्कृतीनि विशेषतोऽनुक्तप्रायश्चित्तानि। तथा विष्णुः,—

"यदनुक्तं तत् प्रकीर्णकं"—

"प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवं।
प्रायश्चित्तं बुधः कुर्य्यात् ब्राह्मणानुमतः सदा॥"

"अनुक्तं अनुक्तनिष्कृतिकं पापं"।

तथा शङ्खलिखितौ,—

"क्रयविक्रयदुष्टभोजनप्रतिग्रहेष्वनादिष्टप्रायश्चित्तेषु चान्द्रायणं प्राजापत्यं वा।"

तथा हारीतः,—

"चान्द्रायणं पराको वा तुलापुरुष एव वा।
गवाञ्चैवानुगमनं सर्वपापप्रणाशनं॥"

तथा उशनाः,—

"यत्रोक्तं यत्र वा नोक्तमिह पातकनाशनं।
प्राजापत्येन कृच्छ्रेण शुध्यते नात्र संशयः॥"

पापस्य गुरुत्वलाघवं वीक्ष्य प्रायश्चित्तान्येतानि शिष्टैर्व्यवस्थेयानि। इति-शूलपाण्यादयः।

इति प्रकीर्णप्रायश्चित्तविवेचनं,—

अथ नरास्थिस्पर्शादिप्रायश्चित्तविचारः।

तत्र मनुः,—

"नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा॥"

इदमकामतः,—

कामतस्तु विष्णुः,—

"नारं स्पृष्ट्वास्थि सस्नेहं गायत्र्यष्टशतं जपेत्।"

"घृतं प्राश्य पुनः स्नात्वा त्रिरात्रमाचामेत्। अष्टशतं जप्त्वेत्यत्र"।

कामतोऽत्यन्ताभ्यासे सुमन्तुः,—

"सोपस्नेहमानुषास्थिस्पर्शे कृच्छ्रपादस्त्रिरात्रमशौचञ्चात्र भवतीत्याह-वशिष्ठः। मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचमस्निग्धन्त्वहोरात्रमिति।"

तथाच चाण्डालसङ्करप्रायश्चित्ते-आपस्तम्बः,—

"अन्त्यजातिरविज्ञातो निवसेत् यस्य वेश्मनि।
स वै ज्ञात्वा तु कालेन कुर्य्यात्तत्र विशोधनं॥
चान्द्रायणं पराकं वा द्विजातीनां विशोधनं।
प्राजापत्यं तु शूद्राणां तथा संसर्गदूषणे॥
येस्तत्र भुक्तं पक्वान्नं तेषां कृच्छ्रं विनिर्दिशेत।
तेषामपि च यैर्भुक्तं कृच्छ्रार्द्धं तु विधीयते॥
तेषामपि च यैर्भुक्तं कृच्छ्रपादो विधीयते।
कूपैकपानदुष्टानां तथा संसर्गदूषणे।
उपवासेन शुद्धिः स्यात् पञ्चगव्येन शुद्ध्यति॥
बालापत्या तथा रोगी गर्भिणी वृद्ध एव यः।
तेषां नक्तं प्रदातव्यं बालानां प्रहरद्वयं॥
अथवा क्रियमाणे तु येषामार्त्तिः प्रदृश्यते।
शेषं सम्पादयेत्तेषां विपत्तिर्न भवेद्यथा॥"

"तत्र पूर्व्वोक्तकालादल्पकालसङ्करे चान्द्रायणं, स्वल्पतरे पराकः, शूद्रस्य-प्राजापत्यं। कूपैकपानदुष्टानामिति एकस्मिन्नेव कूपे द्विजातीनां सह जलपानं कुर्वतां संसर्गदुष्टानां सोपवासः पञ्चगव्यं विशोधनमित्यर्थः"।

तथा सम्वर्त्तः,—

"चाण्डालसङ्करे विप्रः श्वपाके पुल्कशेऽपि वा।
गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति॥"

एतदपि स्वल्पकालसङ्करविषयं, माधवीयपठितं—

विष्णुना च।

"उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः" ॥

इत्यनेन चान्द्रायणं विहितं। तत्र पापस्य लघुत्वात्—

चान्द्रायणपदं शिशुचान्द्रायणपरं। तत् पादोनधेनुचतुष्टयेन सङ्कलितं-प्रायश्चित्तविवेकेन इति। एतद्विषय एव "चान्द्रयणमकुर्व्वाणाः कुर्य्युः कृच्छ्र—चतुष्टयं इति समूलकत्वे बोध्यं।

"यावकाहाराग्रतो षड्धेनवः।"

तथाच सुमन्तुः,—

"अगम्यागमनस्त्रीवधचाण्डालसम्पर्केषु कृच्छ्रत्रय"मेतदत्यन्तस्वल्पकाल-विषयं, कृच्छ्रत्रयाशक्तस्य धेनुत्रयं"।

तथा,—

"अविज्ञातस्तु चाण्डालो निवसेद्यस्य वेश्मनि।

विज्ञाते चोपपन्नस्य द्विजाः कुर्य्युरनुग्रहं" ॥

तथा द्वादशाहमुपक्रम्याह पराशरः,—

"दधि-सर्पिः-पयोयुक्तं सदा गोमूत्रयावकं।

भुञ्जीत सह भृत्यैस्तु त्रिसन्ध्यमवगाहनं ॥

त्र्यहं दद्यात्र भुञ्जीत भोक्तव्यं गोरसप्लुतं।

त्रिपलं क्षीरदध्नोश्च पलमेकञ्च सर्पिषः ॥

तथा,—

स पूतः सह भृत्यैस्तु कुर्य्याद्ब्राह्मणभोजनं।

अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणां ॥

"दधिसर्पिःपयोयुक्तं गोमूत्रयावकं द्वादशाहं भुञ्जीतेत्यर्थः। अत्र-परिमाणमेतेषां त्रयाणामुक्तं। चर्म्मकारादीनामविज्ञातसङ्करे तु चाण्डाल-

सङ्करप्रायश्चित्तस्य षष्ठो भागः प्रायश्चित्तं कल्पनीयं चाण्डालस्पर्शप्रायश्चित्ता-न्मर्कारादिस्पर्शे प्रायश्चित्तस्य षष्ठभागदर्शनात् ।"

तथाच वृद्धशातातपः,—

"अशुचिं संस्पृशेद्यस्तु एक एव स दुष्यति ।
तत्स्पृष्टान्यो न दुष्येत सर्व्वद्रव्येष्वयं विधिः ॥

तथा,—

संहतनान्तु पात्राणां यद्येकमुपहन्यते ।
तस्य तच्छोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि" ॥

तथाचापस्तम्बः,—

"एकशाखां समारूढश्चण्डालादिर्यदाभवेत् ।
ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात् ॥"

"आदिशब्दादुदक्यादीनां ग्रहणं । शाखाग्रहणमेकावयवत्वुपलक्षणार्थं । तेनैकपाषाणादेरपि ग्रहणं ।"

तथा स एव,—

एकवृक्षं समारूढौ चाण्डालब्राह्मणौ यदि ।
फलं भक्षयतस्तत्र प्रायश्चित्तं कथं भवेत् ॥
ब्राह्मणानामनुज्ञाप्य सवासाः स्नानमाचरेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥

तथा स एव,—

"एकशाखां समारूढः फलान्यश्नात्यसौ यदि ।
प्रायश्चित्तं त्रिरात्रं स्यात् पञ्चगव्यं विशोधनं ॥"

अत्र व्यवधानाव्यवधानाभ्यामेकरात्रत्रिरात्रौ ज्ञानविषयश्चैतदुभयं" ।

तथाच ब्रह्मपुराणं,—

"विप्रश्चाण्डालसहितो यत्रैकस्मिन् वनस्पतौ ।
अज्ञानात्तु फलं भुक्त्वा चरेत्तत्राघमर्षणं ॥"

तथा नौकादिषु न दोष इत्याह—पराशरः,—

"रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च।
स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टकाचितानि च॥" इति॥

"तृणानि तृणसमूहः पक्वेष्टकाचितानि मठादीनि"।

इति शूलपाण्यादयः।

इति चाण्डालसङ्करादिप्रायश्चित्तविवेचनं।

अथ कारागृहवासप्रायश्चित्तविचारः।

तत्र देवलः,—

"कारागृहे बलात्कारात् स्थित्वा मासमतन्द्रितः।
न स्नानञ्च न सन्ध्यादि न देवपितृतर्पणं॥
न स्वाध्यायो न वा होमः शूद्र-एव न संशयः।"

तथा मरीचिः,—

"मासं कारागृहे वाऽपि नौभिर्यातो दिनत्रयं।
म्लेच्छावासस्तथा पक्षं यो वर्त्तेत् स तु पातकी॥"

तथाच गौतमः,—

"बलाद्दासीकृता ये तु म्लेच्छचाण्डालदस्युभिः।
अशुभं कारिताः कर्म्म गवादिप्राणिहिंसनं॥
उच्छिष्टमार्ज्जनं तेषां तथा तस्यैव भक्षणं।
तत्-स्त्रीणाञ्च तथा सङ्गस्ताभिश्च सह भोजनं॥
मासेऽपि तद्द्विजातौ तु प्राजापत्यं विशोधनं।
प्राजापत्यं च चान्द्रञ्च चरेत् सम्वत्सरोषितः॥
आहिताग्निस्त्वयं कुर्य्याद् यदि कारागृहे वसेत्॥

"स्त्रीणामेतस्मिन् सम्भवे विप्रस्य प्रायश्चित्तार्द्धमनूदितं।"

तथा यमः,—

"कारागृहाद्विनिर्गत्य प्रायश्चित्तं यथोदितं।
कृत्वा विप्रः पुनः कर्म्म कुर्य्याच्छुद्धिमवाप्नुयात्।
नान्यथा शुद्धिमाप्नोति यथा भुवि सुराघटः।"

इति चतुर्व्वर्गचिन्तामणौ कल्पतरुः।

---

## इति कारागृहवासप्रायश्चित्तविवेचनं।

### अथ रहस्यप्रायश्चित्तविचारः।

तत्र याज्ञवल्क्यः,—

"विख्यातदोषः कुर्व्वीत पर्षदोऽनुमतं व्रतं।
अनभिज्ञातदोषस्तु रहस्यव्रतमाचरेत्॥"

"विख्यातदोषोऽन्येन ज्ञातदोषः, अनभिज्ञातदोषस्तृतीयेनेत्यर्थः। अन्यथा-अगम्यागमनादो व्यभिचारात्, अर्थात् अगम्यागमने हिंसायाञ्च अगम्या-वध्ययोरवश्यं ज्ञानात् अन्यथानुपपत्त्या तृतीयेनेति कल्पनीयं, अन्यत्र तु-द्वितीयेनापि अन्यथा सर्व्वत्र द्वितीयज्ञानमात्रकल्पने तु अगम्यागमने-हिंसायाञ्च व्यभिचारः स्यादित्यर्थः। तेन रहस्यकृते पापे रहस्यप्रायश्चित्तं-करणीयं अन्येनावेदितमित्यर्थः।"

अतएवाह यमः,—

"रहस्ये रहस्यं प्रकाशमिति तत्र यदि कर्त्ता स्वयं प्रायश्चित्तानभिज्ञस्तदा-कस्यचिद्रहस्यपापस्य किं प्रायश्चित्तमिति सामान्येन प्रायश्चित्ताभिज्ञं पृष्ट्वा रहस्यप्रायश्चित्तं कुर्य्यात्। तत्र यत्र मरणान्तिकं प्रायश्चित्तं तत्र रहस्य-कृतेऽपि मरणान्तिकं कर्त्तव्यं मरणे ह्रासासम्भवात्। यत्र तु व्रतादिकं तत्र जात्याद्यपेक्षया उक्तव्रतस्य विंशतिभागादिकं कार्य्यं"।

यथा विश्वामित्रः,—

"प्रकाश—उक्तं यत्किञ्चिद्विंशो भागो रहस्यके।
त्रिंशद्भागः षष्टिभागः कल्प्यो जात्याद्यपेक्षया॥"

"आदिशब्दाज्जातिशक्तिगुणापेक्षं" सकृद्विकृत्यभ्येत्यादिरूपसंग्रह: । अथवा-महापातकेषु सामान्यमहापातकरहस्यप्रायश्चित्तं मनुनोक्तं करणीयं ।"—

यथा मनु:,—

"महापातकसंयुक्तोऽनुगच्छेद्गा: समाहित: ।
अभ्यस्याब्दं पावमानीं भैक्ष्याहारो विशुध्यति ॥"

एतेन महापातकेषु कामत—आब्दिकं व्रतं करणीयं, अशक्तौ पञ्चदश-धेनवो देया: । अन्येषु पापेषु याज्ञवल्क्योक्तं प्राणायामशतं करणीयं ।"

यथा याज्ञवल्क्य:,—

"प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये ।
उपपातकयुक्तानामनादिष्टेषु चैव हि ॥"

"अत्र गुरुत्वलाघवापेक्षया प्राणायामशतमेव एकाहद्व्यहत्र्यहादिक्रमेण-मासं षण्मासं सम्वत्सरं वा अभ्यसनीयमिति" । व्रतकरणाशक्तेनापि जपहोमादयोऽत्र कार्य्या: ।

इत्याह मनु:,—

"एतैर्द्विजातय: शोध्या व्रतैराविष्कृतैनस: ।
अनाविष्कृतपापांस्तु मन्त्रैर्होमैस्तु शोधयेत् ॥"

तथाच वशिष्ठ:,—

"जापिनां होमिनाञ्चैव ध्यायिनां तीर्थसेविनां ।
निवसन्ति न पापानि ये च स्नाता: शिरोव्रतै: ॥"

तथाच सम्वर्त्त:,—

"दानैर्होमैर्जपैर्नित्यं प्राणायामैर्द्विजातय: ।
पातकेभ्य: प्रमुच्यन्ते वेदाभ्यासान्न संशय: ॥"

ते जपहोमादय: स्मृत्यन्तरेऽनुसन्धेया: विस्तरभयान्नेह प्रस्तूयन्ते ।" इति-शूलपाण्यादय: ।

इति रहस्यपापप्रायश्चित्तविवेचनं ।

ब्राह्मणकर्त्तृकक्षत्रियवैश्यादिवृत्तिकरणताकधनोपार्जनादिनिन्दितकार्य्यानुष्ठानेन सत्यामतिवाञ्छितायामापदि तदन्ते यादृक्-प्रायश्चित्ताचरणेन भवेत्-पापनिवृत्तिः, तत्पापप्रायश्चित्तविवेचनमत्राऽरभ्यतेऽधस्तात् ।

ननु पापस्यैतस्योपपातकान्तर्भूततया तत्प्रायश्चित्तविचारावसरेऽस्य प्रायश्चित्तविवेके सत्यप्यावश्यके कथमत्र निवेशितमेतदितिचेदुच्यते, एतद्-ग्रन्थीयप्रायश्चित्तविभागस्य विशेषत—एतत्प्रायश्चित्तविवेचनप्रदर्शनप्रधानोद्देश्यतया सर्व्वशेषे पृथक्तया सन्निवेशितं साधारणसुखबोधार्थमिति बोद्धव्यं ।

अथ ब्राह्मणस्य क्षत्रियवैश्यादिवृत्तिधनार्जनादिगर्हितकर्म्मप्रायश्चित्तविचारः ।

तत्र याज्ञवल्क्यः,—

"क्षात्रेण कर्म्मणा जीवेद्विशां वाप्यापदि द्विजः ।
निस्तीर्य्यार्थं समुत्सृज्य वापरात्मानं न्यसेत् पथि ॥"

"पथि यथोक्तवर्त्मनि आत्मानं निवेशयेदित्यर्थः ।"

तथा प्रायश्चित्तमाह—प्रचेताः,—

"ब्राह्मणस्यापत्काले मातापितृमतो बहुभृत्यस्यानन्तरं क्षत्रोपनिवेशस्तत्र-सम्वत्सरमनुप्राप्तौ चान्द्रायणञ्चरेत् सम्वत्सराभ्यन्तरे मासेकाब्दिकादौ चान्द्रायणभागहारः कल्प्यः, एवं सम्वत्सरादूर्द्धं द्वैगुण्यत्रैगुण्यादिकं कल्पनीयं; अनेनापदोऽपि बहुसमयस्थायित्वं सूचितं स्फुटतः । चान्द्रायणे धेन्वष्टकं देयं, याज्ञवल्क्यवचने साहचर्य्यश्रवणात्, वैश्यवृत्तावपि चान्द्रायणमेव ।"

वैश्यवृत्तौ शास्त्रीयनियमे पापापवादमाह वृहस्पतिः,—

"कुशीदकृषिवाणिज्यं प्रकुर्व्वीतास्वयं कृतं ।
आपत्काले स्वयं कुर्व्वन्नैनसा लिप्यते द्विजः ॥
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चापि पूजयेत् ।
ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥
वणिक्कुशीदी दद्यात्तु वस्त्रगोकाञ्चनादिकं ।
कृषीवलोऽन्नपानानि यानशय्यासनानि च ॥

पण्येभ्यो विंशकं दत्त्वा पशुस्वर्णादिकं शतं ।
वणिक्कुसीदद्दोषः स्याद्ब्राह्मणानां च पूजनात् ॥
राज्ञे दत्त्वा च षड्भागं देवतानाञ्च विंशकं ।
त्रिंशद्भागञ्च विप्राणां कृषिं कृत्वा न दोषभाक् ॥" इति ।

तथा ब्राह्मणस्य सेवावृत्तिधनार्ज्जनप्रायश्चित्तविषये —

मनुः,—

"न कथञ्चन कुर्व्वीत ब्राह्मणः कर्म्म वार्षलं ।
वृषलः कर्म्म वा ब्राह्मं पतनीये हि ते तयोः ।"

पुनरुपनयनसहितकृच्छ्रत्रयानुवृत्तौ यमः,—

"प्रायश्चित्तं चिकीर्षन्ति विकर्म्मस्थास्तु ये द्विजाः ।
ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत् ॥"

"तस्य विकर्म्मसेवा तस्या वार्षलत्वेन निषिद्धत्वात्तथा शूद्रस्यापि ब्राह्मं-कर्म्म विकर्म्म तेन द्रव्यत्यागपूर्व्वकं कृच्छ्रत्रयं कर्त्तव्यं पुनरुपनयनञ्च, कृच्छ्रत्रये-धेनुत्रयं" । एतत् त्वनापदीति ज्ञेयं ।" तथा ब्राह्मणस्य गीतादिना धनार्ज्जन प्रायश्चित्ते यमः,—

"नटनर्त्तकतक्षाणाश्चर्म्मकारः सुवर्णकृत् ।
स्थायुकाः षण्डगणिका अभोज्यान्नाः प्रकीर्त्तिताः ॥
गान्धर्व्वो लौहकारश्च सौचिकस्तन्तुवायकः ।
चक्रोपजीवी रजकः कितवस्तस्करस्तथा ॥
ध्वजी मानोपजीवी च शूद्राध्यापकयाजकौ ।
कुलालश्चित्रकर्म्मा च वार्द्धुषिकश्चर्म्मविक्रयी ॥" इत्यादि ।

"स्थायुकाः ग्रामाधिकारिणः, स्थायुकोऽधिकृतो ग्रामे इत्यमरः । गान्धर्व्वो-गायकः, चक्रोपजीवी बलीवर्दचक्रेण तैलनिष्पादकः, ध्वजी शौण्डिकः, मानोपजीवी तुलाधारकः," एतदप्यनापद्विषयं ।

आपदि तु निवृत्तगर्हितकर्म्मजातानुष्ठानस्य शास्त्रकारैरभ्यनुज्ञातत्वात् । यदा मातापित्रादिभरणाशक्तो ब्राह्मणो गीतवाद्यहिंसिकादिवृत्तिमनुतिष्ठति, तदाऽतीतायामापद्यर्जितभुक्तावशिष्टं धनं परित्यज्य चान्द्रायणञ्चरेत्, तदशक्तौ धेन्वष्टकं सम्वत्सराभ्युतावपि चातद्दत्युक्तः सम्वत्सरो ग्राह्यः, सम्वत्सराभ्यन्तरावावृत्तिश्चान्द्रायणस्येत्यर्थः । इति शूलपाण्यादयः,

एतदप्यनापदीति बोध्यं ।

तथा क्षत्रियादिजातिवृत्तिजाताभ्यन्तरतो ब्राह्मणस्यैकदा कतिपयद्रव्यव्यलब्धनेनातियापितापदोऽन्ते यादृग्प्रायश्चित्ताचरणमभ्यनुज्ञातं मन्वादिभिस्तत्प्रदर्श्यतेऽधः,—

तत्र यथाह—पराशरः,—

"सर्व्वेषामेव पापानां सङ्करे समुपस्थिते ।
शतसाहस्रमभ्यस्ता गायत्री शोधनं परं ॥"

तथाच शङ्खः,—

"सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह ।
ये जपन्ति तदा तेषां न भयं विद्यते क्वचित् ॥
दश जप्ता तु सा देवी दिनपापप्रणाशिनी ।
सहस्रं जप्ता सा नृणां पातकेभ्यः समुद्धरेत् ॥
स्वर्णस्तेयी कृतघ्नश्च ब्रह्मघ्ना गुरुतल्पगः ।
सुरापश्च विशुद्ध्येत लक्षजप्तेन सर्व्वदा ।" इति ।

तथा स एव,—

"घृतयुक्तैस्तिलैर्वह्नौ हुत्वा तु सुसमाहितः ।
गायत्र्ययुतहोमात्तु सर्व्वपापैः प्रमुच्यते ॥
इत्त्राणप्रदा देवी पततां नरकार्णवे ।
तस्मात्तामभ्यसेन्नित्यं ब्राह्मणो नियतः शुचिः ॥" इति ।

तथाच याज्ञवल्क्य:,—

"यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विज: ।

तत्र तत्र तिलैर्होमो गायत्र्या वाचनं द्विज: ॥"

तथाच मिताक्षरायां विज्ञानेश्वर:,—

"किञ्च यत्र यत्र ब्रह्मवधादौ तज्जनितदोषजातेनात्मानं सङ्कीर्णमभिभूतं द्विजो मन्यते तत्र गायत्र्या तिलैर्होम: कार्य्य: । तत्र महापातकेषु गायत्र्या लक्षहोम: कार्य्य: ।

"गायत्र्या लक्षहोमे च मुच्यते सर्व्वपातकै"रिति यमस्मरणात् । अतिपातकादिषु पादपादह्रास: कल्पनीय: । तथा तिलैर्वाचनं दानं कार्य्यं ।

तथा रहस्याधिकारे वशिष्ठ:,—

"वैशाख्यां पौर्णमास्यां च ब्राह्मणान् पञ्च सप्त च ।

क्षौद्रयुक्तैस्तिलै: कृष्णैर्वाचयेदथवेतरै: ॥

प्रीयतां धर्म्मराजेति यद्वा मनसि वर्त्तते ।

यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति ॥"

अनियतकालेऽपि दानं तेनैवोक्तं ।

"कृष्णाजिने तिलान् कृत्वा हिरण्यं दधिसर्पिषी ।

ददाति यस्तु विप्राय सर्व्वं तरति दुष्कृतं ॥" इति ।

तथा व्यासेनोक्तं,—

तिलधेनुं च यो दद्यात् संयतात्मा द्विजन्मने ।

ब्रह्महत्यादिभि: पापैर्मुच्यते नात्र संशय: ॥" इति

तथा मिताक्षरायां पुन: स एव,—

"तथा गायत्र्याश्च महापातकेषु लक्षमतिपातकोपपातकयोर्दशसहस्रमुपपातकेषु सहस्रं प्रकीर्णकेषु शतमित्येवं विशेषतो जप: सर्व्वपापहर: ।"

तथा च गायत्रीमधिकृत्य श्लोकः शंखेनोक्तः,—

"शतं जप्ता तु सावित्री महापातकनाशिनी ।
सहस्रजप्ता तु तथा पातकेभ्यः प्रमोचिनी ॥
दशसाहस्रजाप्येन सर्व्वकिल्बिषनाशिनी ।
लक्षं जप्ता तु सा देवी महापातकनाशिनी ॥
सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः ।
सुरापश्च विशुद्ध्यन्ति लक्षं जप्ता न संशयः ॥ इति ।

निरुक्तप्रमाणानि ब्राह्मणेतरजात्युपलक्षकानीति ज्ञेयं । तथा येषां-जातीयानां जपादौ नाधिकारस्तेषां धेनुदानात्मकप्रायश्चित्तं विधेयमिति-धर्म्मशास्त्रीयाभिप्रायः ।

तथाच विज्ञानेश्वरः,—

"निगमागमोक्तमन्त्रजपे स्त्रीशूद्रयोरधिकारित्वाभावाज्जपात्मकप्रायश्चित्ता-देशः, तथा तपोव्रतानुष्ठानाशक्तस्य व्रततप—आत्मकप्रायश्चित्तविधानं च-न दातव्यमिति ।"

प्रायश्चित्तानुष्ठानमेतदनापद्यापत्कालाभ्यन्तरे च विधातव्यं तयोरन्यान्य-प्रायश्चित्तविषये गुरुलघुभावेन सत्यपि शास्त्रीयविभिन्नव्यवस्थावलोकनेऽन्य-तथाऽदर्शनात् । यद्वाऽतीतायामापद्युपस्थितायामनापदि विपत्त्यवलम्बित-निन्दितक्रियादिवृत्तिजनितापराधतः परिशोधयितुमात्मानं गुरुतर-प्रायश्चित्तस्यादितः प्रदर्शिततया विपदभ्यन्तराचरितशास्त्रविगर्हितकार्य्य-जातोत्पन्नवृजिनराजितः शुद्धिमानेतुमात्मानं प्रमाणानामेतेषामन्तराले-ऽशौचवत् संकोचविधया द्विविधात्मकं प्रायश्चित्तमुद्भासितं धर्म्मशास्त्रकारैरित्यूह-नीयं । तथाऽनापदि सति पापसंकरे विपत्कालीनपापसांकर्य्यप्रायश्चित्ता-पेक्षयैतत्कालीनपापव्रतस्य गौरवलाघवदृष्ट्या प्रायश्चित्तस्य द्वैगुण्यादिकं कल्पनीयमिति शास्त्राकूतं इति पापसङ्करप्रायश्चित्तविवेचनं ।

अपिच—प्रदर्शितमत्र विवेचनमावश्यकीयप्रायश्चित्तानां एतद्भिन्न,—प्रायश्चित्तजातस्य मिताक्षरानामकयाज्ञवल्क्यटीकायां तथा 'प्रायश्चित्त-

विवेकचतुर्वर्गचिन्तामणिनामककतिपयभारतप्रसिद्धनिबन्धग्रन्थेषु च विवेचित-तया नोत्तोलितं तदत्र ग्रन्थबाहुल्यभिया। तथाविधानि निबद्धपाप-सङ्करप्रायश्चित्तभिन्नानि सर्व्वाण्येतानि प्रायश्चित्तान्यनापदि मत्वापदि, केषामपि पापानामापदि सत्यनुष्ठाने प्रायश्चित्ताभावस्य तथा कतिपय-वृजिनानां सत्यप्याचरणे प्रायश्चित्तलाघवस्य च धर्म्मशास्त्रकारैरभ्यनुज्ञाततात् ।

तथा चापद्यपि कतिपयपापजाते सत्यनुष्ठिते सत्पथभ्रंशसम्भावनया सन्निवेशितमत्रावश्यकत्वेन निबद्धप्रायश्चित्तवातं तद्विरामार्थमिति बोध्यं ।

अन्यच्च,—कृच्छ्रादिव्रतव्रातानुष्ठानमन्तरापदि मनस्तापाद्याचरणपूर्व्वक-दानेनापराधिनां पापमोचनस्य शास्त्रकारैरभ्यनुज्ञातत्वाल्लोके तथैव व्यवहार-दर्शनाच्चैतत्समयानुपयोगितया ग्रन्थान्तरोद्धृतत्तद्व्रतस्वरूपविवृतेरुत्तोलनं नाचरितमत्रैवेति विज्ञेयं ।

तथा प्रायश्चित्तविभागोपसंहारे वक्तव्यमेतत्,—

यद्यपि प्रायश्चित्ताचरणेन न भवेच्चेन्मनस्तापादिकं, तदा तत्प्रायश्चित्तानु-ष्ठानं न भवेत् सफलं ।

यतः प्रायश्चित्तानुष्ठानेऽपि केवलमनस्तापादिकरणाच्छुद्धिं लभन्ते पापिन इति प्रतिपादयन्ति पूज्यपादा मन्वादयः,—

यथाह—मनुः,—

"ख्यापनेनानुतापेन तपसाध्ययनेन च ।
पापकृन्मुच्यते पापात्तथा दानेन शुद्ध्यति ॥
यथा यथा नरोऽधर्म्मं स्वयं कृत्वानुभाषते ।
तथा तथा त्वचेवाहिस्तेनाधर्म्मेण मुच्यते ॥
यथा यथा मनस्तस्य दुष्कृतं कर्म्म गर्हति ।
तथा तथा शरीरं तत् तेनाधर्म्मेण मुच्यते ॥
कृत्वा पापं हि सन्तप्य तस्मात् पापात्प्रमुच्यते ।
नैवं कुर्य्यात् पुनरिति निवृत्त्या पूयते तु सः ॥

इदं सञ्चिन्त्य मनसा प्रेत्य कर्म्म फलोदयं।
मनोवाङ्मूर्त्तिभिर्नित्यं शुभं कर्म्म समाचरेत्॥
अज्ञानाद् यदि वा ज्ञानात् कृत्वा कर्म विगर्हितं।
तस्माद् विमुक्तिमन्विच्छन् द्वितीयं न समाचरेत्॥
यस्मिन् कर्म्मण्यस्य कृते मनसः स्यादलाघवं।
तस्मिंस्तावत् तपः कुर्य्याद्यावत्तुष्टिकरं भवेत्॥"

तथा—"पापकारी नरलोकेषु निजपापकथनेन धिङ्मामिति पापकारिणमिति पश्चात्तापेन शुध्यति। अस्य पापकारिणो यस्मिन् प्रायश्चित्ताख्ये कर्म्मण्यनुष्ठिते न चित्तस्य सन्तोषः स्यात्, तस्मिन् तदेव प्रायश्चित्तं तावदावर्त्तयेत् यावन्मनसः सन्तोषः प्रसादश्च स्यात्" इति कुल्लूकभट्टः।

तथाच याज्ञवल्क्यः,—

"प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान्॥" इति।

प्रमाणेऽस्मिन् अपश्चात्तापिन—इति विशेषणोपादानेन न गच्छन्तिनरकं पश्चात्तापिन इत्यवगम्यत इत्यर्थः।

तथा प्रमाणान्यवलम्ब्य कीदृशी व्यवस्था करणीयेति संशयनिरसनार्थमन्ते प्रदत्ता व्यवस्थैकावलोकनीया व्यवस्थादित्सुभिर्नवीनप्रेक्षावद्भिरिति-दिक्।

इति परिसमाप्तं प्रायश्चित्तविवेचनं।

अथ गुरुदेवचरितवर्णनपूर्व्वकग्रन्थसमापनकरणं।

यो दर्भाग्रसमानबुद्धिविभवः प्रख्यातकीर्त्तिर्गुणैः,
श्रौतस्मार्त्तसमस्तकर्म्मकुशलः श्रीगोपिनाथाभिधः।
नानाशास्त्रविचारशुद्धहृदयो निर्मत्सरोऽमायिको,
योगाभ्यासरतः सदा समभवत् संख्यावतामग्रणीः॥

गुरुदेवचरितवर्णनं ।

चातुर्य्यं चतुराननस्य निभृतं गाम्भीर्य्यमम्भोनिधे,—
रौदार्य्यं विबुधद्रुमस्य मधुरां वाचं च वाचस्पतेः ।
धैर्य्यं धर्म्मसुतस्य शर्म्म सकलं देवाधिपस्याहरत्,
श्रीमान्खर्व्वातनयः सदा सविनयो यो गोपिनाथाह्वयः ॥
कीर्त्तिर्दिक्षु विदिक्षु यस्य रजनीजानिप्रभाभास्वरा,—
गायन्ति द्विजदारका हिमहरक्षीराब्धिशुभ्रा भुवि ।
काव्ये व्याकरणे तथा विवरणे योऽनन्यसाधारणो,—
गोपीनाथपदाब्जचिन्तनपरोऽन्ते प्राविशद्ब्रह्मणि ॥
श्रीहारीतकुलार्णवेन्दुरतुलैः शिष्यैः सदाभ्यर्च्चितो,
योऽगान्मे पदवीं गुरोरिव गुरुः सर्व्वासु विद्यासु च ।
तस्यानुग्रहतोऽधमोऽप्यहमिमं ग्रन्थं कृपावारिधे—
र्विघ्नव्यूहमतीत्य शंषमनयं भक्त्या विशुद्धात्मनः ।

शाकेऽद्रिवह्न्यष्टशशाङ्कसंख्ये,
वारे गुरोर्माधवशुक्लपक्षे ।
नवोद्धयं भूततिथौ निबन्धो,—
गतः समाप्तिं नृहरेः प्रसादात् ॥

समाप्तोऽयं निबन्धः कल्यापद्धर्मसर्व्वस्वाह्वयः ।



# परिशिष्ट

## —श्रीजगन्नाथदेवोविजयतेतरां—

श्रीपुरुषोत्तमक्षेत्रान्तर्गत-श्रीजगन्नाथमन्दिरावस्थितश्रीमुक्तिमण्डपस्थपण्डित-सभा-व्यवस्थापक-पण्डितानां व्यवस्थेयं ।

भरतखण्डदुर्लभां विद्यामध्येतुं विलासितामन्तरा वाणिज्याद्यावश्यककार्य्यजातमनुष्ठातुमर्णवपथे वाष्पीयपोतेन श्वेतद्वीप (इंग्लण्डादिनामादेशं) मनुगच्छतां तत्रैव वर्षाद्यूर्द्ध्वसमयमधिवसतां गत्यन्तराभावात्तद्देशीयव्यक्तिहस्तपाचितहिन्दुजातीयभक्ष्यद्रव्यजातेन प्राणरक्षणमनुतिष्ठतां सुयोगाभावात् स्वस्वजातीयनित्यनैमित्तिककर्म्मव्रातं कर्त्तुमक्षमाणां विद्याध्ययनादिसमापनानन्तरं स्वदेशं प्रत्यावृत्तानां भारतीयसनातनार्य्यसामाजिकादिनियमव्रातमवलम्ब्येदानीमत्रैव यथाविधानमवस्थातुं यावज्जीवनमभिलषतां ब्राह्मणादिशूद्रान्तानां तथाऽनुलोमजानां प्रतिलोमजानां च भारतीयलोकनिवहानां तथाऽसति सुयोगेऽगतिकतया निरुक्तदेशीयव्यक्तिहस्तपाचिततद्देशीयहिन्दुधर्मविगर्हितभक्ष्यद्रव्यनिकरेण जीवनधारणमाचरतां केषांचिद्भारतीयार्य्याणां वा देशकालपात्रदृष्ट्या प्रायश्चित्तविधानेन, समाजार्हत्वं भवति न वेति प्रश्नः ।

उत्तरं—प्रश्नमिमं मन्वादिधर्मशास्त्रनिवहेन सार्कं पर्य्यालोच्य यादृक्सिद्धान्ते वयमुपनीताः समुल्लिख्यतेऽधस्तात् सः ॥

यथा बृहन्नारदीयपुराणप्रभृतिकतिपयग्रन्थेषु कलिवर्ज्यप्रकरणे घोषितस्यापि संयमः” इत्यादि प्रमाणनिकरोल्लेखदर्शनेऽपि भरतखण्डस्थप्रसिद्धमन्वाद्यतिप्राचीनधर्मशास्त्रजालेषु तादृक् प्रमाणकल्पसद्भावानवलोकनात्, तथा वेदादौ भारतीय सकलहिन्दुधर्मावलम्बिनां तथा बोधायनसूत्रेऽपि भारतवर्षोत्तरदिग्भागवासिनामार्य्याणां प्रायश्चित्तमन्तरा इष्टसमुद्रगमनव्यवहारत्वात्, तथा समुद्राधिकरणकगमनजनितपापप्रायश्चित्तविधानेन समाजार्हत्वस्य बोधायनेनाप्यनुमोदितत्वात्, तथा सत्यपि निरुक्तपुराणोपपुराणीयादि-

ग्रन्थपतितकलिवर्ज्यप्रकरणान्तःपातिनः कलियुगानुष्ठितसागरनौगमननिषेधकस्य शोधितस्येति प्रमाणजातस्य प्रामाण्येऽङ्गीकृते सत्यादिद्वापरान्तयुगान्तर्गतापत्समयेष्विव कलियुगान्तर्भूतापत्समयेऽप्यनापत्कालीनविधिलंघनस्य धर्मशास्त्राभ्यनुज्ञातत्वात्,

तथा समुद्रगमनजनितपापसंमिश्रणे सांकर्य्यविषयकप्रायश्चित्तविधायकधर्मशास्त्रीयप्रमाणवृन्दसमीक्षणाच्च यथादेशकालपात्रशक्तिप्रायश्चित्तानुष्ठानेन भवेयुः स्वसमाजभुक्ताः प्रश्नोक्तपुरुषा निर्विवादमिति विदुषां राद्धान्तः।

राद्धान्तमितं कक्षीकुर्वन्नधस्तात् प्रमाणानि यथा क्रमं। तथा प्रायश्चित्तमन्तरा सकलहिन्दुधर्मावलम्बिनां समुद्रपोतगमनानुष्ठानविषयकप्रमाणानि-यथा, ऋग्वेदे,—ऋक् १ मं, २५ सू म ७, "वेदा यो वीनां पदमन्तरिक्षेण पततां वेद नावः समुद्रियः" भाष्ये "अन्तरिक्षेण पततां आकाशमार्गेण गच्छतां वीनां पक्षिणां पदं यो वरुणो वेद तथा समुद्रियः समुद्रेऽवस्थितो वरुणः नावो जले गच्छन्त्याः पदं वेद जानाति सोऽस्मान् वन्धनान्मोचयत्विति शेषः" इति सायनः। तथा ऋक् १०म सू १३६, म५, "वातस्याश्वो वायोः सखाथो देवेषितो मुनिः। उभौ समुद्रा वाक्षेति यश्च पूर्व उतापरः" भाष्ये,—

"वातस्य वायोः गतिरिव अश्वोव्यापः, यद्वा वायोरश्विता भोक्ता, वायुरेवतस्याहार इत्यर्थः, अतएव वायोः सखा मित्रभूतः, अथो अपिच देवेषितः देवेन द्योतमानेन वायुना सूर्य्येण वा इषितः प्राप्तः इदृशोमुनिः—

करिक्रताख्य ऋषिः उक्तप्रकारेण वायुरूपः सूर्य्यरूपो वा सन् उभौ समुद्रौ उदधी आक्षेति अभिगच्छति, कौ तौ समुद्रौ यः पूर्वः समुद्रः उतशब्दश्चार्थे यश्चापरःसमुद्रः, इति तद्व्याख्यातारः॥

तथा, ऋक्, ७ मं ८८ सू, ३,म "आयद्रुहाव वरुणश्च नावं प्रयत्समुद्रमीरयावमध्यं। अधियदपां स्नुभिश्चराव प्रप्रेङ्ख ईङ्खयावहै शुभे कं"। भाष्ये—

"यत् यदा वरुणे प्रसन्ने सति अहं वरुणश्चोभौ नावं द्रुममयीं तरणसाधनभूतां आरुहाव उभाव आरूढाव भूविवतां च नावं यत् यदा समुद्रं मध्यं समुद्रस्य मध्यं प्रति प्रेरयाव प्रकर्षेण गमयाव, यत् यदा च अपां उदकानां अधि उपरि स्नुभिः गन्तौभिरन्याभिरपि नौभिः चराव वर्त्तावहै तदानीं

शुभे शोभार्थं प्रेंखे नौरूपायां दोलायामिव प्रेंखयावहै निमोचनैस्तरङ्गैरितश्चेतश्च-प्रविचलन्तौ संक्रीड़ावहै कं सुखं यथा भवति तथेत्यर्थः" ।

तथा ऋक् १-५६-२-"तं गूर्त्तयो नेमन्निषः परीणसः समुद्रं न संचरणे सनिष्यवः । पतिं दक्षस्य विदथस्य नू, सहो गिरिं न वेना अधिरोह तेजसा" भाष्ये,—"गूर्त्तयः स्तोतारः नेमन्निषः नमस्कारपूर्वं गच्छन्तः यद्वा नीत—

हविष्का परीणसः परितो व्याप्नुवन्तः एवं गुणविशिष्टा यजमानाः तं इन्द्रं स्तुतिभिः अधिरोहन्ति स्तुवन्ति इत्यर्थः । तत्र दृष्टान्तः सनिष्यवः सनिं धनं आत्मन इच्छन्तो वणिजः धनार्थं संचरणे संचारे निमित्तभूते सति समुद्रं न यथा नावा समुद्रमधिरोहन्ति एवं स्तोतारोऽपि स्वाभिमतधनलाभाय इन्द्रं स्तुवन्तीति भावः हे स्तोतः! त्वं च दक्षस्य प्रवृद्धस्य विदथस्य यज्ञस्य पतिं पालयितारं सहः सहस्व तं बलवन्तमिन्द्रं तेजसा दैवताप्रकाशनेन स्तोत्रेण सुचिप्रं अधिरोह स्तुहीति यावत् । वेनाः कान्ताः स्त्रियः गिरिं न यथा पर्वतं स्वाभिमतपुष्पोपचयार्थमधिरोहन्ति" ।

तथा, मनुः,—

"समुद्रयाने कुशलाः देशकालार्थदर्शिनः ।
स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमं प्रति" ।

तथा अथर्ववेदमहाभारतादिग्रन्थेषु एवंविधानां प्रमाणानां विद्यमानत्वेऽपि व्यवस्थावाहुल्यभिया नोल्लेखितानि तानीत्यत्र ।

तथा बौधायनसूत्रे,—

"पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तानि व्याख्यास्यामो, यथैतदनुपनीतेन सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनमित्यथोत्तरतः ऊर्णाविक्रयः शीधुपानमुभयतोदद्भिर्व्यवहार-मायुधीयकं—

समुद्रयानमितीतरदितरस्मिन् कुर्वन् दुष्यतीतरदितरस्मिंस्तत्र तत्र देशप्रामाण्यात्! इति ।

तथा समुद्रनौगमनकर्त्तुः प्रायश्चित्तविधानेन समाजार्हत्वानुमोदने मिताक्षरायां बौधायनः,—"यत्तु बौधायनेनोक्तं समुद्रयानं ब्राह्मणस्य न्यासापहरणं सर्वपण्यैर्व्यवहरणं भूम्यनृतं शूद्रसेवा यच्च शूद्रायामभिजायते तदपत्यं च भवति तेषां तु निर्देशश्चतुर्थकालं मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुकल्पस्थाना-सनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपघ्नन्ति पापमिति तदल्पकालसेवाविषयं।" निरुक्तप्रमाणानि युगान्तरविषयकाणि इति केचन यदर्थापयन्ति तत्तुच्छं। तत्तद्ग्रन्थेषु तद्विषयस्याप्रकाशिततया विभिन्नमतानामेकमतानयनेन (१)सत्यमपलपितुमयुक्तत्वात्। अतस्तदर्थानुष्ठानं न प्रतिभाति समीचीनमित्याशयः।

अपिच निरुक्तप्रमाणजालावलोकनबलात्समुद्रनौगमनमासीत्पूर्वतो-भारते निर्विवादमिति सुस्थिरं।

अन्यच्च—समुद्रनौगमनविषये सत्यपि निरुक्तप्रमाणजाले जागरूके दोष-दृष्ट्या तदनन्तरभाविपूज्यपादमहर्षिवृन्देन स्वस्वकर्तृकग्रन्थनिवहेषु तद्गमनस्य कलावनुपयोगितया कृतनिषेधत्वेऽपि तदन्तर्भूतापत्समये तन्निषेधस्या-परिदर्शनात् समयेऽस्मिन् तदनुष्ठानं न दोषाधायकमित्युद्भाव्यते सप्रमाण-पर्य्यालोचनं निम्नतः।

यथा,—नच समयोऽयमनापत्समय इति वाच्यं। स्वस्वजातीयवृत्त्या-जीविकानिर्वाहाभावस्यापद्रूपात्मकत्वेन शास्त्रानुमोदितत्वात्, तथा, तादृग्वृत्त्येदानीं जीविकानिर्वाहाभावस्य दृष्टिविषयत्वाच्च। कथमिति चेदुच्यते खण्डनमण्डनयुक्तिनिर्देशपूर्वकं। यथा,—

इदानीन्तनसमये सत्यापत्कालात्मकत्वेन निर्णीते, रोगदुर्भिक्षादि प्रपीड़िताववस्थाया आपद्रूपत्वेन परिसंख्यातत्वात्तदीयकाल एवापत्समय-इत्यापत्तिमुत्थापयन्ति केचन तर्ककुशलाः निम्नस्थयुक्तिप्रदर्शनेनैव।

यथा,—निरुक्तकालस्य बहुवर्षानवस्थायितया समयस्याधुनातनस्य बहुवत्-सरव्यापित्वेन च कथमापत्समयात्मकत्वेन भवेत् परिगणितत्वमस्य।

---

(१) सत्यापलापायुक्तत्वात्।

अपिच—वित्ताद्यभाववशतः कतिपयानां मानवानां सत्यां विपत्तौ संघटितायामपि सृष्टिनियमाधीनतया क्रोडीकर्तुं मानवान् सर्वान् विपदियं न संघटेतेति पूर्वपक्षः। सिद्धान्ते तु वक्ष्यमाणविधया सत्यापदिति समाधाने न सम्भवेत् काप्यापत्तिः। कुत इति चेत् विव्रियतेऽत्र संक्षेपतः। यथा—धर्मशास्त्रानुगतापद्विविधा, रोगाद्यभिभूतावस्था, सम्यग्वर्त्तनोपायानुपलम्भः, धर्मविप्लवश्च, अर्थात् रोगशोकादिभिः प्रपीड़ितप्राणिनां याऽवस्था, सम्यक्रूपेण स्वीयस्वीयवृत्त्या स्वस्वजीविकानिर्वाहोपायस्य योऽभावः, क्रमशो धर्मलोपोपक्रमश्च, सर्वमेतदापदात्मकत्वेनाभिहितमेव, तदात्मकानामापदां सर्वासां स्यादेवाल्पकालावस्थायित्वं तथा बहुवर्षव्यापित्वं च, ज्वरादिषु कतिपयेषु गदेषु कियत्समयमुपगतेषु सत्स्वप्युपशमं कुष्ठादयो रोगा भवन्त्यामरणं क्लेशदायकाः, तथा सति स एव समयः किमापत्काल इति न परिगण्यते सर्वैः। यदा कस्मादभाववशतोऽप्याजीवनावधि स्वाच्छन्द्येन परिचालयितुं स्वजीविकां न कमप्युपायमुपलभेरन् लोकाः, तदा स एव समयो विपत्समयात्कोऽन्य इति कथ्यते लोकैः।

भवति नैतच्छास्त्रदुष्टं। अतः स एवापत्काला-तिरिक्त इति नोच्यते सर्वैः। नच सांसारिकनियमानुसारेणैकदा सर्वे लोका नाभावग्रस्ता इत्यापत्तिः सुसंगतेति वाच्यं, सति पारावारनिमग्ने पोते तदारोहिणां प्राणिनां सर्वेषामेकदा दृष्टप्राणविसर्जनत्वात्, ग्रामदाहाद्यवसरे तद्ग्रामावस्थितानां जन्तूनां युगपदौचित्यभस्मीभावत्वाच्च। अशौचादिप्रकरणेऽवलोकितान्येवैतद्विषयकाणि शास्त्रवचनानि सकलेषु धर्मशास्त्रेषु। तावदवलोक्यते प्रायशो यथैव महार्घावसरेऽन्नाद्यभावप्रपीड़ितानां प्राणिनां व्याकुलता सदातनी। तथैव परिदृश्यतेऽभावशून्या धनिका वित्तादेः संरक्षणावेक्षणे। तथा राजानोऽपि प्रजादिपरिपालने तदपेक्षया विशेषाकुलाः। सकलानामेतेषां व्याकुलता एका विभिन्ना वा। न तावद्विभिन्ना व्याकुलतात्वावच्छिन्नव्याकुलताया ऐक्यात्। अतः सर्वैरेवावश्यमङ्गीक्रियते सैकेति। ततो व्याकुलतोपलक्षितः कालः एवापत्समयो नान्य इत्यवश्यमेव स्वीकरणीयं सर्वैर्निर्विवादं। परामष्टु-मिदानीं भवेदुद्वेदयशगास्तदा प्राप्नुवन्ति यदेकांशोऽवश्यमपक्षः, अन्योऽभावाक्रान्त-

इति। अतएव समयोऽयं न सार्वजनीनापत्समय इति न कथयिष्यते कैरपि हृदयवद्भिर्लोकैः। श्रीजगदीश्वरसृष्टेर्नियमोऽयं यत्क्रियत्स्वेकविषयकाभावाभिभूततया सत्स्वपि दुःखितेषु केचनान्यविषयकाभावेन भवन्ति कातराः। किन्तु तदुपलक्षितः कालः आपत्समय एवेति वक्ष्यते सर्वैः। सत्यामियत्समयपर्य्यन्तव्यापिन्यामापदि तदभिलक्षितः कालो विपत्समयात्मकत्वेन कथनीय इति न ब्रुवन्ति शास्त्राणि। वरं शास्त्राणि यथा विपत्समयत्वं प्रतिपादयन्त्यल्पकालव्यापिदुःखितावस्थायास्तथा बहुसम्वत्सरव्यापिदुःखापन्नावस्थायाश्च, अतो या आपद्यत्समयव्यापिनी तद्विपदस्तत्समय एवापत्काल इति निर्गलितार्थः। एतेनापत्कालस्य यावत्कालं रोगाद्यभिभूतता-सम्यग्वर्त्तनोपायानुपलम्भान्यतरजन्यनिषिद्धकार्य्यानुष्ठानप्रवृत्तिजनकत्वं। अथवा, धर्मविप्लवस्यापत्कालात्मकत्वेन विद्यमानतया विधीयते लक्षणान्तरं यथा,— यावत्कालं रोगाद्यभिभूततासम्यग्वर्त्तनोपायानुपलम्भधर्मविप्लवान्यतमजन्यनिषिद्धाचरणप्रवृत्तिजनकत्वविशिष्टत्वमापत्कालत्वमिति लक्षणं समायातं। त्रिविधात्मकापत्समय-विषयेऽस्मिन् प्रदर्श्यन्ते शास्त्रीयप्रमाणानि यथायथमत्र। यथा, महाभारते" पीड़ा चापत्कालस्य पश्चिमानं च पाण्डव इति" तथाच सम्यग्वर्त्तनोपायानुपलम्भात्मकापद्विषये—

यथाह मनुः,—

> "अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
> जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः॥"
> उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्।
> कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकामिति॥

अधुनापद्धर्ममाह कुल्लूकभट्टः-अजीवन्निति। यथोक्तेनाध्यापनादि स्वकर्मणा ब्राह्मणो नित्यकर्मानुष्ठान-कुटुम्बसम्बर्द्धनपूर्वकमजीवन् क्षत्रियकर्मणा ग्राम-नगररक्षणादिना जीवेत्। यस्मात् क्षत्रीयधर्मोऽस्य सन्निकृष्टा वृत्तिः। उभाभ्यामिति। ब्राह्मणः उभाभ्यां स्ववृत्तिक्षत्रीयवृत्तिभ्यामप्यजीवन् केन

प्रकारेण वर्त्तेतेति यदि संशयः स्यात् तदा कृषिपशुरक्षणे चाश्रित्य वैश्यस्य वृत्तिमनुतिष्ठेत्, कृषिगोरक्षणं वाणिज्यस्यापि प्रदर्शनार्थं। तथा च विक्रेयाणि वक्ष्यति। स्वयंकृतं चेदं कृष्यादि ब्राह्मणापद्वृत्तिः। अस्वयंकृतस्य कृताकृताभ्यां जीवेत इत्यनापद्येव विहितत्वादिति।

तथा स एव,—

"वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः।
अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत्॥
सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः।
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते॥
जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः।
न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित्॥
वैश्योऽजीवन् स्वधर्मेण शूद्रवृत्त्यापि वर्त्तयेत्।
अनाचरन्नकार्य्याणि स वर्त्तेत च शक्तिमान्॥
अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनां।
पुत्रदारात्ययं प्राप्तो जीवेत् कारुककर्मभिः॥
यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः।
तानि कारुककर्माणि शिल्पानि विविधानि च॥ इति

सर्वत इति ब्राह्मण आपदं प्राप्तः सर्वेभ्योऽपि निन्दितनिन्दिततरनिन्दिततमेभ्यः क्रमेण प्रतिग्रहं कुर्य्यात्। अत्रार्थान्तरन्यासनामालङ्कारः। यस्मात् पवित्रं गङ्गादि रथ्योदकादिना दुष्यतीत्येतत् शास्त्रदृष्ट्या नोपपद्यते, यस्मान्नाध्यापनादिति ब्राह्मणानामापदि गर्हिताध्यापनयाजनप्रतिग्रहैरधर्मो न भवति, यस्मात् स्वभावतः पवित्रत्वेनाग्न्युदकतुल्यास्ते। जीवेदिति,-

क्षत्रिय: आपदं प्राप्त:, एतेनेत्यभिधाय सर्वेणेत्यभिधानात् ब्राह्मणगोचरतया निषिद्धेनापि रसादिविक्रयणेन वैश्यवज्जीवेत्। न पुन: कदाचित् ब्राह्मण-जीविकामाश्रयेत्। न केवलं क्षत्रिय: वैश्यादयोऽन्येऽपि। शक्तिमानित्युपा-दानेनैव शक्तिविहीनस्याकार्य्याचरणेन दोष इत्यवगम्यते। विप्रादीना-मुपलक्षणमेतत्। इति व्याख्यानकर्त्तार:। एवं याज्ञवल्क्यादिग्रन्थेषु प्रमाणानां सत्त्वेऽपि व्यवस्थाप्राचुर्य्यभिया नोद्धृतान्येव तानि। तथाच धर्मविप्लवात्मकापदि महाभारतीय शान्तिपर्वान्तर्गतापद्धर्मपर्वणि—

युधिष्ठिर उवाच,—

"हीने परमके धर्मे सर्वलोकाभिलंघिते।
अधर्मे धर्मतां नीते धर्मे चाधर्मतां गते॥
मर्य्यादासु विनष्टासु क्षुभिते धर्मनिश्चये।
कथमापत्सु वर्त्तेत तन्मे ब्रूहि पितामह!॥
येन येन विशेषेण कर्मणा येन केनचित्।
अभ्युज्जीवेत् साद्यमान: समर्थो धर्ममाचरेत्॥
यथायथैव जीवेद्धि तत्कर्त्तव्यमहेलया।
जीवितं मरणाच्छ्रेयो जीवन् धर्ममवाप्नुयात्॥
सोऽहं जीवितमाकांक्षन्नभक्ष्यस्यापि भक्षणं।
व्यवस्येद्बुद्धिपूर्वं वै तद्भवाननुमन्यतां॥

इत्यादिबहुप्रमाणानि सन्त्यपि व्यवस्थाबाहुल्यभिया नोत्तोलितानि। न च निवृत्तित्रिविधात्मकापत्समयस्य प्रोक्तप्रमाणजालेन क्षतायामपि सत्त्वां स्थिरतायां युगान्तरापेक्षया युगेऽस्मिन् भविष्यमाणनानाविधानिष्टसंवस्थायेय-प्रमाणै: सूचितत्वात् कलिसामान्यमेवापत्समय इति वाच्यं "चत्वार्य्यब्द-सहस्राणि चत्वार्य्यब्दशतानि च। कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रह:।"

इति व्यासोक्तवचनेन चतु:शताब्दसहितचतु:सहस्राब्दपरिमितस्य कल्यंशस्य त्रिपादधर्माधारत्रेतायुगात्मकत्वेन परिगणिततया कलिसामान्य-

स्यानापत्कालत्वात् "आपद्वृत्तिर्हि जायते"मित्यादिवाक्येनैव विप्राणां पूर्वतो व्याख्यातकियत्परिमाणकापद्वृत्त्यवलम्बनस्यातिदिष्टतया विवादास्पदत्वाभावाच्च। अनेन कलिसामान्यमेवापत्समय इति राद्धान्तः। न चास्येदानींतनस्य समयस्यानापत्कालत्वमिति शङ्कनीयं। बहुवासरतो भारतवर्षस्य विदेशीयभिन्नधर्मावलम्बिनरपत्यधीनकलिप्राबल्यस्य शास्त्रीयप्रमाणसुविदितत्वेनापत्समयत्वात्। कलिप्रबलताया . आपत्समयत्वाच्च। प्रमाणितं चैतदनेन, यदा तु म्लेच्छजातीया राजानो धनलोलुपा भविष्यन्ति महाप्राज्ञ तदैव प्रबलः कलिरित्याद्युक्तमतस्यवचनेन। अपिच जीवनहेतुत्वेनापदि स्थूलतो वृत्त्यन्तराद्युपाये सत्यपि निरुक्तप्रमाणव्रातेन निरूपिते संप्रति विभागशास्त्रहेतुतया मनुयाज्ञवल्क्यप्रदर्शिता बहुविधा उपायाः प्रकाश्यन्तेऽत्र यथाह मनुः,—

"विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
धृतिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः॥"

"विद्येति—आपत्प्रकरणाज्जीवनहेतव इति निर्देशादेतेषां मध्ये यया वृत्त्या यस्यामापदि जीवनं निषिद्धं तथा तस्यापद्यभ्यनुज्ञायते। यथा ब्राह्मणस्य भृतिसेवादि एवं शिल्पादावपि ज्ञेयं। विद्या वेदविद्याव्यतिरिक्ता (जीविकानिर्वाहहेतुका) वैद्यतर्कविषापनयनादिविद्या (आदिपदेन मौलिकधर्माविरोधिविदेशीयविद्याशिक्षादिसंग्रहः) सर्वेषामापदि जीवनार्थं न दुष्यति। शिल्पं लिखनादिकरणं। आदिपदोपादानेन सकलकारुकर्मणां संग्रहणं। भृतिः प्रेष्यभावेन वेतनग्रहणं। सेवा पराज्ञासम्पादनं। अर्थात् नृपादिधनिकमानवसेवया जीविकापरिचालनं। गोरक्ष्यं पाशुपाल्यं। विपणिर्वाणिज्यं। कृषिः स्वयंकृता। धृतिः सन्तोषः। तस्मिन्नल्पकेनापि जीव्यते। भैक्ष्यं भिक्षासमूहः, कुसीदं वृद्ध्या धनप्रयोगः, स्वयंकृतोऽपि इत्येभिर्दशभिरापदि जीवनीयमिति कुल्लूकभट्टः। तथाहि मेधातिथिः",- सर्वपुरुषाणामापदि वृत्तिरियमनुज्ञायते। तत्र विद्या वेदविद्याव्यतिरेकेण वैद्यतर्कभूतविषापनयनविद्या सर्वेषां जीवनार्था न दुष्यति शिल्पं व्याख्यातं,

भृतिः प्रेष्यकत्वं। सेवा परचित्तानुवर्त्तित्वं। धृतिः सन्तोषः इष्टार्थं चैतत्। यतो विहितवृत्त्यभावेन एते जीवनोपायाः संकीर्य्यन्ते पुरुषमात्रविषयत्वात्। इति,

याज्ञवल्क्यः,—

"कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः।
सेवानूपं नृपो भैक्ष्यमापत्तौ जीवनानि तु"॥

"किंच आपत्तौ जीवनानीति विशेषणात्कृष्यादीनां मध्येऽनापदवस्थायां यस्य या वृत्तिः प्रतिषिद्धा तस्य सा वृत्तिरनेनाभ्यनुज्ञायते। यथापदि वैश्य वृत्तिः स्वयंकृता कृषिर्विप्रक्षत्रिययोरभ्यनुज्ञायते। एवं शिल्पादीन्यस्याभ्यनुज्ञायन्त। शिल्पं सूपकरणादि। भृतिः प्रेष्यत्वं। विद्या भृतकाध्यापकत्वाद्या (आद्यपदोपादानेन कुल्लूकभट्टव्याख्यातविषयाः संगृहीता अत्र।) कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः। तत्स्वयंकृतमभ्यनुज्ञायते। शकटं भाटकेन धान्यादिवहनद्वारेण जीवनहेतुः। गिरिस्तद्गततृणेन्धनद्वारेण जीवनं। सेवा, परचित्तानुवर्त्तनं। अनूपं प्रचुरतृणवृक्षजलप्रायप्रदेशः। तया नृपयाचनं। भैक्ष्यं स्नातकस्यापि एतान्यापत्तौ जीवनानीति विज्ञानेश्वरः"। प्रोक्तव्याख्याकर्तृभिः,—संक्षेपतो विहितस्यापि तद्वचनद्वयोक्तजीविकानिर्वाहप्रयोजनकोपायविस्तराभ्यन्तरे प्रकृतोपकारकतयाऽनुष्ठीयतेऽत्र विशेषविवरणं विद्यावाणिज्यादेः। यथा विद्या ज्ञानार्थकविद्धातोः करणे क्यप् प्रत्ययः। ततः स्त्रियां टाप्। अनया रीत्या विद्येतिपदं निष्पन्नं। सा अध्ययनजन्यज्ञानात्मिका। सा तु वेदादिचतुर्दशविधा। किन्त्वेषा निःश्रेयससाधिका नत्वापदि जीविकाप्रचलनापादिका। अतस्तन्निर्वाहार्थमभ्युदयसाधनं नैदानिकधर्मानुगं यत् किंचिदपि विद्याध्ययनं करणीयमिति कुल्लूकभट्टाभिप्रायः। सति जीवनधारणे निःश्रेयससाधनधर्मः सुसाध्य एव। अन्यथा तद्रक्षणं निराधारमेव। शरीरधारणमन्तरा धर्मसम्पादनस्यासाध्यत्वात् विषयेऽस्मिन् प्रमाणानि मन्वादिधर्मशास्त्रेषु द्रष्टव्यानि॥ अपिचानधीतविद्यानां द्विजातीनां राज्ञा दण्ड्यत्वमपि प्रतिपादितं धर्मशास्त्रकारैरधस्थप्रमाणजालेनैव।

पराशरः,

अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥ इति

वशिष्ठोऽपि,—

अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥ इति

प्रोक्तप्रमाणद्वयस्यानधीयाना इति विशेषणपदस्य भैक्ष्यचरविशेषण-साहचर्य्यानधीतजीविकानिर्वाहकविद्यारूपोऽर्थो बोद्धव्यः । अतो द्विजानामुभयविधविद्याध्ययनं सदैव करणीयं । किन्त्वापत्सम्भावनया निषिद्धाया अपि यस्याः कस्याश्चित् विद्याया द्विजातिकर्त्तृकाध्ययनस्य धर्मशास्त्रकारैरभ्यनुज्ञातत्वाद्विदेशीयार्थकर्मविद्याशिक्षानुष्ठानं न दोषाधायकमिति राद्धान्तः । न च निम्नजातेरध्ययने धर्मशास्त्रविरुद्धमिति वाच्यं । आपदि निम्नजातेरध्ययनस्य शास्त्राभ्यनुज्ञातत्वात् । एतत्तु निम्नजात्यध्यापनस्योपलक्षकं । प्रमाणमत्र आगन्तुकं । प्रमाणं यथा वृहदारण्यकोपनिषदि" वाचा स्म वै पूर्व्वे उपयन्ति सहोपायनकीर्त्त्योवास । अत्र भाष्यं वाचा स्म किल पूर्व्वे ब्राह्मणा विद्यार्थिनः सन्तः क्षत्रियान् वैश्यान् उपयन्ति शिष्यवृत्त्या उपगच्छन्ति । नोपायनेन शुश्रूषाभिः अतः स गौतमः उपायेन कीर्त्त्या उपगमनकीर्त्तनमात्रेणैव उवास उषितवान् । नोपायनं चकार । तथानन्दगिरिः । आपदि समादधिकाद्वा विद्यां प्राप्य सम्भवावस्थायां उपायनमुपगमनं पादोपसर्पणं ।

गौतमोऽप्याह,—

आपत्कल्पो ब्राह्मणस्य ब्राह्मणाद्विद्योपयोगोऽनुगमनं, शुश्रूषासमाप्तेः ब्राह्मणो गुरुः, याजनाध्यापनप्रतिग्रहाः सर्व्वेषां पूर्वः पूर्व्वो गुरुः, तदलाभे क्षत्रवृत्तिस्तदलाभे वैश्यवृत्तिः" ।

तथाच मनुवचनं,—

"अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः" ॥ इति

यथा यत्तु न म्लेच्छभाषां शिक्षेतेति वशिष्ठवचनप्रदर्शनेनैव म्लेच्छविद्याध्ययने विरोधमुत्पादयन्ति तत्तुच्छं । जीविकानिर्वाहनिमित्तविद्यापठनस्यापदि शास्त्रानुकूलत्वात् । तथा यवनीयराजत्वावसरतस्तच्छिक्षायाः शिष्टेराहृतत्वाच्च । किन्तु प्रायशो विनापि भारतभिन्नदेशान्तरगमनं न सम्भवति बहुविषयककौशलाधायकविद्याध्ययनं विपत्कष्टनिवारकवाणिज्यानुष्ठानं च । तत्तु शिक्षाद्युद्देश्यकपोतकरणकसमुद्राधिकरणकगमनानुकूलकृत्याश्रयत्वमपेक्षते । किन्तु नियताहिकस्येत्यादिकतिपयमुनिभाषणोक्तसमुद्रयाननिषेधस्य पूर्व्वप्रदर्शितकलिसामान्यपरतया तदनुष्ठानमापदि न विगानमिति धर्मशास्त्रकाराभिप्रायः । न च—"आपद्वृत्तिर्द्विजाग्र्याणामशस्तनिकता तथे"ति वचनवलात् कलाविबापद्वृत्तेर्निषिद्धतया कथमत्रावलम्बनीयाऽपद्वृत्तिरितिवाच्यं, वचनस्यास्य चाक्रायणादिमहर्षिभिरन्यथाव्याख्यातत्वेन तदवलम्बनस्यादोषावहत्वात् । तत् व्याख्यानादिकं प्रचुरतया नोत्तालितमत्र । सति सन्देहे व्याख्यानमिदं कल्यापद्धर्मसर्वस्वग्रन्थेऽवलोकितव्यमेव । केवलं तु तद्गमनदेशावस्थानाद्यवसरेऽगतिकतया सति सम्भवे सन्ध्यादिनित्यकर्मानुष्ठानविसर्जनस्य तथा हिन्दुधर्मविगर्हितभक्ष्यभक्षणविजातीयसंसर्गादेश्च प्रोक्त विद्याध्ययनादिकार्य्यसमापनानन्तरं कृते सति स्वदेशप्रत्यावर्त्तने देशकालपात्रदृष्टितः सामान्येन प्रायश्चित्तं विधाय विप्रादिशूद्रान्तःपूतो व्यवहार्य्यश्चेति विदुषां परामर्शः । नन्वनिश्चितावधिकस्य कल्यभ्यन्तरपातिनोऽधुनातनापत्समयस्य विद्यमानतया "निस्तीर्य्य तामथात्मानं पावयित्वा न्यसेत्पथि" । इत्यादि याज्ञवल्कीयवचनेनोत्तीर्णापत्समयस्याभ्यनुज्ञातप्रायश्चित्तत्वेन च विद्याध्ययनादिकर्मसमाप्त्यनानन्तरं कथं विप्रादिना प्रायश्चित्तं विधातव्यमिति व्यवस्थापितमिति चेन्न । अहरहः सन्ध्यामुपासीत इति श्रुतिप्रमाणात्, "नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमां । स शूद्रवद्वहिष्कार्य्यः सर्वस्मात् द्विजकर्मणः ।" इति मनुस्मृत्युक्तवचनबलाद्दाशौचवदापद्यपि संकोचेनापि प्रात्याह्निकसंध्यानुष्ठानस्याभ्यनुज्ञाततयाऽकरणे प्रत्यवायश्रवणात्तथा भक्ष्यभक्षणादेर्मनुना निषिद्धत्वपरिदर्शनाच्चोपायान्तरविहीनतया कादाचित्कतदतिक्रमजन्यपापोपशमनाय कृतेऽपि प्रायश्चित्ते "अधिकं तु प्रविष्टं न च तद्धानिरिति" न्यायेन प्रकृतस्य सत्यसम्भवेन दोषाभावात् ॥

अतोऽप्ययमेव विशेषोऽनापदि सत्यप्यविहिताचरणे लघुगुरुप्रायश्चित्तस्याप्यव्यवस्थार्थता । अपिच सन्ध्यादिनित्यकर्मोपकरणानां तथा धर्मशास्त्रविहिताशारीयद्रव्याणां च सत्यपि प्राप्तिसम्भवे तदन्यथाचरणजन्यपापापनुत्तये-ऽनुष्ठेयं गुरुतरप्रायश्चित्तं । तथा तदसम्भवेऽगतिकतया तदनुष्ठानस्य धर्मशास्त्राभ्यनुज्ञाततया लघुतरप्रायश्चित्तविधाने न कापि विप्रतिपत्तिरिति परामर्शः ॥

ननु पापस्य निरुक्तसन्ध्यादिनित्यकर्मविसर्जनप्रभृतिशास्त्राविहितकार्यानुष्ठानजन्यात्मकतया बहुविधत्वात् प्रायश्चित्ताचरणं पार्थक्येन उत तन्त्रेणेति चेदुच्यते । यथा न तावदाद्य, सति पापसांकर्य्ये पृथक् प्रायश्चित्तविधायकधर्मशास्त्रीयप्रमाणपरिदर्शनात् । अतएव द्वितीयपक्षावलम्बनं शास्त्रानुकूलमेव । कथमेतदित्याकांक्षायां प्रदर्श्यन्तेऽधस्तात् शास्त्रीयप्रमाणानि ॥

यथाह पराशरः,—

सर्वेषामेव पापानां संकरे समुपस्थिते ।
शतसाहस्रमभ्यस्ता गायत्री शोधनं परं ॥ इति

तथाच शङ्खः,—

सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह ।
ये जपन्ति तदा तेषां न भयं विद्यते क्वचित् ॥
दशजप्ता तु सा देवी दिनपापप्रणाशिनी ।
सहस्रं जप्ता सा नॄणां पातकेभ्यः समुद्धरेत् ॥
स्वर्णस्तेयी कृतघ्नश्च ब्रह्महा गुरुतल्पगः ।
सुरापश्च विशुध्येत लक्षजप्येन सर्वदा ॥ इति ॥

अथवा स एव—

घृतयुक्तैस्तिलैर्वह्नौ हुत्वा तु सुसमाहितः ।
गायत्र्ययुतहोमात्तु सर्वपापैः प्रमुच्यते ॥ इति ।

दुःखत्राणप्रदा देवी पततां नरकार्णवे ।
तस्मात्तामभ्यसेन्नित्यं ब्राह्मणो नियतः शुचिः ॥

तथाच याज्ञवल्क्यः,—

यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्या वाचनं द्विज । इति ।

तथाच मिताक्षरायां विज्ञानेश्वरः,—

"किं च यत्र यत्र ब्रह्मवधादौ तज्जनितदोषजातेनात्मानं संकीर्णमभिभूतं द्विजो मन्यते तत्र तत्र गायत्र्या तिलैर्होमःकार्य्यः ॥ तत्र महापातकेषु गायत्र्या लक्षहोमः कार्य्यः ॥ 'गायत्र्या लक्षहोमे च मुच्यते सर्वपातकै"रिति यमस्मरणात् । अतिपातकादिषु पादपादह्रासः कल्पनीयः । तथा तिलैर्वाचनं दानं कार्य्यं । तथा रहस्याधिकारे वशिष्ठः । "वैशाख्यां पौर्णमास्यां वा ब्राह्मणान् पञ्च सप्त च । क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेदथवेतरैः ॥ प्रीयतां धर्मराजेति यद्वा मनसि वर्त्तते । यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति" । अनियतकालेऽपि दानं तेनैवोक्तं । "कृष्णाजिने तिलान् कृत्वा हिरण्यं मधु सर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतमिति" ।

तथा व्यासेनाप्युक्तं,—

तिलधेनुं च यो दद्यात् संयतात्मा द्विजन्मने ।
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः । इति ।

एवमादिदानजातं रहस्यकाण्डोक्तमविदुषां द्विजातीनां स्त्रीशूद्रयोश्च वेदितव्यमिति । मिताक्षरायां पुनः स एव । तथा गायत्र्याश्च महापातकेषु लक्षमतिपातकोपपातकयोर्दशसहस्रमुपपातकेषु सहस्रं प्रकीर्णकेषु शतमित्येवं विशेषतो जपः सर्वपापहरः । तथाच गायत्रीमधिकृत्य श्लोकाःशङ्खेनोक्ताः ।

शतं जप्ता तु सावित्री महापातकनाशिनी ।
सहस्रं जप्ता तु तथा पातकेभ्यः प्रमोचिनी ॥

दशसाहस्रजापेन सर्वकिल्बिषनाशिनी ।
लक्षं जप्ता तु सा देवी महापातकनाशिनी ॥
सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः ।
सुरापश्च विशुध्यन्ति लक्षं जप्ता न संशयः ॥ इति ।

प्रमाणानामेतेषामभ्यन्तरेऽशौचवत् संकोचविषयापदि द्विविधात्मकं प्रायश्चित्तमुन्नायितं । तत्र गायत्रीमन्त्रेण घृतयुक्ततिलहोमात्मकं प्रायश्चित्तं पक्षैकं ॥ तत्र महापातकादिपापसांकर्य्ये लक्षैकपरिमितं प्रतिपातकादि-पापसम्मिलने पादपादह्रासात्मकं । अन्यत्र गायत्रीजपात्मकं ब्रह्महत्यादि-पापसंमिश्रणे लक्षैकसंख्यातं तदन्यपातकसांकर्य्ये दशसहस्रगायत्रीजपपरिमितं प्रायश्चित्तमिति शास्त्रीयमर्य्यादा । विवेचनेनानेन सत्यपि निर्दिष्टे महा-पातकादिपापप्रायश्चित्ते किन्त्वत्र प्रश्नोत्तसमुद्रगमनहेतोरन्तरावस्थानजनित-पापानामतिपातकोपपातकसंकीर्णादिपापात्मकतया घृतयुक्ततिलेन लक्ष-परिमितहोमस्य पादपादह्रासमंख्यया प्रायश्चित्तमनुष्ठातव्यं । अथवा दश-साहस्रगायत्रीमन्त्रजाप्येन प्रायश्चित्तं विधातव्यमेव । यस्य यस्मिन्नभिरुचिस्तेन तदनुष्ठातव्यं निर्विवादमिति निर्गलितार्थः ॥

नच प्रायश्चित्तद्वयमिदं भवेद्ब्राह्मणादिप्रतिलोमजात्यन्तरजातीयव्यक्तिविषयकमिति वाच्यं जातिविशेषे धर्मशास्त्रनियमे पृथक्व्यवस्थापरिदर्शनात् । तथा मिताक्षरायां विज्ञानेश्वरः— एवं च ब्राह्मणानां येन हन्यमानगत-गुणविशेषेण यः प्रायश्चित्तविशेषो व्यवस्थितः, स एव तद्गुणविशिष्टे क्षत्रियादौ हन्तरि द्विगुणस्त्रिगुणो वेदितव्यः । एतयैव दिशा क्षत्रियवैश्यादावपि हीनेन उत्कृष्टवधे दोषगौरवात् प्रायश्चित्तस्यापि द्वैगुण्यादि कल्पनीयं । दोषगौरवं च दण्डगौरवादवगम्यत एव । यथोक्तं "प्रतिलोमापवादेषु द्विगुणस्त्रिगुणो दमः । वर्णानामानुलोम्ये च तस्मादर्द्धार्द्धहानितः इति" । यत्तु चतुर्विंशतिमतवचनं, "प्रायश्चित्तं तदाम्नातं ब्राह्मणस्य महर्षिभिः । पादोनं क्षत्रियः कुर्य्यादर्द्धं वैश्यः समाचरेत् । शूद्रः समाचरेत् पादमशेषेष्वपि पापसु" ।

तत्प्रतिलोमानुष्ठितचतुर्विधमानसव्यतिरिक्तविषयं । तथा शूद्रादिमिता-

दीनामप्यनुलोमोत्पन्नानां दण्डवत्प्रायश्चित्तमूहनीयं । दर्शितं दण्डतारतम्यं । "दण्डप्रणयनं कार्य्यं वर्णजात्युत्तराधरै"रिति । ततश्च मूर्द्धावसिक्तस्य ब्राह्मणवधे ब्राह्मणादतिरिक्तं क्षत्रियान्यूनमध्यर्द्धं द्वादशवार्षिकं भवति । अनयैव दिशा प्रतिलोमोत्पन्नानामपि प्रायश्चित्तगौरवमूहनीयं । तथा चान्त्यमित्राणामपि अङ्गिरसा विशेषो दर्शितः । इत्यादि । इत्यादिप्रमाणव्रातपर्य्यालोचनतोऽवबुध्यते ब्राह्मणेतरनिम्नतमजातीयानां स्वस्वापेक्षयोत्कृष्टजातीयलोकवधे तथोत्कृष्टजातीयस्त्रीसंभोगादौ च विप्रापेक्षयाऽन्येषां जातीयानां प्रायश्चित्ताधिक्यं तथा पापेष्वेतद्भिन्नेषु ब्राह्मणादप्यन्येषां जातीयानां क्रमशः क्षीणात्क्षीणतमप्रायश्चित्तानुष्ठानमिति, तथाच सकलजातीयरुग्णस्त्रीपुरुषबालकवृद्धानां स्वस्वजात्युक्तप्रायश्चित्तह्रासविषयेऽपि न पराङ्मुखा धर्मशास्त्रकाराः ॥

यथा, याज्ञवल्क्यटीकायां विज्ञानेश्वरः,—

"अकार्य्यकारिणस्त्वेषां प्रायश्चित्तं प्रकल्पयेत् ।" इति

तथा बालवृद्धादीनां साक्षात्कर्त्तृत्वेऽर्द्धमेव । "अशीतिर्यस्य वर्षाणि बालो वा प्यूनषोडशः । प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो-रोगिण एव चेत्यङ्गिरसः" स्मरणात् । तथावाक्तु द्वादशवर्षादशीतेरूर्द्ध्वमेव वा । अर्द्धमेव भवेत् पुंसां तुरीयं तत्र योषिता"मिति । तथानुपनीतस्यापि बालकस्य पादमात्रमेव प्रायश्चित्तं, "स्त्रीणामर्द्धं प्रदातव्यं वृद्धानां रोगिणां तथा । पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः" इति स्मरणात् । तथाप्यत्र देशकालपात्रशक्ति-दृष्टिरपि यथा जागरूका पूज्यपादानां महर्षीणां सापि प्रदर्श्यते निम्नतः ।

याज्ञवल्क्यः,—

"देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्यात् यत्र चोक्ता न निष्कृतिः" ॥

तथा च मिताक्षरायां विज्ञानेश्वरः,—

यदुक्तं प्रायश्चित्तजातं वक्ष्यमाणं वा तद्देशादिकमवेक्ष्य यथा कर्त्तुः

प्राणविपत्तिर्न भवति तथा विषयविशेषे कल्पनीयं। इतरथा प्रधाननिवृत्ति-प्रसंगात्। तथा वक्ष्यति "वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाप्सु सूर्य्यदृगिति" तत्र यदि हिमगिरिनिकटवर्त्तिनामुदकवास उपदिश्यते अति-शीताकुलिते वा शिशिरादिकाले तदा प्राणवियोगो भवेदिति तद्देशकालपरिहारेणोदक-वासः कल्पनीयः, तथा वयोविशेषादपि यदि नवतिवार्षिकादेरपूर्णद्वादश वार्षिकस्य वा द्वादशाब्दिकं प्रायश्चित्तमुपदिश्यते तदा प्राणा विपद्येरन्निति। ततोऽन्यवयस्के तत्प्रायश्चित्तं कल्प्यं। अतएव स्मृत्यन्तरे क्वचिदर्द्धं क्वचित्पाद इति वृद्धादिषु प्रायश्चित्तस्य ह्रासोऽभिहितः। तच्च प्राक् प्रपञ्चितं। तथा, धनदानतपश्चरणादि शक्त्यपेक्षया च, नहि निर्द्धनस्य पात्रे धनं वा पर्याप्तं इत्याद्युपपद्यते। तथोद्विजातिपत्त्यादेर्वा पराकादिकं नापि स्त्रीशूद्रादेर्जपादिकं। अतएव गजादीनामशक्नुवन् "दानं दातुं चरेत्कृच्छ्रं एकैकस्य विशुद्धय" इत्युक्तं। तथा, "प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव वा" चेति। तपस्यशक्तस्य स्मृ-त्यन्तरे प्राक् प्रायश्चित्तस्य ह्रासोऽभिहितः। इत्यादि॥ निगमागमोक्त-मन्त्रजपे स्त्रीशूद्रयोरधिकारित्वाभावाज्जपात्मकप्रायश्चित्तादेनः॥ तथा, तपोव्रता-नुष्ठानाशक्तस्य तपोव्रतात्मकप्रायश्चित्तविधानं च न दातव्यमिति विज्ञानेश्वरेण प्रकटीकृतं स्वाकृतं मिताक्षराख्ययाज्ञवल्क्यवचनव्याख्यानेन। तथा प्रायश्चित्तविषये-ऽस्मिन् विशेषविवृतिः प्रदर्श्यते पण्डितमर्य्यस्वनिबन्धकर्त्तृभिः। व्रतग्रहणविधिः। एतानि कृच्छ्रचान्द्रायणादीनि पापप्रायश्चित्तार्थमनुष्ठीयन्ते। तदा केशादिव-पनपूर्वकं व्रतात् पूर्वद्युः सायंकाले ग्रहीतव्यानि। अभ्युदयार्थं तु नैव वपनं।

"सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकं।
ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते॥
दीयते नखरोमादीन् प्रवाप्य स्नानमाचरेत्।
भस्मगोमयमृद्वारिपञ्चगव्यादि कल्पते॥
मलापकर्षणं कार्य्यं वाह्यशौचोपशुद्धये।
दन्तधावनपूर्वेण पञ्चगव्येन संयुतं॥

व्रतं निशामुखे ग्राह्यं वहिस्तारकदर्शने ।
आचम्याथ: परं मौनी ध्यायन् दुष्कृतिमात्मनः ॥
मनःसन्तापनं तीव्रमुद्वहेच्छोकमन्ततः ।

दिनान्ते व्रतस्य दिनस्य पूर्वेद्युः सायं । वहिः ग्रामाद्वहिः ॥

आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शालाग्नौ जुहुयाद्व्याहृतीः पृथक् ॥
रात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलमनुलेपनं ।
व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलकारकं ॥

स्त्रियाऽप्येवं व्रतपरिग्रहः कार्य्यः केशनखरोमवपनवर्जं । "विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनं । ऋते महापातकिनो गोहन्तुश्चावकीर्णिन" इति वचनात् । तथा मुण्डनविषयेऽस्मिन् विशेषमाह मिताक्षरायां विज्ञानेश्वरः,- एतानि कृच्छ्रादिव्रतानि प्रायश्चित्तार्थमनुष्ठीयन्ते तदा केशादिवपनपूर्वकं परिग्रहीतव्यानि । "वपनं तु व्रते चरेत्" इति गौतमस्मरणात् । अभ्युदयार्थे तु नैव वपनं । वशिष्ठेनाप्यत्र विशेष उक्तः,—

"कृच्छ्राणां व्रतरूपाणां श्मश्रुकेशादि वापयेत् । कुक्षिरोमशिखावर्ज"मिति । कृच्छ्राणां व्रतरूपाणां वपनान्यङ्गानि वक्ष्यन्त इति शेषः ।

वपनानिच्छोस्तु हारीतेन विशेष उक्तः,—

"राजा वा राजपुत्रो वा ब्राह्मणो वा वहुश्रुतः ।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥
केशानां रक्षणार्थं तु द्विगुणं व्रतमाचरेत् ।
द्विगुणे च व्रते चीर्णे दक्षिणा द्विगुणा भवेत् ॥

इत्येतच्च महापातकादिदोषविशेषाभिप्रायेण द्रष्टव्यं ।

विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनं ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिन" इति-

मनुस्मरणात् ॥ निरुक्तप्रमाणव्रातपर्य्यालोचनतः ब्रह्महत्यागोवधाव-कीर्णपातकजातप्रायश्चित्तविधानीयमुण्डनमन्तराऽभ्युदयार्थप्रायश्चित्तजातचरणे वपनं नानुष्ठातव्यमिति प्रतिभाति धर्मशास्त्रीयाकूतं । संप्रति द्विजानां कायेन तत्तद्व्रतादिकरणाशक्तौ तथानुपनीतानां वैश्यानां तदन्येषां विभिन्न-जातीयानां च गायत्र्याद्यनुष्ठाने शास्त्रीयाभ्यनुज्ञाभावदर्शनात्तत्तत्प्रायश्चित्ता-नुष्ठाने च कीदृगनुकल्पविधेः प्रदर्शयामासुर्मार्गं धर्मशास्त्रकर्त्तारोऽवलोक्यतां सादरं सोऽधः ॥ यथा पण्डितसर्वस्वे सुमन्तुः,—

"यद्यप्यसकृदभ्यस्तं बुद्धिपूर्वमघं च यत् ।

तच्छुद्ध्यतोऽब्दकृच्छ्रेण महतः पातकादृते ॥"

अब्दकृच्छ्राद्यशक्तौ ॥ 'प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्द्विचक्षणः' ॥ तथा कृच्छ्राणामेषां कर्त्तव्यताशक्तौ धेनुदानविधिः ।

"प्राजापत्ये भवेद्धेनुस्तिस्रः शान्तपने तथा ।

पञ्च चान्द्रायणे प्रोक्तास्ततस्रो वाथ धेनवः ॥"

"पराके द्वे तु निर्दिष्टे तप्तकृच्छ्रे तथैव चेत्यादि ।"

तदभावे गायत्रीजपः उदवासो वा कार्य्यः ।

कृच्छ्रेऽयुतं च गायत्र्या उदवासस्तथैव च ।

धेनुप्रदानं विप्राय सममेतच्चतुष्टयमिति ।

तथा धेनोरभावे—

तन्मूल्यकल्पनायां यथाह पराशरः,—

"धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः ।

गवामभावे निष्कं स्यात्तदर्द्धं पाद एवचेति पराशरः" ॥

तथा—

वृषभमूल्यं तु पञ्चकार्षापणं । धेनुमूल्यं त्रिकार्षापणमिति भारतप्रसिद्ध-पण्डितसर्वस्वान्तरे । "विप्रे तु सकलं देयं पादोनं क्षत्त्रिये मतं । वैश्येऽर्द्धं शेषपादस्तु शूद्रजातिषु शस्यते । प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनं ।

त्रिंशद्वा वृषभं चैकं दद्यात्तेभ्यो विचक्षणः" । कामकृते द्विगुणं प्रायश्चित्तमिति सम्वर्त्तापस्तम्बौ ॥ प्राजापत्यादिव्रतानां कायेनाकरणाशक्तौ तत्तत्प्रतिनिधित्वेन यथाक्रममेकैकस्य निर्णीते धेनुपरिमाणे सत्यपि निरुक्तप्रश्नोपयोगि प्रायश्चित्तात्मकत्वेन निरूपितायुतसंख्यकगायत्रीजपस्य धेनुसंख्याया अनिर्दिष्टतया तन्निरूपणमारभ्यतेऽत्र शास्त्रीयप्रमाणनिर्देशद्वारेण । यथा पण्डितसर्वस्वे । धेनुदानासम्भवेऽयुतजपस्यैककृच्छ्रप्रतिनिधित्वोक्तेर्यावत्कृच्छ्रानुरूपं कार्य्यं । तदाचरणाशक्तौ तत्प्रत्याम्नातत्वेन कृच्छ्रे तिस्रो धेनवो देयाः । संख्यामेतां समर्थयति मिताक्षरायां विज्ञानेश्वरः तथा—पराकतप्तकृच्छ्रातिकृच्छ्रेषु तिसृस्तु गास्तथेति चतुर्विंशतिमतेऽभिधानात् । धेनोर्मूल्यं तु प्रदर्शितं पूर्वतः सर्वप्रायश्चित्तेषु वृषमेकाधिकत्रिंशद्गावो दक्षिणारूपेण प्रदेयाः । इति पण्डितसर्वस्वकारः ॥

उपसंहरेतु—विलासितामन्तरा प्रश्नोक्तविषयजातानुष्ठानं परिसमाप्य द्वीपान्तरात् प्रत्यागतानां ब्राह्मणादिसकलजातीयानामभ्यन्तरे ब्राह्मणः सर्वजात्यपेक्षया सूक्ष्मतमासनाधिरूढत्वेन समुद्रनौगमनद्वीपान्तराधिष्ठानादिजनितपापनिचयापनुत्तये प्रायश्चित्तस्यास्याभ्युदयार्थकत्वेन वपनमन्तरानिरुक्तप्रायश्चित्तविधुरक्तविधानानुष्ठानानन्तरमापद्यकामतः संपूर्णप्रायश्चित्तात्मकत्वेन दशसहस्रसंख्यकगायत्रीजपानुष्ठानस्य प्रामावपि कामतो द्विगुणविधया पापनिचयस्यास्य ज्ञानतोऽनुष्ठिततया विंशतिसहस्रपरिमितगायत्रीजपानुष्ठानं विदध्यादिति मुख्यः कल्पः, तत्करणाशक्तौ सकलविधयायुतगायत्रीजपविधाने तत्प्रत्याम्नातत्वेन षड्धेनवः प्रायश्चित्तात्मकत्वेन प्रदेया ब्राह्मणेनेति द्वितीयः कल्पः । तदभावे तु देशकालपात्रावस्थादृष्टितो धेनोर्निष्कनिष्कार्द्धनिष्कपादत्रिकार्षापणमूल्यव्यवस्थया धेनोर्मूल्यं प्रदेयं विप्रेणेति तृतीयः कल्पः । दक्षिणायां तु त्रिंशद्धेनूनां यथावस्थादिकं पूर्वोक्तमूल्यकल्पनया तथा वृषभस्यैकस्य निष्कादिपञ्चकार्षापणान्तमूल्यकल्पनेन च मूल्यद्वयस्यास्य योगेन भवति यत्परिमितं तत्परिमितं प्रदेयं दक्षिणास्वरूपेण, प्रायश्चित्तान्ते ब्राह्मणभोजनं चेति धर्मशास्त्रीयाशयः, तथैवं रीत्या प्रायश्चित्तं क्षत्रियस्य किन्तु तज्जातेर्द्वितीयासनारोहणाधिकारितया त्रिपादात्मक-

प्रायश्चित्तं विधेयं तेनैव। दक्षिणा तु सकलजातिषु समानैव केवलमवस्था-दृष्ट्या मूल्यकल्पनायां सर्वजातिषु न्यूनाधिक्यं बोध्यं। तथैवं वैश्यस्य, केवलमस्या जातेस्तृतीयासनाधिष्ठिततया द्विपादात्मकप्रायश्चित्तमाचरितव्यं अन्यत् सर्वं मूल्यं समानं किन्तु क्षत्रियवैश्यजातिषु येषामुपनयनाभावः तेषां गायत्रीजपानुष्ठानमन्तरा तत्पराणुकल्पद्वयाचरणेऽधिकारित्वमिति ज्ञेयं।

तथा शूद्रस्यापि गायत्रीजपानुष्ठानेऽधिकाराभावान्निरुक्तानुपनीतक्षत्रिय-वैश्ययोः प्रायश्चित्तस्येव वेदितव्यं। तथा बालवृद्धरोग्यातुरादीनां प्रायश्चित्ता-र्द्धादिन्यूनत्वं दृश्यते यच्छास्त्रं तत्तु स्वस्वजात्युक्तप्रायश्चित्तव्रातस्य तत्तज्जातीय-बालस्त्रीवृद्धादीनां बोध्यं। तत्प्रायश्चित्तविधानं प्रश्नोक्तप्रथमपक्षव्यक्तीनां प्रश्नोक्तद्वितीयपक्षीयव्यक्तीनां तु पापस्य गुरुत्वेन प्रायश्चित्तस्यास्य चातुर्गुण्य-मिति निष्कर्षोऽयमस्या व्यवस्थायाः। अपरं च विद्याध्ययनं परिसमाप्य द्वीपान्तरात् (इंलण्ड प्रदेशात्) आगतस्य मार्कण्डेयाभिधस्य वैश्य-जात्यन्तर्भूतकरणवंशोद्भवस्य पुरुषस्य तद्देशीयशिष्टव्यक्त्यास्ततो निरूपिताकिंचनत्वेन निरुक्तव्यवस्थोक्ततृतीयकल्पोक्तनिम्नतमधेनुमूल्यात्मकप्रायश्चित्तविधानेन स्यात्समाजार्हत्वं निर्बाधमिति प्रेक्षावतां राद्धान्तः।

इत्यलमतिप्रपञ्चेन।

श्री मु: म: पं सभा सभासदः, (गोवर्द्धनमठ)

शंकराचार्य्य श्री १०८ मधुसूदनतीर्थस्वामी सभापति

श्रीमहामहोपाध्यायपण्डितश्रीसदाशिवमिश्रशर्म्मासंपादकोव्यवस्थापकश्च

श्रीशंकरश्रीरामकृष्णानन्दसरस्वती सः सभापतिः (शङ्करानन्दमठ)

श्रीबलदेवप्रकाशब्रह्मचारी सः सभापतिः (महीप्रकाशमठ)

सामन्त श्रीविश्वनाथमहापात्रशर्म्मा (तर्कभूषण)

पण्डित श्रीहरिहरमिश्रन्यायभूषणः

" श्रीयोगेन्द्रमिश्रकाव्यविशारदः

" श्रीगदाधरत्रिपाठी

" श्रीवैद्यनाथषड़ङ्गी काव्यतीर्थः

पण्डितश्रीवैद्यनाथमिश्र काव्यतीर्थ
" श्रीअनन्तरथ "
" श्रीसोमनाथ महापात्र " ( सामन्त )
" श्रीसोमनाथमिश्रशास्त्री
" श्रीजयकृष्णमिश्र रायगुरु काव्यतीर्थः (सहकारिसंपादकः)
" श्रीमाधवनन्दकाव्यतीर्थः— .
" श्रीविश्वनाथरथकाव्यतीर्थः
" श्रीवासुदेवमिश्र "
" श्रीवालकृष्णदास "
" श्रीसोमनाथमहापात्र "
" श्रीआनन्दमिश्रकाव्यस्मृतितीर्थः
" श्रीहरिहररथ शर्म्मा
" श्रीभागीरथिरथशर्म्मा ( वामण्डाराजधानी पण्डित )
" श्रीयमेश्वरमिश्रकाव्यतीर्थः
" श्रीनारायणमिश्रकाव्यवेदतीर्थः
" श्रीरामचन्द्ररथवेदतीर्थः
" श्रीपरमानन्दमिश्रशर्म्मा
" श्रीजगन्नाथषड़ङ्गीशर्म्मा
" श्रीमार्गुणिमिश्रशर्म्मा
" श्रीवासुदेवमिश्रशर्म्मा
" श्रीभुवनेश्वरमिश्रकाव्यतीर्थः
" श्रीवलभद्रमिश्रशर्म्मा
" श्रीपद्मनाभमिश्रशर्म्मा
" श्रीरघुनाथमिश्रशर्म्मा

श्री मुः मः पः सभाः श्रीजगन्नाथमन्दिरः पुरी ।

# शुद्धिपत्रम् ।

| पृष्ठा | पंक्ति | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ४ | २ | यपपद्यते | युपपद्यते |
| ५ | १ | शश्चिवश्चैव | मश्चिवंचैव |
| ६ | ८ | यः कुरुते | यत्कुरुते |
| ६ | २० | तूरुष्काकाः | तुरुष्काकाः |
| ७ | ७ | शचित | सूचित |
| ७ | १९ | प्यमावश्यकताङ्क्ष्या | ऽप्यमावश्यकताङ्क्ष्या |
| ७ | २२ | दानस्येव | दानस्येव |
| ७ | २५ | द्विजं | भूयं |
| ८ | २१ | चान्तङ्गतत्वा | चान्तङ्गतत्वा |
| ९ | ३ | भाद्दाचार | भाव्याचारः |
| १० | ४ | हिन्दुधर्मा | हिन्दुधर्मा |
| १० | ५ | उतेभो | इतेभ्यो |
| १० | १८ | नाप्नृतः | नाप्नृतः |
| ११ | ५ | याप्रदा | याऽप्रदत्ता |
| १२ | ६ | त्यष्टवर्गो | त्यष्टवर्षो |
| १३ | १५ | षोडशाब | षोडशाब्द |
| १३ | १३ | कन्यावा | कन्यका |
| १५ | १० | दानवादा | दनुवादा |
| १५ | १९ | भाव्यात्वोपपत्ति । | भार्य्यात्वोपपत्तिः |
| १६ | १७ | कोऽपि | कोऽपि |
| १६ | २८ | विघ्न | विघ्न |
| १६ | २९ | सङ्गदना | सङ्घटना |
| १७ | १४ | मममन्नमान | मवास्तमामं |
| १७ | १६ | राजानीते | राजनीते |
| १८ | २६ | शास्त्राकाये | शास्त्रकार्ये |
| १९ | ७ | चर्ना | धर्म्मा |
| १९ | ८० | पतिग्रहः | प्रतिग्रहः |
| २० | ६ | नोन्नतानि | नोन्नतानि |
| २१ | ११ | शत्यामपि | ममत्यामपि |
| २१ | १२ | क्वठिदेश | क्वचिद्देश |
| २२ | १२ | कचुक | कचुक |
| २३ | २ | सम्प्रति | सम्प्रति |
| २३ | २२ | ब्राह्मनसां | ब्रह्मनसां |

| पृष्ठा | पंक्ति | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २१ | २४ | लमि | नेमि |
| २१ | २० | तन्नियमश्चयं | तन्नियमश्चयश्च |
| २४ | ६ | वि॥यकः | विषयः |
| २४ | ७ | सृष्ट | सृष्ट |
| २४ | १० | मनुमाम' | मनुमानं |
| २४ | १५ | तरामां मे | तरामां नां |
| २४ | २३ | रातीत | हारीत |
| २५ | ३ | न्याल्लिखितव्यानि | न्युल्लेखितव्या |
| २६ | ५ | भान्तयन | भाख्डीयन |
| २६ | १२ | वर्ष्यानौ | वर्ज्यानौ |
| २७ | १ | निष्टतया | निष्ठतया |
| २७ | ५ | नुलव्रिन | नुल्लव्रिन |
| २७ | २४ | नानुभूयस्य | नाननुभूतस्य |
| २७ | २९ | चाप्राश | चाप्राप्तांश |
| २८ | ४ | रत्नन्तसत्ता | रत्नन्तमसत्ता |
| ३० | १० | वहमादि | वहनमादि |
| ३० | २९ | चाम्भविष | चर्म्मविषय |
| ३० | ३० | वहमानु | वहनमानु |
| ३१ | १४ | साधारना | साधारणौ |
| ३१ | २३ | ष्टतशीर्षं | हृतशीर्षं |
| ३२ | २० | दोषश्रवन | दोषश्रवनं |
| ३३ | २४ | तन्महृता | तस्माहृता |
| ३५ | १८ | वर्थ्यान्यव | वर्ज्यान्यव |
| ३६ | ३४ | किमिताणी | किमितानि |
| ३७ | ५ | प्रकठाकृत | प्रकटीकृत |
| ३७ | १४ | भमधाने | समाधाने |
| ३७ | २४ | फुप्याय | प्युपाय |
| ३७ | २९ | भूतत्त्वाच्च | भूतत्वकत्वाच्च |
| ३८ | ११ | प्रतिपादा | प्रतिपाद |
| ३८ | १४ | लिखितव्या | लेखितव्या |
| ३९ | १२ | स्येष्यमान | स्येव्यमान |
| ४० | १० | मुख्यकाले | स्वाख्यकाले |
| ४० | १५ | कथि-दृश्यते | कश्चिद्दृश्यते |

| पृष्ठा | पंक्ति | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ४० | २० | पठः | पटः |
| ४० | २१ | क्षिप्तत् | क्षिप्तत् |
| ४२ | १० | आम्नाच्छेद | आम्नाच्छेदी |
| ४१ | ९ | मुखोद्देश्या | मुखोद्देश्यं |
| ४४ | ४ | गुमत्या | गुमित्या |
| ४५ | १२ | प्रमाणग्रे | प्रामाण्यमग्रे |
| ४६ | १ | अर्थवादीना | अर्थवादादीना |
| ४६ | १ | विध्येकवाक्यत | विध्येकवाक्यतया |
| ४६ | ८ | अपरोपताष्ठ | अपरोपतापिता |
| ४८ | २० | कृतु | क्रतु |
| ५१ | १० | लोकायमं | लोकायतं |
| ५२ | ४ | तदंश्रवे | तदंशएव |
| ५२ | ११ | हिरण्यगर्भं | हिरण्यगर्भों |
| ५३ | १ | शब्दंच | शाब्दंच |
| ५६ | १८ | मत्तेहयं | मत्तेयं |
| ५८ | ९ | वुहलतया | वहुलतया |
| ६० | १ | परोद्येशा | परोद्देशा |
| ६० | ३ | दूर्द्धं | तूर्द्धं |
| ६० | २३ | अपिशब्दाच | अपिशब्दाच्च |
| ६१ | २० | दिर्जायाणा | हिंजायाणा |
| ६२ | ११ | पदवृत्तिः | पदवृत्तिः |
| ६२ | १२ | पवृत्तिः | पदवृत्तिः |
| ६२ | १६ | पवृत्तिः | पदवृत्तिः |
| ६२ | १७ | स्वसनिकता | श्वसनिकता |
| ६२ | १९ | पवृत्तित्वा | पदवृत्तित्वा |
| ६४ | ११ | विप्रोहजीवं | विप्रोहजीवन् |
| ६४ | २१ | रस्वसनिको | रश्वसनिको |
| ६६ | ९ | सन्नमूले | सन्नमूपले |
| ६६ | १४ | वर्ज्यांगी | वर्ज्यांगी |
| ६७ | २२ | सदाणृत्यं | सदान्तृतं |
| ६८ | १० | जनाअर्व्वं | जना:सर्व्वं |
| ७० | ८ | यं | य० |
| ७५ | २२ | उदिच्यां | उदीच्यां |

| पृष्ठा | पंक्ति | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ७७ | २० | चधितछन्दा | चधितश्छन्दा |
| ७७ | २२ | बुहसमवय | बहुसमय |
| ७८ | ३ | भावरूपा | भावरूपा |
| ७८ | ६ | शिष्ठाचारं | शिष्टाचारं |
| ७८ | १९ | शिष्ठाणु | शिष्टानु |
| ७८ | २२ | अनाम्रातेषु | अनाम्नातेषु |
| ७९ | ८ | सामाजकधर्म्म | सामाजिकधर्म्म |
| ७९ | २९ | चवेण | चावेण |
| ७९ | २५ | मङ्गीकार्य्यं | मङ्गीकार्य्यं |
| ८१ | ११ | नामाक | नामक |
| ८२ | १ | चाणते | चावेण |
| ८३ | ५ | विनाशितव्यं | विनाश्रयितव्य |
| ८४ | १५ | वाणिज्या | वाणिज्यं |
| ८४ | २३ | संकीर्य्यन्ते | संकीर्य्यन्ते |
| ८५ | १९ | ध्यायनं | ध्ययनं |
| ८६ | ४ | ध० | ध० |
| ८६ | ४८ | विरुद्ध | विरुद्ध |
| ८६ | १९ | विधिदुषणा | विविदिषुणा |
| ८७ | १८ | ब्रह्महत्या | ब्रह्महत्यां |
| ८९ | ८ | शिष्ठै | शिष्टै |
| ९० | २५ | कल्यवच्छन्न | कल्यवच्छिन्न |
| ९२ | ३ | स्नात्स्येव | स्नास्येव |
| ९२ | ७ | लेखनेन | लिखनेन |
| ९२ | १७ | शुद्राभिगमन | शूद्राभिगमन |
| ९३ | २१ | निषेधत्वेन | निषिद्धत्वेन |
| ९५ | १ | प्रतितीच्छवा | nil |
| ९६ | २७ | मभिवाप्य | मभिव्याप्य |
| ९७ | १३ | चरित | चरित्रं |
| ९७ | १५ | पतत्यर्द्ध | पतत्यर्द्ध |
| ९७ | १७ | स्फुठतः | स्फुटतः |
| १०० | ३ | प्रात्याह्निक | प्रात्यह्निक |
| १०० | १६ | पापोपनुत्तये | पापापनुत्तये |
| १०१ | १४ | वार्च्यं | वार्य्यं |

| पृष्ठा | पंक्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| पृष्टा | पंक्ति | अशुद्धि | शुद्धि |
| १०२ | ७ | पशुपाक्ष | पाशुपाक्ष |
| १०२ | ११ | वीर्ध्यं | वीर्ध्यं |
| १०२ | २२ | चौमादिका | चौमादिका |
| १०४ | ७ | शाल | शाण |
| २०४ | १४ | गेहणं | ग्रहणं |
| १०५ | १९ | तउदेश | तउद्देश |
| १०५ | २२ | वगीताचार | विगीताचार |
| १०६ | २२ | तउदेशीय | तउद्देशीय |
| १०९ | ८ | त्वश्वर्यं | त्वैश्वर्यं |
| ११२ | १८ | यदग्टह्यते | यद्ग्टह्यते |
| ११५ | ४ | सापकाचंन | शापकाचंन |
| ११५ | १८ | नृपविचार | नृपविचारः |
| ११५ | २२ | त्यर्थ्यानुष्ठाने | त्यर्थानुष्ठाने |
| ११७ | ११ | सूस्थ | सूस्थ |
| १२२ | १६ | भार्य्यया | भार्य्यायाः |
| १२२ | २५ | भुग्रपुठाम | भुग्रपगम |
| १२३ | ५ | निष्पादिक | निष्पादक |
| १२३ | २५ | विद्वभि | विद्वद्भिः |
| १२५ | ३ | विगुणां | त्रिगुणः |
| १२६ | १८ | प्रतिपादि तैक्यात | प्रतिपादितैक्यत्वात् |
| १३० | २० | तदा | यदा |
| १३१ | २६ | गुणाविधाना | गुणविधाना |
| १३१ | २६ | नुवेवितव्यः | नुवदितव्यः |
| १३२ | २५ | विप्सा | वीप्सा |
| १३२ | २८ | त्मवत | त्मवैत |
| १३४ | १८ | साकुल्यो | सकुल्यो |
| १३६ | १३ | तो | तौ |
| १३६ | २५ | परतो | परत |
| १३९ | १६ | स्वभाष्ये | स्वभाष्ये |
| १४१ | ४ | परिवर्त्या | परवर्त्या |
| १४२ | १८ | यो | ये |
| १४२ | २१ | पैवे | पैवे |

| पृष्ठा | पंक्ति | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १४३ | २५ | निरपेक्ष्यत्वेन | निरपेक्षत्वेन |
| पृष्ठा | पंक्ति | अशुद्धिः | अशुद्धि |
| १४४ | २४ | पौढ़ा | प्रौढ़ा |
| १४८ | १७ | तत्तन्निनवन्धो | तत्तन्निवन्धो |
| १५० | ६ | अष्टवषो | ह्यष्टवर्षौ |
| १५० | ११ | प्रायेनैतावता | प्रायेणैतावता |
| १५१ | २१ | नष्किकालेन | नग्निकालेन |
| १५२ | ४ | ततसार्द्धंद्विगुणवयसा | —— |
| १५३ | १७ | त्पायुस्वाच्च | त्पायुष्ट्वाच्च |
| १५५ | ७ | प्रत्यावर्त्तनस्यै | प्रत्यावर्त्तनस्येव |
| १५५ | २५ | प्रनिधि | प्रतिनिधि |
| १५७ | ६ | नग्निकत्व | नग्निकात्व |
| १५७ | १० | रजस्वलत्वे | रजस्वलात्वे |
| १५८ | १८ | ऋतुमत्कक्षा | ऋतुमतीत्वक्षा |
| १६८ | २० | वटागाह | वर्ज्यागाह |
| ० | १० | वाचनिक | वाचनिकी |
| १७१ | ६ | नसङ्गततया | nil |
| १७२ | ११ | स्वनामङ्गत इति | स्यासङ्गत इति |
| १७४ | १९ | मातुर्दोष | मातृदोष |
| १७५ | २४ | पाराशवोय | पारशवो |
| १७७ | १९ | भार्वाह्नित | भार्वाविह्नित |
| १७८ | २१ | व्यापकव्यापित्व | व्यापकव्याप्यत्व |
| १७९ | ३ | प्रशस्यमतः | प्रशस्यतमः |
| १८० | ५ | तन्नद्द्च | तन्नदुच |
| १८२ | ४ | वेदीयार्चे | वेदीयार्चा |
| १८३ | १० | दुत्प्रति | दुत्पति |
| ,, | २४ | वाहुस्या | वङ्कस्यां |
| १८४ | ३ | पृष्टपोष | पृष्ठपोष |
| ,, | १७ | स्थलशक | स्थूलशब्दा |
| ,, | १८ | शादशाध्याय | शादशाध्याये |
| १८६ | ८ | सिद्धान्तो | सिद्धान्त |
| १८६ | १० | इच्युतैर्ना | ईचतैर्ना |
|  | १४ | शूण्वरूप | शूण्वरूप |

| पृष्ठा | पंक्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| १८७ | १० | नैकव्या | नैकव्या |
| १८८ | १० | द्विशीयायां | द्विशीयायां |
| ,, | १९ | शखापशाखा | शाखोपशाखा |
| १९० | १ | निष्क्रीयत्वत्मकाया | निष्क्रियत्वात्मिकाया |
| ,, | २६ | पुराकलि | पुराकाले |
| १९१ | २ | लीलावस्थया | लीलावस्थया |
| ,, | १२ | तज्जडतां | तज्जडता |
| ,, | २० | यद्यय | यद्द्वय |
| १९२ | ९ | कुर्वेति | कुर्वेति |
| ,, | २५ | ससमष्टि | समष्टि |
| १९४ | ८ | जनैर्को | ——— |
| ,, | ११ | भिक्तोरिया | भिक्तोरिया |
| १९५ | १९ | सुतिष्ठति | सुतिष्ठते |
| ,, | २६ | स्वत्ततमसी | सत्वतमसी |
| १९७ | १८ | यनिष्ठो | घनिष्ठो |
| १९८ | २२ | वह्नो | वह्नौ |
| २०० | ६ | तच्छरीरस्य | तत्तच्छरीरस्य |
| २०१ | २५ | प्रदश्यतत् | ——— |
| २१५ | १५ | कम्पितश्मासी | कम्पितमासी |
| २१८ | २६ | न्नारस्यचोथा | ——— |
| २१९ | १९ | मतित्य | मतीत्य |
| ,, | १९ | गताथरा | गतीयवा |
| २२० | ४ | तत्व: | तत्वा |
| २२२ | २२ | द्वारा | द्वारा |
| ,, | ,, | नक्षोत्तैक | नक्षोत्तै |
| २२३ | ११ | उतत्क्रष्टो | उत्कृष्टो |
| २२४ | १ | वथाच | तथाच |
| ,, | ९ | समानर्थ | समानार्थ |
| २२६ | २० | दशपुरुष | दशपूरुष |
| २२६ | २१ | स्योतात | स्रोतात |
| २२८ | १० | प्रत्तता | प्रत्तात |
| २२९ | ७ | वादिभूत | ——— |
| २३० | २४ | नअर्थविशेष: | नंअर्थविशेष: |

| पृष्ठा | पंक्ति | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ,, | २० | दुष्मत्त | दुष्मन्त |
| २११ | ११ | यद्वारेन | यद्वारेण |
| ,, | १२ | मावाख्याया | माशाख्याया |
| २३४ | २४ | निष्ठहेतुत्व' | निष्टहेतुत्व' |
| ,, | २६ | विपरीत: | विपरीतं |
| २३५ | ११ | द्रावा | द्राचा |
| २३६ | १० | पञ्जनां | पञ्चानां |
| २३७ | ५ | वैयठ | कैयठ |
| २३९ | ६ | पौलम्य | पौलोम्य |
| २४२ | १३ | द्वितिये | द्वितीये |
| २४३ | १६ | द्वया: | द्वयोः |
| २४७ | १८ | मूलधुरुष | मूलपुरुष |
| २४८ | ९ | द्वादशजानाह | द्वादशयानाह |
| ,, | ११ | अपसक्त्या | अप्रसक्त्या |
| ,, | १२ | अंशमागित्व | अंशभागित्व |
| २४८ | १६ | सापपौरुषं | —— |
| ,, | २० | बुद्धिस्थता | बुद्धिस्थता |
| ,, | २६ | सन्नाय्य | साम्नाय्य |
| २४९ | २८ | पर्य्युदशितु' | पर्य्युदस्तुं |
| २५० | ७ | प्रसङ्गी | प्रासङ्गी |
| ,, | १९ | मुलकल्पना | मूलकल्पना |
| २५१ | ३ | रित्यप्यपास्तं | रित्यप्यपास्तं |
| २५३ | २५ | सापिण्डस्यावि | सापिण्ड्यस्यवि |
| २५४ | १३ | ब्रह्महतुत्या | —— |
| ,, | २६ | प्रतानां | प्रेतानां |
| २५५ | १८ | विच्छित्तिरिति | विच्छित्तिरिति |
| ,, | २३ | भ्ययन्त्यप: | —— |
| २५७ | २५ | षाट्पुरुष | —— |
| २५८ | ८ | वाययेदि | वरयेदि |
| २६० | १३ | विहाह | विवाह |
| २६१ | १८ | संकोचावश्यभा | संवश्यभावेन |
| २६४ | ४ | जाता: | जाता: |
| ,, | १५ | णभागधेयं | भागधेयं |

| पृष्ठा | पंक्ति | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ,, | २५ | यया | यथा |
| २६५ | ३ | द्वौ | द्यौ |
| २६६ | १५ | त्युपेक्षणीयं | त्युपेक्षणीयं |
| २६८ | ६ | मूट्वा | मूढ्वा |
| २७० | २२ | खनिव्रत्ता | खल्वनिव्रत्ता |
| २७४ | १९ | अयिधीनकं | आयुधियकं |
| २७४ | २५ | विन्वेष्टव्यं | वन्वेष्टव्यं |
| २७६ | १५ | असमानार्थयां | nil |
| २७७ | ३ | सुमन्तवचने | सुमन्तोवचने |
| २७९ | १७ | मात्ववेदनां | मात्ववदेना |
| २८१ | २ | विणोति | विनिति |
| २८५ | २० | ग्रतापीपि | ग्रातातपीपि |
| २८५ | २५ | दाक्षित्ये | दाक्षिणात्ये |
| २८७ | १६ | पितादाय: | पितादय: |
| २९० | ७ | दूक्कं | दूढं |
| २९१ | ६ | कर्णाटिका | कार्णाटिका |
| २९२ | २२ | सत्योन्नितया | nil |
| २९३ | ४ | चतुम्मात् | चतुष्पात् |
| २९९ | १६ | दर्शितव्यानि | दर्शयितव्यानि |
| ३०० | ४ | दासिन्यं | दासीन्यं |
| ३०३ | ४ | सङ्कठितुं | सङ्कठयितुं |
| ३०३ | २१ | गुहेस्व | गृहेष्वपि |
| ३०४ | १२ | सित्यपि | सत्यपि |
| ३०५ | १० | खातन्त्रो | खातन्त्र्यो |
| ३०५ | २६ | पुंश्चल्या | पौंश्चल्या |
| ३०६ | ४ | बं | वं |
| पृष्टा | पंक्ति | अशुद्धिः | शुद्धिः |
| ३०७ | १७ | वालिकायुवत्यो | वालिकायुवतिभ्यो |
| ३१४ | —— | निकन्दो | —— |
| ३१५ | ३ | कापप्रधाना | कोपप्रधाना |
| ३१६ | ३ | वर्षन्ति | कर्षन्ति |
| ३१६ | १२ | ह्यमान | ह्रियमाण |
| ३१७ | ११ | सरस्पर | परस्पर |

| पृष्ठा | पंक्ति | अशुद्धिः | शुद्धिः |
| --- | --- | --- | --- |
| २१८ | ७ | निषेधस्य | निषेधस्य |
| २१९ | २१ | कुलच्चणं | कुललच्चणं |
| २२५ | १० | पुनर्भूवां | पुनर्भुवां |
| २२६ | १६ | अधार्य्यंत्वे | अधार्य्यत्वे |
| २२७ | १२ | वशिष्टः | वशिष्ठः |
| २३१ | २ | विहाह | विवाह |
| २३२ | १६ | मानैसह | मानवैः सह |
| २३३ | ७ | सगोवा | सगोवो |
| २३३ | १२ | वगत्र्यैनां | भोगत्र्यैनां |
| २३६ | ३ | स्वेच्छाया | स्वेच्छया |
| २३८ | १८ | रित्यस्य | रित्यस्य |
| २४० | ४ | सदनुष्ठेया | सदनुष्ठेया |
| २४० | ९ | निरिसनीय | निरसनीय |
| २४४ | १ | तनीकृत | निकृत |
| २४४ | १३ | वह्नी | वह्नो |
| २४५ | १६ | विश्रदितव्यं | —— |
| २४६ | १ | यहस्थापयन्त्या | यदुत्थापयन्त्या |
| २४६ | १० | शिष्टहत | शिष्टाहतता |
| २४८ | ३ | सौवर्णां | सौवर्णीं |
| २४८ | १६ | दग्निमाकुर्वन् | दग्निमान् कुर्व्वन् |
| २५० | ८ | क्षतापुत्रा | क्षताः पुत्रा |
| २५२ | २ | सुरेताधाः | —— |
| २५३ | १४ | वर्जयीत | वर्ज्जयेत |
| २५५ | १७ | त्रालब्ध | वालब्ध |
| २५६ | १ | व्यपेक्षत | व्यपेक्षेत |
| २५७ | १४ | विश्वामित्रजाघनो | विश्वामित्रश्लाघनो |
| २५८ | १० | उप्रचलने | उत्प्रचलने |
| २५९ | १७ | किञ्चिन्नूयात् | किञ्चिद्ब्रूयात् |
| २६० | ३ | स, विधवात्मकानां | स, विधवात्मिकानां |
| २६१ | १८ | मवलोकितव्यं | —— |
| २६४ | १७ | सजातसन्तानं | सञ्जातसन्तानं |
| २६८ | १५ | द्वैपधैः | दौपधैः |
| २६९ | १४ | पुत्रपरिचा | पुत्रपरिचा |

| पृष्ठ | पंक्ति | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २६९ | १६ | दानीतम | दानीन्तम |
| ३७१ | ३ | किअयिजाति | ——— |
| ३७१ | १३ | विधोपयम | विधवोपयम |
| ३७१ | २५ | शास्त्राविधि | शास्त्रविधि |
| ३७२ | ७ | करासर्वं | कराः सर्वं |
| ३७२ | २३ | शक्त्रु म | शक्त्रु मो |
| ३७३ | १६ | समायत्तु | समयातु |
| ३७३ | १८ | विधवोय | विधवोपय |
| ३७५ | ५ | शोचं | शौचं |
| ३७५ | १६ | सुतयव | सुभयव |
| ३७७ | २१ | यशशे | यशसे |
| ३७९ | ८ | त्यवसनी | त्यव्यसनी |
| ३८१ | ९ | प्रभवानि | प्रभवाणि |
| ३८१ | २० | अनिर्दंष्टां | अनिर्द्दिष्टां |
| ३८३ (३९२) | ८, (१०) | सन्धीनी | सन्धिनी |
| ३८४ | ११ | प्रत्युद्य | प्रतुद्य |
| ३८५ | २ | श्रौष्ट | श्रौष्ट्र |
| ३८८ | २० | पद्विषयं | पदविषयं |
| ३९२ | २१ | वक्तुर | वल्लूर |
| ३९४ | ५ | नृकंषन्तु | नृजीषन्तु |
| ३९४ | ११ | शाताय | शातांश |
| ३९५ | २२ | अश्वंअत्व | ——— |
| ३९६ | २२ | चातुर्वर्ण्यं | चातुर्वर्ण्य |
| ४०१ | ३ | रथ्या | रथ्या |
| ४०१ | १८ | उभयामर्कः | उभयद्वारकः |
| ४०१ | १८ | उभयोक्तस्तु | उभयद्वारकस्तु |
| ४०५ | १० | सात्त्विक | सात्त्विका |
| ४०६ | ५ | दीर्घायुष्व | दीर्घायुष्ट |
| ४०७ | १६ | सुतवचोऽभिहितं | सुतवचोऽभिहतं |
| ४०९ | १२ | वर्ज्जयेत् | वर्जयेत् |
| ४१२ | २२ | तत्तद्विवेचनं | तत्तद्विवेचनं |
| ४१३ | २३ | अपूपवोगधूम | अपूपागोधूम |
| ४१६ | १८ | प्रोक्षाप्यते | प्रोक्षाप्यते |

| पृष्ठा | पंक्ति | अशुद्धिः | शुद्धि |
|---|---|---|---|
| ४१६ | २१ | निषिद्ध | निषिद्धं |
| ४१८ | १७ | समुद्रस्य | सच्छूद्रस्य |
| ४२० | ५ | सत्वात् | सत्त्वात् |
| ४२१ | १२ | “चण्डालजनः यतत्त्यादि | पद्येतेसंश्रय” |
| ४२१ | १२ | मागधीयोगवी | मागधायोगवी |
| ४२९ | १ | गीतव क्यं | गीतावाक्यं |
| ४३० | ३ | मूर्द्धि | मूर्द्धि |
| ४३० | ” | नूवदात् | नूवादात् |
| ४३० | २१ | अविगीतमेव | अविगीतत्वमेव |
| ४३५ | १६ | वशिष्ठं | वशिष्टं |
| ४३६ | १० | शुचि | शुचिः |
| ४३६ | १४ | पीठाधिष्ठितः | पीठाद्यधिष्ठितः |
| ४४४ | १४ | भुञ्जनां | भुञ्जानां |
| ४४७ | १९ | शूद्राचिय | शूद्राक्षत्रिय |
| ४४८ | ३ | व्यभिचारजनां | व्यभिचारजानां |
| ४४८ | २१ | व्रतपुजन | व्रतपूजन |
| ४४९ | ९ | प्रमाणजाल | प्रमाणजाल |
| ४४९ | १९ | पुक्कश | पुक्कस |
| ४५१ | २१ | फलाद्य | फलाद्या |
| ४५२ | १५ | समाचीन | समीचीन |
| ४५४ | २० | धर्मराठ | धर्मराट् |
| ४५५ | ११ | सर्वसे | सर्वस्वे |
| ४५५ | २१ | “जलादिग्रहणार्थमंशयं” | |
| ४५५ | २५ | राजन्यवैश्याभावः | राजन्यवैश्याभावं |
| ४५७ | १ | त्वादि | त्यादि |
| ४५७ | ३ | काचित्वेन | कांचित्वेन |
| ४५७ | २३ | कर्तृकधर्म | कर्तृकामर्म |
| ४५८ | १५ | अचारण | आचार |
| ४६० | ७ | सदचार | सदाचार |
| ४६२ | ५ | सदार | सदाचार |
| ४६२ | १६ | सिद्धिमनुपाचरेत | सिद्धिंसमुपाचरेत |
| ४६४ | ९ | शुश्रुत् | शुश्रुत |
| ४६५ | १५ | सुहूर्त | सुहूर्तें |

